# THE PANDIT.

## A MONTHLY JOURNAL

OF THE

## BENARES COLLEGE,

DEVOTED TO

# SANSKRIT LITERATURE.

## VOLUME VII.

BENARES:
PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS & CO.

# INDEX TO VOLUME VII.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 73. Benares, June 1st, 1872. Vol. VII.

## ॥ चिन्तामणेः शब्दखण्डम् ॥

अत्रोच्यते । गकारादिव्यक्तयो नैकैकाः । (१) अस्ति हि शुकसारिकामनुष्यप्रभवेषु स्त्रीपुंसतद्विशेषप्रभवेषु गकारादिषु स्फुटतरवैलक्षण्यात्स्वरूपतो भेदप्रथा इक्षुक्षीरादिमाधुर्यवत् । न चेयमौपाधिकी भेदप्रतीतिः, (२) नहि विदितकुङ्कुमस्य (३) कुङ्कुमारुणा तरुणीति प्रतीतिवत् स्त्रीपुंसप्रभवत्वमानुभविकमुपाधिः । इन्द्रियासन्निकर्षेण स्त्रीपुंसादिभेदमविदुषोऽपि भेदप्रत्ययात् । यतोऽनुमापयन्ति शुकशब्दोऽयं स्त्रीशब्दोऽयमित्यादि । अन्यथाऽन्योन्याश्रयात् । तत्प्रभवत्वे ज्ञाते भेदप्रत्ययः । तस्माच्च तदनुमानमिति । (४) न च कृपाणान्वयव्यतिरेकानुविधानात् कृपाणे मुखदीर्घत्ववदौपपत्तिकमौपाधिकत्वम् । अन्यानुविधानाभावात् । अथ व्यञ्जकवायोरेव वैलक्षण्यं शुकादिगकारगतत्वेन भासते, वायोरुपलब्धिस्तेनैव रूपेणेति चेत्, न । गकारगतत्वे बाधकाभावात् । न चाभेदप्रत्यभिज्ञानं बाधकं, नहि य एव शुकशब्दस्स एव स्त्रीशब्द इति प्रत्यभिज्ञानम् । अन्यथा तेषु भेदज्ञानाभावाद्वक्तृविशेषानुमानं न स्यात् । न चाभिव्यञ्जकवायोरेव वैलक्षण्यं शुकाद्यनुमापकम् । तस्य गकारावृत्तित्वात् । (५) तच्च चारोपेऽनुमिते भ्रान्तित्वात् । (६) तस्माद्यथा कृष्णा गौः शुक्ला गौरिति भेदे भासमाने गवाकारानुगतप्रतीतिर्गोत्वमालम्बते, तथा शुकादिगकारेषु भेदे भासमानेऽयं गकारोऽयमपि गकार इति बुद्धिर्गत्वमालम्बते (७) इति प्रत्य-

---

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

प्रत्यभिज्ञान्यथासिद्ध्यर्थं गत्वजातिसिद्धये गकारनानात्वं साधयति । (१) अस्ति हीति । औपाधिकत्वमानुभविकमौपपत्तिकं वा, तत्राद्यमाशङ्क्य निराकरोति । (२) नहीति । (३) कुङ्कुमारुणेति । तथा च कुङ्कुमारुण्यवत् स्त्रीपुंसभेद एव तत्र भासते इत्यर्थः । द्वितीयमाशङ्क्य निराकरोति । (४) न चेति । कुङ्कुमेनारुणा न तु स्वभावत इत्यत्र कुङ्कुमस्योपाधित्वमनुभूयमानं कृपाणे तु तथात्वमन्वयव्यतिरेकगम्यं न तु तद्वत् कृपाणदीर्घमुखमिति प्रत्यय इति भेदः । यद्वा यत्रोपाध्याश्रयसंबन्धेन तज्ज्ञानात्तथा धीस्तत्रोपाधेरानुभविकत्वं यत्र तदाश्रयाद्यनुविधानमात्रं न संबन्धस्तत्रौपपत्तिकत्वमिति भेदः। (५) तच्च चारोप इति । यद्यपि कूटलिङ्गकानुमितिवद्विषयाबाधे साध्यांशे याथार्थ्यमप्रत्यूहमेव, गकारे शुकप्रभवत्वाद्यनुमितेर्भ्रान्तत्वापादने गकारनित्यतावादिन इष्टापत्तिश्च, तथापि प्रमात्वसंभवे भ्रमत्वं न कल्प्यते, प्रत्यभिज्ञाया अपि गत्वाभेदविषयतया प्रमात्वमेवोपपाद्यमिति भावः । तदेवोपसंहारव्याजेनाह । (६) तस्मादिति । (७) इतीति । हेतौ, यत उक्तानुगतप्रतीत्या गत्वसिद्धिरतस्तदभेदविषयतया प्रत्यभिज्ञोपपद्यत इत्यर्थः । प्रत्यभिज्ञापदमनुगतप्रतीतिपरमित्यन्ये । ननु वर्णवैलक्षण्यं न शुकप्रभवत्वाद्यनुमापकं किं तु ध्वनिगतमेव तत्तथा, तथा च तादृशध्वनिसाहित्यमेव वर्णस्यापि

भिन्नाभेदप्रथा चोपपद्यते । (८) किं च गत्वादिकं यदि न जातिस्तदा कोलाहलप्रत्ययो न स्यात् । तथाहि । नगरादौ बहुभिर्वर्णानामेकदोच्चारणे (९) दूरस्थेनानभिव्यक्तगकारादिवर्णविभागं कोलाहलमात्रं श्रूयते । (१०) न च तत्र वर्णान्यस्य ध्वनिरूपस्य शब्दस्य श्रुतिः संभवति । (११) तदभिव्यञ्जकभेरीताडनादेरभावात् । न च वर्णाभिव्यञ्जका एव ध्वनिव्यञ्जकाः, सन्निधानेपि श्रूयमाणवर्णे तच्छ्रवणप्रसङ्गात् । न च वर्णाभिव्यञ्जकवायुभिरेव दूरे ध्वनिमात्रमभिव्यज्यते । कव्यञ्जकस्य गव्यञ्जनइव वर्णव्यञ्जकस्य ध्वनिव्यञ्जने ऽसामर्थ्यात् तत्समर्थशङ्खादेरभावाच्च । न च तत्र शब्दत्वमेव प्रतीयते न शब्दः । व्यक्त्यग्रहे जात्यग्रहात् । (१२) न चाभिव्यञ्जको वायुरेव कोलाहलत्वेन प्रतीयते, शब्दत्वेन प्रत्ययात् (१३) सन्निधावपि तथाप्रत्ययप्रसङ्गाच्च । गकारादिग्रहेपि तेषां परस्परं (१४) भेदाग्रहात् कोलाहलधीरिति चेत्,न । (१५) तेषु वैधर्म्याभावात्, (१६) तदभावे ऽन्योन्याभावस्याभावात्, (१७) स्वरूपस्य ग्रहणात् । समीपे बहुगकारेषु (१८) भेदाभावेन (१९) तदग्रहे कोलाहलधीप्रसङ्गाच्च । अनेकवर्णोच्चारणस्य तद्धेतुत्वे (२०) दूरेपि तदप्रतीत्यापत्तेः । तस्मादवश्यं गत्वादि(२१)र्जातिरुपेया, यदग्रहणेपि गकारादिग्रहेपि कोलाहलबुद्धिव्यपदेशौ, (२२) अस्ति च शब्दस्य कोपि जातिविशेषः श्रोत्रग्राह्यः,यस्मा(२३)-त्प्राच्यादिदेशविशिष्ट(२४)शङ्खप्रभवत्वमनुमीयते । अव्यपदेश्यत्वेपि इक्षुक्षीरादिमाधुर्यावान्तरवत्तत्सत्त्वात् । अन्यथा दिग्देशविशिष्टशङ्खादीनां ग्रहे श्रोत्रस्यासामर्थ्यात्तत्प्रतीतिर्निर्नस्यादेव । तथापि गत्वादिना परापरभावानुपपत्त्या शुकादिगकारेषु न जातिविशेष इति चेत् । शुकककारादिषु कत्वादिव्याप्या जाति(२५)र्भिन्ना, (२६) तया प्रत्येकं शुकककारादिषु शुकप्रभवत्वमनुमाय तद्व्यवहारो न तु शुकककारादिष्वेका जातिरस्ति शुकप्रभवत्वानुमापिका तद्व्यवहारकारिका वा, गत्वादिना संकरप्रसङ्गात् । (२७) गत्वं तु न नाना, अननुगतत्वेन ततो ऽनुगतव्यवहारानुपपत्तेः ।

---

वैलक्षण्यमिति गकारभेदाभावाद् गत्वजातौ न मानं, तथा च न तथा प्रत्यभिज्ञान्यथासिद्धिरित्यरुचेर्गत्वजातेः साधकान्तरमाह । (८) किं चेति । तया च गत्वजातिसिद्धौ गकारनानात्वमपि आवश्यकमिति भावः । (९) दूरस्थनेति । यद्यपि स्वस्वश्रवणसमवेत एव शब्दो गृह्यते इति न ग्राहकस्य दूरस्थता; न वा दूरत्वं गत्वादिग्रहप्रतिबन्धकं, तथापि आद्यशब्दापेक्षया दूरत्वं बोध्यम् । अन्वयव्यतिरेकाभ्यां तद्दूरत्वमेव तद्ग्रहप्रतिबन्धकमिति भावः । ध्वनिविषयत्वेनान्यथासिद्धिमाशङ्क्य निराकरोति । (१०) न चेति । परमतेनैवाह । (११) तदभिव्यञ्जकेति । शब्दत्वजातिमभ्युपेत्य शङ्कते । (१२) न चेति । तदारोप्यतइत्यत आह । (१३) सन्निधावपीति । वस्तुतो वायुरतीन्द्रिय इति भावः । (१४) भेदाग्रहादिति । न तु गत्वाद्यग्रहादिति भावः । भेदो वैधर्म्यं वा ऽन्योन्याभावो वा स्वरूपं वा । आद्ये (१५) तेष्विति । यद्यप्युपाधिरूपमेव गत्वादिकं वैधर्म्यं संभवति तथापि तन्निर्वक्तुमशक्यम् । जातिरूपं च त्वया नाङ्गीक्रियते, गकारस्यैकत्वे ऽनुगतमत्यापि नानुगतधर्मसिद्धिरिति भावः । द्वितीये (१६) तदिति । अन्योन्याभावस्य वैधर्म्यनिबन्धनत्वादिति भावः । अन्त्ये (१७) स्वरूपस्येति । (१८) भेदाभावेनेति । त्वन्मत इति शेषः । (१९) तदग्रहइति । तद्ग्रहे वान्यथाख्यात्यापत्तेरिति भावः । (२०) दूरेपीति । तव गकारस्यैक्येनानेकवर्णोच्चारणाभावादिति भावः । (२१) जातिरिति । अखण्डं पदार्थान्तरमप्रामाणिकमिति भावः । ननु यथा तारत्वव्यञ्जकस्यैव दूरे मन्दत्वव्यञ्जकत्वं तथा च वर्णव्यञ्जकस्यैव दूरे ध्वनिव्यञ्जकत्वमस्तु, यदि तस्यासामर्थ्यं तत्तदा तस्यापि तदापत्तेः । यदि चान्वयव्यतिरेकाभ्यां तत्र तथात्वं तदा प्रकृतेपि तुल्यमित्यत आह । (२२) अस्ति चेति । तद्वद्गकारेपि तादृशजातिसिद्धौ तन्नानात्वे गत्वस्यापि सिद्धौ तदग्रहादेव कोलाहलबुद्धिसंभवेन तत्तत्कल्पनमिति भावः । (२३) प्राच्यादीति यत्र देशे शब्द उत्पद्यते तद्देशप्रभवत्वमित्यर्थः । स च देशः कस्य चित्प्राची कस्य चिदन्यथा । तदैक्यात्तत्प्रयोज्या तत्प्रभवत्वानुमापिका जातिरप्येकैवेति तत एव तत्तद्दिग्वर्त्तिपुरुषाणां तत्र प्राच्यादिप्रभवत्वानुमानमिति भावः । एतेनैकस्यामेव शब्दव्यक्तौ तत्तद्दिक्प्रभवत्वानुमापिका दश जातयः स्युरित्याशङ्क्य एतज्जातिदशकाभ्युपगन्त्रा कदम्बगोलकन्यायेनैः शब्दोत्पत्तिस्वीकार इति कस्य चित्समाधानमपास्तम् । (२४) शङ्खेति । शङ्खेत्युपलक्षणं, पुरुषादिकं च बोध्यम् । शङ्खेति दृष्टान्तार्थमुक्तम् । ध्वनेरप्यनित्यत्वार्थमित्यन्ये । (२५) भिन्नेति । शुकादेरेककारोद्युच्चारणमात्रमित्यत्र तु न प्रमाणम् अन्ततो वीचीतरङ्गन्यायेनापि नानोत्पादादिति बोध्यम् । तन्नानात्वेपि तदनुमितेन शुकादिप्रभवत्वेनोपाधिनैवानुगतधीरित्याह । (२६) तयेति । ननु गत्वमेव शुकप्रभवत्वानुमापकैकजातिव्याप्यं नानास्त्वित्यत आह । (२७) गत्वं त्विति सकलसाधारणशुकप्रभवत्वैकोपाधिवन्नानागत्वसाधारणैकध-

(२८) अत एव तारत्वमपि गत्वादिव्याप्यं नाना, न तु गत्वमपि । तन्निश्चये ऽपि गत्वसंदेहश्च (२९) व्याप्यतावच्छेदकरूपानिश्चयात् । न चानुगतव्यवहारानुपपत्तिः । स्वजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वेनानुगतेन नानातारत्वेष्वनुगतव्यवहारसंभवात् । तदज्ञाने व्यवहारासिद्धेः । तारत्वमन्दत्वे न जाती, (३०) सप्रतियोगिकत्वादिति चेत्,न । तारत्वतारतरत्वादय उत्कर्षरूपा जातिविशेषा एव, (३१) ते चाश्रये गृह्यमाणा एव गृह्यन्ते न तूत्कर्षावध्यपेक्षा,यथा मधुरतरत्वादय उत्कर्षव्यवहारमितरसापेक्षाः कुर्वन्ति (३२) तथा मन्दत्वाद्यपेक्षया तारत्वादिव्यवहारम् । (३३) उत्कर्षस्तु तज्जातिरूपादन्यो ऽसंभावित एव । (३४) गकारे तु नैवम्, (३५) अनन्यथासिद्धभेदप्रत्ययबलेन वक्तृविशेषानुमानबलेन च तत्सिद्धेर्गत्वकत्वव्याप्यतन्नानात्वस्वीकारात् । (३६) तथापि वायुवृत्तित्वे शुकादिककारगकारादिव्यञ्जकवायूनां विजातीयत्वं वाच्यं, तथा च ककारव्यञ्जकवायुत्वव्याप्यं यदि शुककवर्णाभिव्यञ्जक(३७)वायुत्वं तदा शुकगकारव्यञ्जकवायौ न स्यात् । अथ व्यापकं तदा सर्व एव कव्यञ्जकवायवः शुकवर्णाभिव्यञ्जकवायवः स्युः । तस्माद्वायुवृत्तित्वेऽपि (३८) तासां नानात्वमावश्यकम् । अथास्तु स्त्रीपुंसादिगकारभेदस्तथापि यावद्वक्तृभेदमनन्ता एव नित्या वर्णाः प्रत्यभिज्ञानादिति चेत् । अस्त्युत्पादविनाशप्रतीतौ सत्यामपि स एवायं गकार इति प्रत्यभिज्ञा । अस्ति च तदनन्तरमप्युत्पादविनाशप्रथा, न चोत्पादादिप्रतीत्यभेदप्रत्यभिज्ञयोरन्यतरस्य परस्परं विहायान्यद्बाधकमस्ति । न चानयोः परस्परं बाध्यबाधकभावे विनिगमकं, येनैकभ्रान्तत्वेनाविरोधः स्यात् । कथं वा भेदाभेदज्ञानयोरन्यत्रावधारितं परस्परप्रतिबन्धकत्वं परिभूय प्रथमं तयोरेकसत्त्वे ऽप्यपरोत्पत्तिप्रसङ्ग इति संकटप्रविष्टतया प्रत्यभिज्ञानं शब्दनित्यत्वे प्रमाणयितुं न शक्यते । (३९) नन्वे-

---

मोभावेन तस्याननुगतत्वमिति भावः । यद्यपि गकारपदवाच्यत्वावच्छेदकत्वादिनानुगमः संभवत्येव तथापि तदप्रतिसंधानेऽप्यनुगतप्रत्ययाद्गत्वमेकमिति बोध्यम् । (२८) अत एवेति । जातिसंकरप्रसङ्गादेवेत्यर्थः । ननु गत्वव्याप्यमपि तारत्वं कथमेकम् । मन्दत्वेन संकरापत्तेः । तथा हि । तारत्वव्याप्यं यदि मन्दत्वं, तदात्यन्तमन्देऽपि तारत्वापत्तिः । यदि च तद्व्यापकं, तदा ऽत्यन्ततारेऽपि मन्दत्वापत्तिरिति परस्परात्यन्ताभावसमानाधिकरणजात्योर्मध्ये गकारे संकरापत्तिः । यदि चाऽत्यन्ततारे भिन्नमेव तारत्वमात्र,मत्यन्तमन्दे मन्दत्वमपि भिन्नमेव, तदा मध्यगकारवृत्तितारत्वमन्दत्वयोरन्यूनानतिरिक्तव्यक्तिकत्वापत्तिः । न चानन्यगत्या तत्तथा स्वीकार्यम् । अपसिद्धान्तादिति चेत्, मैवम् । मध्यगकारे तारत्वमन्दत्वयोर्भेदस्यासिद्धेः । एकैव हि जातिः किंचित्सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदिका प्रतिबध्यतावच्छेदिका च, अत एव प्रवृत्तिनिमित्तद्वयसमावेशात्तारमन्दशब्दप्रयोगः । न चैवं वस्तुन उभयोरविरोधात्तन्निबन्धनविरुद्धधर्माध्यासो विरुध्यतइति वाच्यम् । एकप्रतियोगिकतारत्वमन्दत्वयोर्विरोधेन तन्निबन्धनविरुद्धधर्माध्यासोपन्यासादिति । (२९) व्याप्यतेति । व्याप्यत्वेनानिश्चयादित्यर्थः । अत एव धूमत्वेन धूमदर्शनेऽपि वह्निसंदेहः, तदर्थमेव व्याप्यतावच्छेदकानिश्चय उक्त इति ध्येयम् । (३०) सप्रतियोगिकत्वादिति । अवधिज्ञानाधीनज्ञानत्वादित्यर्थः । (३१) ते चाश्रय इति । तथा चासिद्धिरिति भावः । (३२) तथेति । नन्वेवं व्यवहर्तव्यज्ञाने सति सत्यां व्यवजिहीर्षायामधिकापेक्षाया व्यवहारे ऽदृष्टचरत्वादिति प्रत्यक्षखण्डोक्तविरोध इति चेत् । अत्राहुः । व्यवहारः शब्दप्रयोगात्मा प्रवृत्तिनिमित्तज्ञानमपेक्षते तस्यापि व्यवहर्तव्यत्वात् । न च तारशब्दप्रयोगे सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकजातिमानयमित्यात्मके सजातीयोपस्थिति विना प्रवृत्तिनिमित्तनिश्चय इत्याश्रये गृह्यमाणे गृहीतेऽपि स्वरूपेण जातिविशेषे न तद्व्यवहारो न तु यावद्व्यवहर्तव्यज्ञानेऽपि व्यवहारार्थमधिकापेक्षेति । परमतावष्टम्भेन वादिभेदेन वा तदुक्तमित्यन्ये । ननु मन्दत्वाभाव एवोत्कर्षो न तु जातिरूप इत्यत आह । (३३) उत्कर्षस्त्विति । वैपरीत्यापत्तेरितिभावः । ननु यदि जातिसंकरभयेनैकस्य नानात्वं तदा तारत्वादिकमेवानुगतं, गत्वं तु नानास्तु । तथा च न तु गत्वं नानेत्यसिद्धमित्यत आह । (३४) गकारे त्विति । गत्वे त्वित्यर्थः । तादृशानुगमकोपाधेरभावात् । भावे वा तदप्रतिसंधानेऽप्यनुगतप्रत्ययादिति भावः । ननु जातिसंकराद्गत्वं जातिरेव मास्त्वित्यत आह । (३५) अनन्यथेति । गकारभेदसिद्धावनुगतप्रत्ययानुरोधेन गत्वजातिसिद्धौ संकरभयेनानन्यगत्या तारत्वादिनानात्वस्वीकारादित्यर्थः । ननु त्वन्मते तावद्वैलक्षण्यस्वीकारे गौरवमित्यत आह । (३६) तथापीति । तथा च गौरवं तुल्यमित्यर्थः । (३७) वायुत्वम् । वायुवृत्तिजातिविशेषः । (३८) तासाम् । तारत्वादिजातीनामित्यर्थः । आशयमविद्वान् शङ्कते । (३९) नन्विति । आश-

ऽमुत्पत्तिमत्त्वादिनाप्यनित्यत्वसिद्धिः कथम्। (४०) इत्थ(४१)मुत्पादादिबुद्धिप्रत्यभिज्ञानयोरप्यवश्यं विषयभेदः, एकविषयत्वे (४२) विरोधेनैकानन्तरमपरानुत्पत्तिप्रसङ्गात्। एवं च भेदे भासमाने प्रत्यभिज्ञायास्तज्जातीयत्वं विषयो न व्यक्त्यभेदः। न चैवं तज्जातीयो ऽयमिति स्यात्, (४३) न तु सोयमिति वाच्यम्। (४४) तज्जातीयत्वप्रतीतेरपि सोयमित्याकारदर्शनात्। यथा सैवेयं गाथा तदेवेदमौषधं बहुभिः कृतं मया ऽपि प्रत्यहं क्रियमाणमस्तीत्यादौ। (४५) नहि तावद्वर्णमात्रमानुपूर्वी,-जराराजनदीदीनादिषु तन्नानात्वात्, किं तु तदुच्चारणानन्तरमुच्चारणं (४६) तज्ज्ञानानन्तरं ज्ञानं वा। तच्च नानेति तद्वती गाथापि नानैव। (४७) न चाभेदे भासमाने उत्पादादिबुद्धिरेवान्यस्योत्पादादिकमवगाहते गकारगतत्वप्रतीतेर्भ्रान्तत्वप्रसङ्गात्। न चेष्टापत्तिः। अभेदे भास,माने तद्विरुद्धधर्मवत्त्वभ्रमानुदयात्। विनिगमकाभावेनोभयस्यापि यथार्थत्वाच्च। क्व तर्हि तस्याभेदो विषयः यत्र प्रथमं न भेदप्रथा। अत एव भेदसत्त्वे तदज्ञानात् क्व चित्सा भ्रान्ता,तस्माद् यत्र भेदप्रतीति(४८)स्तदितरबाधकाबाध्या तत्र प्रत्यभिज्ञैव न भवति (४९) भवन्ती वा तज्जातीयत्वमालम्बते न तु भ्रान्ता विशेषदर्शने भ्रमानुदयात्। (५०) अपि च यथा शङ्खादिध्वनीनामुत्पत्तिविनाशप्रत्ययात्तारत्वादिविरुद्धधर्मसंसर्गाच्चानित्यत्वे सैवेयं गुर्जरीत्यादिप्रत्यभिज्ञा तज्जातीयत्वविषया, तथा वर्णप्रत्यभिज्ञापि,अन्यथा ध्वनयोपि नित्याः स्युः, उत्पत्तिविनाशतारत्वादिप्रतीतीनां प्रत्यभिज्ञानबलेनौपाधिकत्वात्। न च वर्णेषु तारत्वेनैव भासमाना ध्वनय उपाधयः संभवन्ति। न तु ध्वनिषु वर्णास्तज्जनककण्ठताल्वाद्यभिघाताभावादिति वाच्यम्। वर्णोच्चारणदशायामपि गुर्जरिकादिजनकानामभावात्। तस्मादुत्पत्तिविनाशतारत्वादि प्रत्ययस्य प्रत्यभिज्ञानस्य च तुल्यत्वे द्वयोरपि नित्यत्वमनित्यत्वं वा। न चोभयोरपि नित्यत्वमेव। उक्तन्यायेन प्रत्यभिज्ञायास्तज्जातीयत्वविषयत्वात्। किं च यदि व्यङ्ग्यः शब्दः स्यात्तदा बाह्यालोकाभावे घटस्येव व्यञ्जकाभावे शब्दस्यानुपलम्भात् तत्संशयः स्यात्,न त्विहेदानीं शब्दो नास्तीति निश्चयः तस्माद्वर्णो न

---

यमुद्घाटयति। (४०) इत्थमिति। (४१) उत्पादादीति। आदिपदाद् भेदबुद्धिपरिग्रहः। (४२) विरोधेनेति। उत्पादादेर्भेदव्याप्यत्वेनाभेदविरोधित्वादित्यर्थः। (४३) न त्विति। सोयमितिशब्दाभिलापो न स्यादित्यर्थः। (४४) तज्जातीयेति। तज्जातीयत्वविषयकप्रतीत्यापि सोयमित्याकारकशब्दाभिलापदर्शनादित्यर्थः। ननु तज्जातीयत्वविषयकप्रत्ययेनाविचित्रेण कथं तज्जातीयोयं सोयमित्याकारकविचित्रशब्दाभिलाप इति चेत्। अत्र वदन्ति। तत्पदसमभिव्याहृत एवकारो ऽभेदव्युत्पन्नो, ऽभेदश्च भेदविरहो, भेदश्च द्वेधा,गत्वसामान्यावच्छिन्नप्रतियोगिकस्तद्गत्वावच्छिन्नप्रतियोगिकश्च, तत्र भेदे भासमाने प्रत्यभिज्ञा प्रथमस्य भेदस्य विरहमभेदमवगाहते। तदभाने द्वितीयस्य। उभयत्रापि स एवायं गकार इति व्यपदेशः। यत्र तु तद्वृत्तिजात्यभिन्नजातिमत्त्वमन्यत्र भासते तत्र तज्जातीयोयमिति॥ के चित्तु भेदे भासमाने यत्र जात्यभेद आश्रये परम्परासंबन्धेन भासते तत्र सोयमित्याकारः। यत्र तु तद्वृत्तिधर्मो ऽन्यत्र तत्र तज्जातीयोयमित्याकार इति प्राहुः। भेदे भासमाने जात्या संबन्धेन व्यक्त्यन्तराभेदो यत्र व्यक्त्यन्तरे भासते तत्र सोयमित्याकार इत्यप्याहुः॥ ननु गाथाप्येकैवेत्याशङ्क्याह। (४५) नहीति। मौनिश्लोकाव्याप्तेराह। (४६) तज्ज्ञानेति। वैपरीत्यमाशङ्क्य निराकरोति। (४७) न चेति। अभेदो व्यक्त्यभेदः। (४८) तदितरेति। प्रत्यभिज्ञेतरेत्यर्थः। (४९) भवन्ती वेति। यद्यपि सा न प्रत्यभिज्ञा तथापि तादृशशब्दप्रयोगहेतुत्वेन सापि तथोक्तेति भावः। ननु चाभेदे भासमाने विशिष्टधर्मिभेदप्रतीतेर्धर्मभेदविषयत्वम्। यथा लोहितोयं न श्याम इत्यत्र नहि प्रथमं भेदधीरेवेत्यत्र मानमस्ति, येन विरोधेन प्रत्यभिज्ञा व्यक्त्यभेदं नोल्लिखेत्। कस्य चित्तथासंभवेपि पुरुषविशेषं प्रति शब्दनित्यत्वं स्यात्। तथा च वैपरीत्यमेवास्तु। एवं चोत्पादादिबुद्धिर्भ्रान्तास्तु। न चाभेदे भासमाने विशेषदर्शनाच्च तथा। उत्पादादेर्भेदव्याप्यत्वेनाग्रहदशायां तदारोपे बाधकाभावात्। प्रत्यभिज्ञाविषयभेदकल्पनया परंपरासंबन्धेन वा यथार्थत्वसंभवाच्च। श्यामो नष्टो लोहितो ऽयमुत्पन्न इतिवत्। तस्मात्प्रत्यभिज्ञायां भेदादिबुद्धेर्वा विषयभेदकल्पनमित्यत्र विनिगमनाविरहादनित्यत्वे संदेह इति चेत्। अत्र वदन्ति। बहूनामुत्पादादिबुद्धीनां विषयान्तरकल्पनापेक्षया प्रत्यभिज्ञानमात्रस्य विषयभेदकल्पने लाघवमिति तदेव कल्प्यतइति। प्रतिबन्दीमाह। (५०) अपि चेति। परपक्षखण्डनमात्राच्च

नित्यो (५१) ऽनित्यो वा (५२) सत्त्वे सत्युत्पत्तिमत्त्वात्। (५३) अस्मदादिबहिरिन्द्रियग्राह्यत्वे सति जातिमत्त्वाद्, (५४) अस्मदादिप्रत्यक्षगुणत्वाद्वा। (५५) आत्मैकत्वप्रत्यक्षपक्षे विशेषगुणत्वात्। (५६) व्यापकसमवेतप्रत्यक्षविशेषगुणत्वात्। (५७) अनात्मप्रत्यक्षविशेषगुणत्वात्। (५८) अव्याप्यवृत्तित्वात्। (५९) ईश्वरज्ञानं च न तथा, तत्प्रयोजककारणाभावात्। (६०) बहिरिन्द्रियव्यवस्थाहेतुगुणत्वात्। (६१) भूतप्रत्यक्षगुणत्वात्। (६२) उत्कर्षापकर्षशब्दप्रवृत्तिनिमित्तजातिमत्त्वाद्वेत्यादिरसत्वादिव्याप्यजातेर्नानात्वेपि तादृशशब्दप्रवृत्तिनिमित्तत्वस्य साधारणत्वात्। न चात्र (६३) साधनावच्छिन्नस्य (६४) पक्षधर्मावच्छिन्नस्य वा साध्यस्य व्यापकः स्पर्शवत्समवेतत्वमुपाधिः। (६५) सर्वत्र वर्णात्मकशब्दपक्षीकरणे व्योमगुणेष्वनित्येषु ध्वनिषु साध्याव्यापकत्वात्। (६६) स्पर्शवत्पदस्य पक्षमात्रव्यावर्तकत्वेन पक्षेतरत्वाच्चेति, (६७) यदा वर्णा एव न नित्याः- तदा कैव कथा पुरुषविवक्षाधीना ऽऽनुपूर्व्यादिविशिष्टवर्णसमूहरूपाणां पदानां कुतस्तरां च तत्समूहरूपस्य वाक्यस्य कुतस्तमां च तत्समूहस्य वेदस्येति (६८) तथापि

---

स्वपक्षासिद्धिरित्यत आह। (५१) अनित्यो वेति। न च साध्ययोरभेदः। उत्तरावधिविधुरत्वाभावः पूर्वत्र साध्यः, ध्वंसावच्छिन्नसत्तावत्त्वं सत्तावच्छिन्नध्वंसप्रतियोगित्वं वा ऽत्र साध्यमित्यदोषादित्याहुः। ध्वंसे व्यभिचारवारणाय (५२) सत्त्वे सतीति। न च सत्ता जातिरन्यतरासिद्धाप्रसाध्याङ्कत्वात्। उत्पत्तिमत्त्ववत्। सत्त्वं भावत्वमित्यन्ये। (५३) अस्मदादीति। आत्मनि व्यभिचारवारणाय बहिष्पदम्। गोत्वादौ तद्वारणाय जातिमत्त्वम्। योगिचाक्षुषतया परमाणौ व्यभिचारवारणायास्मदादीति। न च योगजो धर्मो मनस एव सहकारी न चक्षुरादेरिति वाच्यम्। विनिगमकाभावात्। वस्तुतस्त्वेवमपि सामान्यादिप्रत्यासत्तिसहकृतास्मदादिबहिरिन्द्रियग्राह्यतया परमाण्वादौ व्यभिचार एवेति बाह्यविषयजन्यज्ञानविषयत्वे सति जातिमत्त्वाद्बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वे सति जातिमत्त्वादिति हेत्वर्थः। लौकिकपदं स्वमतावष्टम्भेनैव। (५४) अस्मदादीति। लौकिकप्रत्यक्षगुणत्वादित्यर्थः। गोत्वादौ व्यभिचारवारणाय गुणपदम्। (५५) आत्मैकत्वेति। एकोहमिति प्रत्यक्षसत्त्वादिति भावः। (५६) व्यापकेति। एतच्च मतभेदेन हेतुद्वयं, व्यापकसमवेतविशेषगुणत्वादिति गुरुमते, प्रत्यक्षविशेषगुणत्वादित्यस्मन्मते। एवं च परमते घटरूपे व्यभिचारवारणाय व्यापकसमवेतपद, मस्मन्मते भगवतो ज्ञानादौ व्यभिचारवारणाय प्रत्यक्षपदं लौकिकप्रत्यक्षपरमित्याहुः। तच्चिन्त्यम्। द्वितीयहेतोः पूर्वहेत्वविशेषापत्तेः। न च परमतेनैवायं हेतुरिति वाच्यम्। तत्र प्रत्यक्षपदवैयर्थ्यापत्तेः। केचित्तु आशुविनाशित्वं यदि साध्यं तदायं हेतुर्बाध्यः। एवं च घटरूपादावेव व्यभिचारवारणाय व्यापकेति। ईश्वरज्ञानादौ व्यभिचारवारणाय प्रत्यक्षेति। आत्मैकत्वप्रत्यक्षत्वपक्षे विशेषेतीत्याहुः। (५७) अनात्मेति। आत्मैकत्वे व्यभिचारादाहानात्मेति। जलपरमाणुरूपादौ व्यभिचारादाह। प्रत्यक्षेति। विशेषपदं यद्यस्ति तदा व्यर्थमित्याहुः। केचित्तु विशेषपददानेन प्रत्यक्षविशेषालौकिकप्रत्यक्षं लभ्यतइति नोक्तदोष इत्याहुः। (५८) अव्याप्येति। स्वात्यन्ताभावसमानाधिकरणत्वात्। अत्यन्ताभावत्वं च नित्यसंसर्गाभावत्वं तेन संयोगरूपस्वात्यन्ताभावसमानाधिकरणे संयोगात्यन्ताभावे न व्यभिचार इत्येके। वृत्तिः समवायो विवक्षित इत्यन्ये। गुणपदं प्रयोज्यपरमित्यपरे। ईश्वरज्ञानादौ व्यभिचारमाशङ्क्याह। (५९) ईश्वरज्ञानं त्विति। ईश्वरज्ञानादिकं त्वित्यर्थः। (६०) बहिरिति। सुखादिवदात्मैकत्वमपि मनोव्यवस्थापकमिति कृत्वोक्तं बहिरिति। रूपत्वादौ व्यभिचारादाह गुणेति। शब्दविशेषस्यैव पक्षत्वमिति न भागासिद्धिः। (६१) भूतेति। आत्मैकत्वजलपरमाणुरूपगोत्वेषु व्यभिचारवारणाय क्रमेणैव विशेषणानि। (६२) उत्कर्षेति। उत्कृष्टापकृष्टेत्यर्थः। परमाणुत्वपरममहत्त्वयोर्व्यभिचारादुभयोपादानम्। न चैवं तारतमे मन्दतमे च शब्दे भागासिद्धिरिति वाच्यम्। तदुभयभिन्नस्यैव शब्दस्य पक्षत्वादित्याहुः। सुखादौ साध्याव्याप्तिराह। (६३) साधनेति। यदवच्छिन्नं साध्यं प्रति उपाधेर्न व्यभिचारः तस्य बहिरिन्द्रियव्यवस्थाहेतुत्वादेः साधनस्यावच्छेदकत्वं बोध्यम्। अत एवाह। (६४) पक्षधर्मावच्छिन्नस्येति। तथा च सत्त्वे सतीत्यादौ पक्षधर्मस्यैवावच्छेदकत्वमिति भावः। पक्षे साध्याव्याप्तिर्न दोष इत्यत आह। (६५) सर्वत्रेति। ननु ध्वनीनां वायुधर्मतया व्योमगुणत्वमसिद्धमिति न तत्र साध्याव्याप्तिरित्यतो दोषान्तरमाह। (६६) स्पर्शवदिति। यद्यप्यात्मत्वादेरपि व्यावर्तनान्न पक्षमात्रव्यावर्तकत्वं तथापि साधनवत् पक्षमात्रकमेव व्यावर्तयतीति तथोक्तम्। पक्षेतरवदुत्सर्गतस्तस्याप्युपाध्याभासत्वात्। वस्तुतो हेतौ तर्कसत्त्वादस्याप्रयोजकत्वे तात्पर्यम्। प्रकृते योजयति। (६७) यदा चेति। तथा च निर्दोषत्वाभावे कथमीश्वरं विना वेदप्रामाण्यमिति भावः। तथापीति। (६८)

परतन्त्रपुरुषपरंपराधीनतया प्रवाहाविच्छेदमेव नित्यत्वं ब्रूम इतिचेत्,न । स्मृत्याचारानुमितानां शाखाना(६६)-मुच्छेददर्शनात् ।

(७०) स्यादेतत् । (७१) विवादपद(७२)मपूर्वबोधिका (७३) स्मृतिः स्मृत्यर्थानुभवजनकवेदमूला,(७४) अविगीतमहाजनपरिगृहीतस्मृतित्वात् । प्रत्यक्ष(७५)वेदमूलकस्मृतिवत्,वेदमूलत्वं च वेदजन्यानुभवजन्यत्वं,(७६) ज्ञानद्वारा ज्ञायमानस्यैव वेदस्य स्मृतिहेतुतया ऽनुमानं कुविन्दस्येव ज्ञानादिव्यवहितस्य च पटे (७७) न तु कारणकारणता, वेदे सत्येव तत्प्रतिसंधाने स्मृतिप्रणयनात् । (७८) वेदार्थस्मृतिता च प्रसिद्धिसिद्धा, (७९) स्मृत्यर्थश्च स्मृतित एवोपस्थितः । न च स्मृत्यर्थबोधकवेदानुमाने स्मृत्यर्थरूपवेदार्थस्य विषयत्वाद्वेदोनुवादकः । (८०) ज्ञानान्तरोपनीतस्य विशेषणत्वेन (८१) विशिष्टबुद्धिसंभवात् । पाककृतौ मानसप्रत्यक्षायां पाकस्य संज्ञा-

---

न चैवं स्वतः प्रमाणपुरुषाभावे ऽविश्वासादन्धपरंपरापत्तिः, सर्वेषामेव तेषामुपदेशेन वेदार्थदर्शितया स्वतः प्रामाण्यात्, तथा च तदधीनमेव वेदप्रामाण्यमस्तु किमीश्वरेणेति भावः॥ के चित्तु प्रवाहावच्छिन्नस्वरूपं यन्नित्यत्वं तेन यन्निर्दोषत्वं तत एव प्रामाण्यमस्तु इत्यर्थं इत्याहुः । (६९) उच्छेदेति । तथा च प्रवाहाविच्छेदो ऽसिद्ध इति भावः । स्मृत्याचारानुमितशाखानां नोच्छेदः, किं तु स्वत एव प्रच्छन्नवेदात्तदर्थज्ञापकत्वेनानुमितात् स्मृत्याद्युत्पत्तिरित्याह ।

(७०) स्यादेतदिति । अत्र वेदत्वमध्ययनविषयत्वव्याप्यं न वेति विप्रतिपत्तिः, प्रत्यक्षवेदमूलकस्मृतावंशतः सिद्धसाधनमित्यत आह । (७१) विवादेति । उच्छिन्नमूलत्वविवादेत्यर्थः । प्रत्यक्षवेदमूलान्येत्यत्र तात्पर्यम् । न्यायादिमूलकस्मृतावंशतो बाधादाह । (७२) अपूर्वबोधिकेति । अपूर्वप्रमापिकेत्यर्थः । वेदसमानार्थेत्यत्र तात्पर्यम् । अपूर्वस्य वेदत्वात् । वेदस्यापि पक्षत्वेंऽशतो बाधादाह । (७३) स्मृतिरिति । ताद्रूप्यसिद्धये जनकेत्यन्तम् । अन्यथा तस्याननुभावकत्वापत्तेः । यत्तु उच्छिन्नवेदमूलत्वेनार्थान्तरादाह । जनकेत्यन्तम् । उच्छिन्नस्वासत्त्वान्न जनक इति, तन्न । वेदमूलत्वपदेनैव वेदमूलत्वं चेत्यादिना तन्निराकरणात् । उच्छिन्नवेदस्यापि पूर्वस्मृत्यर्थानुभवजनकत्वाच्च । (७४) अविगीतेति । लोभमूलस्मृतेर्विगीतत्वात् । न्यायमूलकस्मृतेर्महाजनापरिगृहीतत्वाद् वेदस्यास्मृतित्वाच्चितयमुपात्तम् । महाजनश्चादृष्टार्थिपुरुष इत्यवधेयमित्याहुः । तच्चिन्त्यम् । एवं हि महाजनपदेनैव लोभमूलकस्मृतिवारणे ऽविगीतपदवैयर्थ्यापत्तेः । नहि लोभमूलकस्मृतिरदृष्टार्थिपुरुषपरिगृहीता, किं तु लोभार्थिपरिगृहीतैव, भ्रमादिना तथा परिग्रहे न्यायमूलकस्मृतावपि तथासंभवे व्यभिचारतादवस्थ्यापत्तेः॥ अन्ये तु स्मृतित्व शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमितिविषयार्थकभिन्नत्वे सति शब्दजन्यवाक्यार्थज्ञानजन्यवाक्यत्वं, तेन लौकिकवाक्ये न्यायादिवेदमूलकस्मृतौ वेदे च न व्यभिचारः । एवं च चैत्यं वन्देतेत्यादिबौद्धागममूलकस्मृतौ व्यभिचारादाह । महाजनेति । श्येनेनाभिचरन् यजेतेत्यादिवेदमूलकस्मृतौ व्यभिचारः, साध्ये वेदपदस्य विधिपरत्वेन तत्र साध्यासत्त्वादित्यत आह । अविगीतेति । विधित्व च निषिद्धफलकादृष्टाप्रतिपादकवेदत्वम् । अतो न कलञ्जं भक्षयेदित्यादिवेदमूलकस्मृतौ न व्यभिचार इति वदन्ति । के चित्तु अलौकिकाविगीतस्मृतित्वादिति हेत्वर्थः । न्यायप्रत्यक्षमूले तु लौकिक्यौ, यूपहस्तिस्मृतिर्विगीतेति । स्मृतित्वं च ऋषिप्रणीतशास्त्रत्वं, तेन न वेदस्य स्मृतित्वं, पाणिनिमतादिकं तु स्मृतिरेवेत्याहुः । ननु वेदमूलत्वं वेदपरम्पराकारणतयापि निर्वहतीत्युच्छिन्नवेदमूलकत्वेनार्थान्तरमत आह । (७५) वेदेति । तथापि दोषतादवस्थ्यमित्यत आह । (७६) ज्ञानेति । (७७) न त्विति । कारणकारणतामात्रमित्यर्थः । ननु वेदानुमानात्प्राग् वेदसमानार्थत्वं दुर्ज्ञेयं स्मृतीनामिति विशिष्टपक्षाज्ञानादाश्रयासिद्धिरित्यत आह । (७८) वेदार्थेति । परपक्षवदिति शेषः । यद्वा ऽप्रयोजकत्वनिरासायाह । वेदार्थेति । यदिवेदजन्यानुभवजन्येयं न स्यात्तदा महाजनस्य वेदसमानार्थकत्वप्रसिद्धिसिद्धा न स्यादित्यर्थः । साध्याप्रसिद्धिं परिहरति । (७९) स्मृत्यर्थइति । (८०) ज्ञानान्तरेति । ननु स्मृतिजन्यतादृशज्ञानगोचरतयैव वेदार्थस्य वेदो ऽनुवादक इति चेत् । अत्राहुः । नहि यथाकथंचिदुपस्थितार्थबोधकतामात्रेणानुवादकता । एकदा वेदार्थाधिगमे पुनस्तेन तदर्थबोधजनने तद्वेदानुवादकतापत्तेः । किं त्ववश्यापेक्षणीयनिरपेक्षप्रमाणबोधितार्थप्रमापकतया । न च स्मृतिर्निरपेक्षप्रमाणमवश्यापेक्षणीयं वा । स्मृत्यर्थगोचराचारादप्यनुमानसंभवेन तथानुमितवेदस्यापि तदर्थबोधकत्वादिति । (८१) विशिष्टबुद्धिसंभवादिति । तटस्थज्ञानविषयस्यापि व्यावर्तकत्वेन विशेषणत्वमिति स्मृत्यर्थस्य नानुमितिविषयत्वम् । अतो नानुवादकत्वम् । कार्येण कारणानुमाने ऽकारणस्यातद्विषयत्वमिति तैरभ्युपगमात् । तदिदं वक्ष्यति । तस्यासिद्धत्वेनाजनकतयेत्यादि । न चैवं तदर्थज्ञापकत्वविशिष्टवेदस्याननुमितौ कथं ततो ऽर्थधीरिति वाच्यम् । भेदाग्रहे सति ज्ञानद्वयस्यापि

संविज्ज्ञाने संज्ञाया (८२) ज्ञानायथार्थत्वे (८३) तदनुव्यवसाये भ्रमविषयस्येव, (८४) अन्यथा भ्रान्तभ्रान्तिज्ञसंकरापत्तिः,न तु शब्दार्थौ ऽनुमानस्य विषयः,तस्यासिद्धत्वेनाजनकतया स्मृत्यव्यापकत्वात् । (८५) स च वेदो नित्यमनुमेय एव, (८६) अनुमितादेवार्थमवधार्य स्मृतिप्रणयनसंभवात् । नन्वासंसारमपठितस्य न वेदत्व(८७)मुत्पत्तितो ऽभिव्यक्तितो मौनिश्लोकवदभिप्रायतो वा ऽऽनुपूर्वीहीनवर्णमात्रस्य निरर्थकत्वात् । (८८) ज्ञानजनकसमभिव्याहारस्यानेकत्वे विशेषाननुमानाच्चेतिचेत्, न । स्मृत्यर्थज्ञापकत्वेनैव ज्ञातस्य स्मृत्यर्थानुभावकत्वात् । नहि शाब्दबोधे नियतपदानुपूर्वी हेतुः, (८९) व्यभिचारात् । (९०) पदस्य वर्णविशेषानुपूर्वीनियमेपि तत्तद्वर्णानुपूर्वीकपदविशेषत्वेन न हेतुत्वं, हस्तकरादिपदानां प्रत्येकं व्यभिचारात् । किं त्व(९१)व्यभिचारितदर्थज्ञापकत्वेन ज्ञातस्य लाघवादावश्यकत्वाच्च । (९२) तदर्थज्ञापकत्वज्ञानार्थमेव क्व चिद् वर्णक्रमस्वरविशेषाणामुपयोगः । (९३) अत एव वर्णलोपादौ कुशमानयेति सकारसंदेहे ऽपि लिपावुच्चारणे वा हस्तकरसंदेहे ऽपि वाक्यार्थबोधः ॥

---

विशिष्टज्ञानकार्यकारित्वाभ्युपगमात् । के चित्तु बुद्धिविषयत्वे सनीति पाठः । अत्र विशेषणतया ऽनुमितौ स्मृत्यर्थरूपवेदार्थस्य भानम्, अतो भिन्नप्रकारकत्वान्नानुवादकत्वमित्यर्थ इति । तच्चिन्त्यम् । न च शब्दार्थ इत्याद्यग्रिमग्रन्थविरोधात् । स्वमतेनैव दृष्टान्तमाह । पाकेत्यादि । इवशब्दः पाकस्येत्यत्र संज्ञाया इत्यत्र चानुषज्यते । सर्वधीयथार्थत्वपक्षे द्वितीयं ज्ञानं नानुव्यवसाय इति न ज्ञानान्तरोपनय इत्यत आह । (८२) ज्ञानायथार्थत्वइति । यद्यपि ज्ञानानुव्यवसाये ज्ञानविषयस्येवेति सामान्याभिधानेपि प्रकृतसिद्धिस्तथापि अन्यथेतिवक्ष्यमाणमनिष्टं भ्रमानुव्यवसाय एवेति विशिष्याह । (८३) तदनुव्यवसाय इति । (८४) अन्यथेति । तदनुव्यवसायस्य भ्रमविषयत्वे भ्रमवत्तस्यापि भ्रमत्वापत्तिरित्यर्थः । ननु यदि वेदो विद्यमानोस्ति तदा कथं न श्रूयत इत्यत आह । (८५) स चेति । तर्हि कथं ततो ऽर्थधीः कथं वा स्मृतिप्रणयनमित्यत आह । (८६) अनुमितादिति । (८७) उत्पत्तित इति, न्यायनये, ऽभिव्यक्तित इति गुरुमते, तृतीयमुभयमते । एकवर्णभिन्नपदाभिप्रायेणेदमित्याहुः । तर्ह्यानुपूर्वीविशिष्ट एवानुमीयतामित्यत आह । (८८) ज्ञानेति । अष्टकाः कार्याः कार्या अष्टका इत्याद्यनेकविधसमभिव्याहारसंभवे विशेषेण व्याप्त्यग्रहादिति भावः । (८९) व्यभिचारादिति । घटमानय आनयघटमित्युभाभ्यां वाक्याभ्यामन्वयदर्शनादिति भावः । (९०) पदस्येति । एकवर्णभिन्नपदस्येत्यर्थः । (९१) अव्यभिचारीति । अनुगतेत्यर्थः । ननु यद्यानुपूर्वी न नियामिका तदा जरराजादावविविशेषापत्तिरित्यत आह । (९२) तदर्थेति । विशेषपदं सर्वत्र सबध्यते, प्रकृते च तद्विनापि तदर्थज्ञापकत्वग्रह इति न तदपेक्षेति भावः । (९३) अत एवेति । यत एव तदर्थज्ञापकत्वज्ञानं प्रयोजकमित्यर्थः ॥

---

## ॥ वेदान्तसूत्रशैवभाष्यम् ॥

पुनराशङ्क्याह ॥

॥ कामाच्च नानुमानापेक्षा ॥ १८ ॥

“प्रजापतिरकामयत प्रजाः सृजेयेति” इति सर्वश्रुतिषु[1] संकल्पो हिरण्यगर्भस्य जगत्सृष्टौ श्रूयते, तथापि तस्य जगत्कारणत्वेऽनुमानापेक्षा नास्ति[2], तस्य कामस्यावान्तरसृष्टिविषयत्वात्, “परमेश्वरस्यैव हिरण्यगर्भात्मनावान्तरसृष्टिश्च[3]” इति वक्ष्यति, “संज्ञामूर्तिकॢप्तिस्तु त्रिवृत् कुर्वत” इति, “अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि” इति हिर[4]ण्यगर्भरूपेणात्मना प्रपञ्चानुप्रविष्टस्य परमेश्वरस्य नामरूपकर्तृत्वश्रवणात् ॥ १९ ॥

अनयोरभेद एवाभ्युपेय इत्यत आह ॥

॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

अस्मिन्नुपनिषत्तन्त्र[5] एवास्य हिरण्यगर्भस्य तद्योगं तस्य परमेश्वरस्य शेषत्वसंबन्धं शास्ति मन्त्रभागः, “ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः” इति; अतः परमेश्वर एव जगत्कारणं तच्छेषभूतो हिरण्यगर्भ इति सिद्धम् ॥ २० ॥

तदितः पूर्वै[6]रधिकरणन्यायैः सर्वज्ञं नित्यतृप्तमनादिबोधं स्वतन्त्रमलुप्तशक्तिमनन्तशक्तिकं सकलजगदुभयकारणं समस्तोपनिषत्तन्त्रसमन्वयैकप्रतिपाद्यं स्वप्रकाशनिखिलप्रपञ्चविशिष्टाद्वितीयस्वभावं सच्चिदानन्दस्वरूपं संसारपाशविच्छेदकारणं चिदचिदर्थान्तरं शिवतत्त्वं परं ब्रह्मेति सिद्धं; तस्य साधकानां ससारभेषजं मनःसमाधानयोग्यं किमपि रूपं प्रदर्शयितुमिदमधिकरणमारभ्यते ॥

---

१—रकामयत प्रजायेयेति, प्रजाः सृजेयेति सर्वत्र श्रुतिषु इति पा० ।

२—युक्त्यपेक्षा नास्ति इति पा० ।

३—स्य हिरण्यगर्भात्मनोऽवान्तरसृष्टीच्छा” इति वरपा० ।

४ प्रथमजीवरूपहिरण्य-इति पा० ।

५—न्मन्त्र इति पा० ।

६ पूर्वमतीतै—इति पा० ।

॥ अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी", इति छान्दोग्ये श्रूयतेऽस्य विषयः । अयमादित्यान्तर्वर्ती हिरण्मयः पुरुषः परमेश्वरो देवताविशेषो वेति संशयः । एवं सति सर्वाधारस्य सर्वगतस्य परमेश्वरस्यादित्यान्तर्वर्तित्वं हिरण्मयरूपत्वं च न संभवति, स्वेच्छया रूपाङ्गीकारे त्रिलोचनत्वनियतं[1] तदिह न विद्यते; 'पुण्डरीकमेवमक्षिणी" इति लोचनद्वयमेव श्रूयते, अथवा स्वेच्छागृहीतोऽपि देहः संसारिणामिव परमेश्वरस्यापि दुःखमुत्पादयेदेव, स्वेच्छासंबन्धेऽपि पावकस्य दाहकत्व हि स्वभावः[2]; अतः परमेश्वरस्य शरीरसंबन्धो न युक्त.[3], तस्मादयं कश्चिद्देवताविशेष एव, न परमेश्वरः, इति पूर्वपक्षन्यायः ।

सिद्धान्तस्तु, परमेश्वर एव, कुतः, तद्धर्माणामुपदेशात्, "स एष सर्वेषां लोकानामीष्टे[4],सर्वेषां कामानां", तस्योदिति नाम", "स एष सर्वेभ्यः पाप्मभ्य उदित", इत्यादिना प्रतिपादिताः सर्वलोककामेश्वरत्वसर्वपापराहित्यादयो धर्मा हि पारमेश्वराः,

"एको रुद्रो न द्वितीयाय तस्थुः,
सर्वाल्लोकानीशते ईशनीभिः ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं
ज्ञात्वा देवं मुच्यते सर्वपाशैः" ॥
"एको बहूनां विदधाति कामान्"

इत्यादिश्रवणात् सर्वाधारस्य सर्वगतस्यादित्यान्तर्वर्तित्वं न संभवति; इति यदुक्तं, तत्र न विरोधः, सर्वाधारः सर्वगतः परमेश्वरः साधकानुग्रहाय हिरण्मयं किमपि रूपं समास्थाय सवितृमण्डलमधिवसति, शरीरसंबन्धादस्मदादिवदीश्वरस्य न संसारदोषापत्तिः; श्रुतिरेव भगवती ह्यस्य शरीरसंबन्धं सर्वपापराहित्यं च प्रतिपादयति; वयं हि श्रुतिप्रामाण्यशरणा न युक्तिं बहु मन्महे; पावकोऽपि संबन्धाच्च शक्तिमतां दाहकः; "यथा कप्यासं पुण्डरीकमेवमक्षिणी"इति त्रिलोचनस्य परमेश्वरस्य लोचनद्वयग्रहणं पुण्डरीकसादृश्यवर्णनार्थं, न तृतीयलोचनाभावद्योतनपरं; तथाहि, त्रिपुत्रं ब्राह्मणं प्रति द्वौ पुत्रावस्याग्निकल्पावित्युक्ते द्विसंख्याग्रहणं न शेषपुत्रनिषे-

१ त्रिलोचनत्वं इति पा० ।
२—त्वं स्वभाव एव; इति पा० ।
३ न युक्त एव इति पा० ।
४—मीशः, इति पा० ।

धपरं, किंतु पुत्रद्वयस्याग्निसादृश्यपरं, तद्वदत्रापि, कमुदकं रश्मिभिः पिबतीति कपिरादित्यः, तेनासितं विकसितं पुण्डरीकं यथा स्फुरति, तथा परमेश्वरस्य लोचनद्वयं, तृतीयं लोचन तु मुकुलितस्वभावं विकसितपुण्डरीकसदृशं न भवति. मुकुलितपुण्डरीकसममित्यभिप्रायः, "असौ योऽवसर्पति नीलग्रीवो विलोहितः, उतैनं गोपा अदृशन्, अदृशन्नुदहार्यः, उतैनं विश्वा भूतानि, स दृष्टो मृडयाति नः", इतीति ॥ २१ ॥

नीलग्रीवस्य परमेश्वरस्य सर्वभूतप्रत्यक्षादित्यत्वावगमात्.

"स्वरुचाहितमण्डलस्त्रिनेत्रो रविः,"

इति तस्य त्रिलोचनत्वावगतेश्च, आदित्य एव प्रत्यक्षः परमेश्वरः प्रभामण्डलमध्यवर्ती, अन्यथा कथमस्य "नीलग्रीवो विलोहित" इति नीलग्रीवत्वं त्रिलोचनत्वं चोच्येत, "असावादित्यो ब्रह्म" इति श्रुतिषु ब्रह्मत्वव्यपदेशश्च; तस्मात् "अन्तरादित्य"इति प्रद्योतनरूपमण्डलान्तर्वर्ती सूर्य एव हिरण्मयः पुरुष, इत्यत आह ॥

॥ भेदव्यपदेशाच्चान्यः ॥ २२ ॥

मण्डलाभिमानिनोऽस्माच्चेतनरूपादादित्यादन्य एव हिरण्मयरूपः परमेश्वरः, भेदव्यपदेशात्, "य आदित्ये तिष्ठन्नादित्यादन्तरो, यमादित्यो न स वेद, यस्यादित्यः शरीरं, य आदित्यमन्तरो यमयति, एष त आत्मान्तर्याम्यमृत"इति; अत्रामृतशब्देन शिव उच्यते; "एतानि ह वा अमृतस्य नामधेयानि" इति शतरुद्रीयप्रशंसापरजाबालोपनिषच्छ्रवणादादित्याद्भेद एव परमेश्वरस्य तदविदितत्वादिधर्मैर्व्यपदिश्यते, तस्मादादित्याच्चेतनादन्य ईश्वरो हिरण्मयो "नीलग्रीवो विलोहित" इति नीलग्रीवः परमेश्वर एवादित्यान्तर्वर्ती प्रतिपाद्यते; तदात्मतया तच्छब्दवाच्यत्वम् ।

ननु न नीलग्रीवः परमेश्वर आदित्यान्तर्वर्ती किंतु नारायण एव; तथाहि, सर्वत्र लौकिकाः पठन्ति ॥

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसंनिविष्टः ।

इति तस्यैव पुण्डरीकसदृशाक्षिद्वयसंबन्धो युक्तः, पुण्डरीकाक्ष इति प्रसिद्धेः, किमन्यथा प्रतिपादनप्रयासेन. इति चेन्न; परमेश्वरासाधारणलिङ्गानां हिरण्मयपुरुषे दृश्यमानानां[1] तस्मिन् नारायणेऽनुपपत्तेः; तथाहि, सूत्रविषयस्य संदिग्धस्यास्य वाक्यस्यासंदिग्धैर्वाक्यान्तरैर्निर्णयो युक्तः; महोपनिषदि श्रूयते; "आदित्यो वा एष एतन्मण्डलं तपति" इत्यादि, तत्र "य एष एतस्मिन् मण्डलेऽर्चिर्दीप्यत[2]" इति मण्ड-

१ गृह्यमाणानां इति पा० ।
२ तत्रादित्यमण्डले त्रयीमयेऽर्चिर्दीप्यत इति पा०

लप्रभामुक्त्वा "य एतस्मिन् मण्डलेऽर्चिषि पुरुष" इति मण्डलाभिमानिनं सूर्यमभिधाय "य एषोऽन्तरादित्ये[1] हिरण्मयः पुरुष" इति हिरण्मयं पुरुषमादित्यान्तर्यामिणमुक्त्वा[2] पुनः "आदित्यो वै तेज ओजो बलं यश" इत्यादिना तस्यादित्यरूपस्य विभूतिमभिधाय "एष एव पुरुष" 'एष भूतानामधिपतिः" इति भूतपतित्वेन तं निर्दिश्य, पुनः कीदृश[3] इत्याकाङ्क्षायां "सर्वो वै रुद्र" इत्यारभ्य "हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतय" इत्युपसंहृतं, तत्र बाहुग्रहणस्योपलक्षणत्वाद्धिरण्यरूप इति तात्पर्यम्. अतो हिरण्यसदृशरूप उमापतिरादित्यमण्डलवर्तीति सिध्यति, अत्र नीलग्रीवत्वमुमापतित्वमित्यादि विशेषलिङ्गं परमेश्वरादन्यत्र तस्यायोगात्, पुण्डरीकाक्षत्वं सामान्यं लिङ्गं नारायणादन्यत्रापि तस्य दर्शनात्; कमललोचना नारी कमललोचनः पुरुष इति, अतो विशेषलिङ्गेन सामान्यलिङ्गस्य बाधो विधेयः, सदेत्यादि लौकिकवचनं भाक्तमेव; ततो हिरण्यसदृशरूपस्त्रिलोचनो नीलग्रीव उमापतिः सकललोककामेश्वरः सर्वपाप्मानाघ्रातो भगवान् परमेश्वर आदित्यान्तर्वर्ती सावित्रीप्रतिपाद्यः सर्वेषां मुमुक्षूणां ध्येय इति सिद्धम् ॥ २२ ॥

सर्वज्ञत्वादिधर्मकस्य परब्रह्मणः शिवस्य परममङ्गलास्पदमुपास्यं रूपमभिधाय तल्लक्षणस्य नामरूपवशादत्रातिव्याप्तिशङ्कायामधिकरणमारभ्यते ॥

॥ आकाशस्तल्लिङ्गात् ॥ २३ ॥

॥ अत एव प्राणः ॥ २४ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः। "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति", "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहते," इति, अत्र सकलभूतोत्पत्तिप्रलयकारणप्रतिपादकौ[4] प्राणाकाशशब्दौ परमेश्वरप्रतिपादनपरौ किंवा भूताकाशप्राणवायुप्रतिपादनपराविति संदेहः। 'प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते, प्राणेन जातानि जीवन्ति,प्राणं प्रयन्त्यभिसंविशन्ति," इत्यादिश्रुतेः, 'आकाशाद्वायुः" इत्यादिश्रुतेश्च, प्राणाकाशयोरपि सकलभूतकारणत्वावगमात् तावेवात्र प्रतिपाद्याविति प्राप्ते ब्रूमः। प्राणाकाशशब्दवाच्यः परमेश्वर एव, सर्वकारणत्वादितल्लिङ्गात्[5]; न ह्यनयोः सर्वकारणत्वादिकं संभवति; तत्रानन्दरूपस्य ब्रह्मणः कारणत्ववादे तात्पर्यं "प्राणाद्ध्येव खलु" इत्यादिश्रुतेः, न प्राणस्य कारणत्ववादे, किंत्वनुवादमात्रम्, आकाशस्य भूतान्तर्वर्तितया सर्वशब्देन ग्रहणात्, सर्वभूतोत्पत्तिश्च "आत्मन आकाशः संभूत"इति श्रुत्या परमेश्वरादेव; तस्मात् सर्वभूतकारणत्वं न भूताकाशप्राणयोरिति सिद्धान्तः।

ननु भूताकाश इत्युपपदग्रहणेन किमिति चेत्; परमाकाशस्य परप्रकृतिरूपस्य सर्वभूतकारणत्वसद्भावात्[1] सप्रयोजनं; तर्हि परमेश्वर इति कथं निर्णयः, तदभेदात्; इति सिद्धम् ॥ २३ ॥ २४ ॥

पूर्वं निखिलभुवननायकस्य निरस्तसमस्तदोषवासनाकलङ्कस्य निरतिशयमाङ्गल्यरत्नाकरस्योमापतेः परब्रह्मण आदित्यमण्डलमास्पदमिति निरूपितं, तदिह तस्य स्थानान्तरमुच्यते ॥

॥ ज्योतिश्चरणाभिधानात् ॥ २५ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः। "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु, सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु, इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इत्यादि, अत्र सकललोकव्यापितया दिवि श्रूयमाणं परं ज्योतिः परमेश्वरो वा तदन्यो वेति संशयः। द्योशब्दस्याकाशवाचित्वात् "परो दिव" इत्याकाशवर्ती सूर्य एवात्र प्रतिपाद्यते ज्योतिरिति, अथवा "अन्तः पुरुषे ज्योतिः" इति पुरुषान्तर्वर्तितया जाठरोऽग्निरिति पूर्वपक्षः। सिद्धान्तस्तु, "परो दिवो ज्योतिः" इति सर्वोत्तरं परं ज्योतिः परमेश्वर एव, पूर्वत्र "पादोऽस्य सर्वा भूतानि" इति ज्योतिषोऽस्यैकांशतया विश्वभूतानामभिधानात्; नैतत् संभवति जाठराग्निसूर्ययोः. परिच्छिन्नत्वात् ॥ २५ ॥

पूर्वं[2] "गायत्री वा इदं सर्वं भूतम्"इति सर्वात्मकतया गायत्री प्रतिपाद्यते; प्रकरणात् तदेकांशत्वमेव प्रपञ्चस्य "पादोऽस्य सर्वा भूतानि" इति श्रुतिराह, इत्यत आह ॥

॥ छन्दोऽभिधानान्नेति चेन्न,

तथा चेतोऽर्पणनिगदात्,

तथाहि दर्शनम् ॥ २६ ॥

पूर्वं[3] "गायत्री वा इदं सर्वं भूतम्" इति छन्दसोऽभिधानात्[4] तस्यैवात्राभिधानं, न परमेश्वरस्य इति चेत्; नैतत् संभवति[5] गायत्र्याख्यस्य छन्दोमात्रस्य सर्वभूतात्मकत्वं; किंतु सावित्र्या तु समानोपदेशः परमेश्वरस्य क्रियते; यथा गाय-

१—मुक्त्वार्चिषि पुरुष इति मण्डलाभिमानी सूर्योऽन्तरादित्ये इति पा०।
२—न्तर्वर्तिन—इति पा०।
३—शः पुरुष इति पा०।
४—प्रतिपादनपरौ इति पा०।
५—त्वादिरूपः, तल्लिङ्गात् इति पा०।

१ संभवात् इति पा०।
२ पूर्वत्र इति पा०।
३ पूर्वत्र इति पा०।
४ छन्दस एवाभिधानात् इति पा०।
५ सिद्धं भवति इति पा०।

त्री षडक्षरैश्चतुर्भिः पादैश्चतुष्पदा, तथा ब्रह्मापि चतुष्पादिति, तथाह्यन्यत्रापि छन्दोऽभिधायी शब्दः सादृश्यादर्थान्तरे प्रयुज्यमानो दृश्यते, यथा संवर्गविद्यायां "ते वा एते पञ्चान्ये दश सन्तस्तत्कृतम्" इत्युपक्रम्य "सैषा विराट्" इत्युक्तं, तथाच सर्वात्मकतया[1] परमेश्वरस्य लिङ्गेन गायत्रीप्रकरणबाधः, अतः परमेश्वर एव ज्योतिरिति ॥ २६ ॥

पुनरनुपपत्तिमाह ॥

॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

भूतपृथिवीशरीरहृदयैश्चतुष्पदेति व्यपदेशो न गायत्र्याख्ये छन्दस्युपपद्यते, परमेश्वर एवोपपद्यते ॥ २७ ॥

पुनराशङ्क्य परिहरति ॥

॥ उपदेशभेदान्नेति चेन्नो-

भयस्मिन्नप्यविरोधात् ॥ २८ ॥

ननु "पादोऽस्य सर्वा भूतानि" इति, "त्रिपादस्यामृत दिवि" इत्यत्र द्युसंबन्धप्रत्यभिज्ञानाज्ज्योतिर्वाक्ये परमेश्वरः[2] प्रतिपाद्यत इति न सारम्; उपदेशभेदेन विरोधात्, "त्रिपादस्यामृतं दिवि" इति "परो दिवो ज्योतिः" इति विभक्तिभेदेनो[3]पदेशभेदः; अतो विरोध इति चेन्न, उभयत्रापि विरोधाभावात्, यथा वृक्षाग्रे श्येनः, वृक्षाग्रात् परः श्येन, इति व्यपदेशः, अत्रोभयत्रापि दिवः परत्वमेव विवक्षितम्, अनेन लिङ्गेन परमेश्वर एव पुरुषसूक्तोदितः पुरुष इति सिद्धम्, "पादोऽस्य विश्वा भूतानि" इत्यत्रापि श्रवणात्, अतो निजैकांशसमाप्तसकलप्रपञ्चं दिवि दीव्यमानं परं ज्योतिः परमेश्वर इति निर्णयः ॥ २८ ॥

भगवत्सवितृमण्डले साक्षादुपास्यतया निर्दिष्टस्य परमेश्वरस्यास्मिन्नधिकरणे विश्वात्मकत्वमुक्तं, तदात्मकतया तदन्येषामुपास्यत्वं नान्यथेति प्रतिपादयितुमिदमधिकरणमारभ्यते ॥

॥ प्राणस्तथानुगमात् ॥ २६ ॥

अस्य कौषीतक्युपनिषदि विषयः श्रूयते । "प्राणोऽस्मि प्रज्ञात्मानं मामायुरमृतमुपास्व" इतीन्द्रवचनं विषयः । अत्रोपासनाविधिविषयत्वेन प्राणशब्दसामानाधिकरण्येन निर्दिष्ट इन्द्रो वा परमेश्वरो वेति संशयः । इह "प्राणोऽस्मि प्रज्ञात्मानं माम्" इति प्राणशब्दस्य साक्षादिन्द्रेण सामानाधिकरण्यमवगम्यते; "मामुपास्व" इति तद्विषय एवोपासनाविधिः श्रूयते; तस्य प्राणत्वं वृष्टिद्वारा सकलरक्षकत्वादुपपद्यते, सकलोपास्यत्व च परमैश्वर्यवत्त्वादुपपन्नम्, तथाहि श्रुतिः, "इन्द्रो राजा जगतो य ईश" इत्यादि, तस्मादिन्द्र एवोपास्यतया निर्दिश्यत इति पूर्वपक्षः । सिद्धान्तः परमेश्वर इति, कुतः, आनन्दाजरामृतप्रज्ञात्मादीनां तदसाधारणधर्माणामस्मिन् प्राणशब्दनिर्दिष्टेऽनुगमात्, "एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" इति, यदुक्तम्, "इन्द्रो राजा" इति श्रुतिः, तत्रेन्द्रशब्द ईश्वरविषयः प्रकरणादवगम्यते ॥ २९ ॥

आशङ्क्य परिहरति ॥

॥ न वक्तुरात्मोपदेशादिति चे-

दध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ ३० ॥

नायमुपास्यः परमेश्वरः, उपक्रमे[1] "मामेव विजानीहि त्रिशीर्षाणं त्वाष्ट्रमहनम्" इत्यादिना प्रज्ञातजीवभावस्येन्द्रत्वोपदेशात्, अत उपसहारस्तदनुगुणो नेतव्य इति चेत्, नैतदुचितम्; उपक्रमादारभ्यास्मिन् प्रकरणे[2]ऽध्यात्मसबन्धस्य परमेश्वरधर्मस्य बाहुल्यात्, तथाहि उपक्रमे तावत्, "यं त्वं मनुष्याय हिततमं मन्यसे" इति हिततयोपासनं प्रारब्धं, तत् तावत् परमेश्वरधर्मः, तदुपासनस्यैव मोक्षसाधनस्य हिततमत्वात्, मध्ये च "एष ह्येव साधु कर्म कारयति, तं यम एभ्यो लोकेभ्य उन्निनीषते, एष ह्येवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषत" इति सर्वकर्मकारयितृत्वं श्रूयते, तथा, "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता,, इति जडचेतनात्मकसकलप्रपञ्चाधारत्वं श्रूयते तच्च परमेश्वरधर्मः, अतः परमेश्वरधर्मबाहुल्यादिहोपास्य इन्द्रो[3] न भवति ॥ ३० ॥

कथमिन्द्रो[4] जीवत्वादनुपास्योऽपि स्वविषयमुपदिशतीत्याशङ्क्याह ॥

॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥

"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिशास्त्रदृष्ट्या सर्वशब्दवाच्यत्वात् परमेश्वरस्य स्वशरीरकतया[5] स्वशब्दवाच्यं परमेश्वरमेवोपास्यत्वेनोपदिष्टवानिन्द्रः अत इन्द्रशब्देनोपदेशः परमेश्वरस्य, दृष्टान्तमाह, वामदेववत्; वामदेवो हि स्वस्य परमेश्वरात्मत्वदृष्ट्या "अहंमनुरभवं सूर्यश्च,,इत्युपदिदेश, तद्वदिन्द्रोपदेशः; अथवा वेदान्तविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्मभावमुपगतस्य वि-

---

१ क्रियते, सर्वात्मकतया इत्येव पा० ।

२ इत्यत्र गायत्रीप्रतिपादनमुचितं; परमेश्वरः इति पा० ।

३ विरोधात् प्रत्यभिज्ञानासिद्धेः, "त्रिपादस्यामृतं दिवि" इति विभक्ति—इति पा० ।

---

१ उपक्रमे इत्येव पा० ।

२—भ्यास्मिन्निन्द्रशब्दवाच्ये—इति पा० ।

३—बाहुल्यादयमिन्द्रशब्दवाच्य इन्द्रो इति पा० ।

४ कथमयं इति पा० ।

५ स्वस्वरूपतया इति पा० ।

गलितमनुष्यादिदेह[1]विषयकल्पिताहंभावसंकोचस्य संपन्नविश्वाकारपराहंभावस्य वामदेवस्य स्वात्मनः सर्वगतत्वावगमान्मनुसूर्यादिप्रपञ्चभावोक्तिः, एवमिन्द्रस्यापीति निश्चीयते; "प्राणोऽस्मि प्रज्ञात्मा" इति प्राणशब्देन परं ब्रह्मोच्यते, तस्यानन्दरूपत्वेन सकलप्राणनहेतुत्वात्; "प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" इति श्रवणात्; तथाच "अहं ब्रह्मास्मि, मामुपास्व" इति ब्रह्मदृष्ट्योपदेशः; तथाहि, कृष्णादयोऽप्यर्जुनादीन् प्रत्युपदिष्टवन्तः ॥ ३१ ॥

पुनराशङ्क्याह ॥

॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥

ब्रह्मज्ञानोपासनया ब्रह्मभावमुपगतस्य विगलितजीवभावस्य तद्रूपदृष्ट्या स्वस्मिन्नुपास्यत्वसर्वात्मभावोपदेशो न युक्तः; अत्र "त्रिशीर्षाणं त्वाष्ट्रमहनं यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः" इत्यादौ जीवत्वलिङ्गं मुख्यप्राणलिङ्गं च दृश्यते, ततोऽयमुपदेशो न युक्त इति चेत्; नैवं वाच्यम्, यतो जीवप्राणशब्दवाच्यत्वं परमेश्वरस्य समुचितम्, उपासनात्रैविध्याद्धेतोः, अत्र परमेश्वरस्य स्वरूपेण भोक्तृशरीरेण भोग्यरूपेण चोपासनं त्रिविधमिह विवक्षितम्[2], आत्मतया भोग्याश्रितत्वेन च तदुपपत्तेः, परमेश्वरस्य स्वरूपोपासनमविलम्बेन मुक्तिहेतुः, अन्यदपि द्वयं कालेन, तस्मादिह परमेश्वरात्मकतयेन्द्रस्योपासनसिद्धिरिति निर्णयः ॥ ३२ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्म[3]मीमांसाभाष्ये प्रथमस्याध्यायस्य प्रथमः पादः ॥ :: :: ॥

---

## ॥ अथ वेदान्तसूत्रशैवभाष्यीयप्रथमाध्यायस्य ॥

॥ द्वितीयपादारम्भः ॥

---

ब्रह्मबोधकानां वेदान्तवाक्यानामानन्त्यात् प्रतिवाक्यं विचारानुपपत्तेः संदिग्धानां केषांचिद्विचारेण तन्न्यायैस्तादृशानामपि निर्णयो भवतीति कतिचिदेव वाक्यानि तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधकानि सूत्रितानि[4], तेषु कतिचित् स्पष्टब्रह्मलिङ्गानि प्रथमपादे विचारितानि, कतिचिदनतिस्पष्टलिङ्गानि द्वितीयपादे विचार्यन्ते ॥

---

१—भेद—इति पा० ।

२ त्रिविधम्; इति पा० ।

३ श्रीमद्ब्रह्म—इति पा० ।

४ वाक्यानि सूत्रितानि ब्रह्मबोधकानि तात्पर्यलिङ्गसमन्वयेन इति पा० ।

॥ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः । "मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकाम" इत्यादि, अत्र "मनोमय" इत्यादि[1]धर्मकः श्रूयमाणः पुरुषः परमेश्वरो वा जीवो वेति संशयः । जीव इति पूर्वपक्षः[2]; कुतः, तस्य सर्वप्रत्यासन्नत्वात्[3]; "अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिंल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत" इति कर्मवशादिह परत्र च परिभ्रमन् जीवः प्रस्तुतः पूर्वं, तदनन्तरं "मनोमय" इति श्रूयते, अत एव मनोमयत्वादिधर्मको जीवः, मनोमयत्वप्राणशरीरत्वादिकं संसारिलक्षणं न परमेश्वरलिङ्गः; सति यथार्थेऽसंकल्प इति सत्यसंकल्पत्वमपि संसारिधर्मत्वेन योजनीयम्, अतः सर्वथा मनोमयत्वादिधर्मको जीव एव, न परमेश्वर, इति प्राप्ते ब्रूमः; परमेश्वर एव मनोमयत्वादिधर्मकः; कुतः, परब्रह्मणः परमेश्वरस्यैवोपक्रमे "सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत" इति सर्वकारणस्योपास्यत्वेनोपदेशात्, श्रुतितात्पर्यं च, "तज्जलानिदं सर्वं" "ब्रह्माधीनजन्मस्थितिध्वंसकमेतत् सर्वं चिदचिद्रूपं ब्रह्म[4] खलु" इति, "शान्त उपासीत ब्रह्म" इति, यथा सागरे संपन्नजन्मस्थितिविलयं बुद्बुदकदम्बकं तद्रूपमेव दृश्यते, तथा शक्तिमति ब्रह्मणि संपन्नजन्मादिकं तन्मयत्वेन तद्व्यतिरिक्तं किंचन नोपलभ्यते, तथाथर्वशिरसि निरूपितमीश्वरेण; "अहमेकः प्रथममासं वर्तामि च भविष्यामि च, नान्यः कश्चिन्मत्तो व्यतिरिक्त" इति, ततश्च तेन "ब्रह्माहम्" इत्यादिना विश्वरूपत्वमात्मनः प्रपञ्चितं, तत्र विश्वरूपत्वे "सोऽन्तरादन्तरं प्राविशत्" इत्यनुप्रवेश एव हेतुरुक्तः, अतो ब्रह्मणोऽपृथक्सिद्धजन्मस्थिति[5]प्रवृत्तिकत्वादस्य जगतस्तद्व्यतिरिक्तता नास्ति, तथाभियुक्ता वदन्ति ।

"शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः ।
शक्तिस्तु शक्तिमद्रूपाद् व्यतिरेकं न गच्छति[6] ॥
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव ।
शक्तिशक्तिमतोर्यस्मादभेदः सर्वदा स्थितः ॥
अतस्तद्धर्मधर्मित्वात् परा शक्तिः परात्मनः ।
न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते" ॥

---

१ मनोमयत्वादि—इति पा० ।

२ पूर्वः पक्ष इति सर्वत्र पा० ।

३ तस्य प्रसक्तत्वात् इति वरपा० ।

४—मेतद्विश्वं यतस्ततः सर्वं विश्वं ब्रह्म इति पा० ।

५—णोऽपृथक्सिद्धिस्थिति—इति पा० ।

६ वाञ्छति इति पा० ।

इत्यादि, वायुसंहितायां[1] च,

"शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ।
तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ॥
परेण[2] विविधा शक्तिः प्रबोधानन्दरूपिणी ।
एकानेकस्वरूपेण भाति भानोरिव प्रभा" ॥

"परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ।
एको रुद्रो न द्वितीयो यतः स्यु-
र्य इमाल्लोकानीशते ईशिनीभिः" ॥

"जननीभिः परमशक्तिभिः" इत्यादयश्च परब्रह्मणः स्वाभाविकानन्तजगज्जननशासनपालनशक्तिमत्त्वं श्रुतयो वदन्ति ।

किं बहुना, श्रुतिस्मृतीतिहासपुराणाभियुक्तसूक्तिप्रामाण्यात् सकलचिदचित्प्रपञ्चमहाविभूतिरूपा[3] महासच्चिदानन्दसत्ता स्वतन्त्रा च देशकालादिपरिच्छेदशून्या स्वाभाविकी परमशक्तिः परब्रह्मणः शिवस्य स्वरूपं च गुणश्च भवति; तद्व्यतिरेकेण[4] परब्रह्मणः सर्वज्ञत्वसर्वशक्तित्वसर्वकारणत्वसर्वनियन्तृत्वसर्वोपास्यत्वसर्वानुग्राहकत्वसर्वपुरुषार्थहेतुत्वादिकं सर्वगतत्वं च न संभवति ।

किंच, महेश्वरमहादेवरुद्रादिपरमाख्यानामभिधेयत्वं च न संभवति ।

तथाच[5] सर्वचिदचित्प्रपञ्चशरीरविशिष्टं ब्रह्म सर्वशब्दवाच्यं, यथा नीलशब्दो न केवलं स्वस्यैव वाचकः, किंतु स्वविशिष्टस्योत्पलस्यापि, तथा प्रपञ्चशब्दोऽपि ब्रह्मणः, तस्मात् सर्वशब्दवाच्यत्वं ब्रह्मणः "सर्वो वै रुद्र" इत्यादय उपपादयन्ति[6]; ततः "सर्वं खल्विदं ब्रह्म" इति सर्वचिदचित्प्रपञ्चशरीरकं ब्रह्माभिधीयते; ततो ब्रह्मरूपत्वात् प्रपञ्चस्य द्वेषाद्यविषयत्वाच्छान्त एव ब्रह्मोपासीतेति । एतमर्थं[7] पौराणिकी भणितिरप्यभिव्यनक्ति[8],

"विग्रहं देवदेवस्य जगदेतच्चराचरम् ।
एतमर्थं न जानन्ति पशवः पाशगौरवात् ॥
विद्येति चेतनां प्राहुस्तथाविद्यामचेतनाम् ।
विद्याविद्यात्मकं सर्वं विश्वं विश्वगुरोर्विभोः ॥
रूपमस्य न संदेहो विश्वं तस्य वशे यतः ।
सत्ये साधौ च सच्छब्दः सद्भिरेव प्रयुज्यते ॥
विपरीते त्वसच्छब्दः कथ्यते वेदवादिभिः ।
सच्चासच्च जगद्विश्वं शरीरं परमेष्ठिनः ॥
वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा ।
शिवस्य पूजया तद्वत् पुष्यत्यस्य वपुर्जगत् ॥
आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः ।
व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् ॥
देहिनो यस्य कस्यापि निग्रहः क्रियते यदि ।
अनिष्टमष्टमूर्तेस्तन्नात्र कार्या विचारणा ॥
सर्वोपकारकरणं सर्वानुग्रहणं तथा ।
सर्वाभयप्रदानं च शिवस्याराधनं विदुः" ॥

इत्यादिकाः । अतः सर्वाकारत्वाद् ब्रह्मणः, "सर्वं ब्रह्म" इति "शान्त उपासीत" इति समञ्जसमेव, तस्मादुपास्यत्वे[1]-नोपक्रमगतं ब्रह्मैव मनोमयत्वादिधर्मकं, न[2] मनोमयत्वादिकं संसारिणो लक्षणम्, उपास्याकारपरिग्रहादस्य परिच्छेदसंभवात्, यदुक्तं "क्रतुमयस्य जीवस्य प्रस्तुतत्वान्मनोमयो जीव" इति, तदयुक्तम्, उत्पत्तिशिष्टब्रह्मावरुद्धायामुपासनायामवान्तरप्राप्तस्य जीवस्य प्रवेशयितुमशक्यत्वात्, यथा विश्वेदेवावरुद्धायामामिक्षायां वाजिनां न प्रवेशः, अतो ब्रह्मैव मनोमयत्वादिधर्मवत्त्वेनोपास्यमिति ॥ १ ॥

उपक्रमगतं ब्रह्मैव मनोमयत्वादिविशिष्टमित्युक्तेऽवान्तरसिद्धस्य जीवस्य प्रसङ्गोऽनर्थकः स्यादित्याशङ्कायामाह ॥

॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥

सत्यसंकल्पत्वसर्वकामत्वादीनां विवक्षितानां गुणानां ब्रह्मण्येवोपपत्तेस्तदेवोपास्यम्, अत्रावान्तरसिद्धस्य जीवस्योपासकत्वेन तदाकाङ्क्षायोगादिति ॥ २ ॥

इह सामान्येन जीवस्योपास्यत्वं नास्ति, किंतूपासकत्वमिति निरूपितम्; पुनरपि सकलजीवसमष्टिरूपहिरण्यगर्भोपादानभूतस्य नारायणस्यापि विश्वाधिकब्रह्मविषयमुपास्यत्वं नास्तीत्यभिधातुमिदमधिकरणमारभ्यते ॥

१ वायवीय—इति पा० ।
२ परास्य इति पा० ।
३ महारूपा इति पा० ।
४—रेके इति पा० ।
५ यथा इति पा० ।
६—यः प्रतिपा—इति पा० ।
७ एतत् सर्वं इति पा० ।
८—व्यञ्जयति इति पा० ।

१ ततो हि समुपास्यत्वे—इति पा० ।
२ न च इति पा० ।
३ प्रवेष्टु—इति पा० ।
४—मुपासकत्वे नोपास्यत्वमित्यभिधातु—इति पा० ।

॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

अस्य महोपनिषदि श्रूयते विषयः । "पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतं नारायणं महाज्ञेयम्"इत्यादि । अत्र विश्वपतित्वादिलक्षणयुक्ततया नारायणशब्दवाच्यो मूर्त्यात्मा परमेश्वरोऽन्यो वेति संदेहः । "सहस्रशीर्षं देवम्" इत्यारभ्य सहस्रशीर्षत्वादिविधेयत्वेन[1] नारायणमूर्त्यात्मन एवोद्देश्यत्वेनाभ्यासात्, "समुद्रे तं विश्वशंभुवम्" इति समुद्रशायित्वादितल्लिङ्गाच्च, तत्पर्यायवाचकाच्युतहरिशब्दादिप्रयोगाच्च, नारायण एव मूर्त्यात्मा विश्वपतित्वादिना लिङ्गेन प्रतिपाद्य इति पूर्वः पक्षः । सिद्धान्तस्तु नारायणात्मा परमेश्वर इति; कुतः विश्वपतित्वादीनां परमेश्वरधर्माणां तदर्थान्तरे नारायणेऽनुपपत्तेः, "पशूनां पतये वृक्षाणां पतये जगतां पतये" इत्यादिना परमेश्वर एव निखिलभुवनाधिपत्यमभ्यस्यते; "एको रुद्रो न द्वितीया यतः स्युर्य इमाल्लोकानीशत ईशिनीभिः" इति रुद्रव्यतिरिक्तस्य जगदीश्वरत्वं निषिध्यते; "विश्वाधिको रुद्र"इति विश्वाधिकत्वं च तस्यैव श्रूयते; अतो विश्वपतित्वादिलक्षणो नारायणात्मा परमेश्वर इति समीचीनम् ॥ ३ ॥

ननु "नारायणात्मा" इति नारायणान्तर्यामी परमेश्वर इति हृदयं; तदयुक्तं; "नारायणपरं ब्रह्म" इति नारायणस्य परब्रह्मभावमुक्त्वा "पद्मकोशप्रतीकाशम्" इत्यादिना पुरुषस्य हृदयपुण्डरीकस्थानमुक्त्वा तस्य मध्ये "वह्निशिखा" इत्यादिना जीवस्वरूपमुक्त्वा तस्याः शिखाया मध्ये परमात्मा व्यवस्थित इति परमात्मत्वेन जीवान्तर्यामित्वेनोपास्यत्वमवगम्यते, "स ब्रह्मा स शिव" इत्यादिना तद्विभूतित्वं ब्रह्मशिवादीनामुच्यते; अतो नारायण एव विश्वपतिः परब्रह्मभूतो जीवान्तर्यामित्वेनोपास्य इति; तदात्मकत्वेन तदधिकत्वं तदुपास्यत्वं च परमेश्वरस्य वक्तुमयुक्तमित्यत[2] आह ॥

॥ कर्मकर्तृव्यपदेशात् ॥ ४ ॥

कर्मत्वं कर्तृत्वं च व्यपदिश्यते, तत्र ध्यातृध्येययोः परमेश्वरनारायणयोः, कथं "पद्मकोशप्रतीकाशम्" इति प्रकृतस्य नारायणस्यैव हृदयमुच्यते; "परमात्मा व्यवस्थित" इति परमेश्वर एव परमात्मा तदन्तर्वर्तितया ध्येयत्वेनोच्यते, ततो ध्यातृत्वेन नारायणस्य ध्येयत्वेन परमेश्वरस्य कर्तृत्व कर्मत्वं च व्यपदिश्यते; अतो नारायणादन्य एवोपास्यः परमात्मा; "स ब्रह्मा स शिव" इत्यादिना ब्रह्मविष्णुरुद्रेन्द्रादिप्रपञ्चविभूतिविशिष्टत्वं परमेश्वरस्योपदिश्यते; अत्र विष्णोरग्रहणेऽपि कैवल्योपनिषदि श्रूयते; "हृत्पुण्डरीकं विरजम्" इत्यादिना हृदयपुण्डरीकं प्रस्तुत्य,

"उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात् ॥
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः स प्राणः स कालोऽग्निः",

इत्यादि,तच्चायोऽत्राध्याहार्यः, "यो वै रुद्रः स भगवान् भूर्भुवः स्वर्यश्च ब्रह्मा तस्मै वै नमो नमः, यश्च विष्णुर्यश्च महेश्वर" इत्याद्यथर्वश्रुतिरपि द्रष्टव्या; अत्र विभूतित्वेन ब्रह्मशिवयोर्मध्ये विष्णोरग्रहणं परमेश्वरोपासकतया तस्य प्रस्तुतत्वादित्यविरोधः ॥ ४ ॥

"सहस्रशीर्षा पुरुष"इत्यारभ्य प्रस्तुतस्य पुरुषस्य "पादोऽस्य विश्वा भूतानि" इति निजैकांशजगद्विशिष्टत्वमुच्यते, "सहस्रशीर्षं देवम्" इति स एवात्र नारायण इति बोध्यते[1], स चायं "नारायणपरं ब्रह्म" इति ब्रह्मत्वेनोच्यते, ब्रह्मैव हि सर्वोपास्यं कथमस्य तथाभूतस्यान्यं प्रत्युपासकत्वमित्यत आह ॥

॥ शब्दविशेषात् ॥ ५ ॥

"नारायणपरं ब्रह्म" इति शब्दविशेष एव नारायणात् परमिति ब्रह्म प्रतिपादयति; अतो नारायणादन्यदेव परं ब्रह्मोपास्यं, परब्रह्मणः सहस्रशीर्षत्वादिविशिष्टपुरुषरूपेण जगदुपादानत्वात्; परब्रह्मात्मकस्य तस्य जगदाकारत्वमिति वक्ष्यामः, "प्रकृतिश्च" इत्यधिकरणे ॥ ५ ॥

नारायणस्योपासकत्वे प्रमाणान्तरमाह ॥

॥ स्मृतेश्च ॥ ६ ॥

"एवमुक्त्वा ततो राजन्[2] महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम्" ॥

इति स्मृतेश्च महायोगस्वामिनो नारायणस्य परमेश्वरविषयो योगः समाधिरभिव्यज्यते; अत्र,

"अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते" ॥

इति, अश्वत्थामानं प्रति परमेश्वरवचनं च; तस्मादन्यन्नारायणादुपास्यं परं ब्रह्म ॥ ६ ॥

पुनरनुपपत्तिमाशङ्क्याह ॥

॥ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति
चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

१—देर्विधेय—इति पा० ।
२—मसार—इति पा० ।

१ साध्यते इति पा० ।
२ महाबाहुः—इति पा० ।

"नीवारशूकवत् तन्वी पीता भास्वत्यनूत्तमा ।
तस्याः शिखाया मध्येऽसौ परमात्मा व्यवस्थितः" ॥

इति स्वल्पवह्निशिखान्तर्वर्तितया स्वल्पाश्रयत्वादल्पव्यपदेशाच्चायं व्यापी न परमेश्वर इति चेत्, न, उपास्यत्वात् तथा व्यपदेशः, न स्वरूपाल्पत्वात्; व्योममहत्त्ववत् स्वरूपमहत्त्वस्य सिद्धत्वात्, यथा घटादिपूर्णाहितस्य व्योम्नस्तदुपाधिवशादल्पत्वं स्वरूपतो महत्त्वं च; ततो न विरोधः ॥ ७ ॥

पुनराशङ्क्य परिहरति ॥

॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

यदुक्तं[1], "नारायणपरं ब्रह्म" इति नारायणात् परं तदुपास्यं ब्रह्म, तदेव हि "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं ऊर्ध्वरेतं विरूपाक्षम्", इत्युच्यते[2], तत्र[3] परमशक्तिमायाशबलाकारतया कृष्णपिङ्गलं, कृशानुरेतस्कतया चोर्ध्वरेतस्कं, त्रिलोचनतया विरूपाक्षं, पुरि पूर्वोक्तदहरपुण्डरीके शेत इति पुरुषम्, ऋतं सत्यं मनोवाग्विपर्यासरहितं परं ब्रह्म, इति यल्लक्षणम्, अतोऽस्य त्रिलोचनत्वादिलक्षणशरीरसंबन्धाच्छरीरगतसुखादिसंभोगप्राप्तिरिति चेन्न; वैशेष्यात्; सुखदुःखभोगहेतुभ्यो जीवशरीरेभ्यो ब्रह्मरूपस्यास्ति हि वैशेष्यम्; इच्छागृहीतत्वादस्य, तेषां कर्ममूलत्वाच्च; अत एव श्रूयते परमेश्वरः, "अपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प" इति, संसारिशरीरधर्मरहितत्वेन, नचैवं संसारी जीवः, अत एवाप्राकृतानि पापजरामरणशोकादिरहितानि[4] स्वेच्छासंपादितानि लीलामङ्गलरूपाणि परमेश्वरस्य,

"स्थिरेभिरङ्गैः पुरुरूप उग्र"

इत्यादिषु स्थिराणि नित्यानि विज्ञायन्ते; अतः परब्रह्मणः परमेश्वरस्य जीवाद्वैशेष्याच्च तच्छरीरादिगतदोषापत्तिः, अत्र खलूपक्रमादिभिर्लिङ्गैर्विरूपाक्षं ब्रह्म सर्वोत्कृष्टमुपास्यमिति युक्तमेव; तथाहि, उपक्रमे "अणोरणीयान्" इत्यादिना, "महिमानमीशम्" इत्यन्तेन, सकलजन्तुहृदयगुहावर्तित्वेन स्वप्रसादातिशयवीतशोकपुरुषदर्शनविषयत्वेन महिमातिशयवानीशः प्रस्तुतः; पुनः "सप्त प्राणाः प्रभवन्ति तस्मात्" इत्यादिना स एव परमशक्तिमान् प्राणादिजगदुपादानत्वेन निरूपितः; ततश्च, "यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिर्हैरण्यगर्भः पश्यति जायमानम्", इति विश्वाधिकत्वेन सर्वज्ञत्वेन सकलकार्यप्रथमहिरण्यगर्भजनकत्वेन च निमित्तभूतः परामृष्टः स एव. ततः "परेण नाकम्" इति पराकाशगुहावर्तीत्युक्तः, अफलकर्मानुष्ठायिनां वेदान्ततात्पर्यवेदिनां यतीनां जितेन्द्रियाणां "परामृतात् परिमुच्यन्ति" इति परामृतरूपतया प्राप्यत्वेन वर्णितः[1], कस्तत्प्राप्तावुपाय इति प्राप्ते "दहर विपाप्म" इति दहरोपासनमारब्धं, तत्र,

"तस्मिन् यदन्तस्तदुपासितव्यम्"

इति दहरपुण्डरीके यद्वस्तु तदुपास्यमिति सामान्येनोक्तं, तत् किमित्याकाङ्क्षायां,

"यः परः स महेश्वर"

इति महेश्वराख्यं तदुपवर्णितम्; उपास्यं तत् किंरूपमित्याकाङ्क्षायाम्, "ऋतं सत्यम्" इत्यादिना विरूपाक्षत्वादिलक्षणरूपमित्युपसंहृतम्, तत्रावान्तरवाक्यसिद्धो नारायणः पूर्वाधिकरणन्यायादुपासकत्वेन सिद्धः, अत्र सर्वेषामुपासनेऽधिकारस्य सद्भावेऽपि नारायणग्रहणमस्याधिक्यार्थं, तदिहोपास्येन विरूपाक्षेण ब्रह्मणा तदुपासकस्य नारायणस्याभेदभावनया तद्धर्मैरस्य प्रतिपादनमुपादानस्य तदात्मन इति समीचीनम् ॥ ८ ॥

॥ अत्ता चराचरग्रहणात् ॥ ९ ॥

"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः, मृत्युर्यस्योपसेचनं, क इत्था वेद यत्र स" इति श्रूयतेऽस्य विषयः । इह मृत्यूपसेचनमिलितब्रह्मक्षत्रोपलक्षितनिखिलचिदचित्प्रपञ्चकवलभोक्तृतया श्रूयमाणः परमेश्वरोऽन्यो वेति संशयः । परमकारुणिकस्य सर्वानुग्राहकस्य सकलभक्षकत्वमनुचितं, हिंसारूपं हि परप्राणविमोचनं, हिंसाप्रवृत्तेः क्रोध एव मूलाङ्कुरः, क्रोधस्यामङ्गलगुणस्य मोह एव मूलकन्दः, तस्य सर्वसंहार[2]निदानस्य तम एव प्रकृतिः, अतस्तामसः सर्वसंहर्ता, तामसत्वं नामावृतज्ञानादिमत्त्वाच्छिन्नप्रकाशत्वं, सर्वसंहर्तृ ब्रह्मेत्युक्ते तस्य नित्यशुद्धस्य निरुपाधिक[3]मङ्गलाकारस्य निःसंसारकलङ्कस्याज्ञानतमोमोहक्रोधादिकामङ्गलगुणसंसर्गप्रसङ्गः[4], स्वरूपलक्षणतया निर्णीतं सर्वज्ञत्वं नित्यतृप्तत्वादिकमनर्थमेव स्यात्; तस्माद् ब्रह्मणोऽन्य एतादृशगुणः संहर्ता भवतीति पूर्वः पक्षः; सिद्धान्तस्तु ब्रह्मैव सर्वसंहर्तृत्वेन श्रूयते, कुतः, चराचरग्रहणात्, यदुक्तं "निखिलचराचरप्रपञ्चभोक्तृत्वमयुक्तम्", इति, तदेव ब्रह्मत्वे लक्षणं, परिच्छिन्नशक्तेर्जीवस्य सकलचराचरसंहरणसामर्थ्याभावात्; "तस्मा उपसंहर्त्रे[5] महाग्रासाय वै नमः",

१ उक्तं हि इति पा० ।
२ इत्यवगम्यते इति पा० ।
३ तदत्र इति पा० ।
४ पापजरामरणादिशून्यानि इति पा० ।

१ सिद्धः; इति पा० ।
२ संसार—इति पा० ।
३ निरवधिक—इति पा० ।
४—संकरप्रसङ्गः इति पा० ।
५—दुपसंहर्त्रे इति पा० ।

इति परमेश्वरस्याथर्वशिरसि श्रूयते सर्वसंहर्तृभावो, न क्वचिज्जीवस्य, "य इमा विश्वा भुवनानि जुह्वत्" इति ब्रह्मणो नित्यप्रकाशवह्नौ निखिलभुवनहव्यहोतृत्वमवगम्यते, नचैवमस्ति जीवस्य सामर्थ्यं हव्यकोटिनिविष्टस्य; स्वेतरमखिलं चराचरं चिदचित्प्रपञ्चं स्वात्मनि संहृत्य यदा वर्तते परमेश्वरस्तदा सर्वमिदं निरस्तचन्द्रसूर्यादिप्रकाशतया विध्वस्तरात्रिदिनादिकालविभागमपगतनामरूपविशेषतया स्थूलसूक्ष्मदेवमनुष्यादिव्यवहारशून्यं तमोमात्रं वर्तते, स एक एव परमेश्वरो निरङ्कुशप्रकाशः सर्वसाक्षी तदानीमपि परिशिष्यते; तथाहि श्रुतिः,

"यदा तमस्तन्न दिवा न रात्रि-
र्न सन्न चासंछिव एव केवलः" ।

इति[1], अत्र "न सन्न चासन्" इति सदसतोः पशुपाशयोर्न स्वरूपसत्ता निषिध्यते, किंतु नामरूपविभागार्हस्थूलत्वम् ।

ननु नित्यप्रकाशे शिवे परब्रह्मणि सत्यपि कथं तमोमयं जगदिति चेत्; न, स्वयंप्रकाशस्य सर्वसाक्षिणः शिवस्य का हानिः; नामरूपशून्यतया ग्रहणायोग्येषु विषयेषु विहतकरणशरीरशक्तीनां जीवानां प्रपञ्चग्रहणं नास्ति; मलतिरोहितस्वज्ञानकरणतया शिवस्य स्वप्रकाशरूपस्यापि पूर्वमिव दर्शनाभावाच्चिरस्तसमस्तकार्यविशेषज्ञाना परमसुषुप्तिमयी महावस्था तम इत्युच्यते, तथाहि स्मृतिः,

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्" ।

इति; नामरूपविभागानर्हसूक्ष्मचिदचित्प्रपञ्चशक्तिविशिष्टतया शिवः केवल इत्युच्यते, स पुनः सर्गकाले स्वसंकल्पमात्रेण समवायिकारणनिरपेक्षमेव स्वस्मात् प्रथमशक्तिपरिस्फुरणपूर्वकं तत्तन्नामविशिष्टमेव सकलं चिदचिदर्थजातं सृजति; प्रकाशयति, तथाभियुक्तसूक्तिः,

"चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत्" ॥

इति ।

ननु,

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" ।

"तस्माद्विराडजायत" इत्यादिश्रुत्या मायापुरुषयोरुपादानत्वं श्रूयते, कथं निरुपादानत्वमिति चेत्; सत्यम्; यथा घटनिष्पत्तौ कुलालस्य स्वशरीरपृथक्त्वेन मृत्पिण्ड उपादानं दृश्यते, तथा न परमेश्वरात् पृथक् सिद्धं मायाद्युपादानं,

१ इत्यादिका इति पा० ।
२ विगलित—इति पा० ।
३ दर्शनं नास्ति; तस्माच्चिरस्त—इति पा० ।

मायादिरूपात् परमेश्वराज्जगदुत्पत्तेः, अतो न विरोधः[1]; तत्तत्स्वरूपापृथगवस्थानसूक्ष्ममायापुरुषः[2] पर एव स्वयमुपादानमपीत्युच्यते; तथाथर्वशिखायाम्, "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्यग" इति श्रूयते, ततः सर्वभूतानां यत्र संहारस्तत एव सर्वेषामुत्पत्तिरिति, अनन्तानां तेषां यावत् संहृतिस्तावत् तत्रैवानन्तशक्तौ शिवे स्थितिः, इति सर्वसंहर्ता शिव एव ब्रह्मशब्दाभिधेयः; यदुक्तं "संहारस्य हिंसारूपत्वात् तन्मूलक्रोधाद्यनर्थगुणसंबन्धो ब्रह्मणो भवेत्" इति, तदविचारविलासः; क्रोधादिमूलस्य तमोगुणस्य प्राकृतधर्मत्वात्,

"उमासहायं परमेश्वरं प्रभुम्" ।

इत्यारभ्य

"समस्तसाक्षिं तमसः परस्तात्" ।

इति श्रुतिरेव भगवती प्रमाणं, परमेश्वरस्य तमसः परत्वेन पौराणिकी भणितिरपि परमेश्वरे मोहादिनिवर्तकानां ज्ञानादीनां नित्यसंबन्धमाह,

"ज्ञानं विराग ऐश्वर्यं तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे" ।

इति;

अशेषविषयामोषशुद्धबुद्धिविजृम्भणः ।
आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा ॥
अनन्तानन्दसंदोहमकरन्दमधुव्रतः ।
औदार्यवीर्यगाम्भीर्यमाधुर्यमकरालयः ॥
अखण्डजगदण्डानां पिण्डीकरणपण्डितः ।

इत्यादि च; असंकुचितविभवः परमेश्वरो हि सिसृक्षुः "सोऽकामयत बहु स्याम्" इति बहुप्रपञ्चभावनायात्मनो मायालक्षणामिच्छारूपां शक्तिमाश्रयति, "स तपोऽतप्यत" इति तपःस्वरूपिकया[3] ज्ञानात्मिकया शक्त्या सकलजीवकर्मानुगुणतत्तच्छरीरसामग्रीमालोचयति; आलोच्य च संकल्पितसकलकरणविदग्धया क्रियाशक्त्येदं सर्वं सृजतीतीच्छाशक्तिभित्तौ निखिलजगच्चित्रमुन्मीलयति; तत् सृष्ट्वा "तदेवानुप्रावि-

१—ज्जगदुत्पद्यत इत्यविरोधः इति पा० ।
२ ततः स्व—इति पा० ।
३—शानं तत्र ब्रह्म—इति पा० ।
४—र्ना ध्याता इति पा० ।
५—स्वरूपया ज्ञानरूप इति पा० ।

शात्" इति सकलकार्यजातमनुप्रविश्य शक्तित्रयसंबन्धेन त्रिगुणभिन्नमूर्तित्रयादिप्रपञ्चरूपो भवति, तदिह सर्वशक्तेः सर्वज्ञस्य शिवस्य महिमा केन विज्ञायते, अतः सर्वसंहर्ता परमेश्वर इति ॥ ९ ॥

॥ प्रकरणाच्च ॥ १० ॥

"महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ।

"नायमात्मा प्रवचनेन लभ्य" इति परमेश्वरस्यैव प्रकरणम्; अतश्च परं ब्रह्म परमेश्वरः सर्वसंहर्ता नान्य इति सिद्धम् ॥ १० ॥

इहाधिकरणे सर्वसंहर्तृत्वलक्षणेन सिद्धस्य परमेश्वरस्य "द्वा सुपर्णा" इत्यादिना प्रसिद्धं स्वविभूतिजीवसाहचर्यमभिव्यञ्जयितुमधिकरणारम्भः ॥

॥ गुहां प्रविष्टावात्मानो हि तद्दर्शनात् ॥ ११ ॥

"ऋतं पिबन्तो सुकृतस्य लोके
गुहां प्रविष्टो परमे परार्धे ।
छायातपो ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेताः" ॥

इति श्रूयतेऽस्य विषयः । इह सुकृतस्थाने परार्धे ब्राह्मणादिशरीरे हृदयगुहां प्रविष्टो कर्मफलभोक्तारो छायातपाविव विलक्षणो कैाचिच्छ्रूयेते, तावेतो बुद्धिजीवो जीवपरमेश्वरो वेति संदेहः । बुद्धिजीवावेव तो; कुतः; "ऋतं पिबन्तो" इति भोक्तृत्वावगमात्, परमेश्वरस्य न भोक्तृत्वम्, "अनश्नन्नन्योऽभिचाकशीति" इति दर्शनात्; बुद्धिजीवयोर्भोक्तृत्व प्रसिद्धमेव,

किंच, जीवेश्वरयोश्चेतनरूपयोश्छायातपवदतीव वैलक्षण्यं नास्ति, बुद्धेरचेतनत्वादस्ति जीवाद्वैषम्यं, तदेवं बुद्धिजीवाविति प्राप्ते ब्रूमः । जीवपरमेश्वरावेव गुहागतो; तयोरेव,

"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्" ।

इति गुहाप्रवेशदर्शनात्; यदुक्तम्, "ईश्वरस्य न भोक्तृत्वम्" इति; तदपि न युज्यते; "प्राणारामं मनआनन्दम्", इति ब्रह्मणोऽप्यात्मारामस्य मनोमात्रविषयस्वरूपानन्दभोगदर्शनात्; तथा पुराणं च,

"आत्मयत्यमृतास्वादप्रमोदरसिको युवा ।
"अनन्तपरमानन्दमकरन्दमधुव्रतः" ॥

इत्यादि; जीवस्य स्वकर्मफलभोक्तृत्वं प्रसिद्धम्; एवंच तयोर्भोगस्य साधारणत्वेन श्रवणेऽपि तत्र विशेषः समाश्रीयते, भोक्तृविशेषात्; यथा राजभृत्यावन्नं भुञ्जाते, इत्यत्र तत्तदुचितान्नविशेषः; यदुक्तं "तयोर्न वैषम्यमिति"; तन्न, यतो "नित्यो नित्यानां चेतनश्चेतनानाम्" इत्यादिश्रुत्या नित्यत्वचेतनत्वादिना जीवेश्वरयोः साम्येऽपि वैषम्यमनादिमलसंबन्धभावाभावाभ्यां सम्भवति, "ज्ञाज्ञो द्वावजावीशानीशो" इत्यादिश्रुत्या ज्ञत्वाज्ञत्वस्वातन्त्र्यास्वातन्त्र्यादिधर्मवैषम्यं चावगम्यते ।

ननु कथमेतयोः शरीरसंबन्धे समानेऽपि कस्यचिदज्ञत्वादिकानर्थसंबन्धः, कस्यचिदनर्थाभावः, इति चेन्न, सुखदुःखयोर्नैकाश्रयत्वं प्रयोजकं, किंतु स्वातन्त्र्यास्वातन्त्र्यमेव, तथाहि श्रुतिः, "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानो जुष्ट यदा पश्यत्यन्यमीशं तदास्य महिमानमेति वीतशोक" इति, अस्याः सांप्रदायिकोऽर्थः, जीवोऽयमनादिना कर्मनिगडेन बद्धस्तत्तत्फलभोगानुगुणां[1]गुहामायामयबहुकलेवरप्रविष्टो दुर्वारतापसंघातमनुभवन्ननीशया पारवश्येन तद्रूपोहितुमकुशल एव मुह्यमानः शोचति, महामोहजलधिमग्नः शोकमनुभवन्ननुवर्तते[2], स्वप्रेरकतया स्वजुष्टं सर्वानुग्राहकमीशमुमासहितं यदा पुनरस्य प्रसादेन पश्यति, अपरोक्षेण जानाति, तदास्य महिमानं निरतिशयानन्दमपहृतशोकः प्राप्नोति; अतः स्वतन्त्रस्य शिवस्यानादिमुक्तस्य शरीरसंबन्धेऽपि जीववन्न तद्गतदोषापत्तिः, तस्माज्जीवपरमेश्वरो गुहागतो ॥ ११ ॥

पुनरुपपत्तिमाह ॥

॥ विशेषणाच्च ॥ १२ ॥

किंच, जीवपरमेश्वरावस्मिन् प्रकरणे विशेष्येते; "न जायते म्रियते वा विपश्चित्" इत्यादिना जीवः; "अणोरणीयान् महतो महीयान्" इत्यादिना परमेश्वरः, एतद्विशेषणं जीवबुद्धिपक्षे कथं न संभवतीति; ततो जीवपरमेश्वरावेव गुहां प्रविश्य प्रेरकभावेनाश्रिताविति निर्णयः ॥ १२ ॥

हृदयगुहान्तर्वर्तितयोपास्यपरमेश्वरस्येहोपासनस्थानान्तर[3]मुच्यते ॥ ...ल-

॥ अन्तर उपपत्तेः ॥ १३ ॥ ...त ...त्तः

छान्दोग्ये श्रूयतेऽस्य विषयः । "य एषोऽक्षिणि पुरुषो दृ... श्यते, एष आत्मेति होवाच, एतदमृतमभयम्, एतद् ... ब्रह्म" इत्यादि; इहामृतत्वादिलक्षणोऽक्ष्यन्तः श्रूयमाणः पुरु... ईश्वरो वान्यो वेति संशये परमेश्वरादन्य इति वदामः, प... मेश्वरस्य "दहरं विपाप्म[4] पद्मकोशप्रतीकाशम्" इत्यादिषु हृ...दयपुण्ड-

१—त्तद्भोग्यफलानुगुणा—इति पा० ।
२ महामोहनिबन्धनशोकजलधिमग्नो वर्तते; इति पा० ।
३ हृदयगुहागतस्योपास्यतया परमेश्वरस्य पुनरिहो-इति पा०
४ विपापं इति पा० ।

रीक एव संनिधानश्रवणात्, जीवस्य तु रूपादिग्रहणे चक्षुरिन्द्रियप्रवेशोऽस्ति, मनःसंबन्धात्, स एवाक्षिपुरुषः; अथवा छायापुरुष इति प्राप्ते निरूपयामः, परमेश्वर एवाक्ष्यन्तःपुरुष इति, निरुपाधिकामृतत्वाभयत्वादीनामस्मिन्नेवोपपत्तेः ॥ १३ ॥

यदुक्तम्, "अक्ष्यन्तःस्थितिरीश्वरस्य न श्रुता" इति, तत्राह ॥

॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥

"यश्चक्षुषि तिष्ठन्, यश्चक्षुषोऽन्तरः, यं चक्षुर्न वेद, यस्य चक्षुः शरीरं, यश्चक्षुषोऽन्तरो यमयति, एष त आत्मान्तर्याम्यमृतः", इत्यादिश्रुत्या चक्षुःस्थितिनियमनादिकमीश्वरस्य व्यपदिश्यते, अतः पर एवायमीश्वरः[1] ॥ १४ ॥

छायापुरुषपक्षे[2] पुनरनुपपत्तिमाह ॥

॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥

"कं ब्रह्म, खं ब्रह्म", इति पूर्वमस्य सुखविशिष्टताभिधानादेवायमीश्वरः; नहि छायापुरुषे सुख[3]संभवः ॥ १५ ॥

यदुक्तम्, "अक्षिपुरुषस्य जीवरूपत्वं"[4] तत्राह ॥

॥ अत एव सद्ब्रह्म * ॥ १६ ॥

यत एव भवभयभीतायोपकोशलाय ब्रह्मजिज्ञासवे "कं ब्रह्म,खं ब्रह्म" इत्युपक्रम्योपदिष्टम्, यद्वाचकं तदेव खं यदेव खं तदेव कमिति[5], अत एव खशब्दाभिधेय आकाशः परमेव ब्रह्म; किमीदृशोपपत्तिरस्ति जीवस्य, नहि जीवे निरतिशयसुखसंभवः ॥ १६ ॥

अतो यदेव पूर्वमपरिच्छिन्नसुखरूपतया प्रकृतं ब्रह्म तदेवाक्ष्याधारतया प्रतिपाद्यत इत्यक्ष्यन्तः पुरुषः परमेश्वर इति पूर्वपक्षे पुनरियमनुपपत्तिरित्याह[6] ॥

॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥

श्रुतब्रह्मस्वरूपाणामधिगन्तव्याया अर्चिरादिगतेरक्षिपुरुषं श्रुतवतो "ऽर्चिषमेवाभिसंभवन्त्यर्चिषो हर इत्यादि, तत् पुरुषोऽमानवः स एतान् ब्रह्म गमयति,एष देवपथो ब्रह्मपथः, एतेन प्रतिपद्यमानादिमं मानवमावर्तं नावर्तन्त" इत्यन्तेनाभिधानान्नासौ जीवश्छायापुरुषो वा, किंत्वीश्वर[7] एव ॥ १७ ॥

१ अतः परमेश्वर एवायम् इति पा० ।

२ जीवपक्षे इति पा० ।

३ न संसारिणि जीवे निरतिशयसुख—इति पा० ।

४ छायारूपत्वं इति पा० ।

* शंकरमते एतत् सूत्रं न भवति ।

५ यद्वाचकं तदेव खमिति पा० ।

६ परमेव ब्रह्म; तच्छायापुरुषस्य किमीदृशोपपत्तिरस्ति जीवस्य वा ॥ १६ ॥ अतोऽक्ष्यन्तः पुरुष ईश्वर इति जीवपक्षे परमियमनुपपत्तिरित्याह इति पा० ।

७ श्रुतवतोऽर्चिषमभिसंभवन्तीत्यादिनाभिधानान्नासौ जीव, ईश्वर इति वरपा० ।

॥ अनवस्थितेरसंभवाच्च नेतरः ॥ १८ ॥

अस्य महोपनिषदि श्रूयते विषयः ।

"अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं चैव समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्" ॥

इत्यादि; इहाङ्गुष्ठमात्रत्वादिविशिष्टः परमेश्वरो वान्यो वेति संशयः । प्राणाग्निहोत्रप्रकरणादङ्गुष्ठमात्र इत्यल्पत्वव्यपदेशादयं प्राणवायुरेव पञ्चानामाहुतीनां भोक्तावगम्यते; न चास्य भोक्तृत्वानुपपत्तिः,

"आपश्च पृथिवी चान्नमत्तारौ वह्निमारुतौ" ।

इत्यादिषु वायोरपि भोक्तृत्वप्रसिद्धेः सर्वथायं प्राणवायुरिति पूर्वः पक्षः । परमेश्वर एवेति सिद्धान्तः । सकलजगदीशत्वविश्वभुक्त्वादीनां धर्माणामन्यत्राभिधानेऽनवस्थानादसंभवाच्च[1], तत्र तेषामत ईश्वर एवैतादृशः; तस्य प्राणरूपत्वेनाप्युपास्यत्वमुच्यते, "प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तक" इति प्राणाधारत्वेन तस्य श्रवणात्, अङ्गुष्ठमात्रपरिमाणस्योपास्यत्वादित्यविरोधः । प्राणवायोर्भोक्तृत्वसिद्धावपि विश्वभोक्तृत्वं न संभवति; अतोऽयमीश्वर एव प्राणाग्निहोत्राराध्यत्वेन प्राणरूपः प्रतिपाद्यत इति ॥ १८ ॥

सर्वज्ञस्य सर्वशक्तेः सर्वानुग्राहकस्य विभोरपि शिवस्य परब्रह्मणः सवितृमण्डलपुरुषहृदयपुण्डरीकादिषूपासनाय स्थितिरुपपादिता, सर्वत्र तां प्रतिपादयितुमिदमधिकरण[2]मारभ्यते ॥

॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥

अन्तर्यामिब्राह्मणेऽस्य विषयः श्रूयते। "यः पृथिव्यां तिष्ठन्, यः पृथिव्या अन्तरो, यं पृथिवी न वेद,यस्य पृथिवी शरीर, यः पृथिवीमन्तरो यमयति, स त आत्मान्तर्याम्यमृत" इत्येवं पृथिवीमारभ्य प्रतिपर्यायमव्यक्तात्मतत्त्वपर्यन्तमखिलवस्त्वन्तर्यामितया श्रूयमाणः परमेश्वरो जीवो विराट् पुरुषो वा प्रधानं वेति संशयः । स्वोपार्जितविचित्रफलभोगाय सकलभूतेन्द्रियानुप्रवेशो जीवस्य युज्यते[3]; सकलचेतनोपादानतया सर्वभूतानुप्रवेशो विराट्पुरुषस्य युक्तः, अथवा महदादिरूपेण परिणतत्वात् प्रधानस्य सर्वव्यापकत्वमुचितं, "विश्वाधिको रुद्र" इति विश्वाधिकत्वेन निखिलविकारोत्तीर्णस्य विकाररूपप्रपञ्चानुप्रवेशो न घटते; ततः परमेश्वरमन्तरेण जीवादिष्वेकतमः स्यादन्तर्यामीति[4] पूर्वपक्षे प्राप्ते ब्रूमः । पृथिव्या-

१ यतोऽनवस्था स्यात्, तदसंभवाच्च इति पा० ।

२—करणान्तर—इति पा० ।

३ विद्यते इति पा० ।

४—ष्वेकतमस्यान्तर्यामित्वमिति इति पा० ।

व्यन्तर्यामितया श्रूयमाणः परमेश्वर एव, सर्वान्तरत्वादितद्धर्मव्यपदेशात्; अथर्वशिरसि च, "सोऽन्तरादन्तरं प्राविशत्", इति परमेश्वरस्यैव सर्वात्मतयानुप्रवेशदर्शनात्, "एष त आत्मान्तर्याम्यमृत" इति शिव एवानादिमुक्तोऽमृत इत्युच्यते, "एतानि वा अमृतस्य नामधेयानि" इति श्रवणाद्, यथा "विश्वाधिको रुद्र" इति विश्वाधिकत्वं परमेश्वरस्य श्रूयते, तथा विश्वरूपत्वमपि, "सर्वो वै रुद्र" इत्यादिषु सर्वविकारानुप्रवेशेऽपि तद्विकारस्पर्शलेशोऽपि नास्तीति खलु प्रतिपर्यायममृतशब्दप्रयोगः, अथर्वशिरसि च "यो वै रुद्रः स भगवान् भूर्भुवः स्वर्यश्च ब्रह्मा तस्मै वै नमो नम"इत्यादिना[1] ब्रह्मविष्णुरुद्रोमालक्ष्मीसरस्वतीगणेशस्कन्देन्द्रादिलोकपालभूरादिसप्तलोकपृथिव्यादिपञ्चभूतसूर्यसोमग्रहनक्षत्रकालादिरूपेण प्रत्येकमेवमभ्यासतो निरूप्यते परमेश्वरः, तत्रापि सकलचिदचित्तत्त्वानुप्रवेशादस्यापुरुषार्थसबन्धो भवेदिति शङ्कायां प्रतिपर्यायमैश्वर्यादिमङ्गलगुणसंबन्धाभिधायिभगवच्छब्दप्रयोगः कृतः; ततः सर्वाधिकः सर्वात्मा च शिवः परमेश्वर इति युक्तमेव ॥ १९ ॥

यच्छङ्कितं प्रधानादीनामन्तर्यामित्वमुचितमिति, तत् परिहरति ॥

॥ नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥

नच स्मार्तं प्रधानमन्तर्यामीति श्रुतं, तस्य विकारजडत्वादिधर्मानभिलापात्, न शारीरो विराड्पुरुषश्च, तस्य सकलनियामकत्वाद्यनुपपत्तेः ॥ २० ॥

जीवश्च न भवतीत्याह ॥

॥ उभयेऽपि हि भेदेनैनमधीयते * ॥ २१ ॥

उभये काण्वा माध्यंदिनशाखिनश्च "यो विज्ञाने तिष्ठन्, य आत्मनि तिष्ठन्" इत्यादिना जीवादन्तर्यामिणं भेदेनाधीयते; ततः परमेश्वरस्यैव सकलान्तर्यामित्वं, न प्रधानविराट्पुरुषजीवानामिति सिद्धम् ॥ २१ ॥

इह प्रत्यक्षपृथिव्यादिरूपत्वेन प्रतिपादितस्य परमेश्वरस्य तद्वदृश्यत्वादिकं नास्तीति प्रतिपादयितुमिदमधिकरणमवतार्यते ॥

॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

अथ परा यया तदक्षरमधिगम्यते; "यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं[2] परिपश्यन्ति धीरा"इत्यादि श्रूयते-

१ इति रीत्या इति पा०।

* शंकरमते शारीरश्चोभयेऽपि भेदेनैनमधीयते इत्याकारकमेकं सूत्रं विभावनीयम्।

२–द्रद्रेश्यं तद्भूतयोनिं इति पा०।

ऽस्य विषयः। अत्राक्षरं[1] प्रधानं जीवः परमेश्वरो वेति संदेहः। प्रधानमत्राक्षरं, तस्य[2] महदादिपरिणामिनो[3] भूतयोनित्वसंभवात्, अथवा जीवः; तस्य हि "अक्षरं प्रधानममृताक्षरम्" इति श्रुतेरक्षरशब्दवाच्यत्वमुचितं, स्वकर्मवशेन[4] महाभूतयोनित्वं च; अतस्तयोरन्यतरदक्षरमिति प्राप्ते ब्रूमः; परमेश्वर एवाक्षरं[5] "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप" इत्यादिना तद्धर्मोक्तेः, न हि परमेश्वरादन्यस्मिन् सर्वज्ञत्वादिकं संभवति, यदुक्तं "भूतयोनित्वं जीवप्रधानयोः संभवति" इति; तदयुक्तं[6], तयोरचेतनासर्वज्ञयोस्तत्सामर्थ्याभावात् ॥ २२ ॥

पुनरत्र जीवप्रधानयोरनुपपत्तिमाह ॥

॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २३ ॥

अत्रैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते, "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति, तच्चान्यच्चैवंरूपं विशेषणं, तद्व्यपदेशाच्च न प्रधानमक्षरम्[7], "अक्षरात् परतः पर" इति जीवाद्भेदव्यपदेशाच्च ॥ २३ ॥

॥ रूपोपन्यासाच्च ॥ २४ ॥

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथ्वी ह्येष सर्वभूतान्तरात्मा" इत्यक्षरस्य[8] त्रैलोक्यरूपत्वमुपन्यस्यते; अतश्च सकलात्मा परमेश्वर एवात्राक्षरपदाभिधेयः ॥ २४ ॥

प्राणाधारत्वेन पूर्वमुपास्यतयोक्तस्य पुनर्जाठराग्निरूपेणोपास्यत्वमाह ॥

॥ वैश्वानरः साधारणशब्दविशेषात् ॥ २५ ॥

"यस्त्वेतमेवं प्रादेशमात्रमभि चिदात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेष्वात्मस्वन्नमत्ति"इत्यादि[9] छान्दोग्येऽस्य विषयः श्रूयते; अत्रोपास्यतयोक्तो वैश्वानरः[10] परमेश्वरोऽन्यो वेति संदेहः। पूर्वपक्षन्यायैस्तु वैश्वानरशब्देन जाठराग्निरुच्यते, "अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते, यदिदमद्यते, तस्यैष घोषो भवति, यमेतत्कर्णावपिधाय शृणोति, स यदोत्क्रमिष्यन् भवति, नैनं घोषं शृणोति"जाठराग्नौ प्रयोगदर्शनान्महाभूत-

१ अत्राक्षरशब्दवाच्यं इति वरपा०।

२ अत्राक्षरशब्दवाच्यं प्रधानं "यद्भूतयोनिम्" इति तस्य इति पा०।

३–परिणामेन इति वरपा०।

४–प्रवेशेन इति पा०।

५ एवाक्षरशब्दवाच्यः, इति वरपा०

६–युक्तमेव इति पा०

७–मक्षरशब्दवाच्यं इति वरपा०।

८–मूर्धात्यदिनाक्षरस्य इत्येव पा०।

९ यस्त्वेवं प्रादेशमात्रमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेष्वित्यादिकं इति प०।

१०–तया वैश्वनरशब्दवाच्यः इति वरपा०।

तृतीयोऽग्निर्वा स्यात् "एष वा अग्निर्वैश्वानर"इत्यादौ[1] वैश्वानरशब्दस्याग्नौ प्रसिद्धत्वादग्निर्देवता वा स्यात्; "वैश्वानरं द्वादशकपालं निर्वपेत्, पुत्रे जात" इत्यादिविध्विष्टदेवतात्वेन फलदातृत्वश्रवणात्, नतु परमेश्वरः; प्रादेशमात्रमिति परिच्छेदावगमादिति ।

अत्रोच्यते[2] ।

परमेश्वर एव वैश्वानरः[3] कथं वैश्वानरशब्दस्याग्नौ साधारण्येऽप्यस्मिन् प्रकरणे "को न आत्मा, किं ब्रह्म,आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि, तमेव नो ब्रूहि"इत्यादिषु परमेश्वरासाधारणब्रह्मशब्दादिभिर्विशेष्यमाणत्वाच[4] जाठराग्न्यादिषु तद्विशेषणं संभवति; अतः परमेश्वर एव वैश्वानरः॥२५॥

परमेश्वरपक्षे प्रमाणान्तरमाह ॥

॥ स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्यादिषु परमेश्वरस्य द्युलोकादिपृथिव्यन्तरूपत्वमुक्तं; तदिह प्रत्यभिज्ञायमानं[5] तस्य परमेश्वरत्वे लिङ्गम् ॥ २६ ॥

॥ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति
चेन्न, तथा दृष्ट्युपदेशादसंभवात्
पुरुषमपि चैनमधीयते ॥ २७ ॥

"स एषोऽग्निर्वैश्वानरो हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः,तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्" इत्यादिषु प्रतिपन्नेभ्योऽग्नित्रयकल्पनप्राणाहुत्याधारादिभ्यः "स यो हैतमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति श्रुतात् पुरुषान्तःप्रतिष्ठितत्वलिङ्गाच्च जाठरोऽग्निरेव नासौ[6] परमेश्वर इति चेन्न; जाठराग्निरूपतयोपास्यत्वेनोपदेशात्, केवलस्य जाठराग्नेस्त्रैलोक्यशरीरत्वाद्यसंभवाच्च,

किंच, "स एषोऽग्निर्वैश्वानरो यत् पुरुष"इत्येनं वैश्वानरं पुरुषमप्यधीयते वाजसनेयिनः; निरुपाधिकपुरुषशब्दवाच्यस्तु परमेश्वर एव, "तेनेदं पूर्णं पुरुषेण सर्वम्", इति श्रवणात्; अतः परमेश्वर इति युक्तम् ॥ २७ ॥

॥ अत एव न देवताभूतं च ॥ २८ ॥

यतोऽयं वैश्वानरस्त्रैलोक्यशरीरकः पुरुषशब्दवाच्यश्च, अत एव न देवताग्निर्न तृतीयं भूतं वा ॥ २८ ॥

इह जाठराग्निरूपतयोपास्यत्वे सिद्धे परमेश्वरस्याग्निशब्दवाच्यत्वे तद्योजनाभेदमाचार्यान्तराणां दर्शयति ॥

॥ साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

अवश्यमग्निरूपतयोपास्यत्वादेवेदमग्निशब्दसामानाधिकरण्यम्, अग्निनयनादियोगेन परमेश्वर एवाग्निशब्दस्य साक्षाद्वृत्तित्वसंभवाद्वृत्तिसामानाधिकरण्याविरोधं जैमिनिरुवाच ॥२९॥

॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥

"यस्त्वेनमेवं प्रादेशमात्रम्" इत्यपरिच्छिन्नस्य द्युप्रभृतिपृथिव्यन्तप्रदेशसंबन्धिमात्रतया परिच्छिन्नत्वमुपासकाभिव्यक्त्य इत्याश्मरथ्यमुनिः ॥ ३० ॥

॥ अनुस्मृतेरिति बादरिः ॥ ३१ ॥

द्युप्रभृतिपृथिव्यन्तस्य मूर्धादिपादान्तान्वयत्वकल्पनमनुस्मृतये ब्रह्मप्राप्त्यर्थमिति बादरिः ॥ ३१ ॥

॥ संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३२ ॥

"उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयम्"इत्युपासकस्योरःप्रभृतीनां वेद्यादित्वकल्पनं विद्याङ्गभूतायाः प्राणाहुतेरग्निहोत्रत्वकल्पनार्थमिति जैमिनिः, तथा दर्शयति च श्रुतिः, "अथ य एवं विद्वानग्निहोत्रं जुहोति" इति ॥ ३२ ॥

॥ आमनन्ति चैनमस्मिन् ॥ ३३ ॥

तैत्तिरीया एनं परमेश्वरमस्मिन्नुपासकशरीरे प्राणाहुतिवेलायां भोक्तृतया "शिवो मा विशाप्रदाहाय" इति, "प्रभुः प्रीणाति विश्वभुक्" इति चामनन्ति; अतः सकलाचार्यमतेन सर्वथा न्यायेन च जाठराग्निरूपेण परमेश्वर एवाराध्यः प्राणाग्निहोत्रेणेति समीचीनम् ॥ ३२ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥ :: :: ॥

## ॥ अथ विद्धशालभञ्जिकाख्यनाटिकायाः ॥

॥ उपसंहारः ॥

इत्थं विद्वज्जनस्वान्तानन्दजननी श्रीराजशेखरकविराजप्रणीतविद्धशालभञ्जिकाभिधा नाटिका सर्वत्र संस्कृतवाण्या प्राकृतभाषाया अर्थलेखनेन पाठनाद्यनेकव्यापारवताऽपि यथा-

---

१—ग्निरुच्यते; एष वाग्निर्वैश्वानर इत्यादौ इति पा० ।

२ न परमेश्वर इति प्राप्तम्; अत्रोच्यते इति पा० ।

३—नर इति सिद्धान्तः,

४ प्रकरणे परमेश्वरासाधारणब्रह्मादिशब्दैर्विशेष्य—इति पा० ।

५ तदित्थं भूतरूपमितीह "तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ" इत्यत्र प्रत्यभिज्ञायमानं इति पा० ।

६ "स एषोऽग्निर्वैश्वानर" इत्यग्निसामानाधिकरण्येन प्राणाहुत्याधारादिभ्यः पुरुषेऽन्तः प्रतिष्ठितमित्यादेश्च नासौ इति पा० ।

१—त्यायेद—इति पा० ।

कथं चिल्लब्धावकाशेन मया सुसंस्कृत्य प्रतिमासं मुद्रणेन देवदेवस्य जेतुः श्रीमदनङ्गरूपिणः श्रीकृष्णस्य भगवतः कृपया निर्विघ्नतया प्रकाशिता । अत्र प्रथमद्वितीयाङ्कयोः स्तम्भोत्कीर्णशालभञ्जिकापुत्तलिकोपवर्णनादस्या विद्धशालभञ्जिकानाम्ना व्यपदेशः । अत्र च प्रायः शृङ्गाररस एवोपलभ्यते । नाटिकालक्षणं चोक्तं साहित्यदर्पणे षष्ठपरिच्छेदे ।

नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥
स्यादन्तःपुरसंबन्धा संगीतव्यापृताऽथ वा ।
नवानुरागा कन्यात्र नायिका नृपवंशजा ॥
संप्रवर्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः ।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदेपदे मानवती तद्वशः संगमो द्वयोः ।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्शाः संधयः पुनः ॥

इति । सेयं नाटिका सुरुचिराऽऽलंकारिकाणां विदुषां पठनपाठनयोग्या महता परिश्रमेण संशोध्य काशीविद्यासुधानिधेः पञ्चषष्टितमाङ्कमारभ्य द्वासप्ततितमाङ्कपर्यन्तैरष्टभिरङ्कैरेतत्पत्रसुधाचकोरमनोविनोदनाय संप्रकाशिता ज्योत्स्नेव रसिकजनमानसकुमुदानि विकासयन्ती मामकान् संशोधनादिपरिश्रमान् सफलयतादिति जगदीशमुपयाचते ।

ज्योतिः० वामनाचार्यः

## ॥ अथ कर्पूरमञ्जर्यभिधनाटकविशेषस्य ॥

॥ सट्टकस्य प्रस्तावना ॥

अथ खलु तत्रभवान् सकलविद्याविनोदचतुरो बालरामायणविद्धशालभञ्जिकानिर्माता दौहिकिकुलजो यायावरो बालकविः कविराजो राजशेखराभिधः पूर्वोक्तनाटिकोपक्रमे दर्शितगुणगणः केवलया प्राकृतभाषया काव्यविशेषं सट्टकं निर्ममे । तल्लक्षणं चोक्तं साहित्यदर्पणे षष्ठपरिच्छेदे ।

सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।
नच विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ॥
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम् ।

इति । अत्र कर्पूरमञ्जर्याः कुन्तलेशसुताया नायिकाया विवाहोपवर्णनाद् एतत्काव्यनामापि कर्पूरमञ्जरीति प्रसिद्धम् । तथाच पारिपार्श्वकवचनम् ।

चंदबालधरिणीहरिणंको
चक्कवत्तिपअलाहणिमित्तम् ।
एत्थ सट्टअवरे रससोत्ते
कुंदलाहिवसुदं परिणेदि ॥

एतत्कविना स्वस्य सर्वभाषानिपुणत्वं द्योतयितुं सट्टककरणं स्वाभिधाज्ञापनं च पारिपार्श्वकेनात्र्या सूचितम् । तथा हि, सव्वभासाचदुरेण तेण भणिदं जेव्व, जहा,

अत्थणिवेसा ते च्चिअ सद्दा ते च्चिअ परिणमंता वि ।
उत्तिविसेसो कव्वो भासा जा होइ सा होउ ॥
परुसा सक्किअबन्धा पाउअबन्धो इदो वि सुउमारो ।
पुरिसमहिलाणं जेत्तिअ महंतरं तेत्तिअ च्चेअ ॥

तथा ।

बालकई कइराओ णिब्भरराअस्स तह उवज्झाओ ।
इअ जस्स परपरए अप्पा माहप्पमारूढो ॥

सो अस्स कई ।

सिरिराअसेहरो तिहुअणं पि धवलंअंति ।
हरिणंकपडिसिद्धीए णिक्कलंका गुणा जस्स ॥

अथास्य ग्रन्थस्यैकमेव पुस्तकमशुद्धतरं प्राकृतच्छायासहितं संप्राप्य पुस्तकान्तरान्वेषणपरोऽप्यलब्धपुस्तकान्तर एतदेव पुस्तकं महतायासेन संशोध्याधुना प्रभुवर्यस्य श्रीमतो गाफसाहेबस्याज्ञया काशीविद्यासुधानिधिपत्रे मुद्रणद्वारेमं ग्रन्थं प्रकाशयितुमुद्यतोऽस्मि ।

प्रार्थये चाहं रसिकजनमनोनन्दनौ संगतावुमामाधवौ, यदेतत्काव्यं मुद्रितं सत्सज्जनमनस्सु परमां मुदमातनोत्विति शम् ।

ज्योतिश्शास्त्राध्यापको
वामनाचार्यः ।

॥ श्रीगणेशाय नमः ॥

## ॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्य ॥

॥ प्रथमं जवनिकान्तरम् ॥

॥ सिरिसरस्सईए णमो ॥

भद्दं भोदु सरस्सईअ कइणो णंदंतु वासाइणो
अण्णाणं पि परं पअट्टदु वरा वाणी छइल्लप्पिआ ।

## ॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्यप्राकृतविवृतिः ॥

॥ श्रीसरस्वत्यै नमः ॥

भद्रं भवतु सरस्वत्याः कवयो नन्दन्तु व्यासादयः
अन्येषामपि परं प्रवर्ततु वरा वाणी विदग्धप्रिया ।

वच्छोमी तह माअही फुरदु णो सा किं अ पंचालिआ
रीदीओ विलिहंतु कव्वकुसला जोण्हं चकोरा विअ ॥१॥

अवि अ ।

अकलिअपरिरंभविब्भमाहिं
अजणिअचुंबणडंबराइं दूरं ।
अघडिअघणताडणाइं णिच्चं
णमह अणंगरईणमोहणाइं ॥ २ ॥

अवि अ ।

ससिहंडमंडणाणं [illegible]मोहणासाणं सुरअणप्पिआणं ।
गिरिसगिरिंदसुआणं संहाडो वो सुहं देउ ॥ ३ ॥

अवि अ ।

ईसारोसप्पसादप्पणदिसु बहुसो
सग्गगंगाजलेहिं
आमूलं पूरिदाए तुहिणअरकला-
रुप्पसिप्पीअ रुद्दो ।
जोण्हामुत्ताहलिल्लं णदमउलिणिहि-
त्तग्गहत्तेहिं दोहिं
अग्घं सिग्घं दअंतो जअइ गिरिसुआ-
पादपंकेरुहाणं ॥ ४ ॥

नान्द्यन्ते सूत्रधारः । परिक्रम्य । नेपथ्याभिमुखमव-
लोक्य ।

---

वैदर्भी तथा मागधी स्फुरतु नः सा किं च पाञ्चालिका
रीतीरपि लिहन्तु काव्यकुशला ज्योत्स्नां चकोरा इव ॥ १ ॥

अपि च ।

अकलितपरिरम्भविभ्रमाणि अजनितचुम्बनडम्बराणि दूरम् ।
अघटितघनताडनानि नित्यं नमस्यथ अनङ्गरत्योर्मोहनानि ॥२॥

अपि च ।

शशिखण्डमण्डनयोः संमोहनाशयोः सुरजनप्रिययोः ।
गिरिशगिरीन्द्रसुतयोः संघाटिर्वः सुखं ददातु ॥ ३ ॥

अपि च ।

ईर्ष्यारोषप्रसादप्रणतिषु बहुशः स्वर्गगङ्गाजलैः
आमूलं पूरितया तुहिनकरकलारूप्यशुक्त्या रुद्रः ।
ज्योत्स्नामुक्ताफलाढ्यं नतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्या-
मर्घं शीघ्रं ददज्जयति गिरिसुतापादपङ्केरुहयोः ॥ ४ ॥

किं उण णव्वपअट्टो विअ दीसदि अह्माणं कुसील-
वाणं जणो । जदो । एक्का पत्तोचिआइं सिचआइं उच्चि-
णोदि, इअरा कुसुमावलीओ गुंफेदि, अण्णा पडिसीस-
आइं पडिसारेदि, का वि क्खु वण्णिआओ पट्टए वट्टेदि, एस
वंसो ठाविदो ठाणे, इअं वीणा पडिसारीअदि, इमे त्ति-
ण्णि मिअंगा सज्जीअंति, एस कंसतालाणं पक्खाउज्जाणं
हलहलो, एदं धुआगीदमालवीअदि, ता किं पि कुडुंब
हक्कारिअ पुच्छिस्सं । नेपथ्याभिमुखमवलोक्य संज्ञापयति ।

ततः प्रविशति पारिपार्श्वकः । आणवेदु भावो ॥

सूत्र । विचिन्त्य । किं उण णिच्चप्पअट्टा विअ दीसध ॥

पारि । अध इं ।

सूत्र । किं उण णच्चिदव्वं ।

पारि । भाव सट्टअं णच्चिदव्वं ।

सूत्र । को उण तस्स कई ।

पारिपार्श्वकः ।

भाव कहिज्जदु एदं
को भणिए रअणीवल्लहसिहंडो ।
रहुउलचूडामणिणो
महेंदवालस्स को अ गुरू ॥ ५ ॥

सूत्र । विचिन्त्य । अए पच्चहुत्तरं क्खु एदं । प्रका-
शम् । राअसेहरो ।

पारि । सो एदस्स कई ।

सूत्र । स्मृत्वा । कधिदं जेव्व छइल्लेहिं ।

---

किं पुनर्नव्यप्रवृत्त इव दृश्यतेऽस्माकं कुशीलवानां जनः ।
यतः, एका पात्रोचितानि शिचयानि उच्चिनोति । इतरा कुसु-
मावलीर्गुम्फति । अन्या प्रतिशीर्षकाणि "प्रतिमादीनां मुखानि"
प्रसारयति । कापि खलु वर्णिकाः पट्टके वर्तयति । एष वंशः
स्थापितः स्थाने । इयं वीणाप्रतिसार्यते, इमे त्रयो मृदङ्गाः
सज्ज्यन्ते, एष कांस्यतालानां मर्दलानां हलहलः । एतद्ध्रु-
वागीतमालप्यते, तत्किमपि कुटुम्बमाकार्य पृच्छामि ॥ आ-
ज्ञापयतु भावः ॥ किं पुनर्नृत्यप्रवृत्ता इव दृश्यध्वे ॥ अथ किम् ॥
किंपुनर्नर्तितव्यम् ॥ भाव सट्टकं नर्तितव्यम् ॥ कः पुनस्तस्य
कविः ॥

भाव कथ्यतामेतत् को भण्यते रजनीवल्लभशिखण्डः ।
रघुकुलचूडामणेर्महेन्द्रपालस्य कश्च गुरुः ॥ ५ ॥

अये प्रबोधार्तं खल्वेतत् । राजशेखरः ॥ स एतस्य कविः ॥
कथितमेव विदुषैः । 

सो सट्टओत्ति भणिए दूरं जो णाडिअं अणुहरइ ।
किं उण पवेसअविक्खंभआ इह केवलं णत्थि ॥ ६ ॥

विचिन्त्य । ता किं त्ति सक्किअं परिहरिअ पाउअबंधे पउट्टो कई ।

पारि । सव्वभासाचदुरेण तेण भणितं जेव्व, जधा,

अत्थणिवेसा ते च्चिअ सद्दा ते च्चिअ परिणमंता वि ।
उत्तिविसेसो कव्वो भासा जा होइ सा होउ ॥ ७ ॥

अवि अ ।

परुसा सक्किअबंधा पाउअबंधो इदो वि सुउमारो ।
पुरुसमहिलाणं जेत्तिअ मइंतरं तेत्तिअ च्चेव ॥ ८ ॥

सूत्र ।

ता अप्पा किं ण वण्णिदो तेण ।

पारि । सुणु वण्णिदो ज्जेव तक्कालकइणं मज्झम्मि मिअंकलेहाकहाआरेण अवराइएण ।

बालकई कइराओ णिब्भरराअस्स तह उवज्झाओ ।
इअ जस्स परंपरए अप्पा माहप्पमारूढो ॥ ९ ॥

सो अस्स कई ।

सिरिराअसेहरो त्तिहुअणं पि धवलअंति ।
हरिणंकपडिसिद्धीए णिक्कलंका गुणा जस्स ॥ १० ॥

सूत्र । ता केण समादिट्ठा पउंजध ।

पारि ।

चउहाणकुलमोलिमालिआ
राअसेहरकइंदगेहिणी ।
भत्तुणो किदिमवंतिसुंदरी
सा पउंजइदुमेदमिच्छदि ॥ ११ ॥

किं च ।

चंदवालधरणीहरिणंको
चक्कवट्टिपअलाहणिमित्तं ।
एत्थ सट्टअवरे रससोत्ते
कुंतलाहिवसुदं परिणेदि ॥ १२ ॥

ता भाव एहि अणंतरकरणिज्जं संपादेह्म । इति परिक्रम्य निष्क्रान्तौ ॥

प्रस्तावना ॥

ततः प्रविशति राजा देवी विदूषको विभवतश्च परीवारः । सर्वे परिक्रम्य यथोचितमुपविशन्ति ।

राजा । देवि दक्खिणावहणरेंदणंदिणि बड्ढावीअसि वसन्तारम्भेण । जदो,

बिंबुट्ठेवहलं ण देंति मअणं णो गंधतेल्लाविला
वेणीओ विरअंति लिंति ण तहा अंगम्मि कुप्पासअं ।
जं बालामुहकुंकुमम्मि वि घणे वट्टंति ढिल्लाअरा
तं मण्णे सिसिरं विणिज्जिअ बलात् पत्तो वसंतोत्सवः ॥१३॥

---

तत्सट्टकमिति भण्यते दूरं यन्नाटिकामनुहरति ।
किं पुनः प्रवेशकविष्कम्भकाविह केवलं न स्तः ॥ ६ ॥

तत्किमिति संस्कृतं परिहृत्य प्राकृतबन्धे प्रवृत्तः कविः ॥ सर्वभाषाचतुरेण तेन भणितमेव । यथा,

अर्थनिवेशास्त एव शब्दास्त एव परिणमन्तोऽपि ।
उक्तिविशेषः काव्यं भाषा या भवति सा भवतु ॥ ७ ॥

अपिच ।

परुषाः संस्कृतबन्धाः प्राकृतबन्ध इतोपि सुकुमारः ।
पुरुषमहिलयोर्यावदिहान्तरं तावदेव ॥ ८ ॥

तदात्मा किं न वर्णितस्तेन ॥ शृणु वर्णित एव तत्कालकवीनां मध्ये मृगाङ्कलेखाकथाकारेणापराजितेन । यथा,

बालकविः कविराजो निर्भरराजस्य तथोपाध्यायः ।
इति यस्य परंपरया आत्मा माहात्म्यमारूढः ॥ ९ ॥

सोऽस्य कविः ।

श्रीराजशेखरस्त्रिभुवनमपि धवलयन्ति ।
हरिणाङ्कप्रतिस्पर्धया निष्कलङ्का गुणा यस्य ॥ १० ॥

तत्केन समादिष्टाः प्रयुङ्ग्ध्व ॥
चहुआणकुलमौलिमालिका राजशेखरकवीन्द्रगेहिनी ।
भर्तुः कृतिमवन्तिसुन्दरी सा प्रयोजयितुमेतदिच्छति ॥ ११ ॥
"चहुआणेति प्रसिद्धं कुलोपनाम"

किंच ।
चन्द्रपालधरणीहरिणाङ्कश्चक्रवर्तिपदलाभनिमित्तम् ।
अत्र सट्टकवरे रसस्रोतसे कुन्तलाधिपसुतां परिणयति ॥ १२ ॥

तद् भाव एहि अनन्तरकरणीयं संपादयावः ॥ इति परिक्रम्य निष्क्रान्तौ ॥ प्रस्तावना । देवि दक्षिणापथनरेन्द्रनन्दिनि वर्धाप्यसे वसन्तारम्भेण । यतः,

बिम्बोष्ठेबहलं न ददाति मदनं नो गन्धतैलाविला-
वेणीर्विरचयन्ति लान्ति न तथा अङ्गे कूर्पासकम् ।
यद्बालामुखकुङ्कुमेऽपि घने वर्तन्ते शिथिलादराः
तन्मन्ये शिशिरं विनिर्जित्य बलात् प्राप्तो वसन्तोत्सवः ॥ १३ ॥

देवी। देव अहं पि तुम्ह पडिवट्ठाविआ भविस्सं। जहा,

उल्लंति दंतरअणाइं गदे तुसारे
ईसीसिचंदनरसम्मि मणं कुणंति।
एणिंह सुअंति घरमज्झमसालिआसु
पादंतपुंजिदपडं मिहुणाइं पेच्छ ॥ १४ ॥

नेपथ्ये। वैतालिकयोरेकः। जअजअ पुव्वदिअंगणाभुजंग, जअ २ चंपंगणाचंपककण्णऊर, जअ २ लीलाणिज्जिदराडदेस, जअ २ चंगत्तणविणिज्जिअकामरूअ, जअ २ हरिकेलीकेलिकार; अवमाणिअजच्चसुवण्णवण्ण, सव्वंगसुंदरत्तणरमणिज्ज, सुहाअ देवस्स भोदु सुरहिसमारंभो। इह हि,

पंडीणं गंडवालीपुलअणचवला कंचिवालाबलाणं
माणं दो खडअंता रइरहसअरा लोलचोलप्पिआणं।
कण्णाडीणं कुणंता कुरलतरलणं कुंतलीणं पिएसु
गुंफंता णेहगंठिं मलअसिहरिणो सीअला वंति वाआ ॥ १५ ॥

अत्रैव द्वितीयः।

जादं कुंकुमपंकलीढमरठीगंडप्पहं चंपअं
थोआवट्टिददुद्धमुद्धकलिआ पप्फुल्लिआ मल्लिआ।
मूले सामलमग्गलग्गभमलं लक्खिज्जए किंसुअं
पिज्जंतं मुहु एहिं दोसु वि दिसाभाएसु लग्गेहि व ॥ १६॥

राजा। पिए विब्भमलेहे एक्को अहं वड्ढावओ तुम्ह, एक्का तुमं वि वड्ढाविआ मज्झ, किं उण दुवे वि अह्मे कंचणचंडरअणचंडेहिं बंदीहिं, ता विब्भमपअट्टा वअंतरट्टीणं, णट्टावअं मलअमारुदंदोलिदलदाणच्चणीणं, चारुप्पवंचिदपंचमं कलअंठिकंठकंदलेसु, कंदलिदकंदप्पकोअंडदंडचंडिमं, सिणिद्धबंधुं वसुंधरापुरंधीए, ता विसारिअ पसइप्पमाणे अच्छिणी महूत्सवं जहिच्छं पेक्खदु देई, जधा किल णिवेदिदं बंदीहिं, पअट्टा च्चेअ मलआणिला, तह हि,

लंकातोरणमालिआतरलिणो कुंभब्भुवस्सास्समे
मंदंदोलिदचंदणद्दुमलदा कप्पूरसंपक्किणो।
कंकोलीकुलकंपिणो फणिलदाणिप्पट्टपट्टावआ
चंडं चुंबिद तम्मवण्णिसलिला वाअंति चेत्ताणिला ॥ १७॥

अवि अ।

माणं मुंचध देह वल्लहजणे दिट्ठिं तरंगुत्तरं

---

"मदनं घृतसएक्तमधूच्छिष्टं, मुखकुङ्कुमं मुखोद्वर्तनम्"

देव अहमपि तव प्रतिवर्धापिका भविष्ये। यथा,

उन्मज्जन्ति दन्तरत्नानि गते तुषारे
ईषदीषच्चन्दनरसे मनः कुर्वन्ति।
इदानीं स्वपन्ति गृहमध्यमशालिकासु
पादान्तपुञ्जितपटं मिथुनानि पश्य ॥ १४ ॥

जयजय पूर्वदिगङ्गनाभुजङ्ग, जय २ चम्पाङ्गनाचम्पककर्णपूर, जय २ लीलानिर्जितराटदेश, जय २ सौन्दर्यविनिर्जितकामरूप, जय २ हरिकेलीकेलिकारक, अवमानितजात्यसुवर्णवर्ण, सर्वाङ्गसुन्दरत्वरमणीय, सुखाय देवस्य भवतु सुरभिसमारम्भः। "चम्पानगरी देशो वा। कामरूपं मदनसौन्दर्यं देशश्च। हरिकेली देशविशेषः" इह हि।

पाण्डीनां गण्डपालीपुलकनचपलाः काञ्चिपालाबलानां
मानं द्विः खण्डयन्तो रतिरभसंकरा लोलचोलप्रियाणाम्।
कर्णाटीनां कुर्वन्तश्चिकुरतरलनं कुन्तलीनां प्रियेषु
गुम्फन्तः स्नेहग्रन्थिं मलयशिखरिणः शीतला वान्ति वाताः॥१५॥

"काञ्चिपालश्चोलः कुन्तलश्च देशविशेषः"

जातं कुङ्कुमपङ्कलीढमहाराष्ट्रीगण्डपत्रं चम्पकं
स्तोकावर्तितदुग्धमुग्धकलिका प्रफुल्लिता मल्लिका।
मूले श्यामलमग्रलग्नभ्रमरं लक्ष्यते किंशुकं
पीयमानं मुहुरेतैर्द्वयोरपि दिग्भागयोर्लग्नैरिव ॥ १६ ॥

प्रिये विभ्रमलेखे एकोऽहं वर्धापकस्तव, एका त्वमपि वर्धापिका मम, किं पुनर्द्वावप्यावां काञ्चनचण्डरत्नचण्डाभ्यां बन्दिभ्याम्। तद्विभ्रमप्रवर्तकं प्रौढाङ्गनानां नर्तापकं मलयमारुतान्दोलितलतानर्तकीनां चारुप्रपञ्चितपञ्चमं कलकण्ठकण्ठीकन्दलेषु कन्दलितकन्दर्पकोदण्डदण्डचण्डिमानम्, स्निग्धबन्धुं वसुंधरापुरन्ध्याः, तद् विस्तार्य प्रसृतिप्रमाणे अक्षिणी मधूत्सवं यथेच्छं प्रेक्षतु देवी। यथा किल निवेदितं बन्दिभ्याम्। प्रवृत्ता एव मलयानिलाः। तथाहि।

लङ्कातोरणमालिकातरलिनः कुम्भोद्भवस्याश्रमे
मन्दान्दोलितचन्दनद्रुमलताः कर्पूरसंपर्किणः।
कङ्कोलीकुलकम्पिनः फणिलतानिस्पष्टनर्तापकाश्चण्डं चुम्बिततामपर्णिसलिलाः संवान्ति चैत्रानिलाः ॥१७॥

अपिच।

मानं मुञ्चत दत्त वल्लभजने दृष्टिं तरङ्गोत्तरां

तारुण्णं दिअहाइं पंच दह वा पीणत्थणुत्तंभनं ।
इत्थं कोइलमंजुसिंजणमिसा देअस्स पंचेसुणो
दिण्णा चेत्तमहूत्सवेण सहसा आण्णेव सव्वंकसा ॥ १८ ॥

विदूषकः । भो तुह्माणं सव्वासं मज्झे अहमेक्को कालक्खरिओ जस्स मे ससुरस्स ससुरो पंडिदघरे पुत्थआइं वहंतो आसीत् ।

चेटी । विहस्य । तदो कमागदं दे अण्णएण पंडिअत्तणं ।

विदूषकः । सक्रोधम् । आः दासीए धाए भविस्सकुट्टणि णिल्लक्खणे विअक्खणे ईरिसोहं मुक्खो जं तुए वि अ उवहसीअदि । अण्णं अ । हे घरपुचविट्टालणि भमणसीले रच्छालुंठणि जूदप्पिए टेंटाकराले टुट्टसंघडिदे कोससदापहारिणि । अहवा । हत्थकंकणं किं दप्पणे पेक्खीअदि ।

विचक्खणा । एव्वं णेदं । तुरंगमस्स सिग्घत्तणे किं सक्खिणो पुच्छिअंति, ता वण्णेअ वसंतं ।

विदू । कथं तुमं पंजरगदा सारिआ व्व कुरकुराअंती चिट्ठसि ण किं पि जाणेसि । ता पिअवअस्स देईए पुरदो पठिस्सं । जदो, ण कत्थूरिआ कुग्गामे वणे वा विक्किणीअदि, ण सुवण्ण कसवट्टिअं विणा सिलापट्टए कसीअदि ।

राजा । पिअवअस्स ता पढ सुणीअदि ।

विदू । पढदि ।

---

तारुण्यं दिवसानि पञ्च दश वा पीनस्तनोत्तम्भनम् ।
इत्थं कोकिलमञ्जुसिञ्जनमिषाद्देवस्य पञ्चेषो-
र्दत्ता चैत्रमहोत्सवेन सहसा आज्ञेव सर्वंकषा ॥ १८ ॥

भो युष्माकं सर्वेषां मध्ये अहमेकः कालाक्षरिको यस्य मे श्वशुरश्वशुरः पण्डितगृहे पुस्तकानि वहन्नासीत् ॥ "कालाक्षरिको विद्वान्" ततः क्रमागतं ते अन्वयेन पण्डितत्वम् ॥ आः दास्याः पुत्रि भविष्यत्कुट्टनि निर्लक्षणे विचक्षणे ईदृशोऽहं मूर्खयस्त्वयापि चोपहास्यते । अन्यच्च । खरपुच्छस्पर्शिनि "विट्टालशब्दोऽमङ्गलवाचकः" भ्रमणशीले, रथ्यालुण्ठनि, द्यूतप्रिये, टेन्टाकराले, त्रुटितसंघट्टिते, कोशशतापहारिणि, अथवा । हस्तकङ्कणं किं दर्पणे प्रेक्ष्यते ॥ एवमेतत् । तुरङ्गमस्य शीघ्रत्वे किं साक्षिणः पृच्छ्यन्ते । तद्वर्णय वसन्तम् ॥ कथं त्वं पञ्जरगता सारिकेव कुरकुरायमाणा तिष्ठसि न किमपि जानासि । तत्प्रियवयस्य देव्याः पुरतः पठिष्ये । यतः, न कस्तूरिका कुग्रामे वने वा विक्रीयते, न सुवर्णं कषपट्टिकां विना शिलापट्टके कष्यते ॥ प्रियवयस्य तत् पठ श्रूयते ॥ पठति ।

फुल्लुक्करं कलमकूरसमं वहंति
जे सिंदुआरविडवा मह वल्लहा ते ।
जे गालिअस्स महिसीदहिणो सरिच्छा
ते किं ण मुद्धविअइल्लपसूणपुंजा ॥ १९ ॥

विच । णिअकंतारंजणजोग्गं दे वअणं ।

विदू । ता किं पि उदारवअणे तुमं पढ ।

देवी । किंचित् स्मित्वा । सहि विअक्खणे अह्माणं पुरदो तुमं गाढकइत्तणेण उत्तिण्णा होसि, ता पढ संपदं अज्जउत्तस्स पुरदो सयंकिदं किं पि कव्वं । जदो, ता कव्व जं सभाए पढीअदि, तं सुवण्णं जं कसवट्टिए णिव्वट्टेदि, सा घरिणी जा पिअं रंजेदि, सो पुत्तो जो कुलमुज्जलेदि ।

विच । जं देई आणवेदि त्ति पठति ।

जे लंकागिरिमेहलाहि खलिदा संभोअखिण्णोरई-
फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणं ।
ते एण्हिं मलआणिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥२०॥

राजा । सच्चं विअक्खणा चदुरत्तणेण उत्तिण्णा कईणं पि कई । ता किमण्णं कइचूडामणित्तणे ठ्ठिदा एसा ।

देवी । विहस्य । सच्चं कइचूडामणित्तणे ठ्ठिदा एसा ।

---

पुष्पोत्करं कलमकूरसम वहन्ति
ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षास्ते
किं न मुग्धविचकिलप्रसूनपुञ्जाः ॥ १९ ॥

निजकान्तारञ्जनयोग्यं ते वचनम् ॥ तत्किमपि उदारवचने त्वं पठ ॥ सखि विचक्षणे अस्माकं पुरतस्त्वं गाढकवित्वेनोत्तीर्णा भवसि । तत् पठ सांप्रतमार्यपुत्रस्य पुरतः स्वयं कृतं किमपि काव्यम् । यतः, तत् काव्यं यत् सभायां पठ्यते । तत्सुवर्णं यत्कषपट्टयां निर्वर्त्यते । सा गृहिणी या पतिं रञ्जयति । स पुत्रो यः कुलमुज्ज्वलयति ॥ यद्देवी आज्ञापयति इति पठति ।

ये लङ्कागिरिमेखलाभ्यः स्खलिताः संभोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
ते इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥२०॥

सत्यम् । विचक्षणा चतुरत्वेनोत्तीर्णा कवीनामपि कविः; तत्किमन्यत्कविचूडामणित्वे स्थिता एषा ॥ सत्यम् । कविचूडामणित्वे स्थिता एषा ॥

विदू । सक्रोधम् । ता उज्जुत्रं चेत्र किं ण भणी अदि देईए अच्चुत्तमा विअक्खणा कव्वम्मि अच्चंताहमो कविंजलो बह्मणो त्ति ।

विच । अज्ज मा कुप्प कव्वं जेव्व दे कइत्तणं पिसुणेदि । जदो, णिअकंतारंजणजुग्गे णिंदणिज्जे वि अत्थे सुउमारा दे वाणी । लंबत्थणीए विअ एक्कावली । तुंदिलाए विअ कंचुलिआ । कट्टिदकेसाए विअ मालईकुसुममाला, काणाए विअ काजलसलाआ । ण सुट्ठुतरं भादि रमणिज्जा ।

विदू । तुज्झ उण रमणिज्जे वि अत्थे ण सुंदरा सद्दावली । कणअकटिसुत्तए विअ लोहकिंकिणीमाला । पडिवट्टे विअ तसरविरअणा । गोरंगीए विअ चंदणचच्चा । ण चारुत्तणमवलंबेहि । तहा वि तुमं वण्णीअसि ।

विच । अज्ज मा कुप्प २ का तुम्हेहिं सह पडिसिद्धी । जदो, तुमं णाराओ विअ णिरक्खरो वि रअणतुलाए णिउंजीअसि, अहं उण तु लद्धलद्धखरा वि कप्पासतुलणे णिउंजीआमि ।

विदू । एव्वं मह भणंतीए तुह वामं दक्खिणं जुहिट्ठिलजेट्ठभादुणामहेअं अंगजुगलं झडत्ति उप्पाटइस्सं ।

विच । अहं पि उण तुह एव्वं भणंतस्स उत्तरफग्गुणीपुरस्सरणक्खत्तणामहेअं अंगजुगं झडत्ति खडिस्सं ।

---

तदृजुकमेव किं न भण्यते देव्या, अत्युत्तमा विचक्षणा काव्ये अत्यन्ताधमः कपिञ्जलो ब्राह्मण इति ॥ आर्य मा कुप्य २ काव्यमेव ते कवित्वं पिशुनयति । यतः । निजकान्तारञ्जनयोग्ये निन्दनीयेऽप्यर्थे सुकुमारा ते वाणी । लम्बस्तन्या इव एकावली । तुन्दिलाया इव कञ्चुलिका । कर्तितकेशाया इव मालतीकुसुममाला । काणाया इव कज्जलशलाका । न सुष्ठुतरं भातिरमणीया ॥ तवपुनः रमणीयेऽप्यर्थे न सुन्दरा शब्दावली, कनककटिसूत्रक इव लोहकिङ्किणीमाला , प्रतिपट्ट इव तसरविरचना । गौराङ्गया इव चन्दनचर्चा न चारुत्वमवलम्बते । तथापि त्वं वर्ण्यसे ॥ आर्य मा कुप्य २ का युष्माभिः सह प्रतिस्पर्धा ॥ यतस्त्वं नाराच इव निरक्षरोपि रत्नतुलायां नियुज्यसे, अहं पुनस्तुलेव लब्धाक्षरापि कार्पासतुलने नियुञ्जामि ॥ एवं मम भणन्त्यास्तव वामं दक्षिणं युधिष्ठिरज्येष्ठभ्रातृनामधेयमङ्गयुगलं झटिति उत्पाटयिष्ये । "कर्णयुगमितिभावः" । अहं पुनस्तव एवं भणत उत्तराफल्गुनीपुरःसरनक्षत्रनामधेयमङ्गयुगं झटिति खण्डयिष्ये "हस्तयुगमित्यर्थः" ॥

राजा । वअस्स मा एवं भण कइत्तणे णिट्ठिदा एसा ।

विदू । सक्रोधम् । उज्जुअं जेव्व ता किं ण भणीअदि, अह्माणं चेडिआ हरिअंदणंदिअंदपोट्टिलसहाल प्पहुदिणं वि पुरदो सुकइ त्ति ।

राजा । एव्वं णेदं ।

विदू । परिक्रम्य गन्तु मिच्छति ।

विच । तहिं गच्छ जहिं मे पढमसाडिया गदा ।

विदू । चलितग्रीवम् । तुमं उण तहिं गच्छ जहिं मे मादाए पढमदंदावली गदा । ईदिसस्स राअकुलस्स भद्दं भोदु, जहिं चेडिआ बह्मणेण समं सरिसआए दीसदि । मदिरापंचगव्वं एकस्सिं भंडए करीअदि । कच्चं माणिक्कं अ सममाहरणे पउंजीअदि ।

चेटी । इह राअउले तं ते कंठत्थिदं भोदु जं भअवं तिलोअणो सीसे समुव्वहदि । तेण दे मुहं चुरीअदु । जेण अ असोअतरू दोहदं लहेदि ।

विदू । आः दासीए पुत्ति टिंटाकराले कोससदचट्टिणी रच्छालोट्टणी । एव्वं मं भणसि । मह महाबह्मणस्स भणिदेण तं तुमं लहेसु जं फग्गुणसमए सोहंजणो जणादो लहेदि । जं अ पामराहिंतो बली बइल्लो लहेदि ।

विच । अहं उण तुह एव्वं भणंतस्स णेउरस्स विअ-

---

वयस्यैवं मा भण कवित्वे निष्ठिता एषा ॥ ऋजुकमेव तत्किं न भण्यते अस्माकं चेटिकाहरिचन्द्रनन्दिचन्द्रपोटिलसभालप्रभृतीनामपि पुरतःसुकविरिति ॥ एवमेतत् ॥ तत्र गच्छ यत्र मे प्रथमशाटिका गता ॥ त्व पुनस्तत्र गच्छ यत्र मे मातुः प्रथमदन्तावलीगता । ईदृशस्य राजकुलस्य भद्रं भवतु यत्र चेटिका ब्राह्मणेन समं सदृशतया दृश्यते । मदिरा पञ्चगव्यं च एकस्मिन् भाण्डे क्रियते । काचो माणिक्यं सममाभरणे प्रयुज्यते ॥ इह राजकुले तत्ते कण्ठेस्थितं भवतु यद् भगवान् त्रिलोचनः शीर्षसमुद्वहति "अर्धचन्द्रो गलहस्तिकेत्यर्थः" तेन तेमुखं चूर्ण्यताम् । येन चाशोकतरुर्दोहदं लभते ॥ आः दास्याःपुत्रि टिंटाकराले कोशशतलेहिनि रथ्यालुण्ठनि एवं मां भणसि तद् मम महाब्राह्मणस्य भणितेन त्वं लभस्व यत्फाल्गुनसमये शोभाञ्जनो जनाल्लभते "शोभाञ्जनस्तरुविशेषः पुष्पमालादिभिरलंकृतोहुताशन्यां निक्षिप्यते । प्रदीप्तायां च तस्यां लोकैरितस्ततो निहत्यापह्रियते इति कस्मिंश्चिद्देशे आचारः" । यच्च पामराद्बली वृषभो लभते ॥ अहं पुनस्तवैवं भणतो नपुरस्येव पादलग्नस्य पादेन

पाअलग्गस्स पाएण मुहं चूरइस्सं । अण्णं अ । उत्तरासाढपुरस्सरणक्खत्तणामहेअं अंगजुगं उप्पाडिअ टाकिस्सं ।

विदू । सक्रोधं परिक्रामति । जवनिकान्तरे स्थित्वा किंचिदुच्चैः । ईरिसं राअउलं दूरे बंदीअदु । जहिं दासी बह्मणेण समं पडिसिद्धिं करेदि । ता अज्जप्पहुदि णिअगेहिणीए वसुंधराणामहेआए बह्मणीए चलणसुस्सूसओ भविअ गेहे ज्जेव्व चिट्ठिस्सं । इति सर्वे हसन्ति ।

देवी । अज्जउत्त कीदिसी कविंजलेण विणा गोट्ठी । कीदिसी णअणंजणेण विणा पसाहणलच्छी ।

विदू । सक्रोधम् । आकाशे । ण हु २ आगमिस्सं । अण्णो को वि पिअवअस्सो अणेसीअदु । एसा वा दुट्ठदासी लंबकुच्चं टप्परकण्णं पडिसीसअं देउण मह ट्ठाणे उवहसणत्थं करीअदु । अहमेक्को मंदो तुह्माणं सव्वाणं मज्झे । तुह्मे उण वरिससदं जीवध ।

विच । मा अणु संधेहि । अणुणअकक्कसो क्खु कविंजलबह्मणो सलिलसित्तो वि सणगुणग्गंठि व्व गाढतरो भोदि ।

देवी । सर्वेचावलोक्य । णं दंसणिज्जं दीसदु ।

गाअंतगोपअबहूपअपेंखिदासु
डोलासु विब्भमवदीसु णिबद्धदिट्ठी ।

जं जादि खजिदतुरंगरहो दिणेसो
तेण व्व होंति दिअसा अदिदीहदीहा ॥ २१ ॥

प्रविश्य पटाक्षेपेण विदूषकः । आसणमासणं ।

राजा । किं तेण ।

विदू । भैरवाणंदो दुआरे चिट्ठदि ।

देवी । किं जो जणवअणादो अच्चब्भुदसिद्धि सुणीअदि ।

विदू । अध इं ।

राजा । पवेसअ ।

विदू । निष्क्रम्य तेनैव सह प्रविशति ।

भैरवानन्दः । किंचिन्मदमभिनीय ।

मंतो ण तंतं ण अ किं पि जाणं
झाणं अ णो को वि गुरुप्पसादो ।
मज्जं पिआमो महिलं रमामो
मोक्खं अ आमो कुलमग्गलग्गा ॥ २२ ॥

अवि अ ।

रंडा चंडा दिक्खिदा धम्मदारा
मज्जं मंसं खज्जए पिज्जए अ ।
भिक्खा भोज्जं चम्मखंडं अ सेज्जा
कोलो धम्मो कस्स णो भादि रम्मो ॥ २३ ॥

किं अ ।

---

मुखं चूर्णयिष्ये । अन्यच्च । उत्तराषाढापुरस्सरनक्षत्रनामधेयमङ्गयुगलमुत्पाट्य क्षेपयामि । "श्रवणयुगलमित्यर्थः" ॥ ईदृशं राजकुलं दूरे वन्द्यतां यत्र दासी ब्राह्मणेन समं प्रतिस्पर्धां करोति । यदद्यप्रभृति निजगेहिन्या वसुंधरानामधेयाया ब्राह्मण्याश्चरणशुश्रूषको भूत्वा गृहे एव तिष्ठामि ॥ आर्यपुत्र कीदृशी कपिञ्जलेन विना गोष्ठी । कीदृशी नयनाञ्जनेन विना प्रसाधनलक्ष्मीः ॥ न खलु आगमिष्ये । अन्यः कोपि प्रियवयस्यः अन्विष्यताम् । एषा वा दुष्टदासी लम्बकूर्चं टप्परकर्णं प्रतिशीर्षकं दत्वा मम स्थाने उपहसनार्थं क्रियते । अहमेको मन्दो युष्माकं सर्वेषां मध्ये । यूयं पुनर्वर्षशतं जीवत । माऽनुसंधत्स्व । अनुनयकर्कशः खलु कपिञ्जलब्राह्मणः सलिलसिक्तो ऽपि शणगुणग्रन्थिरिव गाढतरो भवति । ननु दर्शनीयं दृश्यताम् ।

गायद्गोपकवधूपदप्रेङ्खितासु
दोलासु विभ्रमवतीषु निबद्धदृष्टिः ।

यद्याति खञ्जिततुरङ्गरथो दिनेश
स्तेनैव भवन्ति दिवसाः प्रतिदीर्घदीर्घाः ॥ २१ ॥

आसनमासनम् ॥ किं तेन ॥ भैरवानन्दो द्वारे तिष्ठति ॥ किं यः जनवचनादत्यद्भुतसिद्धिः श्रूयते ॥ अथ किम् ॥ प्रवेशय ॥

मन्त्रो न तन्त्रं नच किमपि ज्ञानं
ध्यानं च न कोपि गुरुप्रसादः ।
मद्यं पिबामो महिलां रमामो
मोक्षं च यामः कुलमार्गलग्नाः ॥ २२ ॥

अपि च ।

रण्डाश्चण्डा दीक्षिता धर्मदारा
मद्यं मांसं पीयते खाद्यते च ।
भिक्षा भोज्यं चर्मखण्डं च शय्या
कौलो धर्मः कस्य नो भाति रम्यः ॥ २३ ॥

किं च ।

मुत्तिं भणंति हरिबह्ममुहा हि देआ
झाणेन वेदपढणेण कउक्किआहिं ।
एक्केण केवलमुमादइदेण दिट्ठो
मोक्खो समं सुरअकेलिसुरारसेहिं ॥ २४ ॥

राजा । एदमासणमुपविसदु भैरवाणंदो ।

भैरवा । किं कादव्वं ।

राजा । कहिं पि विसए अच्छरिअं दट्ठुमिच्छामि ।

भैरवानन्दः ।

दंसेमि तं पि ससिणं वसुहावतिण्णं
त्थंभेमि तस्स वि रइस्स रहं णहद्धे ।
आणेमि जक्खसुरसिद्धगणंगणाओ
तं णत्थि भूमिवलए मह जं ण सज्झं ॥ २५ ॥

ता भण किं करीअदु ।

राजा । वअस्स तुए कहिं पि अपुव्वं दिट्ठं महिलारअणं ।

विदू । दिट्ठं दाव ।

राजा । कहिं हिं ।

विदू । अत्थि दक्खिणावहे वच्छोमं णाम णगरं तहिं मए एक्कं कण्णा रअणं दिट्ठं तमिहाणीअदु ।

भैर । आणीअदि ।

राजा । अवदारीअ पुण्णि माहरिणंको धरणीतले ।

भैर । ध्यानं नाटयति ।

---

मुक्तिं भणन्ति हरिब्रह्ममुखा हि देवा
ध्यानेन वेदपठनेन क्रतुक्रियाभिः ।
एकेन केवलमुमादयितेन दृष्टो
मोक्षः समं सुरतकेलिसुरारसाभ्याम् ॥ २४ ॥

एतदासनमुपविशतु भैरवानन्दः ॥ किं कर्तव्यम् ॥ कुत्रापि विषये आश्चर्यं द्रष्टुमिच्छामि ॥

दर्शयामि तमपि शशिनं वसुधावतीर्णं
स्तम्भयामि तस्यापि रवे रथं नभोर्धे ।
आनयामि यक्षसुरसिद्धगणाङ्गना-
स्तन्नास्ति भूमिवलये मम यन्न साध्यम् ॥ २५ ॥

तद् भण किं क्रियताम् ॥ वयस्य त्वया कुत्रापि अपूर्वं दृष्टं महिलारत्नम् ॥ दृष्टं तावत् ॥ कुत्र हि ॥ अस्ति दक्षिणापथे वैदर्भे नाम नगरं तत्र एकं कन्यारत्नं दृष्टं तदिदानीयतु ॥ आनीयते ॥ अवतार्यतां पूर्णिमाहरिणाङ्को धरणीतले ॥ अहह आश्चर्यमाश्चर्यम् ॥

ततः प्रविशति पटाक्षेपेण नायिका । सर्वे आलोकयन्ति ।

राजा । अहह अच्छरिज्जं ।

जं धोअंजणसोणलोअनजुअं लग्गालअग्गं मुहं
हत्थालंबिदकेसपल्लवचये दोल्लंति जं बिंदुणो ।
जं एक्कं सिचअंचलं णिवसिदा तं ण्हाणकेलिट्ठिदा
आणीदा इअमब्भुदेक्कजणणी जोईसरेणामुणा ॥ २६ ॥

अवि अ ।

एक्केण पाणिणलिणेण णिवेसअंती
पोत्तंचलं घणघणत्थलसंसमाणं ।
चित्ते लिहिज्जदि ण कस्स वि संयमंती
अण्णेण चंकमणदो चलिदं कडिल्लं ॥ २७ ॥

विदू ।

ण्हाणाअ मुक्काभरणोच्चआए
तरंगसंगक्खदमंडणाए ।
उल्लंसुउल्लासिथणुल्लआए
सुंदेरसव्वस्समिमीअ दिट्ठी ॥ २८ ॥

नायिका । सर्वानालोक्य स्वगतम् । एसो महाराओ को वि इमिणा गंभीरसरसमहुरेण सोहासमुदएण जाणिज्जदि । एसा वि एदस्स जेव्व महादेई तक्कीअदि । जहा

---

यद्धौताञ्जनशोणलोचनयुगं लग्नालकाग्रं मुखं
हस्तालम्बितकेशपल्लवचये पूर्णन्ति यद्बिन्दवः ।
यदेकं सिचयाञ्चलं निवसिता तत्स्नानकेलिस्थिता
आनीता इय मद्भुतैकजननी योगीश्वरेणामुना ॥ २६ ॥

अपि च ।

एकेन पाणिनलिनेन निवेशयन्ती
पोत्राञ्चलं घनस्तनस्थलसांसमानम् ।
चित्ते न लिख्यते कस्यापि संयमन्ती
अन्येन चङ्क्रमणतश्चलितं च वस्त्रम् ॥ २७ ॥

स्नानाय मुक्ताभरणोच्चयाया
स्तरङ्गसंगक्षतमण्डनायाः ।
आर्द्रांशुकोल्लासिस्तनोत्कटायाः
सौन्दर्यसर्वस्वमस्या दृष्टिः ॥ २८ ॥

एष महाराजः कोप्यनेन गम्भीरसरसेन मधुरेण शोभासमुदयेन ज्ञायते । एषापि एतस्यैव महादेवी तर्क्यते । यथा अर्धनारीश्वरस्येव वामार्धे अर्कायितापि गौरी ज्ञायते । एषोपि

अद्धणारीस्सरस्स विअ वामद्धे अकहिआ वि गोरी जाणी-अदि । एसो वि जोईस्सरो । एस उण परिअणो । वि-चिन्त्य । ता किं एदस्स महिलासहिदस्स वि दिट्ठी मं बहु मणेदि । इत्यजस्रं वीचते ।

राजा । विदूषकमपवार्य ।

जं मुक्कासवणंतरेण तरला तिक्का कटाक्खच्छटा-
भिंगाकट्ठिदकेदअग्गिमदलद्दोणीसरिच्छच्छई ।
तं कप्पूररसेण णं धवलिदो जोण्हाअ णं ण्हाविदो
मुत्ताणं घणरेणुणा व्व छुरिदो जादोह्मि एत्थंतरे ॥२९॥

विदू । तह एव्व । अहो इमाए रूवसोहा ।

मण्णे मज्झं तिवलिवलिअं डिंभमुट्ठीअ गेज्झं
णो बाहूहां रमणफलअं वेढ्ढिदुं जादि दोहिं ।
णेत्तच्छेत्तं तलुणपसए दिज्जमाणोवमाणे
ता पच्चक्खं मह विलिहिदुं जादि एसा ण चित्ते ॥ ३० ॥

कधं ण्हाणधोविदविलेवणा वि समुत्तारिद वहूसणा वि रमणिज्जा ।

अह वा ।

जारूवमुक्का वि विभूसअंति
ताणं अलंकारवसेण सोहा ।

---

योगीश्वरः । एष पुनः परिजनः । तस्यैतस्य महिलासहित-स्यापि दृष्टिर्मां बहुमन्यते ॥

यन्मुक्ताश्रवणान्तरेण तरलास्तीक्ष्णाः कटाक्षच्छटा-
भृङ्गाकर्षितकेतकाग्रिमदलद्रोणीसदृक्षच्छविः ।
तत्कर्पूररसेन ननु धवलितो ज्योत्स्नया ननु स्नापितो
मुक्तानां घनरेणुनेव छुरितो जातोस्मि अत्रान्तरे ॥ २९ ॥

तथैव अहो एतस्या रूपशोभा ।

मन्ये मध्यं त्रिवलिवलितं डिम्भमुष्ट्या ग्राह्यं
नो बाहुभ्यां रमणफलकं वेष्टितुं याति दोर्भ्याम् ।
नेत्रक्षेत्रं तरुणप्रस्थतिर्दीयमानोपमाने
तत्प्रत्यक्षं मम विलिखितुं याति एषा न चित्ते ॥ ३० ॥

"रमणो नितम्बः"

कथं स्नानधौतविलेपनापि समुत्तारितविभूषणापि रम-णीया ।

अथवा ।

या धौतमुक्ता अपि विभूषयन्ति तासामलंकारवशेन शोभा ।

निसग्गचंगस्स वि माणुसस्स
सोहा समुम्मीलदि भूसणेहिं ॥ ३१ ॥

राजा । एदाए एदं दाव । जदो,

णावण्णं णवजच्चकचणणिहं णेत्ताण दीग्घत्तणं
कण्णेहीं खलिदं कवोलफलआ दो खडचदो वमा ।
एसा पंचसरेण सज्जिदधणूदंडेण रक्खिज्जए
जेणं सोसणमोहणप्पहुदिणो विझंति मं मग्गणा ॥३२॥

विदू । विहस्य । जाणे इच्छावादे तुह सोंडीरत्तणं ।

राजा । विहस्य । पिअवअस्स कधेमि दे सुणु ।

अंगं चंगं णिअगुणगणालंकिद कामिणीणं
पच्छाअंती उण तणुसिरं भादि णेवच्छलच्छी ।
इत्थं जाणं अवअवगदा का वि सुंदेरमुद्दा
मण्णे ताणं वलइदधणू णिच्चभिच्चो अणंगो ॥ ३३ ॥

अवि अ । एदाए,

तहा रमणवित्थरो जहण ठाइ कंचीलदा
तहा सिहिणतुंगिमा जहण एहि णाहीमुहं ।
तहा णअणवड्ढिमा जह ण किं पि कण्णुप्पलं
तहा अ मुहमुज्जलं दुससिणो जहा पुण्णिमा ॥ ३४ ॥

---

निसर्गसुन्दरस्यापि मानुषस्य शोभा समुन्मीलति भूषणैः ॥ ३१ ॥

एतस्या एतत्तावत् । यतः,

लावण्यं नवजात्यकाञ्चननिभं नेत्रयोर्दीर्घत्वं
कर्णाभ्यां स्खलितौ कपोलफलकौ द्विखण्डचन्द्रोपमौ ।
एषा पञ्चशरेण सज्जितधनुर्दण्डेन रक्ष्यते
येन शोषणमोहनप्रभृतयो विध्यन्ति मां मार्गणाः ॥ ३२ ॥

एवं जाने स्वस्यैव तव सुन्दरत्वम् ॥ प्रियवयस्य कथया-मिते शृणु ।

अङ्गं सुन्दरं निजगुणगणालंकृतं कामिनीनां
प्रच्छादयन्ती पुनस्तनुश्रियं भाति नेपथ्यलक्ष्मीः ।
एवं यासामवयवगता कापि सौन्दर्यमुद्रा
मन्ये तासां वलयितधनुर्नित्यभृत्यो अनङ्गः ॥ ३३ ॥

अपि चैतस्याः ।

तथा रमणविस्तरो यथा न तिष्ठन्ति काञ्चीलता-
स्तथा स्तनतुङ्गिमा यथा न एति नाभिमुखम् ।
तथा नयनवर्धिमा यथा न किमपि कर्णोत्पलं
तथा च मुखमुज्ज्वलं द्विशशिनो यथा पूर्णिमा ॥ ३४ ॥

देवी । अज्ज कविंजल पुच्छिअ जाणीहि का एस त्ति । अह वा तं पडि । एहि मुद्धमुहि उवसिअ णिवेदेहि का तुमं त्ति ।

राजा । आसणमिमाए ।

विदू । एदं मे उत्तरीअमासणं ।

नायिका । वस्त्रदानोपवेशनं नाटयति ।

विदू । भोदु संपदं कहिज्जदु ।

नायि । अत्थि एत्थ दक्खिणावहे बच्छोमं णाम णगरं तहिं कुंदलेसो सअलजणवल्लहो वल्लहराओ नाम राजा ।

देवी । स्वगतम् । जो हुं सो मह माउस्सओ होइ ।

नायि । तस्स घरिणी ससिप्पहा णाम ।

देवी । स्वगतम् । सा वि मे माउस्सिआ ।

नायि । तेहिं अहं खडिखंडएहिं उहिद त्ति उच्चामि ।

देवी स्वगतम् । णहि ससिप्पभागब्भुप्पत्तिमंतरेण ईरिसी रूपसोहा होदि । ण हु वेडूरिअभूमिगब्भुप्पत्तिमंतरेण वेडुरिअमणिसलाआ णिप्पज्जदि । प्रकाशम् । णं तुमं कप्पूरमंजरी ।

नायि । अधोमुखी तिष्ठति ।

देवी । एहि बहिणिए आलिंगेसु मं ।

नायि । अज्जे कप्पूरमंजरीए एसो पढमो पणामो ।

देवी अज्ज मए भैरवाणंद तुम्ह प्पसाएण अपूव्वं संविहाणअं अणुभविदं बहिणिआकप्पूरमंजरीदंसणेण ।

"रमणविस्तरो नितम्बगरिमा"

आर्य कपिञ्जल आपृच्छ्य जानीहि का एषेति । एहि मुग्धमुखि उपविश्य निवेदयतु का त्वमिति ॥ आसनमेतस्याः ॥ एतन्मे उत्तरीयमासनम् ॥ अस्त्यत्र दक्षिणापथे वैदर्भं नाम नगरं तत्र कुन्तलेशः सकलजनवल्लभो वल्लभराजो नाम राजा ॥ यो हि मम मातृष्वसृपतिर्भवति ॥ तस्य गृहिणी शशिप्रभा नाम ॥ सापि मे मातृष्वसा ॥ ताभ्यामहं क्रीडनकैः क्रीडा उदितेत्युच्यते ॥ नहि शशिप्रभागर्भोत्पत्तिमन्तरेण ईदृशीरूपशोभा भवति । न खलु वैडूर्यभूमिगर्भोत्पत्तिमन्तरेण वैडूर्यमणिशालका निष्पद्यन्ते ॥ ननु त्वं कर्पूरमञ्जरी ॥ एहि भगिनिके आलिङ्गयस्वमाम् ॥ आर्ये कर्पूरमञ्जर्या एष प्रथमः प्रणामः ॥ अद्यमया भैरवानन्द तव प्रसादेनापूर्वं संविधानकमनुभूतं भगिनिकाकर्पूरमञ्जरीदर्शनेन ।

शेष उत्तराङ्के ॥

# THE VIDVAN-MANO-RANJINI'

OR

## REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA SÁRA, BY RÁMA-TÍRTHA

*(Continued from page 306 )*

*Tranquillity &c* Tranquillity should by considered after self-restraint, inasmuch as the external organs are the media of the outward activity of the internal organ, and the restraint of the internal organ is impossible without that of the external organs ; and inasmuch as the order of fact is preferable to the order of instruction, as in the case of the fiery oblation and the cooking of the gruel used at this oblation [where the order of injunction is inverted, the agni-hotra being enjoined before the preparation of the gruel which is a prerequisite]. Tranquillity is the restraint of the mind or internal organ, that is, its forcible withdrawal from objects of sense. So much being premised, the author anticipating an objection that this is absurd, the restraint not being conformable to knowledge, inasmuch as the restraint from objects hearing &c [and consequently from the Veda &c.] would be included, proceeds to characterise restraint

*From the hearing &c* The words *et cœtera* are intended to include *reflection* &c This is to be understood also in the sequel In the phrase with the exception of this, the word this means hearing &c [that is, hearing,

ऐहिकानामिति । इहलोके भवा ऐहिकाः प्रतिपन्नशरीरसम्बन्धिनः स्रक्चन्दनवनितागृहक्षेत्रपशुमर्त्यादिविषयजन्यसुखस्वरूपाभोगाः कृषिसेवा-प्रतिग्रहादिकर्म्मजन्या अनित्या यथा दृष्टाः एवमामुष्मिका अप्यमृतादिविषयसेवाजन्यानन्दा यागादिकर्म्मजन्यत्वादनित्या भवितुमर्हन्तीति निश्चित्यतेभ्योऽतितरां विषमिश्रितान्नछर्दितान्नवज्जुगुप्सेहामुत्रलफभोगविरागइत्यर्थः । अयं भावः सुखं मे निरतिशयं भूयात् दुःखं माभूदणुमात्रमपीत्यखिलप्राणिनामस्त्यभिनिवेशः । तेचैवमभिनिविष्टाः पुरुषकारावलम्बनेन सर्व्वोत्साहं यतन्तोऽपि न लभन्ते सुखमात्यन्तिकं दुःखाभावञ्च कथं केचित्समुद्रयानराजप्रीणनाद्यतिकष्टमनुभूय फलकाले स्वयं नश्यन्ति केचिन्प्राप्तफलाअपि व्याध्याद्युपद्रुताः सन्तोभोगं न लभन्ते केचिंत्तु प्राप्तेषभोगा अपि भोग्यभार्य्यापुत्रादिविनाशाद्वा तद्विसम्वादाद्वान्यैर्व्वा सहस्पर्द्धासूयादिभिः सञ्चितभोग्यजातस्य क्षयभयेनानावृष्ट्यादिचिन्तासन्तापादिभिश्च क्षणमपि सुखमलभमानाः कष्टादरिद्राः कान्यकुब्जक्लीवबधिरादयोबुभुक्षापिपासार्दितवहुलमुपलभ्यन्ते । एवं दुःखबहुले संसारे सुखलवमात्रमननुभवन्नपि करुणावद्विशुद्धचित्तो न सज्जते किन्तु विरज्यत एवेति। नन्वस्त्येवमैहिकं सुखमनित्यत्वादिदोषदुष्टत्वाद्विरागास्पदं तथापि न पारलौकिकाद्विरक्तिरुपपद्यते । क्षयिष्णुत्वानुमानस्याक्षय्यं हवै चातुर्मास्ययाजिनः सुकृतं भवतीति श्रुतिबाधितविषयस्यानुत्थानादिति चेत् मैवं तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितोलोकःक्षीयते इति श्रुत्या वस्तुबलावलम्बनेन प्रवृत्तयाऽनन्यपरया सापेक्षाक्षय्यफलविषयिकायाः प्रशस्तलक्षणाया विध्येकवाक्यत्वेनान्यपरायास्तस्या एव बाधितत्वात् । नहि जन्यं नित्यं भावरूपं दृष्टं । अत ऐहिकभोगव दाब्रह्मस्तम्बपर्य्यन्तेषु भोगेषु वैराग्यमुपपद्यत इति तदुक्तं भगवता व्यासेन यच्च कामसुखं लोके यच्च दिव्यं महत्सुखं । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलामिति । शमादीन्विभजते ॥

reflection and meditation.] Quiescence [or cessation] is the inaction of the external and internal organs thus restrained, from objects different therefrom, that is, from objects different from hearing &c, such inaction being absence of incitement to acting towards objects It might be objected that this definition of quiescence appears to be confounded with the definitions of tranquillity and self-restraint, the meaning of the definition, which is the arrest of the operation of the outwardly active senses, being identical with those The author, therefore, not contented with this definition, defines quiescence in another manner

*Or* [*it is the abandonment of works enjoined*] &c The meaning is that quiescence is the abandonment, shunning or renunciation, of works enjoined, that is, of actions such as the prayers at the junctions of the day [in the morning, noon, and evening,] the fiery oblation &c, which are enjoined, that is, prescribed as necessary to be done, according to the course described in Vedic and scriptural texts, such as Who duly perform the sacrifice to Prajâ-pati in truth, Having performed the sacrifice to Prajâ-pati, wherein the fees are a man's whole property, bearing within himself the sacred fires, let the Brâhman go forth a mendicant from his home Like quiescence &c, renunciation also, being an internal portion of the knowledge of spirit, must necessarily be performed by one who desires emancipation Accordingly the Vedic texts. Neither by works, nor by offspring, nor by wealth, only by renunciation have some partaken of immortality, Ascetics, knowing the truth by knowing the latter portion of the Veda, by conjunction with renunciation, become purified in intellect, Desiring only this world mendicants set out, and quitting desire of offspring, of wealth, and of the world, they observe the practice of mendicancy; These are merely inferior austerities, it is renunciation that is superior. So also the scriptural texts· He attains by renunciation the highest perfection of freedom from works, The renunciation of all works, which consists in reflection on the meaning of the word Thou, The root of wealth is effort and sufferance, that of sensual pleasure is beauty and form and youth, that of merit sacrifice &c, kindliness, and self-restraint, and that of liberation entire cessation from works Sacrifice is characterised by activity, knowledge is marked by renunciation, therefore let the wise, preferring knowledge, practise renunciation So the aphorism That is to be embraced which is subservient to the attainment of the highest end of spirit, and not-repugnant thereto, but what is repugnant thereto is to be avoided

A E G and G D

शमादयइति । मनसोबहिः प्रवृत्तौ बाह्येन्द्रियाणां दूरत्वात्तन्निरोध-मन्तरेण मनोनिग्रहाशक्तेर्दमानन्तरं शमो द्रष्टव्यः पाठक्रमादर्थक्रमस्य बलीयस्त्वादग्निहोत्रयवागूपाकवत् । मनसोऽन्तः करणस्य निग्रहोविषयेभ्यो-बलादाकर्षणं शमइत्येतावत्युक्ते श्रवणादिविषयेभ्योऽपि निग्रहे प्राप्ते ततो निग्रहस्य [illegible] निग्रहं विशिनष्टि ॥

श्रवणादि [illegible] द्रष्टव्यं तद्व्यतिरिक्तेत्यत्र श्रवणादिस्तच्छब्दार्थः । निवर्त्तितानां तेषां बाह्यान्तरिन्द्रियाणां तद्व्यतिरिक्त विषयेभ्यः श्रवणादिव्यतिरिक्तविषयेभ्यउपरमणं पुनर्विषयप्रवृत्त्यनुत्साहकरणमुपरतिरित्यर्थः । ननु शमदमयोर्लक्षणाभ्यामिदमुपरतिलक्षणं संकीर्णं प्रतिभाति बहिः प्रवृत्तेन्द्रियव्यापारनिरोधात्मकस्य लक्षणार्थस्य तुल्यत्वादित्यपरितोषात् प्रकारान्तरेणोपरतिं लक्षयति ॥

अथवेति । विहितानामवश्यकर्त्तव्यतया चोदितानां सन्ध्यावन्दनाग्निहोत्रादीनां कर्मणां विधिना तत्त्वे के प्राजापत्यामिष्टिं कुर्व्वन्ति । प्राजापत्यां निरूप्येष्टिं सर्व्ववेदस दक्षिणां । आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहादित्यादिश्रुतिस्मृत्युक्तमार्गेण परित्यागः परिव्रजनं सन्यासउपरतिरित्यर्थः। शमादिवत् सन्यासोऽप्यात्मज्ञानानन्तरङ्गत्वादवश्यं मुमुक्षुणानुष्ठेयः तथा च श्रुतयः न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः । एतमेव लोकमिच्छन्त. प्रव्राजिनः प्रव्रजन्ति । पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथभिक्षाचर्य्यं चरन्ति तानि वा एतानि अवराणि तपांसि न्यासएवात्यरेचयेत्याद्याः । स्मृतयश्च नैष्कर्म्यसिद्धिं परमां सन्यासेनाधिगच्छति । त्वं पदार्थविचारो यः सन्यासः सर्व्वकर्मणां अर्थस्य मूलं प्रकृतिः क्षमा च कामस्य रूपञ्च वपुर्व्वयश्च । धर्मस्य यागादिदया दमश्च मोक्षस्य सर्व्वोपरमः क्रियाभ्यः । प्रवृत्तिलक्षणो यागो ज्ञानं सन्यासलक्षणं । तस्मात् ज्ञानं पुरस्कृत्य सन्यसेदिह बुद्धिमानित्याद्याः । न्यायश्च पुरुषस्योद्देश्यसिद्धये यदुपयुक्तमविरोधि च तदुपादेय विपरीतं हेयमिति ॥



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO. AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 74, Benares, July 1st, 1872. Vol. VII.


## ॥ चिन्तामणेः शब्दखण्डम् ॥

(१) ननु क्रमिकपदवत्त्वं वाक्यत्वं, न चात्र पदक्रमो, ऽनुच्चार्यमाणतयोच्चारणाधीनस्य युगपदनुमीयमानतया बुद्ध्यधीनस्य वा तस्याभावादिति चेत्, नहि क्रमिकपदवत्त्वं वाक्यत्वं, गौरश्व इत्यादावभावात्, किं तु (२) विशिष्टार्थपरशब्दत्वं, तच्चात्रास्त्येव । अथानुच्चार्यमाणस्य न वाक्यत्वं, न वा ऽर्थानुभावकत्वमिति चेत्, न । लिप्यनुमितानामपि वाक्यत्वादर्थबोधकत्वाच्च, लिपितुल्या च स्मृतिः । (३) किं च वाक्यमुच्चार्यते न तूच्चारणाद्वाक्यत्वमन्यथा वाक्यमुच्चारयेत्यत्रानन्वयापत्तिः । (४) अनुच्चारितमौनिश्लोकश्च वाक्यं न स्यात्, (५) उच्चारणादशायां वाक्यत्वे वाक्यस्यासत्त्वमेव स्यात् । एकदा तावत्पदानामुच्चारणाभावात् । न च कृतक्रियमाणकरिष्यमाणोच्चारणस्य वाक्यत्वं, समुदाये प्रत्येकस्याभावात् । (६) तस्मादर्थविशेषज्ञापकत्वेनैव ज्ञातादर्थविशेषधीः । (७) अत एवास्ति वह्निलिङ्गमिति शब्दात्प्रतीतधूमेन वह्नेरनुमानम् । ननु तदर्थज्ञापकत्वेन ज्ञातात्पदादर्थज्ञानमात्रं न तु संसर्गधीः, घटः कर्मत्वमानयनं भावना तद्बोधकमिति ज्ञानेपि घटमानयेति वाक्यादिवान्वयबोधाभावात् । एवं चान्वयप्रकारककर्मत्वाद्युपस्थापकविभक्त्यादिमत्पदविशेषस्य तदुपस्थापिताकाङ्क्षादेश्च ज्ञानं वाक्यार्थधीहेतुरतो न तैर्विना ज्ञापकत्वमात्रेण ज्ञातादर्थधीः । (८) हस्तकरादिसंदेहे कुशमानयेत्यादौ विभक्त्यादिज्ञानादेव वाक्यार्थानुभव इति । मैवम् । नहि तत्तद्विभक्त्यादिमत्पदविशेषत्वेन वाक्यार्थधीहेतुत्व,मननुगमात्, किं तु घटः कर्मत्वमित्याद्यन्वयविरोधिपदाजन्यपदार्थोपस्थि-

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

(१) नन्विति । तथा च वाक्यत्वाभावात्तद्विशेषवेदत्वाभाव इत्यर्थः । (२) विशिष्टेति । विशिष्टार्थानुभावकशब्दत्वमित्यर्थः । ननु लिप्यनुमितमपि कदा चिदुच्चार्यत एवेत्यरुचेराह । (३) किं चेति । उच्चारणात्पूर्वमेव वाक्यस्वरूपं यदि वोच्चारणगर्भं तत् स्वरूपं तदा तदुच्चारणं नोच्चारणकर्मेत्यनन्वय इत्यर्थः । (४) अनुच्चरितेति । तस्य कदाप्युच्चारणाभावादिति भावः । उच्चार्यमाणेत्यत्र लडर्थोपि यदि विवक्षितस्तदा दोषमाह । (५) उच्चारणेति । यदि चोच्चारणमुपलक्षणं तदा मौनिश्लोकादिसाधारणोपलक्ष्याभावात्तदर्थज्ञापकत्वेन ज्ञातत्व तथा वाच्यं, तच्च प्रकृतेप्यस्ति इत्याशयेनाह । (६) तस्मादिति । न केवलमियं शब्दे रीतिरपि तु ज्ञायमानकरणमात्रे एव ज्ञाप्यज्ञापकत्वज्ञानप्रयोजकत्वं साधयामीत्याह । (७) अत एवेति । (८) हस्तेति । तत्र विभक्त्यादिसमभिव्याहारमुखीयान्वयधीस्तल्लोपमजानतोप्यन्वयबोध एवेत्याशयः । ननु घटः कर्मत्वमित्यादावभेदान्वयस्वरूपयोग्यत्वात्तत्तदन्वयविरोधिपदाजन्यत्वं वाच्यम्, तथा चाननुगमस्तदवस्थ एवेति लाघवाद् विभक्तिमत्पदत्वेनैव तद्धेतुत्व-

निस्तथा, सा चेहाप्यस्ति । (९) वस्तुतस्तु नानापदार्थोपस्थित्यनन्तरं वाक्यार्थबोधे तथैव सामग्री, अनुमितवेदाद्वाक्यार्थानुभवे विलक्षणैव सा, स्मृत्यर्थज्ञापकत्वेनैव ज्ञातस्य स्मृत्यर्थानुभावकत्वात् । धर्मिग्राहकप्रमाणेन तथैव तस्य सिद्धत्वात् । (१०) तवेश्वरस्येवाशरीरस्य कर्तृत्वे, (११) अत एव वर्णपदविभक्त्यादिविशेषघटितत्वेनाज्ञातस्याखण्डस्य (१२) सखण्डस्य वा वाक्यार्थानुभावकत्वात् (१३) पदार्थस्थानीयस्तस्य वाक्यार्थः, तच्च वर्णसमूहः पदं पदसमूहो वाक्यमित्यत्रापि न नो ग्रहः । (१४) प्रमाणशब्दत्वमात्रेण तस्य सिद्धेः । अन्यथा क्लृप्तहेतुं विना न सो ऽनुभावक इत्यादौ तदसिद्धावाश्रयासिद्धिः, सिद्धौ वा बाधः, तेन विनैव सर्वानुपपत्तिं परिभूय तदनुभावकत्वस्य धर्मिग्राहकमानसिद्धत्वात् । (१५) अत एव स्तुतिनिन्दाभ्यां कल्पितविधिनिषेधकवेदादर्थमधिगम्य प्रवृत्तिनिवृत्ती, अन्यथा विधिनिषेधकानां पदानां नानाप्रकारकत्वेन विभक्त्यादिविशेषवत्पदस्यानुमातुमशक्यत्वान्न ततो ऽर्थधीः स्यात्, तथापि वक्तृज्ञानानुमानानन्तरमिवा(१६)नुमितानुमानादेव वाक्यार्थसिद्धेर्लौकिकवाक्यवद्वेदस्यानुवादकत्व स्यादिति चेत्, न । धर्मिग्राहकमानेन स्मृत्यर्थज्ञापकतया ज्ञातात्संभूतसामग्रीकत्वेनानुपदमेव वाक्यार्थबोधोदयाद् अपेक्षणीयान्तराभावात् । अनुमानस्य व्याप्त्यादिज्ञानापेक्षितत्वेन विलम्बितत्वात् । न च वेदस्यापि (१७) योग्यतादिज्ञानापेक्षिततया विलम्बः । तन्निरपेक्षबोधकस्यैव धर्मिग्राहकमानसिद्धत्वाद् (१८) योग्यतादिविशिष्टस्यैवानुमानाद्वा । (१९) एवं मङ्गलाचारस्याविगीतशिष्टाचारत्वेन कर्तव्यतामनुमाय (२०) सा कर्तव्यता, वेदबोधिता, लौकिकाऽविगीतशिष्टाचारकर्तव्यतात्वादिति (२१) तद्बोधकत्वेनानुमितवेदात् कर्तव्यताधीस्ततः प्रवृत्तिः । (२२) न तु स आचारो वेदबोधितकर्तव्यताकः, तादृशाचारत्वा,दित्यनुमितवेदात्तत्कर्तव्यताधीः । (२३) विभक्त्यादिकं विना ऽनुमितवेदात्तत्कर्तव्यताज्ञानाभावात्, (२४) मङ्गलमाचरेदित्येवंरूपस्य च वेदस्य नानुमान, तथा व्याप्त्यभावात् । तस्मा (२५) तस्य कर्तव्यतामनुमाय (२६) तद्बोधकवेदानुमानं, प्रथमं कर्तव्यतानुमानेऽपि वेदानुमानस्याविनाभावात् । न च तत एव प्रत्यक्षवेदानुमानं, प्रत्यक्षत्वे उच्छेदानुपपत्तेः, शाखान्तरवत् ॥

---

त्यस्वरसेन मतान्तरमाह । (९) वस्तुतस्त्विति । प्रतिबन्द्यभिप्रायेण दृष्टान्तमाह । (१०) तवेति । (११) अत एवेति । तथा च धर्मिग्राहकमानसिद्धत्वादेवेत्यर्थः । घटितत्वेनाज्ञातस्येत्यस्य विवरणमखण्डस्येति । (१२) सखण्डस्य, तद्घटितत्वेन ज्ञातस्य, वाशब्दो ऽनास्थायामिवार्थे वा । (१३) पदार्थेति । आहत्य वाक्यार्थ एव ज्ञायते न तु पदार्थस्मरणावान्तरव्यापारापेक्षापीत्यर्थः । तर्हि कथं वेदत्वमित्यत आह । (१४) प्रमाणेति । तथा च न तद्घटितं वेदत्वं, किं तु प्रमाणशब्दत्वघटितं, तच्चात्रास्त्येवेति भावः । त्वया ऽप्युक्तसामग्री कल्प्येत्याह । (१५) अत एवेति । (१६) अनुमितेति । एते स्मृत्यर्थाः परस्परसंसर्गवन्तो वेदजन्यानुभवविषयत्वादित्यादेरित्यर्थः । अत्र च नाविषयत्वं न वा ऽप्राधान्येन विषयत्वमित्यनुवादकतावश्यकीति भावः । (१७) योग्यतादिज्ञानेति । आदिपदात्तात्पर्यादिग्रहः । अभ्युपगमवादेनाह । (१८) योग्यतादीति । उक्तरीतिमाचारस्थले ऽप्यतिदिशति । (१९- एवमिति । तदनुमानं प्रत्यक्षप्रकाशे व्याख्यातप्रायम् । (२०) सा, मङ्गलाचारीयेत्यर्थः । तथा च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरिति मते मङ्गलाचारविशिष्टकर्तव्यताया वेदबोधितत्वानुमितौ समानसंवित्संवेद्यतया मङ्गलाचारविशिष्टकर्तव्यताबोधकत्वेन वेदसिद्धिस्ततस्तद्धीस्तदर्थज्ञापकत्वज्ञानमात्रस्यैवात्र सामग्रीत्वात् । तदिदमाह । (२१) तद्बोधकत्वेनानुमितवेदादिति । (२२) नत्विति । अत्र कर्तव्यतामात्रबोधकत्वेन वेदसिद्धेर्न ततो मङ्गलाचारविशिष्टकर्तव्यताबोधः स्यादिति भावः । न च बहुव्रीह्यर्थपर्यालोचनयात्रापि मङ्गलकर्तव्यताबोधकत्वेनैव तत्सिद्धिरिति वाच्यम् । वस्तुगत्या मङ्गलकर्तव्यतातद्बोधकत्वेन सिद्धावपि मङ्गलांशबोधकत्वेनासिद्धेस्तद्बोधकत्वानुपपत्तेः । नह्याकाशः श्रोत्रग्राह्यगुण इत्यनुमितावाकाशे ऽपि श्रोत्रग्राह्यत्वभानसंभव इति । तर्हि मङ्गलांशे विभक्त्यादिसमभिव्याहाररूपसामर्थ्यं बोधयत्वित्यत आह । (२३) विभक्तीति । अनुमितवेदे विभक्त्यादिसमभिव्याहाररूपसामर्थ्याभावादित्यर्थः । तर्हि तत्समभिव्याहृत एवानुमीयतामित्यत आह । (२४) मङ्गलमिति । (२५) तस्येति । मङ्गलाचारस्येत्यर्थः । (२६) तद्बोधकेति । मङ्गलाचारविशिष्टकर्तव्यताबोधकेत्यर्थः । अविनाभावादित्युपलक्षणमन्यपरंपरानिरासेनाश्वासार्थं चेत्यपि द्रष्टव्यम् । एवं च ततः प्रवृत्तिरिति पूर्वोक्तमपि संगच्छतइति ध्येयम् । अत्र च कथं नानुवा-

(२७) यस्त्वष्टकाः कर्त्तव्याः कार्या अष्टका इत्येवंरूपमेव वाक्यमनुमेय,मुपस्थितत्वादेवं च तत्रैवार्थे प्रतिपुरुषमन्यान्यवेदानुमानं न दोषाय । एकार्थानेकपदोपस्थितौ वा ऽनेकवाक्यानुमानमेवेति । तन्न । आचारतो वेदानुमाने मङ्गलमाचरेदित्याद्यन्यतरोपस्थितौ नियमाभावात् । अनेकवेदकल्पने च स्वानुभवविरोधः । मनुस्मृतिमूलं चानेकं वाक्यं नावश्यकमिति कथमाधुनिको ऽनेकमनुमिनुयात् । न च स्मृत्यर्थबोधको वेदः स्मृतिसदृश एवानुमेयः, नियमतः स्मृतेरुपस्थितत्वादिति वाच्यम् । तदर्थस्मृतेरपि नानाप्रकारकत्वात् । तस्य च प्रदोषादावनुच्चरितवेदस्येव वेदत्वं, (२८) श्रोत्रग्रहणार्हतया च शब्दत्वं (२९) वाक्यत्व,मर्थबोधकत्वादित्येतदेव युक्तं, (३०) स्मृत्याचारेणानुमितो वेदोर्थं बोधयतीति पूर्वपूर्वेणानुमितवेदाद् उत्तरोत्तरस्मृत्याचाराविति नान्धपरंपरा । शब्दार्थशक्तिग्रहवत्स्वतन्त्रप्रमाणमूलकत्वात् । तस्मान्नित्यानुमेयत्वं वेदस्य न तूच्छेद इति ॥

अत्रोच्यते ॥ (३१) उच्छिन्नवेदादर्थं प्रतीत्य स्मृत्याचारयोरुपपत्तेर्न सामग्र्यन्तरकल्पनम् । (३२) अत एव नाश्रयासिद्धिः, बाधो वा, स्मृत्याचारानुमितस्य वेदस्यास्माभिरभ्युपगमात् । (३३) इदानीं च स्मृतेरर्थं प्रतीत्याचाराच्च कर्तव्यतामनुमाय प्रवृत्तिः । न चैवं किं वेदेनेति वाच्यम् । तुल्यत्वादविनाभावाच्च तत्कल्पनं तुल्यं, तथा च स्मृत्याचारयोर्वेदजन्यानुभवमूलकत्वानुमानादेव पक्षधर्मताबलात् प्रत्यक्षवेदमूलकत्वसिद्धिः, अन्यथा तस्यानुभावकत्वाभावेन मूलत्वानुपपत्तेः । तस्मात्स्मृत्याचारानुमितो वेदः प्रत्यक्षो ऽध्ययनविषयश्च, वेदत्वात्, मतवत् । अन्यथा सामग्र्यन्तरकल्पने गौरवप्रसङ्गः । (३४) ननु स्तुतिनिन्दार्थवादेन कल्पिताद्विधिनिषेधकवाक्यात् कथमर्थमवगम्य प्रवृत्तिनिवृत्ती । नहि तत्र वर्णपदविभक्तिविधिप्रत्ययक्रमविशेषाणामनुमानं संभवति, व्यभिचारादिति चेत्, न । स्तुतिनिन्दावाक्याभ्यां हि प्रवृत्तिनिवृत्तिपराभ्यां प्रवृत्तिनिवृत्तिहेतु(३५)रर्थ एव कल्प्यते, लाघवात् । न तु विधायकनिषेधकवाक्यं, (३६) गौरवाद् (३७) उक्तदोषाच्च । यथार्थवादादेव (३८) तदर्थावगमः, तरति मृत्युमित्यादौ तत्र न तत्कल्पनापि । अथ तस्याध्ययनविषयत्वे शाखान्तरवद् बहुभिर्मेधाविभिराध्यात्मिकशक्तिसंपन्नैर्ध्रियमाणशाखाया उच्छेदासंभव इति चेत्, न । एकस्य न सकलशाखाध्ययने शक्तिरित्येके-

---

दकत्वमिति चिन्त्यम् । (२७) यस्त्विति । तथा च विभक्त्यादिसमभिव्याहारवत एवानुमानान्न सामग्र्यन्तरकल्पनमिति भावः । यद्यपि तादृशवेदेन समं न व्याप्तिस्तथाप्युपनीतभानमतेनेदं बोध्यम् । (२८) श्रोत्रेति । कत्वादेरेव तदवच्छेदकत्वादिति भावः । (२९) वाक्यत्वमिति । आचारमूलाभिप्रायेणेदं, तेन न पौनरुक्त्यमित्याहुः । ननु स्मृत्याचारमूलत्वं स्मृत्याचारयोरेवास्तु किं वेदेनेति शङ्कां निरस्यति । (३०) स्मृतीति । (३१) उच्छिन्नेति । न च तदर्थज्ञापकत्वज्ञानमेव सर्वत्र सामग्र्यस्त्विति वाच्यम् । तदभावेपि श्रूयमाणवाक्याद् योग्यतादिप्रतिसंधाने ऽन्वयबोधदर्शनात् वाक्यार्थस्यापूर्वत्वेन तज्ज्ञापकत्वेन प्रागज्ञानाच्चेति भावः । अन्यथेत्यादिप्रागुक्तमुद्धरति । (३२) अत एवेति । नन्विदानीं विभक्त्यादिविशिष्टस्यानुमातुमशक्यत्वात्तदर्थज्ञापकत्वेनैवानुमितस्योच्छिन्नवेदस्यानुभावकत्वमिति सामग्र्यन्तरकल्पनमावश्यकमित्यत आह । (३३) इदानीं चेति । तथा च प्रत्यक्षतादशायां परं तस्यानुभाकत्वमिति न तत्कल्पनमिति भावः । (३४) नन्विति । प्रामाणिकं गौरवमिति भावः । (३५) अर्थ एवेति । इष्टसाधनत्वादिकमनिष्टसाधनत्वं चेत्यर्थः । (३६) गौरवादिति । आवश्यकार्थकल्पनेनैवोपपत्तेरिति भावः । (३७) उक्तेति । विभक्त्यादिमतो ऽनुमातुमशक्यत्वात्सामग्र्यन्तरकल्पने गौरवादित्यर्थः । (३८) तदिति । अर्थकल्पनापीत्यर्थः । अपिः सामग्र्यन्तरकल्पनं समुच्चिनोति । ननु कृतिसाध्येष्टसाधनत्व तर्हि कस्यार्थ इत्यवश्य तद्बोधार्थं विधिकल्पनम् । किं च तादृशस्य विधेयत्वव्याप्यत्वनियमादवश्य तत्कल्पनमिति । न च लडर्थ इष्टसाधनत्वं यौक्तिकं च कृतिसाध्यत्वमिति वाच्यम् । तत्र लटो ऽनभिमतत्वादिति चेत् । अत्र के चित् । सिद्धसाध्यसमभिव्याहारेण सिद्ध साध्यायोपयुज्यते इति व्युत्पत्तिबलात्तथा प्रतीतिरित्याहुः । तच्चिन्त्यम् । तादृशव्युत्पत्तौ मानाभावात् । भावे वा कथं चित्प्रतीतावपि पदानुपस्थितस्याप्रकारत्वेन कृतिसाध्यत्वादिप्रकारकज्ञानाभावे ततोपि प्रवृत्त्यनुपपत्तेः । अन्ये तु व्युत्पत्तिबलादत्र सोर्थो भासते इत्येव पूर्वस्माद्भेदः, प्रवृत्तिस्त्वानुमानिकज्ञानादेव । यद्वा ऽश्वमेधेनेति तृतीयात इष्टसाधनत्वलाभ इति कृत्वा तथोक्तं, कृतिसाध्यत्व त्वानुमानिकमेवेत्याहुः । के चित्तु स्मृत्यनुमित्यादावित्यत्रातद्गुणसंविज्ञानबहुव्रीहिवशादर्थवादा-

नैवापरैरपि तदनध्ययने शाखोच्छेदसम्भवात् । एकानधीताया अपराध्ययनविषयत्वनियमे मानाभावात् । (३८) शाखात्वस्यैव प्रत्यक्षशाखात्वस्याप्यप्रयोजकत्वात् । यद्यपि सहस्रशाखाविदो व्यासादयः सन्त्येव, तथाप्यध्ययनाभाव एव शाखोच्छेदः । ननु शाखोच्छेदे वर्णपदवाक्यहानिशङ्कया प्रत्यक्षवेदादपि वाक्यार्थप्रयोगयोरनिश्चये वैदिकव्यवहारमात्रं लुप्येतेति चेत्, न । श्रूयमाणमात्रस्यैव महाजनपरिगृहीतत्वा,त्तन्मात्रबोधिताङ्गेतिकर्तव्यतयैव शिष्टैरनुष्ठीयमानत्वाच्च तदर्थनिश्चयात् । न चोच्छिन्नशाखाबोधितेतिकर्तव्यताशङ्कयैकस्मिन्नपि कर्मण्यनाश्वासप्रसङ्गः, नानाशाखेतिकर्तव्यतापूरणीयत्वात्तस्येति सांप्रतं, सन्निहिततत्तत्कर्मणि नानाशाखाबोधितसकलेतिकर्तव्यताबोधनायैनमेव कालक्रमभाविनमनाश्वासमाशङ्कमानैर्महर्षिभिः प्रणीता महाजनपरिगृहीताः स्मृतय इति नानाश्वासः । अन्यथैकस्य सकलशाखानवगमाच्छाखान्तरबोधितेतिकर्तव्यतासंशयेनैकशाखातो नार्थनिश्चयः स्यात् ॥ यत्तु विमत्यादिमत्तत्तत्पदानां तत्तत्समुदायानां च प्रत्यक्षत्वं तथ्यपि कश्चिद्भेदः तत्रायं समुदायो वेद इत्यनिश्चय एव नित्यानुमेयार्थः, (४०) वेदत्वं वा तत्रानुमेयमिति । तन्न । प्रत्यक्षवेदातिरिक्तवाक्ये तदभियुक्तानां महाजनानां वेदत्वाभावनिश्चयात् । अत एव वेदत्व तत्र नानुमेयं, (४१) बाधाद् (४२) विशिष्य पक्षाज्ञानाच्च । (४३) धर्मवेदनाजनकत्वं च वेदत्वं नानुमेयं, तज्जनकत्वस्य (४४) प्रत्यक्षत्वात् । (४५) नाध्ययनविषयत्वं, (४६) तदभावात् । न जाति,(४७)रनभ्युपगमादिति ॥

(४८) स्यादेतत् । स्मृत्याचारयोर्वेदमूलत्वे तच्चोच्छेदादिविवादस्तदेव त्वसिद्धम् । तथाहि । वेदसमानार्था महाजनपरिगृहीता च स्मृतिः स्वार्थोपस्थित्यनन्तरं स्मृत्यर्थानुभावकवेदानुमाने लिङ्गं, तथा च प्राथम्यात्साध्यप्रसिद्ध्यर्थमुपजीव्यत्वाच्च स्मृतेरेवापूर्वादिवाक्यार्थज्ञानमस्तु, किं वेदेन, (४९) तदर्थस्य स्मृतित एव सिद्धेः । अपूर्वस्यापि (५०) शब्दैकवेद्यत्वेन स्मृतितो ज्ञातस्य ज्ञापकत्वेनानुवादकतापत्तेश्च । (५१) सा च स्मृत्यन्तरादिन्यनादिरेव स्मृतिधारावश्यकी । अन्यथा मनुस्मृतेः पूर्वं तत्रापि वेदानुमानं न स्यात् । सर्वा च स्मृतिः स्मृतिजन्यवाक्यार्थप्रमाजन्यत्वेन (५२) महाजनपरिगृहीतत्वेन च प्रमाणमिति नान्धपरंपरा, (५३) प्रत्यक्षा च स्मृतिः स्मृतिमूलं, नानुमिता । अनुमितवेदवत्तस्या अननुभावकत्वात् । (५४) वेदार्थस्मृतिताप्रसिद्धिस्तु प्रत्यक्षवेदमूलस्मृति(५५)साहचर्येण (५६) भ्रमा,त्प्रत्यक्षवेदाबोधितलोभन्यायमूलस्मृताविव तान्त्रिकाणां (५७) लिङ्गाभासजन्यवेदमूलत्वभ्रमाद्वा भवन्ती न (५८) संभवन्मूलान्तराणां वेदमूलत्वं कल्प-

न्तरे यत्र तदवगमस्तत्र न तत्कल्पनमेवेत्याहुः । विधेयत्वव्याप्तिर्यद्यस्ति तदा ऽस्त्वविनाभावात्कल्पनं, प्रवृत्त्यर्थं तु न तथेत्येव ब्रूमः । वस्तुतो ऽप्रयोजकत्वादविनाभावो वेति भावः । (३९) शाखात्वस्येति । त्वन्मतइति शेषः । अनिश्चयो नानुमेयपदार्थ इत्यत आह । (४०) वेदत्वं वेति । अत एवेत्यस्य विवरणं (४१) बाधादिति । (४२) विशिष्येति । यदि च सामान्यतो ऽन्यतमत्वादिना पक्षत्वं, यदि वा तावदन्यतमत्वं वेदत्वसमानाधिकरणमिति साध्यं तदा बाध एव मूलम् । यद्वा एतदस्वरसादाह । (४३) धर्मेति । (४४) प्रत्यक्षत्वादिति । उपनयमर्यादयेदं बोध्यम् । तथा च सिद्धसाधनान्नानुमानमिति भावः । न च स्मृतावतिप्रसङ्गः, अनपेक्षेति विशेषणादित्याहुः । (४५) नाध्ययनेति । अदृष्टहेत्वध्ययनविषयत्वमित्यर्थः । (४६) तदभावादिति । नहि तादृशानुपूर्वीविशिष्टः क्व चित्तया पठ्यतइति भावः । (४७) अनभ्युपगमादिति । देवदत्तप्रभवत्वाद्यनुमापकजातिभिः सङ्करप्रसङ्गादिति भावः । ननु यद्यपि शब्दतदुपजीवीत्यादिरूपवेदत्वानुमाने नोक्तदोषस्तथापि वेदस्य नित्यानुमेयत्वविवादे वेदत्वस्य तथात्वसाधने ऽर्थान्तरमिति तात्पर्यम् । तटस्थः प्रत्यवतिष्ठते । (४८) स्यादेतदिति । (४९) तदर्थस्येति । वेदप्रयोजनस्य प्रवृत्त्यादेरित्यर्थः । वेदं विनाप्यपूर्वोपस्थितावपूर्वत्वव्याघात इत्यत आह । (५०) शब्दैकेति । न तु शब्दविशेषवेदैकवेद्यत्वं, गौरवादिति भावः । ननु वेदं विना मूलाभावे स्मृतिरेव न स्यादित्यत आह । (५१) सा चेति । प्रलयादिकं नास्तीत्यभिमानः । उत्पादकमुक्त्वा प्रामाण्यज्ञापकमाह । (५२) महाजनेति । पूर्वस्मृतिरतीन्द्रिया चेत्तदा किमपराद्धं नित्यानुमेयवेदेनेत्यत आह । (५३) प्रत्यक्षा चेति । तर्हि वेदमूलत्वेन महाजनानां कथं तत्प्रसिद्धिरित्यत आह । (५४) वेदार्थेति । (५५) साहचर्येणेति । प्रत्यक्षभ्रमाभिप्रायम् । (५६) भ्रमा,द्वेदमूलकत्वभ्रमादित्यर्थः । वेदाबोधितत्वं, वेदाबोधितार्थकत्वम् । (५७) लिङ्गेति । विवादपदं स्मृतिः वेदमूला, स्मृतित्वात् । संमतवदिति भ्रमादित्यर्थः । ननु सल्लिङ्गमेव तत्र कुत इत्यत आह । (५८) संभ-

यति । अथ स्मृतिरिव तद्वेदमूलकत्वप्रसिद्धिरपि महाजनपरिगृहीता, एवं च सा वेदमूलत्वनिबन्धना, अविगीतमहाजनपरिगृहीतवेदमूलत्वप्रसिद्धित्वात्, प्रत्यक्षवेदमूलस्मृतौ तत्प्रसिद्धिवत् । (५९) एवं वेदार्थस्मृतिताप्रसिद्धिरपि । अन्यथा (६०) महाजनपरिग्रहानादरे वेदस्मृत्योरपि प्रामाण्यं न स्यादिति चेत्, न । (६१) यूपहस्त्यादिस्मृतेस्तत्प्रसिद्धौ व्यभिचारात् । (६२) क्रूप्तलोभादित एव तत्संभवाद्, विचारकाणां विप्रतिपत्तेश्च तत्र तत्प्रसिद्धौ विगानं महाजनानामिति चेत्, न । (६३) अत्रापि मूलान्तरसंभवाद् विप्रतिपत्तेश्च विगानमेव तेषाम् । अत एव स्मृतीनां न्यायमूलत्वे संभवति वेदमूलत्वप्रसिद्धावपि न वेदमूलत्वम् । (६४) न च वेदमूलेयमिति कृत्वा स्मृतेर्महाजनपरिग्रहात्तन्मूलत्वम् । वेदमूलेयमिति प्रथमं ज्ञातुमशक्यत्वात् । शक्यत्वे वा किमनुमानेन । न च वेदमूलत्वेन प्रकारेण महाजनपरिग्रहः । असिद्धेः । मन्वादिस्मृतित्वेन पूर्वं महाजनपरिग्रहेणोत्तरेषां परिग्रहादनुष्ठानाद्युपपत्तेः । (६५) एवं होलाकाद्याचारेऽपि वेदलिङ्गेनैव कर्तव्यताज्ञानोपपत्तेः किं वेदेन । तदर्थस्य लिङ्गादेवोपपत्तेः । अविगीतालौकिकविषयशिष्टाचारस्य वेदमूलत्वदर्शनाद्वेदानुमाने चाविगीतशिष्टाचारत्वेन भोजनाद्याचारोऽपि वेदमूलः स्यात् । वेदं विनापि तत्कर्तव्यताधीसंभवाद्य तदर्थं वेद इति, इहापि (६६) तुल्यम् । आचारकर्तव्यतानुमानयोरनादित्वेनाचाराणां कर्तव्यतानुमानमूलकत्वान्नान्धपरंपरा । न च पूर्वानुमानसापेक्षमुत्तरानुमानमिति स्वतन्त्रप्रमाणमूलकत्वाभावात्सा । व्याप्तिपक्षधर्मतासत्त्वेन तेषां स्वतन्त्रप्रमाणत्वात् । नापीतरप्रामाण्याधीनं सर्वस्य प्रामाण्यमिति न निरपेक्षत्वम् । प्रत्यक्षादेरपि तथात्वापत्तेः । एतेन विवादपदमाचारो निरपेक्षप्रमाणमूलकः, अविगीतमहाजनाचारत्वात् । प्रत्यक्षवेदमूलाचारवदि,ति निरस्तम् । (६७) अनुमानस्य निरपेक्षप्रमाणत्वात् प्रमाणमूलत्वेनैव हेतोरुपपत्तेः, निरपेक्षत्वस्य गौरवेणाप्रयोजकत्वाच्च । न च सापेक्षत्वेन न प्रमाणता । व्याप्त्यादिसत्त्वात् । (६८) अन्यथा प्रमाणनैरपेक्ष्यस्य वैयर्थ्यात् । (६९) न चाचारे वेदमूलत्वप्रसिद्धेस्तदनुमानम् । (७०) असिद्ध(७१)व्यभिचारा(७२)दन्यथोपपत्तेश्च । न च वेदमूलत्वेनैव महाजनपरिग्रहात्तथा । (७३) नहि वेदमूलोयमिति कृत्वा महाजनानां तत्परिग्रहः, वेदमूलत्वस्य प्रथमं ज्ञातुमशक्यत्वात् । शक्यत्वे वा किमनुमानेन । (७४) न च वेदमूलत्वेनैव महाजनपरिगृहीतोयमाचार इति ज्ञात्वा तत्र महाजनपरिग्रहो (७५) गौरवा(७६)दसिद्धेश्च । (७७) पूर्वमहाजनपरिग्रहादेवोत्तरेषां परिग्रहानुष्ठानोपपत्तेः । (७८) तादृशस्मृत्याचारयोर्वेदमूलत्वेन व्याप्तेर्वेदसिद्धिरिति चेत्, न । असंभवन्मूलान्तरत्व-

---

वन्मूलेति । तथा चासंभवन्मूलान्तरत्वमेव तत्रोपाधिरित्याभासत्वमेवेति भावः । (५९) एव मिति । वेदार्थताप्रसिद्धिः वेदार्थत्वनिबन्धना, तादृशवेदार्थताप्रसिद्धित्वादित्यर्थः । अन्यथेत्यस्य विवरणं (६०) महाजनपरिग्रहानादरइति । गूढाभिसंधिराह । (६१) यूपेति । असंभवन्मूलान्तरत्वमविगीतत्व विचारकाणां विप्रतिपत्त्यविषयत्वं वा लिङ्गविशेषणमिति नोक्तव्यभिचार इति शङ्कते । (६२) क्रूप्तेति । अभिसधिमुद्घाटयति । (६३) अत्रापीति । तथा च स्वरूपासिद्धिरिति भावः । न चाविगीतत्वं वेदानिषिद्धत्वमिति नासिद्धिरिति वाच्यम् । तथा सति न्यायादिमूलकस्मृतेस्तत्प्रसिद्धौ व्यभिचारापत्तेः । वस्तुतो ऽप्रयोजकत्वं बोध्यम् । अज्ञानरूपासिद्धिमुद्भाव्य स्वरूपासिद्धिमाह । (६४) न चेति । आचारेऽपि वेदमूलत्वं निरस्यति । (६५) एवमिति । (६६) तुल्यमिति । तथा चाप्रयोजकत्वमुभयत्रेति भावः । सिद्धसाधनमाह । (६७) अनुमानस्येति । (६८) अन्यथा, सापेक्षस्याप्रमाणत्वे । (६९) न चेति । आचारो वेदमूलकः, वेदमूलकत्वेन प्रसिद्धेरित्यर्थः । अत्र प्रामाणिकप्रसिद्धिर्विवक्षिता, प्रसिद्धिमात्रं वा, आद्ये दोषमाह । (७०) असिद्धेरिति । अन्यतरासिद्धेरित्यर्थः । अन्त्ये त्वाह । (७१) व्यभिचारादिति । न्यायादिमूलकाचारइति शेषः । (७२) अन्यथेति । न्यायादिमूलकाचारवन्मूलान्तरसंभवात् तथा चाप्रयोजकत्वमिति भावः । पूर्वपक्षप्रसिद्धिमाह । (७३) नहीति । ननु वेदमूलत्वेन महाजनपरिगृहीतोयमिति कृत्वा यो महाजनपरिग्रहः स हेतुरस्त्वित्यत आह । (७४) न चेति । (७५) गौरवादिति । वेदमूलकत्वेन महाजनपरिग्रहमात्रस्यैव हेतुत्वे ऽधिकस्य व्यर्थत्वादिति भावः । वेदमूलत्वकल्पने गौरवम् । तथा चाप्रयोजकत्वमित्यन्ये । (७६) असिद्धेरिति । वेदमूलकत्वज्ञानं विना परिग्रहोपपत्तेस्तद्घटितहेतोरसिद्धिरित्यर्थः । तदेव स्पष्टयति । (७७) पूर्वेति । पूर्वशङ्कितमप्युपाधिदानाय शङ्कते । (७८) तादृशेति । पूर्वं पूर्वपूर्वस्मृतेरुत्तरोत्तरस्मृतिरित्यादिक्रम उक्तः, इदानीमाचारात् स्मृतिः स्मृतेराचार इत्या

स्योपाधित्वात् । अन्यथा लोभन्यायमूलस्मृतेरपि वेदमूलत्वप्रसङ्गः । (७९) अस्तु वा स्मृत्याचारयोरनादित्वम् । न चाचारात्स्मृतिः स्मृतेराचार इत्यन्धपरंपरा, मूलभूतप्रमाणाभावादिति वाच्यम् । स्मृत्याचारयोरुभयोरपि प्रमाणत्वात् । अन्यथा न ततो वेदानुमानमपीति ॥ उच्यते । प्रलये पूर्वस्मृत्याचारयो(८०)रुच्छेदात् । सर्गादौ नित्यसर्वज्ञेश्वरप्रणीतवेदमूलत्वं स्मृत्याचारयोः । अन्यथा मूलाभावेनान्धपरंपराप्रसङ्गः । न च (८१) मन्वादीनामतीन्द्रियार्थदर्शित्वम् । तदुपायश्रवणादेस्तदानीमभावात् । पूर्वसर्गसिद्धसर्वज्ञमन्वादय एव तइति चेत्, न । प्रमाणाभावात् । स्मृत्याचारयोः प्रमाणत्वमेव तत्कल्पकमिति चेत्, न । प्रतिसर्गं तेषामन्यान्यत्वकल्पने गौरवमित्ये-(८२)कस्यैव नित्यसर्वज्ञस्य कल्पनात् । न च स्मृतय एव तत्प्रणीताः । (८३) तासां मन्वादिकर्तृकत्वेन स्मृतौ बोधात् । (८४) स्मृतावेव स्मृतीनां वेदमूलत्वस्मरणाच्च । एवं च स्मृत्याचारयोर्महाजनपरिग्रहाद्वेदमूलत्वसाधकान्यपि भगवति प्रमाणम् । (८५) अत एव "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत" इत्यागमोऽपि । (८६) एवं च पूर्वं प्रत्यक्षवेदमूलावेव स्मृत्याचारा,वग्रे च कालक्रमेणायुरारोग्यबलश्रद्धाग्रहणधारणादिशक्तेरहरहरपचीयमानत्वात् तदध्ययनविच्छेदेन शाखोच्छेदात् । स्मृत्याचाराभ्यामेव कर्तव्यतामधिगम्य (८७) प्रवृत्तिः । नन्वेवं स्मृतिरस्तु वेदमूला, मङ्गलाद्याचारस्तु ईश्वराचारादेव भविष्यति, घटलिप्यादिसंप्रदायव,दिति चेत्, न । (८८) बहुव्यापारघटितस्य तत्तदाचारस्य गुरुत्वेन (८९) मङ्गलमाचरेदित्यादिवाक्यस्यैव लाघवेन कल्पनात् । न च मङ्गलादिपदशक्तिग्रहार्थमाचार आवश्यक इति वाच्यम् । स्वर्गादिपदवद्वाक्यार्थत्वेन तदुपपत्तेः । (९०) अत एव यत्र वचनमात्रात्प्रतिपत्तिस्तत्र नाचारः परीक्षकाणां, (९१) तस्य च वेदत्वं नेश्वरप्रणीतत्वेन शक्तिग्रहणार्थं, (९२) तद्वचने व्यभिचारात्, (९३) किं तु तादृशाचारस्य वेदमूलत्वनियमादिति ।

(९४) स्यादेतत् । प्रलये सत्येवमेतत्, स एव तु नास्ति, प्रमाणाभावादिति चेत्, न । कालकपालान्यावृत्ति-

---

ह । (७९) अस्तु वेति । (८०) उच्छेदादिति । नित्यानुमेयवेदवादिमतेपीदं दूषणं बोध्यम् । (८१) मन्वादीनामिति । तथा च तत्प्रणीतस्मृतिरेव तन्मूलमस्तु किं वेदेनेत्यर्थः । (८२) एकस्यैवेति । तथा च मन्वादीनां सर्वज्ञत्वस्मृतिः शाब्दसर्वविषयकज्ञानवत्त्वविषयेति भावः । (८३) तासामिति ।

"वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः"

इत्यादिस्मृतावित्यर्थः । (८४) स्मृतावेवेति ।

"यः कश्चित्कस्य चिद्धर्मो मनुना परिकीर्त्तितः ।
स सर्वोऽभिहितो वेदे"

इत्यादावित्यर्थः । (८५) अत एवेति । यतः स्मृत्याचारयोरीश्वरप्रणीतोच्छिन्नवेदमूलत्वमित्यर्थः । उपसंहरति । (८६) एवं चेति । (८७) प्रवृत्तिरिति । आनुपूर्व्यादिविशिष्टस्य वेदस्यानुमातुमशक्यत्वे तस्याननुभावकत्वादिति भावः । (८८) बहुव्यापारेति । एतच्चोपलक्षणम् । वस्तुत ईश्वराचारसंभवेपि तत्र स्वेष्टसाधनतारूपसाध्यप्रसिद्ध्यभावेन दृष्टान्तमूलव्याप्त्या नाचारान्तरसंभव इत्याहुः । (८९) मङ्गलमाचरेदिति । देवतास्तुत्यादिकमाचरेदित्यर्थः । तदपि वास्तवाभिप्रायम् । वस्तुत आनुपूर्व्यनिश्चयात्र वेदत्वेनैव तदनुमानमिति । (९०) अत एवेति । वाक्यापेक्षया आचारस्य गुरुत्वादेवेत्यर्थः । नन्वस्तु वाक्यस्य कल्पनं तथापि तस्य वेदत्वं कुत इत्यत आह । (९१) तस्य चेति । (९२) तद्वचने, घटमानयेत्यादौ (९३) किं त्विति । न चाप्रयोजकत्वं, तथा च शक्तिग्राहकतद्वचनवत्तन्मूलतद्वाक्यस्यापि वेदत्वं मास्त्विति वाच्यम् । शब्दतदुपजीव्यत्यादिप्रागुक्तलक्षणाक्रान्तत्वेन तस्य वेदत्वात्, अन्यथा ऽश्वमेधेन यजेतेत्यादेरप्यवेदत्वशङ्का स्यादिति भावः । उपोद्घातसंगतिमाह । (९४) स्यादेतदिति । कालेत्युपलक्षणं, कालोपाधिदिक्तदुपाध्यादिकमपि बोध्यम् । एतच्च घटप्रागभावस्याकाशवृत्तितयाऽर्थान्तरं मा भूदिति बाधस्फोरणाय, तेन कार्यद्रव्यानधिकरणत्वेन कार्यद्रव्याधिकरणभिन्नत्वस्य विवक्षितत्वात्कपालस्य चातथात्वात् पक्षधर्मताबलेन तादृशकालसिद्धिरिति । न च दिशा ऽर्थान्तरम् । तादृशकालासिद्धौ दिशोपि तादृप्यासिद्धेः । नहीदानीं कापि दिक् सकलकार्यद्रव्यशून्या । तथा च तादृशकालावच्छेदेनैव दिशोपि तादृप्यसिद्धेरिति तत्सिद्धिरप्रत्यूहैव । न च भूतलादिवृत्तित्वेनार्थान्तरं, घटप्रागभावाधिकरणीभूतभूतलादेः कार्यद्रव्याधिकरणत्वनियमात् । प्रागभावस्य प्रतियोगिसमानदेशत्वात् । न च कालस्यापि कार्यद्रव्याधिकरणत्वेन तद्भिन्नत्वाभावाद्बाध इति वाच्यम् । अखण्डस्यातथात्वेप्येककालोपाधेस्तथात्वेन बाधा

(९५) घटप्रागभावः कार्यद्रव्यानाधाराधारः। कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिर्वा, (९६) अभावत्वाद्, आकाशवृत्त्यन्योन्याभाववदिति वृत्तप्रलयसाधनात्, एवमेव (९७) घटध्वंसं पक्षीकृत्यागामिप्रलयसाधनम्। यद्वा घटः, (९८) कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिध्वंसप्रतियोगी, (९९) कार्यत्वात्, (१००) शब्दवत्। यद्वा (१०१) कार्यद्रव्यत्वं, कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति, (१०२) कार्यमात्रवृत्तित्वात्, शब्दत्ववत्। यद्वा (१०३) एककालीनाः सर्वे परमाणवः, समग्रोपादेयप्रबन्धशून्याः, (१०४) आरम्भकत्वात्,नष्ट-

---

भावात्। (९५) घटप्रागभावः। एतत्कालीनघटप्रागभावः, तेन वृत्तप्रलयसिद्धिः। अत एव प्रागित्यपि। एकदैव सर्वब्रह्माण्डनाश इति मतेनेदम्। के चित्तु एतद्ब्रह्माण्डवृत्तित्वं कार्यद्रव्ये विशेषणमित्याहुः। अत एव खण्डप्रलयसिद्ध्यै द्वितीयसाध्ये कार्याधिकरणपदं, तस्यैव खण्डप्रलयपदार्थत्वात्। यत्तु महाप्रलयेनार्थान्तरवारणाय तदिति। तन्न। प्रागभावस्य महाप्रलयवृत्तित्वाभावादेव तदसंभवात्। कार्याधिकरणत्वं च भावकार्याधिकरणत्वम्। (९६) अभावत्वादिति। नन्विदं कार्यद्रव्यानधिकरणान्योन्याभावे व्यभिचारि। अन्योन्याभावस्य प्रतियोगितावच्छेदकासमानाधिकरणत्वेन तत्र साध्यासत्त्वादिति चे,न्न। तस्यापि कार्यद्रव्यानधिकरणे सिसाधयिषितकाले सत्त्वेन पक्षसमत्वात्। अन्यथा नित्यत्वव्याघातात्। न चैवमन्योन्याभावस्य प्रतियोगितावच्छेदकविरोधित्वनियमभङ्गापत्तिः। स कालविशेषः कार्यद्रव्यानधिकरणभिन्न इति प्रतीत्यभावेन देशतया तस्य तदनधिकरणत्वेपि तदानीं कार्यद्रव्यानधिकरणान्योन्याभाव इति प्रतीत्या कालत्वेन तस्य तदधिकरणत्वाभ्युपगमात्। अत एव कालान्योन्याभावस्य नित्यतया कालवृत्तित्वेपि देशतया कालो नाधिकरणं, कालः कालभिन्न इति प्रतीत्यापत्तेः। नन्वेतदेव कथमिति चेत्, न। अनन्यगत्या वृत्तिभेदेन तथा ऽभ्युपगमादित्याहुः। द्वितीयसाध्ये चाभावत्वमनाद्यभावत्व, मत एवान्योन्याभावपर्यन्तमुक्तं दृष्टान्ते, तेन महाप्रलयाव्यवहितपदार्थध्वंसे न व्यभिचारः। के चित्तु एतत्कालीनाभावत्वादित्यत्र तात्पर्यमित्याहुः। न चाकाशस्य सैरालोकादिकार्यद्रव्याधारतया दृष्टान्तासिद्धिरिति वाच्यम्। तथा प्रतीत्यभावेन तस्य तदाधारत्वानुपपत्तेः। संयोगितामात्रेण तथात्वे वैपरीत्यापत्तेरिति भावः। प्रसङ्गादाह। (९७) घटध्वंसमिति। एतत्कालीनघटध्वंसमित्यर्थः। एतच्च द्वितीयसाध्ये बोध्यं, तेन न महाप्रलयेनार्थान्तरम्। न चैवमपि महाप्रलयपूर्वकालीनद्रव्यनाशकालेनार्थान्तरं द्रव्यगुणादीनां क्रमेण नाशादिति वाच्यम्। सूक्ष्मकालोपाधिभिन्नत्वेन कार्याधिकरणत्वस्य विशेषणाद्युगपदेव सर्वनाश इत्यन्ये। न च महाप्रलयाव्यवहितसृष्टिकार्यध्वंसे व्यभिचारः। एतत्कालीनाभावत्वादित्यत्र तात्पर्यात्। (९८) कार्येति। पूर्ववन्न महाप्रलयपूर्वक्षणेनार्थान्तरम्। (९९) कार्यत्वात्। इदानींतनभावकार्यत्वात्, तेन महाप्रलयाव्यवहितकार्ये ध्वंसे च न व्यभिचारः। (१००) शब्दवदिति। इदानींतनशब्दवदित्यर्थः। (१०१) कार्यद्रव्यत्वमिति। अत्रापि पूर्ववन्नार्थान्तरं, तादृशसुखादिवृत्तित्वेनार्थान्तरवारणाय पक्षे द्रव्यपदम्। (१०२) कार्यमात्रेति। ननु ध्वंसत्वे व्यभिचारः। न च कार्यपदं भावकार्यपरम्। मात्रपदवैयर्थ्यापत्तेः। न च भाववृत्तित्वे सति कार्यमात्रवृत्तित्वमित्यर्थः, तथा चानन्तत्वे व्यभिचारवारणाय मात्रपदमिति वाच्यम्। तथा सति चरमक्रियात्वादौ व्यभिचारापत्तेरिति चेत्। अत्राहुः। मात्रपदस्य कार्त्स्न्यपरत्वेन कार्यपदस्य भाववृत्तिविभाजकोपाध्यवच्छिन्नपरत्वेन च भाववृत्तिविभाजकोपाध्यवच्छिन्नयावत्कार्यवृत्तित्वादित्यर्थः। तेन नोक्तदोषः। न च व्यर्थविशेषणत्व, विशेष्यमात्रं च स्वतः सिद्धमिति वाच्यम्। विकासकविशेषणे तस्यादोषत्वात्। नीलधूमवत्सकोचकविशेषण एव तथात्वादिति। तच्चिन्त्यम्। व्याप्याश्रयस्यैवं विकासेपि व्याप्याश्रयस्याविकासात्। तद्घटितोपाधेरेकत्वात्। न च व्याप्याश्रयविकासकस्यापि न व्यर्थत्वं तत्र यन्निष्ठेत्यादिन्यायस्यासंभवेन मानाभावात्। अन्यथा धूमालोकान्यतरत्वादावपि व्यर्थत्वं न स्यात्। आलोकादिपदस्यायोगोलकादिव्याप्याश्रयविकासकत्वात्। यत्तु कार्यतावच्छेदकधर्मत्वादित्यर्थ इति, तन्न। महाप्रलयाव्यवहितसृष्टिसबन्धिचैत्रप्रभवत्वाद्यनुमापकशब्दवृत्तिजातौ व्यभिचारापत्तेः। न च व्योमैव कार्यद्रव्यानधिकरणमादाय तत्र साध्यस्य सत्त्वमिति वाच्यम्। शब्दवद् घटपटादावपि कुम्भकारादिविशेषप्रयोज्यजातिसंभवेन तत्र तथापि व्यभिचारात्। के चित्तु अनादितावच्छेदकधर्मत्वादित्यर्थ इति, अनादित्वं च सजातीयध्वसव्याप्यप्रागभावप्रतियोगित्वमित्याहुः। (५०३) एककालीना इति। स्पर्शवन्त इत्यपि पूरणीयम्। अन्यथा मनस्यंशतो बाधापत्तेः। उपादेयपदस्य स्वोपादेयद्रव्यपरत्वात्। अन्यथा बाधापत्तेः। गुणादिसत्त्वात्। अन्योपादेयशून्यत्त्वाभावाच्च शून्यपदस्य कादाचित्काभावपरत्वात्। अत एवारम्भकत्वादिति हेतुरुक्तो ऽन्यथा मेयत्वादित्याद्येव क्रियेतेति भावः। कार्यसमानकालीनतादृशोपादेयप्रबन्धकादाचित्काभाववन्त इति साध्यं, तेन न महाप्रलयेनार्थान्तरम्। (१०४) आरम्भकत्वात्। द्रव्यसमवायिकारणत्वात्

पवनारम्भकपरमाणुवत्। (१०५) सर्वत्र पक्षतावच्छेदकावच्छिन्ने साध्यं प्रतीयतइति एककाले शून्यता लभ्यते। (१०६) न च पवनपरमाणूनामपि पक्षत्वेनांशतः सिद्धसाधनं, (१०७) पक्षधर्मताबललभ्यसाध्याप्रतीतेः। (१०८) अभेदानुमानवच्च पक्षस्य दृष्टान्तत्वाविरोधः। यद्वा (१०९) परमाणवः, कार्यद्रव्यानधिकरणवृत्तिकार्यवन्तः, । (११०) नित्य (१११) द्रव्यत्वाद्, आकाशवत्, (११२) भूगोलक(११३)संतानोऽयं, भूगोलकसंतानानधिकरणवृत्तिध्वंसप्रतियोगी,(११४)कार्यत्वात्, घटवत्, यद्वा (११५) एतत्कर्मातिरिक्तानि कर्माणि, एतत्प्रतिबन्धकप्रतिबध्यानि, कर्मत्वा,देतत्कर्मवत्। न चात्र व्यभिचारशङ्का,सर्वेषामे-(११६)वंरूपत्वात्। अनेवंभावे (११७) स्वभावप्रच्युवात्। (११८) अन्यथा नियमेऽपि नियमान्तरापेक्षायामनवस्थितेः। (११९) आगमोऽप्यमुमर्थं संवदतीति कृतं प्रसक्तानुप्रसक्त्या॥

अन्यथोक्तसाध्याभाववति मनःप्रभृतौ व्यभिचारापत्तेः। (१०५) सर्वत्रेति। यथा चैत,त्तथोक्तमनुमानप्रकाशे। (१०६) न चेति। अपक्षत्वे प्रलयासिद्धिरिति भावः। उद्देश्यप्रतीतेरसिद्धेर्नांशतः सिद्धसाधनमित्याह। (१०७) पक्षेति। (१०८) अभेदेति। निश्चितसाध्यवत्त्वं दृष्टान्तत्वे प्रयोजकं, न तु पक्षान्यत्वमपीति भावः। (१०९) परमाणव इति। अत्रैकपार्थिवपरमाणुपक्षत्वेपीष्टसिद्धिरिति बोध्यम्। अत्र कार्यवन्त इत्यत्र कार्यपदमव्यासज्यवृत्तिभावकार्यपरं, तेन परमाण्वाकाशसंयोगादिना न सिद्धसाधनं, न वा महाप्रलयेनार्थान्तरम्। कपालादौ व्यभिचारादाह। (११०) नित्येति। गोत्वादौ व्यभिचारादाह। (१११) द्रव्येति। न चेश्वरे व्यभिचारः, तदन्यत्वेनापि विशेषणात्। वस्तुतो भावपदं न देयम्। कार्यपदं च जातिमत्परं, तथा च ज्ञानादिकमादायेश्वरेपि साध्यसत्त्वान्न व्यभिचारः। भावकार्याधिकरणत्वमपि कार्यद्रव्यानधिकरणविशेषणमतो न महाप्रलयेनार्थान्तरमिति। (११२) भूगोलकेति। अवयवानामावापोद्वारेण भूगोलकस्याधुना नाशादर्थान्तरमत उक्तं, (११३) सन्तानेति। कार्याधिकरणत्वमपि विशेषणं देयं, तेन न महाप्रलयेनार्थान्तरम्। (११४) कार्यत्वात् भावकार्यत्वात्। (११५) एतत्कर्मेति। अत्र प्रतिबध्यत्व प्रतिबन्धस्वरूपयोग्यत्वं बोध्यं, तेन जनितभोगे नष्टेपि कर्मणि साध्यसत्वान्न बाधो व्यभिचारो वा, तथा च पक्षधर्मताबलेन सकलकर्मप्रतिबन्धकतयैककालः सिध्यतीति भावः। न च कर्मत्वमेव पक्षतावच्छेदकमस्त्विति वाच्यम्। पक्षान्यस्यैव दृष्टान्तत्वमिति मतेनोक्तत्वादित्येके। व्याप्तिग्रहएव साध्यसिद्धिप्रसङ्गाद् इत्यपरे। (११६) एवंरूपत्वादिति। तत्प्रतिबन्धकप्रतिबध्यस्वरूपयोग्यत्वादित्यर्थः। (११७) स्वभावेति। कर्मत्वावच्छेदेनैव तादृशस्वभावनिर्णयादिति भावः। ननु तादृशस्वभावएव किं नियामकमत आह। (११८) अन्यथेति। नियामकान्तराभिधानप्रसङ्गेनैव एकत्रायुपपर्याप्तौ वादान्तरावतारो न स्यादित्यनवस्थार्थः। तदिदमुक्तं, कृतं प्रसक्तानुप्रसक्त्येति। नन्वेतदतिरिक्तानि कार्याणि एतदुत्पादकासाधारणोत्पाद्यानि कार्यत्वादित्याद्यपि स्यादित्यत आह। (११९) आगमोऽपीति। "नाहो न रात्रिर्न नभो न भूमि"रित्यादिरित्यर्थः। अन्यत्र तु न तथागमाद्युपलम्भ इति भावः॥

॥ अथ वेदान्तसूत्रशैवभाष्यप्रथमाध्यायस्य ॥

॥ तृतीयपादारम्भः ॥

इह पादे स्पष्टास्पष्टब्रह्मलिङ्गानां वेदान्तवाक्यानां विचारः प्रसङ्गादधिकारिनिरूपणं च क्रियते॥

॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुरिति"अस्य विषयः श्रूयते मुण्डकोपनिषदि। अत्र श्रुतौ द्युभ्वाद्याधारतया श्रूयमाणः[1] परमेश्वरादन्यो वायुरेव द्युभ्वाद्याधार इति गम्यते, "वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति" इति श्रुतौ तस्य सर्वाधारत्वप्रसिद्धेः, इति प्राप्ते[2] ब्रूमः। परमेश्वर एव द्युभ्वाद्यायतनं[3], "तमेवैकं जानीथ आत्मानमित्यात्मशब्दात्[4]" ॥ १ ॥

सूत्रात्मनो वायोरप्यात्मशब्दवाच्यत्वे को दोष इत्यत आह॥

॥ मुक्तोपसृप्यव्यपदेशात्[5] ॥ २ ॥

"यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति"॥

"यथा नद्यः स्यन्दमानाः समुद्रे
अस्तं गच्छन्* नामरूपे विहाय।

१ श्रूयमाणः परमेश्वरोऽन्यो वेति संशयः। एवं सति इति पा०
२ श्रुतेस्तस्य सर्वाधारत्वसिद्धेरिति प्राप्ते इति पा०।
३—आयतनत्वेन श्रूयते, कुतः इति पा०।
४—शब्दश्रवणात् इति पा०।
५—व्यपदेशाच्चेति पा०।
* अगच्छन् गच्छन्ति वेत्यर्थे गच्छन्निति छान्दसः प्रयोगः।

तथा विद्वान् नामरूपाद्विमुक्तः
परात् परं पुरुषमुपैति दिव्यम्" ॥

इति पुण्यापुण्यप्रवृत्तनामरूपविनिर्मुक्तानां[1] मुक्तानां प्राप्यतया व्यपदेशाच्चायं परमेश्वर एव, कथमेतद्वाय्वोः संभवति, परमेश्वरात्मक एव वायुः सूत्रात्मा, पारमेश्वरीष्वष्टासु मूर्तिष्वेकत्वात्, ततो न वायुरिति निर्णयः ॥ २ ॥

॥ नानुमानमतच्छब्दात् प्राणभृच्च[*] ॥ ३ ॥

अनुमानगम्यं प्रधानमेव द्युभ्वाद्यायतनं, तस्य सर्वोपादानत्वात्, इति न वाच्यम्, अतच्छब्दात्, आत्मशब्दात्; न प्राणभृज्जीवश्च अनुपपत्तेरिति ॥ ३ ॥

॥ भेदव्यपदेशात् ॥ ४ ॥

अत्रेश्वरस्य जीवाद्भेदो व्यपदिश्यते,

"समाने वृक्षे पुरुषो निमग्नो-
ऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशं
तदास्य महिमानमेति वीतशोकः" ॥

इति; अतः स्वतः परमेश्वर एव द्युभ्वाद्याधारः ॥ ४ ॥

॥ प्रकरणात् ॥ ५ ॥

"अथ परा यया तदक्षरमधिगम्यते"इति परस्य खल्विदं प्रकरणम्, अतश्च परमेश्वरः ॥ ५ ॥

॥ स्थित्यदनाभ्यां च ॥ ६ ॥

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" ॥

इति जीवस्य कर्मफलादनमुक्त्वा, अनश्नत एव दीप्यमानस्याभिधानाच्च; तस्मादर्थान्तरभूतः[2] परमेश्वर एव द्युभ्वाद्यायतनमिति निर्णयः ॥ ६ ॥

मुक्तप्राप्यतयेह प्रतिपादितस्य परमेश्वरस्य प्राप्तिप्रयोजनं निरतिशयसुखं दर्शयति ॥

॥ भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः । छान्दोग्ये भूमैव सुखमित्युक्त्वा भूम्नः स्वरूपमाह, "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति, तदत्र संदेहः, भूमशब्दनिर्दिष्टः परमेश्वरस्तदन्यो वेति, परमेश्वरादन्यः प्राण एव भूमा; पूर्वेषु नामादिषु तत्त्वेषु "अस्ति भगवो भूय" इत्यादिनारदप्रश्ने सनत्कुमारो "वाग्वाव नाम्नो भूयसी" इत्यादिना वागादीनि निर्दिश्य[1] प्राणस्योपरि प्रश्नप्रत्युक्तिभ्यां विनैव यतो भूमानमवतारयति; न परमेश्वरस्तत्र प्रसक्तः; अतो भूमा प्राण इति प्राप्ते ब्रूमः । अत्र परमेश्वर एव भूमशब्दनिर्दिष्टः, संप्रसादादध्युपदेशात्, संप्रसादो जीव उच्यते, "अथ य एष संप्रसाद"इति श्रुतेः; स चात्र प्राणशब्देन निर्दिश्यते, तस्मादूर्ध्वमर्थान्तरत्वेन[2] भूमोपदिश्यते, "एष तु वा अतिवदति यः सत्येनातिवदतीति"इत्यादिना, अत्र हि पूर्वं "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् इत्यतिवादिनोऽतिवादित्वमुक्त्वा तदनन्तरम्, "एष तव" इति तुशब्देन पूर्वस्मात् प्राणातिवादिनः सत्यातिवादिन आधिक्यप्रदर्शनात् पूर्वोतिवादनिमित्तात् प्राणादेतदतिवादनिमित्तस्य सत्यशब्दाभिधेयस्याधिक्यमवसीयते; स एवात्र भ्रमगुणविशिष्टः प्रतिपाद्यते; "अथात आत्मादेश"इत्यात्मत्वेनाप्ययं वर्ण्यते, अतः प्राणशब्दनिर्दिष्टाज्जीवादधिक आत्मा भूमा परमेश्वर एव[3] ॥ ७ ॥

॥ धर्मोपपत्तेश्च ॥ ८ ॥

"स भगवः कस्मिन् प्रतिष्ठितः, स्वे महिम्नि" इत्यादिना[4] स्वमहिमप्रतिष्ठितत्वसर्वात्मत्वसर्वकारणत्वादयो धर्मा उपदिश्यन्ते; तेषां परमेश्वर एवोपपत्तिः; न प्राणशब्दे इति[5] जीवे; ततः परमेश्वर एव भूमा नापर इति सिद्धम् ॥

ननु पूर्वत्राधिकरणे "निरञ्जनः परमं साम्यमुपैति" इति मुक्तानां ब्रह्मसादृश्यमभिहितं[6]; ततो ब्रह्मणः सायुज्यमुपगता मुक्तात्मानस्तत्पृथग्भूता वर्तन्त इति; अत्र "नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति भूमशब्दवाच्ये ब्रह्मणि दृष्टे तन्निष्ठभेदप्रपञ्चदर्शनादिनिषेधः क्रियते; कथमिह सागत्यमिति चेत्, न; भूम्नि प्रत्यक्षे "नान्यत् पश्यति" इत्यादेरयमभिप्रायः, निरतिशयसुखस्वभावे यस्मिन् साक्षात्कृते सुखान्तराभिलाषेण रूपादिविषयदर्शनादौ न प्रवर्तते यन्मग्नः पुरुषः स भूमा ब्रह्मेति, ब्रह्मानन्दलवपरमाणवो हि विषयसुखविशेषाः; तथाहि श्रुतिः, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामनुभवन्ति" इति; तस्मादिह ब्रह्मणि न द्वैतनिषेधप्रसक्तिः, प्रपञ्चे सत्ये कथं मुक्तात्मनामपुरुषार्थस्य तस्य दर्शनं परिह्रियत इति न विचार्यं, न हि

१—पुण्यनिर्मुक्तानां इति पा० ।
* शंकरमते प्राणभृच्च इति पृथक् सूत्रम् ।
२ अतः संसारिणोऽर्थान्तरभूतः इति पा० ।

१—त्कुमारोऽस्तीति नामादीनि निर्दिश्य इति पा० ।
२—र्ध्वमात्मान्तरत्वेन इति पा० ।
३ इत्यादिना, ततः प्राणशब्देन निर्दिष्टात् पुरुषादन्यः परमेश्वर एव भूमा इति पा० ।
४—म्नि"इति "आत्मैवेदं सर्वमात्मनः प्राण आत्मन आह"इत्यादिना इति पा० ।
५ प्राणादिके इति पा० ।
६ सादृश्य—इति पा० ।

मुक्तात्मनां प्राकृतप्रपञ्चो दर्शनविषयः, किंतु निरतिशयानन्दस्वरूपं ब्रह्मैव प्रपञ्चाकारेण दर्शनगोचरो भवति, तथाहि श्रुतिः, "एतत् ततो भवति" "आकाशशरीरं ब्रह्म" "सत्यात्मप्राणारामं मन आनन्दम्" इति, तत्र "आप्नोति स्वाराज्यमाप्नोति मनसस्पतिम्" इत्यादिना मुक्तात्मा प्रस्तुतः, "तस्य वाक्पतिः" इत्यादिना स्वाधीनाप्राकृतविशुद्धवागिन्द्रियादिसबन्ध उक्तः, तस्य पुनस्तादृशावस्थाप्राप्त्यनन्तरमेतद् दृश्यमानं प्राकृतप्रपञ्चजालमाकाशशरीरं चिदम्बरप्रकाशशरीरं ब्रह्मैव भवतीति तात्पर्यरहस्यार्थः, ततो मुक्तानां ब्रह्मणा सादृश्यं तत्समरसीभूतप्रपञ्चदर्शित्वमिति सर्वं समीचीनम् ॥ ८ ॥

॥ अक्षरमम्बरान्तधृतेः ॥ ९ ॥

बृहदारण्यके श्रूयतेऽस्य विषयः । "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति, अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" इत्यादि, अत्राक्षरशब्दवाच्यस्त्रेधा संदिह्यते प्रणवो जीवः परमेश्वरो वा इति, प्रणवजीवयोरन्यतर एवाक्षरशब्दवाच्यः; कुतः[1], अक्षरशब्दस्य वर्णपर्यायत्वात् प्रणववाचकत्वमुचितं, "पुरुषोऽक्षरमुच्यते" इति पुरुषस्यापि तदभिधेयत्वमुक्तम्, अतस्तावेवाक्षरशब्दवाच्याविति प्राप्ते ब्रूमः। अत्राक्षरशब्दवाच्यं परं ब्रह्मैव; कुतः; अम्बरान्तधृतेः, "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्याः पदं यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्च" इत्याचक्षते, "आकाश एव तदोतं प्रोतं च" इति सर्वविकाराधारतया निर्दिष्ट आकाशः कस्मिन्नोतश्च प्रोतश्चेति गार्ग्या पृष्टे "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इत्यादिना "एतस्मिन् खल्वक्षरे गार्ग्योतश्च प्रोतश्च" इत्यन्तेन याज्ञवल्क्यवचनेन निर्दिष्टस्याक्षरस्याम्बरान्तप्रपञ्चस्य धृतिरवगम्यते; कथमेतदन्यत्र परमेश्वरात् संभवति; ततः परमेश्वर एवाक्षरपदाभिधेयः ॥ ९ ॥

॥ सा च प्रशासनात् ॥ १० ॥

सा च धृतिरेतस्यैवाक्षरस्य प्रशासने "गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिनात्र प्रकृष्टाज्ञावगम्यते; तज्जगच्छासनं च जीवस्य न संभवति; "एको रुद्रो न द्वितीयाय तस्थुः" इति जगच्छासने परमेश्वरस्य द्वितीयाभावश्रवणात्; अतः परमेश्वर एवाक्षरम्[2] ॥ १० ॥

॥ अन्यभावव्यावृत्तेश्च ॥ ११ ॥

अन्यभावोऽर्थान्तरत्वं "तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ श्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ" इति वाक्यशेषः परमेश्वरादक्षरस्यान्यभावं व्यावर्तयति, प्रणवजीवपक्षयोरदृष्टत्वविशेषितद्रष्टृत्वाद्यसंभवात् अतः परमेश्वर एवाक्षरमिति निर्णयः ॥ ११ ॥

१—वाच्य इति पूर्वपक्षः, कुतः; इति पा० ।

२—क्षरनामधेयः इति पा० ।

प्रत्यक्षादिप्रमाणातीतस्यापि परमेश्वरस्य परमकरुणावशादुपासकप्रत्यक्षत्वमुपपादयितुमेतदधिकरणमारभ्यते ॥

॥ ईक्षतिकर्मव्यपदेशात् सः ॥ १२ ॥

अस्य विषयः प्रश्नोपनिषदि श्रूयते "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते" इति, अत्रेक्षतिकर्मत्वेन श्रूयमाणः परमेश्वरोऽन्यो वेति संशयः । नासौ परमेश्वरो, हिरण्यगर्भ एव, "स सामभिरुन्नीयते ब्रह्मलोकम्" इति तल्लोकप्राप्तिश्रवणात्, परशब्दस्य जीवोत्कृष्टे तस्मिन् संभवाच्च, अथवा नारायणः, तस्य पुरुषशब्दवाच्यत्वात्, जीवाद् घनाद्धिरण्यगर्भात् परत्वोपपत्तेश्च, तस्मिन्नेव प्रणववाच्यत्वप्रसिद्धेश्च; "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति तत्पदस्यैव विद्वदनुभवविषयत्वश्रवणात्, "ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत् तत् कवयो वेदयन्ते" इत्यग्रिमश्लोके तत्प्रत्यभिज्ञानाच्च; इति प्राप्ते ब्रूमः । अत्रेक्षतिविषयः स परमेश्वरः; उत्तरत्र "तमोङ्कारेणायनेनान्वेति विद्वान् यत् तच्छान्तमजरममृतमभयं परं च" इति तदसाधारणशान्तत्वादिधर्मव्यपदेशात्; नहि हिरण्यगर्भे तत् कार्ये शान्तत्वादिकमस्ति[2], "ब्रह्मलोकम्" इति परब्रह्मणः शिवस्य लोकः प्राप्यतयावगम्यते, "जीवघन" इति जीवसमष्टिरूपो यो हिरण्यगर्भस्तस्मात् "परात् परम्" इति परत्वेन ध्येयं हि श्रूयते, ततो हिरण्यगर्भपक्षो न युक्तः, नारायण इति यदुक्तं तद्विचार्यम्; "अमृतमभयं परं च" इति नित्यमुक्तत्वमभयहेतुत्वं विश्वाधिकतया परत्वं च कथमस्मिन्नुपपद्यते, "विश्वरूपो ह्यसौ" कथं चैतदुपपद्यते, यज्जीवघनाद्धिरण्यगर्भादपि परादुत्कृष्टान्नारायणात् परमुत्कृष्टं, पुरि शयानमन्तर्यामितया, अत एव पुरुषं परं ब्रह्म च तदुपासकः साक्षात् पश्यतीति वर्णितम्, "नारायणपरं ब्रह्म"

"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षम्"

इति हि श्रूयते, तस्मात् पुरि दहरपुण्डरीके वर्तमानतया पुरुषशब्दवाच्यं; तस्य प्रकृतिलीनस्य "यः परः स महेश्वरः" इत्यादिश्रुत्या प्रणवाभिधेयं च, "नारायणपरं ब्रह्म" इति श्रुत्या नारायणाद् विश्वरूपादधिकं, वाङ्मनसविपर्यासरहिततया

१—शान्तत्वादि—इति पा० ।

२ ऽनन्तत्वादिकमस्ति इति पा० ।

ऋतं सत्यं, त्रिलोचनतया विरूपाक्षं, परशक्त्या प्रणववर्णव्यत्यासरूपोमाशब्दवाच्यया शबलाकारत्वेन कृष्णपिङ्गलं, परं सर्वातिशायि, ब्रह्म परात् परं, पुरि शयानमिति पुरुषम्, ईक्षत इतीक्षतिकर्मत्वेन व्यपदिश्यत इति युक्तं; यदुक्तं "तद्विष्णोः परमं पदम्" इति; तत्र प्रपञ्चाकारत्वमन्तरेण यन्निरतिशयानन्दस्वभावं विष्णोः परमं पदं रूपं तदेव शिवाभिधं परं ब्रह्मेत्यविरोधः; विष्णुशिवयोरुपादाननिमित्तयोरवस्थाभेदमन्तरेण स्वरूपभेदो नास्तीत्यर्थः ॥ १२ ॥

तदिह हरिविरञ्च्यादिप्रपञ्चोत्तीर्णस्याप्युपासकानुग्रहाय पुरि शयानतया पुरुषस्य परशक्तिरूपोमाशबलितरूपस्य विरूपाक्षस्य परब्रह्मणः साक्षात्कारः सकलसंसारनिवृत्तिपूर्वकं[1] तत्प्राप्तये तदुपासकानां तद्वाचकप्रणवपराणां भवतीति निरूपितं; तस्य पुरि शयनमुपासनं च प्रकटयितुमिदमधिकरणं प्रस्तूयते ॥

॥ दहर उत्तरेभ्यः ॥ १३ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः । "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः, 'तस्मिन् यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यम्"इत्यादि, दहरशब्देनेह भूताकाश उच्यत उत जीवः परमेश्वरो वेति संशयः। आकाशशब्दस्य वियति रूढतया भूताकाशो दहराकाशः, अथवा जीवो दहर इति, अल्पपरिमाणत्वात्, तस्याणुभूतेऽस्मिन् संभवात्, न व्यापी परमेश्वरो दहर इति प्राप्ते ब्रूमः । परमेश्वर एव दहराकाशः, उत्तरेभ्योऽपहतपाप्मत्वादिभ्यो धर्मेभ्यः; "एष आत्मापहतपाप्माजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प" इति श्रुतिवाक्यसिद्धेभ्य इति शेषः, त एते कथं संसारिणि जीवे संभवन्ति; तस्मादीश्वर एव दहराकाशोऽपहतपाप्मत्वादिगुणक इति ॥ १३ ॥

॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १४ ॥

तद्यथा, "हिरण्यनिधिनिहितमयक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढा" इति वाक्यशेषे प्रजानामहरहरस्मिन् दहराकाशे या गतिः श्रूयते, यश्चात्र ब्रह्मलोकशब्दः, ताभ्यामपि दहराकाशः परमेश्वरः; तथाहि, श्रुत्यन्तरे परमेश्वर एव एवंरूपं गमनं दृष्टम्; "एवमेव खलु सौम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्या[2]मह"इति, ब्रह्मलोकशब्दश्च तस्मिन् दृष्टः; "एष ब्रह्मलोकः सम्राडिति होवाच" इति;

किंच माभूद्गतिशब्दयोरन्यत्र दर्शनम्; अस्मिन् प्रकरणे सर्वासां प्रजानामहरहः श्रूयमाणं गमनं ब्रह्मलोकशब्दश्च परमेश्वरस्य दहराकाशत्वे पर्याप्तं गमकम्[1] ॥ १४ ॥

॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय, इति जगद्विधृतिः परमेश्वरस्य महिमास्मिन् दहराकाश उपलभ्यते, धृतिश्च परमेश्वरमहिमा, "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसंभेदाय" इति श्रुतेः; अतोऽपि दहराकाशः परमेश्वरः[2] ॥ १५ ॥

॥ प्रसिद्धेश्च ॥ १६ ॥

दहरं विपाप्म वरवेश्मभूतं यत् पुण्डरीकं पुरमध्यसंस्थं, तत्रापि दहरं गगनं, "विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति महोपनिषदि "हृत्पुण्डरीक विरजम्" इत्यारभ्य

"उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा"

इत्यादि कैवल्योपनिषदि च परमेश्वरस्योमासखस्य दहरपुण्डरीकमध्यवर्तित्वेनोपास्यत्वं प्रसिद्धं[3]; ततोऽपि परमेश्वरो दहराकाशः[4] ।

ननु दहरपुण्डरीकमध्ये दहराकाशान्तर्वर्तित्वेनोपास्यत्वं "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान" इत्याद्युपनिषदन्तरे प्रसिद्धं परमेश्वरस्य[5], इह दहराकाशत्वेनेति विरोध इति चेत्; अत्रापि दहराकाशमध्यवर्ती न परमेश्वर उपास्यः, किंतु दहराकाशे परमेश्वरधर्माणामपहतपाप्मत्वादीनां संबन्धप्रतीते[6]र्दहराकाशत्वमप्यस्य चिदम्बररूपतयेति न विरोधः ॥ १६ ॥

॥ इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १७ ॥

"अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच" इति इतरो जीवः परामृश्यते; अतः प्रकृताकाशः स

१ रभयनिवृत्ति—इति पा० ।
२—द्या—इति पा० ।

१ इति, अत्र दहरवाक्यशेषे "इमाः सर्वाः प्रजा अहरहर्ब्रह्म गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति दहरविषयाभ्यां गतिब्रह्मलोकशब्दाभ्यां दहरो ब्रह्म, नच ब्रह्मणो लोक इति चतुर्मुखलोको वाच्यः, तथाहि, सुप्तस्य दृष्टमहरहर्ब्रह्मगमनं कर्मधारयग्रहणे लिङ्गम्, एवकारार्थश्चकारः; तथाच दहरो ब्रह्म इत्येव पा० ।

२ अतः परमेश्वरमहिमा दहराकाशेऽप्येषसेतुर्विधारण इति श्रूयत इति पा० ।

३—स्यत्वप्रसिद्धिरवगम्यते इति पा० ।

४ दहरशब्दवाच्यः; इति पा० ।

५ ननु पुण्डरीकमध्यदहराकाशान्तर्वर्तित्वेन परमेश्वरस्योपास्यत्वमुपनिषदन्तरे प्रसिद्धम्; इति पा० ।

६—तेस्तच्छब्दवाच्यत्वमस्येति युक्तम् इति पा० ।

एव भवतीति चेन्न, उक्तानामपहतपाप्मत्वादीनां तस्मिन्नसंभवात्, अतः परमेश्वर एव तदाश्रय इति युक्तम् ॥ १७ ॥

॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥

उत्तरत्र प्रजापतिवाक्ये "य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति" इति जीवस्यापहतपाप्मत्वादिकं श्रूयते, जीवत्वलक्षणमवस्थात्रयवर्तित्वं च श्रूयते[1]; "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच, य एष स्वप्ने महीयमानश्चरति एष आत्मेति होवाच,तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच" इति; ततः स एवाय भवितुमर्हतीति चेत्, न सारमेतत्; निजाजादिकलङ्ककर्मसंबन्धघटितकलेवरतिरोहितापहतपाप्मत्वादिको जीवः परं ज्योतिरुपसंपद्य पश्चादाविर्भूतस्वरूप[2] आविर्भूतापहतपाप्मत्वादिकोऽत्र प्रतिपाद्यते, न संसारी, दहराकाशस्तु स्वाभाविकातिरोहितततत्कल्याणगुण इति न बद्धो मुक्तो वात्र दहराकाशः ॥ १८ ॥

॥ अन्यार्थश्च परामर्शः ॥ १९ ॥

"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति जीवस्य दहराकाशशब्दनिर्दिष्टेन परवस्तुना संपद्य स्वरूपाविर्भावोऽभिधीयते[3], तत्र तादृक्तन्माहात्म्यप्रतिपादनार्थो जीवपरामर्शः[4], अतो न विरोधः॥ १९ ॥

॥ अल्पश्रुतेरिति चेत् तदुक्तम् ॥ २० ॥

अल्पस्थानाश्रयत्वादल्पस्वरूपप्रतीतेर्न परोऽयमिति शङ्कायाः पूर्वमुक्तमेवोत्तरं व्योमवच्चेति ॥ २० ॥

॥ अनुकृतेस्तस्य च ॥ २१ ॥

तस्य जीवस्य दहराकाशशब्दनिर्दिष्टपरज्योतिरनुकृतिरवगम्यते, "नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते,अपहतपाप्मा ह्येष ब्रह्मलोकः, तस्माद्वा एतं सेतुं तीर्त्वा अन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवति उपतापी सन्ननुपतापी भवति, तस्माद्वा एतं सेतुं तीर्त्वा अपि न क्तमहेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोक" इति वाक्यशेषः ; अत्र हि दहराकाशप्राप्यापाप्मकार्यतया जरादिवत् पाप्मरूपस्यान्धत्वादेरभावे सततोदितप्रकाशत्वे च प्राप्यस्य दहराकाशस्यापहतपाप्मत्वं सततोदितप्रकाशत्व च हेतुत्वेनोच्यते, तेन दहराकाशं प्राप्तस्योक्तफलावाप्तिस्तत्साम्यापत्तिरूपा तदनुकृतिरिति लभ्यते, सा च ततोऽभेद एवोपपद्यते, अतश्चायं[1] न जीव इति तात्पर्यम् ॥ २१ ॥

१ च इति पा० ।

२—स्वरूपतया इति पा० ।

३—वगम्यते इति पा० ।

४—र्थो हि तत्परामर्शो न तद्भावत्वात् इति पा० ।

पुनरस्मिन् प्रकरणान्तरमाह ॥

॥ अपि च स्मर्यते ॥ २२ ॥

दहरपुण्डरीकान्तर्वर्तित्वमुपास्यत्वं च ब्रह्मणः स्मर्यते,

"अथवा परमात्मानं परमानन्दविग्रहम् ।
गुरूपदेशाद्विज्ञेयं पुरुषं कृष्णपिङ्गलम् ॥
ब्रह्म ब्रह्मपुरे गार्गि दहराब्जमध्यमे ।
अभ्यासात् संप्रपश्यन्ति सन्तस्त्वं च तथा कुरु" ॥

इत्यादि, ततः परं ज्योतिःस्वरूपं मुक्तप्राप्यं, परशक्त्युपासनार्थं परब्रह्म दहरपुण्डरीकाकाशमध्यवर्ति स्वाभाविकापहतपाप्मत्वादिगुणकमुपासनीयमिति सिद्धम् ॥ २२ ॥

अथ परमेश्वरस्योपास्यरूपान्तरमुच्यते ॥

॥ शब्दादेव प्रमितः ॥ २३ ॥

कठवल्यामस्य विषयः श्रूयते ।

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते" ॥

इत्यादि, इहाङ्गुष्ठमात्रतया[2] श्रूयमाणः पुरुषः परमेश्वरो जीवो वेति संदेहः । जीव इति वक्तुं[3] युक्तम् ।

स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा ।
प्राणाधिपः संचरति स्वकर्मभिः ॥
अङ्गुष्ठमात्रो रवितुल्यरूपः ।
संकल्पाहंकारसमन्वितो यः ॥

इति तस्याङ्गुष्ठमात्रत्वसिद्धेः, "मध्य आत्मनि तिष्ठति" इति देहान्तर्वर्तित्वावगमाच्च ; न तु[4] परमेश्वरो व्यापक इति प्राप्ते वदामः ।

परमेश्वर एवाङ्गुष्ठमात्र इति न युक्तम्,

"ईशानो भूतभव्यस्य" इत्यादिपरमेश्वरलिङ्गशब्दात्, "सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च शंभुराकाशमध्यग इति तस्यैव सर्वेश्वरत्वश्रवणात् ॥ २३ ॥

कथं परमेश्वरे परिच्छिन्नत्वमभ्यस्यमानमुपपद्यत इत्यत[5] आह ॥

१—रवगम्यते, अतश्चायं इत्येव पा० ।

२—प्रमाणतया इति पा० ।

३ संदेहे जीव इति विवेक्तुं इति पा० ।

४ युक्तं, "बालाग्रशतभागस्य शतधा कल्पितस्य च" इत्यादिषु स्वल्पाकारत्वावगमात्, तस्य "मध्य आत्मनि तिष्ठति" इति देहान्तर्वर्तितत्वा च न इति पा० ।

५ अतः परमेश्वरे परिच्छन्नत्वमभ्यस्यमानमिह कथं युक्तमित्यत इति पा० ।

॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

अपरिच्छिन्नस्यापि परमेश्वरस्याङ्गुष्ठमात्रत्वमुपासकहृदयापेक्षया, मनुष्याधिकारत्वादुपासनाशास्त्रविधेः; मनुष्याणां हृदयं यावत्प्रमाणं तदवच्छिन्नं रूपं परमेश्वरः परमकारुणिकः परिगृह्णाति तदुपासनासिद्धये; ततः परमेश्वरो ज्योतिर्मयो लिङ्गरूपतयोपासकानां हृदयमध्ये तिष्ठतीति निर्णयः ॥ २४ ॥

"मनुष्याधिकारत्वात्" इत्यस्मिन्नधिकरणे मनुष्याणामेव परमेश्वरोपासनेऽधिकारः सूचितः, कथं देवानामपि परमेश्वरविषयमुपासनं श्रूयतेऽथर्वशिरसि,"ततो देवा रुद्रं नापश्यंस्ते देवा रुद्रं ध्यायन्ति" इत्याशङ्कायां तदुपपादनायाधिकरणमिदमारभ्यते ॥

॥ तदुपर्यपि बादरायणः संभवात् ॥ २५ ॥

अस्याथर्वशिरसि श्रूयते, "ते देवा रुद्रं ध्यायन्ति" इति विषयः । इह परमेश्वरोपासने देवानामधिकारः संभवति न वेति संशयः । न संभवतीति पूर्वः पक्षः[1] । अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तो हि वैदिके कर्मण्यधिकारी[2], नच तेषां सामर्थ्यमस्ति, तेषां विग्रहाभावात्, विग्रहवन्तो हि स्तुतिध्यानादिषु कस्यचित् समर्थाः; "इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादीनां प्रामाण्यात् तेषां विग्रहवत्त्वमिति चेत्, न, विध्येकवाक्यतापन्नानामन्यत्र तात्पर्याभावात्, सद्भावेऽपि तेषामर्थित्वं नास्ति परमेश्वरपदं प्रति, तेषां परमेश्वरस्य च पदस्यैकत्वात्, "देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन्,को भवान्" इति श्रुत्या स्वर्ग एव लोको रुद्रस्य परब्रह्मणः पदमवगम्यते, स एव देवानां, मुक्तस्यापि स्वाराज्यमेव प्राप्यतयावगम्यते, "आप्नोति स्वाराज्यम्" इत्यादिषु तथा वैदुष्यमपि तेषां नास्ति,उपनयनसंस्कारपूर्वकस्य वेदाध्ययनस्याभावेन तेषां वेदान्तविचारासंभवाद्ब्रह्मबोधानुपपत्तेः; अत एव तेषां शास्त्रपर्युदासश्च; तस्माद्देवतानां नास्ति ब्रह्मोपासनेऽधिकार इति । सिद्धान्तस्तु ब्रह्मोपासने देवानामप्यधिकारोऽस्ति; कुतस्तेषामर्थित्वाद्यधिकारः, लक्षणसंभवात्, नच परमेश्वरस्य देवानां च पदं समानं, सामान्येन सुखवाचकोऽपि स्वर्गशब्दः प्रकरणादिना विशेषमभिधत्ते; यथेश्वरशब्दः स्वामिमात्रवाचकः, प्रकरणवशात् ।

"उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये"

इत्यादिषु जनपदाधिपतिमात्रवाची राजविषयः, ब्रह्मणः प्रकरणे पुनरयं निरतिशयैश्वर्यवाची तद्विषयो भवति; तथा सुखमात्रवाचकः स्वर्गशब्दः प्रकरणेन प्रमाणान्तरोपपत्त्या च देवानां पदं क्षयिष्णुत्वसातिशयत्वादिदोषकलुषितं चाल्पसुखमभिधत्ते[1]; परब्रह्मणः शिवस्य पदं तु निरतिशयसुखस्वरूपमनावृत्तिलक्षणमेव ब्रूते; अतः सातिशयत्वादिदुष्टसुखपदवर्तिनां निरतिशयसुखं ब्रह्मपदं प्रत्यर्थित्वं संभवत्येव[2]; तेषामर्थवादप्रामाण्याद्विग्रहवत्त्वेन सामर्थ्यं चास्ति; तथा "आदित्यो यूपः" "अग्निर्हिमस्य भेषजम्" इत्यादिना गुणवादानुवादानां स्वार्थे तात्पर्याभावेऽपि "इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादीनां भूतार्थवादानां प्रामाण्येन स्वार्थे तात्पर्यदर्शनात्; शक्त्यतिशयतः स्वयंभातवेदार्थत्वात्[3] पूर्वाधीतवेदविस्मरणाभावाद्वा तेषां वैदुष्यं च संभवति, शास्त्रस्य साधारण्येनोपासनाविधायकत्वादधिकारस्य दुर्निवारत्वेन दूरतस्तत्पर्युदासः[4]; तस्माद्ब्रह्मविद्यायामधिकारिणो देवाः ॥ २५ ॥

देवानां विग्रहादिमत्त्वे विरोधमाशङ्क्य परिहरति ॥

॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २६ ॥

नानादेशेषु प्रवृत्तेषु यज्ञेषु तत्राहूतानां देवानां विग्रहादिमत्त्वे सर्वत्र युगपत् सांनिध्यं वाच्यं, तच्च युज्यते[5], ततः कर्मणि विरोध इति चेन्न शङ्क्यमेतत्, विग्रहवत्त्वेऽपि सौभरिप्रभृतिषु युगपदनेकदेहप्रतिपत्तिर्दृष्टा हि, ततो न कश्चिद्विरोधः ॥ २६ ॥

मा भूत् कर्मणि विरोधः, वैदिके शब्दे भवतीत्यत आह ॥

॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥

कर्मविरोधाभावेऽपि वैदिके शब्दे विरोधः प्रसज्जते; कथं, देहानां सावयवत्वादनित्यत्वं सहजमेव, तत इन्द्रादिदेहानामप्युत्पत्तिरनिवार्या, तथात्वे तदुत्पत्तेः प्राक् तद्विनाशात्, परतश्च वैदिकेन्द्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यात्; अनित्यत्वे पौरुषेयत्वेन विधिनिषेधवाक्यानामप्रामाण्यम्; अतस्तत्प्रयुक्तकर्मणां चासिद्धिरित्यनेकानर्थापत्तिः; ततो वैदिकशब्दविरोधस्य परिहाराय विग्रहवत्त्वं देवानामनङ्गीकार्यमिति चेत्; न, यतो वैदिकादेवेन्द्रादिशब्दादर्थसृष्टिः; यदीन्द्रादिशब्दा व्यक्तिवाचकाः स्युः, तदा खल्विन्द्रादिशब्दार्थनाशे तेषामर्थशून्यत्वमनित्यत्वं वा स्यात्; गवादिशब्दवदाकृतिवाचकत्वमेवेन्द्रादिशब्दानामुच्यते; तथाच यथा कुलालो घटादिशब्दान्मनसि विपरिवर्तमानं तत्तदाकारं स्मृत्वा घटादिकं सृजति, तथा पूर्वस्मिन्निन्द्रादौ विनष्टे वैदिकादिन्द्रा-

१ पक्षः । कुतः, अर्थित्वादीनां तेष्वसंभवात् इति पा० ।

२—दस्त इत्यधिकारी निरूप्यते इति पा० ।

१ तं स्वल्पसुखरूप—इति पा० ।

२—त्वमस्त्येव इति पा० ।

३ शक्त्यतिशयप्रतिभातवेदार्थतया इति पा० ।

४ शास्त्रस्य विधायकत्वात् तदुपासनाधिकारस्य दूरत—इति पा० ।

५—दिमत्त्वादेकस्यानेकत्र युगपत् सांनिध्यं न युज्यते इति पा० ।

दिशब्दादेव ब्रह्मापूर्वेन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं सृजति; तत इन्द्रादिव्यक्तिविनाशेऽपि तत्तदाकृतेरवशेषेण तच्छब्दानां[1] नित्यत्वादविरोधः। किं प्रमाणमिति चेत्; श्रुतिः स्मृतिश्च; तथाहि, "वेदेन रूपे व्याकरोत् सदसती प्रजापतिः" "स भूरिति व्याहरत्" "स भूमिमसृजत्" इत्यादिश्रुतिः;

"सर्वेषां च स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥

इत्यादिस्मृतिः॥ २७॥

॥ अत एव च नित्यत्वम्॥ २८॥

अत एव "मन्त्रकृतो वृणीते" विश्वामित्रसूक्तं भवतीति विश्वामित्रादीनां मन्त्रकृत्त्वेऽपि विश्वामित्रादिशब्दानामाकृतिनिमित्तत्वेन मन्त्रब्राह्मणमयस्य वेदस्य नित्यत्वमुपपद्यते, यतो ब्रह्मा वैदिकान् शब्दार्थान् स्मृत्वा सृजति, अनधीतमन्त्रादिदर्शनशक्त्यादियुतान्; तथाच पूर्वविश्वामित्रादीनामाकृतिविशेषांस्तत्तद्वैदिकशब्दैः स्मृत्वा[2] तदाकारानेवापरांस्तत्तच्छक्तिविशेषयुक्तान् ब्रह्मा नैमित्तिके प्रलये गते सृजति; ते चानधीत्यैव तान् मन्त्रानखिलान् पठन्ति; अतस्तेषां मन्त्रादिकर्तृत्वं वेदनित्यत्वं च॥ २८॥

भवत्वेवं नैमित्तिकप्रलये, प्राकृतप्रलये तु ब्रह्मादौ वेदाख्ये शब्दे च विनष्टे कथं वेदनित्यत्वमित्यत आह॥

॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च॥ २९॥

सृज्यानां समाननामरूपत्वादेव प्राकृतप्रलयावृत्तावप्यविरोधः, तथाहि, सर्वज्ञः सर्वशक्तिर्विश्वाधिपः परमेश्वर आदिकर्ता पूर्वप्रपञ्चसंस्थानं स्मृत्वा तदाकारमेव पुनः प्रपञ्चं सृजति, वेदानपि पूर्वानुपूर्वीविशिष्टान् संस्मृत्य पुत्रभूताय ब्रह्मणे प्रयच्छति; कथमवगम्यते; श्रुत्या स्मृत्या च; "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चान्तरिक्षमथो स्वः" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा"इत्यादिश्रुतिः; स्मृतिरपि,

"अप एव ससर्जादौ तासु वीर्यमवासृजत्।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्॥
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः।
ब्रह्माणं विदधे पूर्वं वेदानस्मै प्रयच्छति"॥

१—विनाशेऽपि तच्छब्दानां इति पा०।
२—मित्रादीनिन्द्रादिकमपि वैदिकशब्दात् स्मृत्वा इति पा०।

इत्यादि, ततः प्राकृतप्रलयावृत्तावपि वेदानां नित्यत्वमेव॥ २९॥

मतान्तरमाह॥

॥ मध्वादिष्वसंभवादनधिकारं जैमिनिः॥ ३०॥

मधुविद्यादिषु वस्वादिदेवानामेवोपास्यत्वात् प्राप्यत्वाच्च वस्वादीनां कर्तृकर्मभावविरोधेनोपास्यत्वासंभवाद्वस्वादीनां सतां वस्वादित्वं प्राप्तमिति प्राप्यत्वासंभवाच्च तत्र वस्वादीनामनधिकारं जैमिनिर्मन्यते॥ ३०॥

॥ ज्योतिषि भावाच्च॥ ३१॥

"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषि परब्रह्मणि देवानां साधारण्येन प्राप्तत्वेऽप्यधिकारभाववचनादन्यत्र मध्वाद्युपासने[1]ऽनधिकारो न्यायसिद्धो गम्यते॥ ३१॥

स्वमतमाह॥

॥ भावं तु बादरायणोऽस्ति हि॥ ३२॥

मधुविद्यादिष्वपि वस्वादीनामधिकारभावं बादरायणो मन्यते, अस्ति वस्वादीनां सतां वस्वावस्थब्रह्मण उपास्यत्वसंभवः; कल्पान्तरे वसुत्वादेः प्राप्यत्वसंभवश्च; कार्यकारणोभयावस्थं ब्रह्मात्र समुपास्यं, "तत्रासौ वा आदित्यो देवमधु"इत्यारभ्यादित्यवस्वादिनामरूपकृत्ययुक्तकार्यविशेषावस्थं ब्रह्मोपास्यमुपदिश्यते; अथ तत ऊर्ध्वम्, उदेत्यनेनैवोद्यता नामरूपकृत्यरहितसूक्ष्मादित्यान्तरात्मतयावस्थितं कारणावस्थं ब्रह्मोपास्यमुपदिश्यते, तदुभयावस्थब्रह्मोपासनफलं कल्पान्तरे वस्वादित्वमुभयाधिकारावसाने ब्रह्मप्राप्तिश्च; तत्र "स य एतदेवममृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति"इत्यादिना वस्वादित्वरूपं फलमुपदिश्यते, "न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद" इति ब्रह्मप्राप्तिरूपं फलमुपदिश्यते; ततो मध्वादिष्वपि देवानामधिकारोऽस्तीति[2], तस्मात् सर्वथा देवा ब्रह्मविद्याधिकारिण इति॥ ३२॥

अथ मनुष्याधिकारत्वादिति सामान्येन मनुष्याणामधिकारे प्राप्ते विशेषमाह॥

॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि॥ ३३॥

छान्दोग्ये श्रूयतेऽस्य विषयः। "आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा"इति; अत्राचार्यः शिष्यं शूद्रेत्यामन्त्रयते,

१ वस्वाद्युपासनेऽ—इति पा०।
२—स्त्यधिकारसिद्धिः इति पा०।

अतः शूद्राणामपि ब्रह्मविद्यायामधिकारोऽस्ति न वेति संदेहः । तेषामधिकारोऽस्ति,अर्थित्वादिसंभवात्; नच त्रैवर्णिकानामेवेति नियमः; अत्रैवर्णिकानामपि देवानां तद्दर्शनात्, देवानामुपनयनाध्ययनाभावेऽपि स्वयंभातवेदार्थतया युज्यते विद्वत्ता; कथमेषामिति न शङ्क्यम्, एषामपि पुराणश्रवणादिना बोधोपपत्तेः, निषादस्थपतिन्यायेन महावाक्यग्रहणेऽधिकारसंभवाच्च; तस्मादमीषामधिकारो ब्रह्मविद्यायामुचित इति प्राप्ते ब्रूमः। नास्ति शूद्राणां ब्रह्मविद्यायामधिकारः, तेषामध्ययनाभावेन तदुपायभूतोपास्यतद्गुणादिज्ञानासंभवात्; इतिहासपुराणानि वेदोपबृंहणं कुर्वन्त्येवोपायभावमनुभवन्ति न स्वातन्त्र्येण; शूद्राणामितिहासपुराणश्रवणानुज्ञानं तु पापक्षयफलं; विदुरधर्मव्याधादीनां जन्मान्तरसिद्धज्ञानाप्रमोषाद्ब्रह्मनिष्ठता, कथं ब्रह्मविद्योपदेशे शूद्रेत्यामन्त्रणमिति चेत्; नात्र जातियोगेन शूद्रेत्यामन्त्रणं, किंतु ब्रह्मज्ञानाप्राप्त्या शुगस्य संजातेति दर्शनात्; शुगस्य संजातेति च तदनादरश्रवणात्; ब्रह्मविद्यावैकल्येन स्वात्मानं प्रति हंसोक्तानादरवाक्यश्रवणात्; तदेवाचार्ये प्रत्याद्रवणाच्च; "सूच्यते हि" शब्दो हेतौ; यतः शूद्रेत्यामन्त्रणं न जातियोगेन, ततः शूद्रस्य ब्रह्मोपासनं नास्तीति ॥ ३३ ॥

इतश्च शूद्रेत्यामन्त्रणं न जातियोगेनेत्याह ॥

॥ क्षत्रियत्वावगतेश्च ॥ ३४ ॥

शुश्रूषोर्जानश्रुतेः क्षत्रियत्वावगतेश्च न जातियोगेन शूद्रेत्यामन्त्रणम्; उपाख्यानोपक्रमे हि"जानश्रुतिर्हि पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस, स सर्वत आवसथान् मापयांचक्रे, सर्वत एव मेऽत्स्यन्ति" इति जानश्रुतेर्धनिपतित्वं बहुतरपक्वान्नप्रदायित्वं चोक्तं, मध्ये च "स ह संजिहान एव क्षत्तारमुवाच" इति तत्प्रेषणमुक्तम्, अन्ते च "इयं जाया अयं ग्रामो यस्मिन्नास इति ते हैते रैक्क[1] पर्णा नाम महावृषेषु यत्रास्मा उवास"इति बहुग्रामप्रदायित्वमुक्तम्; एतैर्लिङ्गैर्जानश्रुतेः क्षत्रियत्वमवगम्यते ॥ ३४ ॥

॥ उत्तरत्र चैत्ररथेन लिङ्गात्* ॥ ३५ ॥

उपरिष्टाच्चास्यां संवर्गविद्यायां ब्रह्मक्षत्रिययोरेवान्वयो दृश्यते, "अथ शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्यादौ; अत्राभिप्रतारी चैत्ररथः क्षत्रिय इत्यवगम्यते, कापेययोगात्; कापेययाजकयोगो हि चैत्ररथस्य श्रुतः; एतेन चैत्ररथं कापेया अयाजयन्, तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वन्, इति; तेनाभिप्रतारिणः संज्ञाभेदात् चित्ररथत्वसिद्धावपि तद्वंश्यत्वं सिध्यति; समानान्वयानां हि समानान्वयाः प्रायेण याजका भवन्ति; चित्ररथवंश्यत्वे सति क्षत्रियत्वं, "तस्माच्चैत्ररथानामेकः क्षत्रपतिर्जायत" इति तद्वाक्यशेषेण सिध्यति; एवं चोत्तरत्र ब्राह्मणेन कापेयेन युक्तोऽभिप्रतारी क्षत्रिय इति निश्चिते तद्वद् ब्राह्मणेन रैक्केन युक्तो जानश्रुतिरपि क्षत्रिय इति गम्यते; अतः क्षत्रिय एव शूद्रेत्यामन्त्रितः ॥ ३५ ॥

यदुक्तं निषादस्थपतिन्यायेन शूद्रस्य महावाक्यश्रवणमात्रेऽधिकार इति तत्राह ॥

॥ संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥

ब्रह्मविद्योपक्रमे "उप त्वा नेष्ये तं होपनिन्य"इत्यादिप्रदेशेषूपनयनसंस्कारपरामर्शात्, शूद्रस्य च,

न शूद्रे पातकं किंचिन्नच संस्कारमर्हति ।

शूद्रश्चतुर्थो वर्ण एकजातिः,

इत्यादिस्मृतिषु तदभावश्रवणात्[1] तस्य ब्रह्मविद्यायामनधिकारः, "निषादस्थपतिं याजयेत्"इति विधिरस्तीति न विरोधः[2]; उपनयनाभावेऽपि शूद्रस्य महावाक्यश्रवणे कुत्रापि न विधिः ॥ ३६ ॥

॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

नैतदब्राह्मणो वक्तुमर्हति, "समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा" इति सत्यवचनेन जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव तदुपनयनानुशासनविद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥ ३७ ॥

ननूपनयनाभावे ब्रह्मोच्चारणनिषेधः क्वाचित्कः सार्वत्रिको वा[3], न सार्वत्रिकः[4]; शिशोरुपनयनाभावेऽपि "न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्"इति स्वधानिनयने ब्रह्मोच्चारणविधानात्; तेन क्वाचित्क[5] इति युज्यते; अतः शूद्रस्यानुपनीतस्य पाकयज्ञादिषु ब्रह्मोच्चारणनिषेधो न ब्रह्मविद्यायामित्याशङ्कायामाह ॥

॥ श्रवणाध्ययनार्थप्रतिषेधात् * ॥ ३८ ॥

शूद्रस्य वेदवाक्यश्रवणादि निषिध्यते, तस्माच्छूद्रसमीपे नाध्येतव्यमिति, अनुपशृण्वतः कुतोऽध्ययनादिप्रसक्तिः ॥ ३८ ॥

॥ स्मृतेश्च ॥ ३९ ॥

स्मर्यते च शूद्रस्य वेदश्रवणादौ दण्डः; "अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपरिपूरणम्, उदाहरणे जिह्वा-

१ रैक्क इति पा० ।

* शंकरमते क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् इत्येकं सूत्रम् ।

१—मर्शाच्छूद्रस्य तदभावश्रवणात् इति पा० ।

२—रस्ति यथा तद्वदत्र न विधिः, ततो न विरोधः इति वरपा० ।

३ एकत्र सर्वत्र वा इति पा० ।

४ न सर्वत्र इति पा० ।

५—रणाप्राप्तिसंभवात् तेनैकत्र इति पा० ।

* शंकरमते श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च इत्येकमेव सूत्रम् ।

च्छेदो, धारणे शरीरभेद"इति, एवं श्रुतिस्मृतिभ्यां शूद्रसमीपाध्ययनादिनिषेधात् कुतस्तेषां वेदार्थविचारादिकम्[1]; अतः सर्वथाष्टवर्षब्राह्मणाद्युपयुक्तोपनयनसंस्कारमन्तरेण वेदाध्ययनप्राप्तिर्न कुत्रापि कस्य चिदिति सिद्धम्। ततः शूद्रा ब्रह्मविद्यायामनधिकारिण एव ॥ ३९ ॥

एवं प्रासङ्गिकमधिकारिनिरूपणं कृत्वा प्रकृतमनुसरति ॥

॥ कम्पनात् ॥ ४० ॥

अङ्गुष्ठमात्रप्रमितपुरुषप्रकरणे कठवल्लीषु श्रूयते; "यदिदं किंच जगत् सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं" "य एतद्विदुरमृतास्ते भवन्ति" इति, तत्र कम्पनहेतुः परमेश्वरोऽन्यो वेति संशयः। अत्र प्राणशब्दनिर्दिष्टजनितभयेन सकलजगत्कम्पनमुच्यते; परमेश्वरस्य सकलजगदभयप्रदानमधुरस्वभावस्य परमकारुणिकस्य जगत्कम्पनहेतुत्वमयुक्तं; तस्माद्वज्रश्रुतेरशनिः कम्पनहेतुः; यद्वा प्राणवायुः कम्पनहेतुः, प्राणश्रुतेः, प्राणवायोर्देहचलनहेतुत्वेन प्राणे निर्मिते सर्वमिदं जगच्छरीररूपं चलतीति; "यदिदं किंच जगत् सर्वं प्राण एवैजति निःसृतम्" इत्यस्य तत्रोपपत्तेः, वायुनिमित्तमेव विद्युत्स्तनयित्नुवृष्टिवन्महाभयहेतुरशनिरपि विवर्तत इति "महद्भयं वज्रमुद्यतम्" इत्यस्यापि तत्रोपपत्तेः; "वायुरेव व्यष्टिर्वायुरेव समष्टिरयं पुनर्मृत्युं जयति य एवं वेद"इति श्रुतेर्वायुविज्ञानादमृतत्वोपपत्तेश्च; इति प्राप्ते परमेश्वर एव कम्पनहेतुरिति ब्रूमः; परमेश्वरस्य[2] सकलजगत्कम्पनहेतुत्वं शासकत्वात् संभवति,यस्य शासनभयेन सर्वे वयं निषिद्धेषु विमुखा विहितेषु प्रवर्तामहे, यच्छासनभयादेव वाय्वादीनां स्वस्वाधिकारप्रवृत्तिः "भीषास्माद्वातः पवते" इत्यादिष्ववगम्यते; कल्याणमूर्तिरपि परमेश्वरः शासकतया भयदर्शनो भवति; ततः श्रूयते; "तस्माद्राजमुखं भीष्मं भावुकम्" इति; तस्मात् स्वामितया सकलजगद्भयहेतुरीश्वर एव ॥ ४० ॥

दहरादिषूपास्यतया निर्दिष्टस्य परमेश्वरस्य प्राप्यत्वमुपपादयितुमधिकरणान्तरमारभ्यते ॥

॥ ज्योतिर्दर्शनात् ॥ ४१ ॥

छान्दोग्येऽस्य प्रजापतिविद्यायामाम्नायते विषयः। "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष" इति मुक्तप्राप्यतया श्रूयमाणं परं ज्योतिः परमेश्वरः किंवा नारायणो मूर्त्यात्मेति संशयः। उत्तमः पुरुष इति मुक्तप्राप्यस्य परज्योतिषः पुरुषोत्तमशब्दवाच्यतयावगमात् पुरुषोत्तमशब्दस्य नारायणे रूढतया स एवोत्तमपुरुषशब्दसमानाधिकरणं परं ज्योतिरिति प्राप्ते ब्रूमः। मुक्तप्राप्यं परं ज्योतिरिह परमशिवाभिधानं परं ब्रह्म, तत् प्राप्तानामेवानावृत्तिदर्शनात्; परब्रह्मणोऽन्यत् प्राप्तानां कथमनावृत्तिः समुचिता[1]; पुरुषोत्तमशब्दो नारायणे रूढोऽपि ब्रह्मण्यपि वर्तते, पुरुषेभ्योऽधिकत्वात्, ब्रह्मप्रेधकत्वेऽपि "वेष्टितुं पुरुषोत्तमम्" इति प्राप्यस्य परब्रह्मणः पर्यायत्वेन पुरुषोत्तमशब्दस्य प्रयोगात्, अतः परं ब्रह्मैव परं ज्योतिः ॥ ४१ ॥

॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४२ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः। "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इति, अत्र नामरूपयोर्निर्वोढृत्वेन श्रूयमाणः स आकाशः परमेश्वरो वियद्वा जीवो वेति संशयः। सर्वभूतावकाशप्रदानेन नामरूपनिर्वोढृत्वस्य वियति संभवात्, वियदिहाकाशः; अथवा जीवः, "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति तस्य नामरूपव्याकरणसबन्धदर्शनात्; इत्येवं प्राप्ते ब्रूमः। परमेश्वर एवात्राकाशशब्देन नामरूपनिर्वोढा श्रूयते, अमृतत्वादितद्धर्मव्यपदेशात्; न ह्याकाशेऽमृतत्वादिकं संभवति जीवे वा; अतः परमेश्वर एवाकाशशब्दवाच्यः ॥ ४२ ॥

ननु "तत् त्वमसि" इत्यादिनैक्यव्यपदेशाच्च प्रत्यगात्मनोऽर्थान्तरभूतः परमेश्वरोऽस्तीत्याशङ्क्याह ॥

॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

"प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरं" "प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति"इति सुषुप्त्युत्क्रान्त्योर्बाह्यान्तरविषयज्ञानशून्याज्जीवात् तदानीमेव प्राज्ञतया भेदेन व्यपदेशाज्जीवादर्थान्तरभूतः परमेश्वरोऽस्ति; स एवात्राकाशशब्दवाच्यः ॥ ४३ ॥

॥ पत्यादिशब्देभ्यः ॥ ४४ ॥

परिष्वञ्जके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायमन्य एव जीवादित्यवगम्यते; "स सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल" इत्यादिकमुत्तरत्र हि श्रूयते; "पशूनां पतये वृक्षाणां पतये"इत्यादिभिश्च,परमेश्वरस्य जगदाधिपत्यं प्रसिद्धं, न कुत्रापि जीवस्य; तस्मादयं जीवादन्यः परमेश्वर एवात्राकाशशब्दवाच्यः ॥ ४४ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥ :: ::

---

१—शूद्रस्य समीपेऽध्ययनादिकमपि निषिध्यते वेदस्य, कुतस्तदर्थविचारणादिकम् इति पा०।

२—एजति" इत्यादिना प्राणशब्दनिर्दिष्टजनितभयात् सकलजगत्कम्पनमुच्यते, तत्र भूतकम्पनहेतुः परमेश्वरोऽन्यो वेति संशये परमेश्वरस्य सकलजगदभयप्रदस्य मधुरस्वभावस्य जगत्कम्पनहेतुत्वं न युक्तमिति प्राप्ते ब्रूमः; परमेश्वरस्य इति पा०।

१—वृत्तिशब्दः समुचितः इति पा०।

## ॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्य ॥

॥ प्रथमजवनिकान्तरस्य शेषः ॥

चिट्ठदुदाव पंच दह दिहाइं पच्छा भ्काणविमाणेण उण वि णइस्सध ।

भेरवा । जं भणदि देवी ।

विदू । राजानमुद्दिश्य । भो वअस्स अह्मे परं दुवे वि बाहिरा एत्थ । जदो, एदाणं मिलिदं कुटुंबं वट्टदि । जदो इमाओ दो वि बहिणिआओ । भेरवाणंदो एदाणं संजोअअरो अच्चिदो माणिदो अ । एसा वि महीअलसरस्सई कुट्टणी देहंतरेण देई जेव्व ।

देवी । विअक्खणे णिअज्जेट्ठबहिणिआए सुलक्खणाए भणिदं भेरवाणंदस्स हिअअट्ठिदा सपज्जा कादव्वा ।

विच । जं देवी आणवेदि ।

देवी । राजानं प्रति । अज्जउत्त पेसिहि मं जेण अहं बहिणिआए एदावत्थाए णेवच्छलच्छीलीलाणिमित्तं अंतेउरं गमिस्सं ।

राजा । जुज्जदि चंपअलदाए कत्थूरिआकप्पूरेहिं आलबालपूरणं ।

नैपथ्ये वैतालिकयोरेकः । सुहसंझा भोदु दे अस्स ।

जादं वासरजीवपिंडसरिसं चंडंसुओ मंडलं
को जाणादि कहिं पि संपदि गदं पत्तम्मि कालंतरे ।

जादा किं अ इअं पि दीहविरहा सोएव्व णाहे गदे
णिद्दामुद्दिदलोअणव्व णलिणी मीलंतपंकेरुहा ॥ ३५ ॥

द्वितीयः ।

उग्घाडीअंति लीलामणिमअवलहीचित्तभित्तीणिवेसा
पल्लंका किंकरीहीं रइसमअसहा पत्थरिज्जंति झत्ति ।
सेरंधीलीलहत्थंगुलिचलणवसा पट्टणादो पअट्टो
हुंकारो मंडवेसूं विलसदि महुरो रुट्ठतुट्ठंगणाणं ॥ ३६ ॥

राजा । अह्मे वि संझं वंदिदुं गमिस्सामो ॥

इति निष्क्रान्ताः सर्वे ॥

॥ इति श्रीबालकविकविराजराजशेखरविरचिते कर्पूरमञ्जर्यभिधसट्टके कर्पूरमञ्जरीनायिकासमागमो नाम प्रथमं जवनिकान्तरम् ॥

जाता किं च इयमपि दीर्घविरहात् शोकेव नाथे गते
निद्रामुद्रितलोचनेव नलिनी मीलत्पङ्केरुहा ॥ ३५ ॥

उद्घाट्यन्ते लीलामणिमयवलभीचित्रभित्तीनिवेशाः
पर्यङ्काः किङ्करीभी रतिसमयसहाः प्रस्तार्यन्ते झटिति ।
सैरन्ध्रीलीलहस्ताङ्गुलिचलनवशात् पट्टनादः प्रवृत्तो
हुंकारो मण्डलेषु विलसति मधुरो रुष्टतुष्टाङ्गनानाम् ॥ ३६ ॥

"पट्टोवाद्यविशेषः"

वयमपि संध्यां वन्दितुं गमिष्यामः ॥

॥ इति प्रथमजवनिकान्तरच्छायाविवृतिः ॥

## ॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्य ॥

॥ प्रथमजवनिकान्तरस्य शेषः ॥

तिष्ठतु तावत् पञ्च दश दिनानि पश्चाद् ध्यानविमानेन पुनरपि नेष्यथ ॥

यद् भणति देवी ॥ भो वयस्य आवां परं द्वावपि बाह्यावत्र । यत एतासां मिलितं कुटुम्बं वर्तते । यत इमे द्वे अपि भगिनिके । भैरवानन्दः पुनरेतयोः संयोगकरोर्चितो मानितश्च । एषापि महीतलसरस्वती कुट्टनी देहान्तरेण देव्येव ॥ विचक्षणे निजज्येष्ठभगिनिकया सुलक्षणया भणितं भैरवानन्दस्य हृदयस्थिता सपर्या कर्तव्या ॥ यद्देवी आज्ञापयति ॥ आर्यपुत्र प्रेषय मां येनाहं भगिनिकाया एतदवस्थाया नेपथ्यलक्ष्मीलीलानिमित्तमन्तःपुरं गमिष्ये ॥ युज्यते चम्पकलतायाः कस्तूरिकाकर्पूरैरालवालपूरणम् ॥ सुखसंध्या भवतु देवस्य ।

जातं वासरजीवपिण्डसदृशं चण्डांशोर्मण्डलं
को जानाति कुत्रापि संप्रति गतं प्राप्ते कालान्तरे ।

## ॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्य द्वितीयं ॥

॥ जवनिकान्तरम् ॥

ततः प्रविशति राजा प्रतीहारी च ।

प्रती । परिक्रामितकेन । इदो २ महाराओ ।

राजा । कतिचित्पदानि गत्वा । तामनुसंधाय । तहिं क्खु अवसरे ।

ण ठाणाहि तिलंतरं पि चलिदा सुत्था णिअंबत्थली
थोउव्वेल्लवलीतरंगमुअरं कंठो तिरच्छट्ठिदो ।

## ॥ अथ द्वितीयजवनिकान्तरस्य प्राकृतविवृतिः ॥

इतइतो महाराजः ॥ तस्मिन् खलु अवसरे ।

न स्थानात्तिलान्तरमपि चलिता सुस्था नितम्बस्थली
स्तोकोद्वेल्लवल्लीतरङ्गमुदरं कण्ठस्तिर्यक्स्थितः ।

वेणीए उण आणणेंदुवलणे लद्ध थणालिंगणं
जादा तीअ चदुव्विदा तणुलदा तस्सं वलंतीमइ ॥ १ ॥

प्रती । स्वगतम् । कथ अज्ज वि सो जेव्व ताडीसंचओ ताओ जेव्व अक्खरपंतीओ । ता वसंतवण्णणेण सिढिलआमि तग्गदं हिअआक्खेवं । प्रकाशम् । दिट्ठिं देउ महाराओ ईसीसिजरठाअमाणे कुसुमाअरम्मि ।

मूलाहिंतो परहुअबहूकंठमुद्दं दलंतो
देंता दीहं महुरिमगुणं जप्पिदे छप्पआणं ।
संचारेंतो विरहिसु णवं पंचमं किं अ राअं
राउम्मत्ता रइकुलघरा वासरा वित्थरंति ॥ २ ॥

राजा । तदाकर्ण्यसानुरागम् ।

अत्थाणी जणलोचणाण बहला लावण्णकल्लोलिणी
लीलाविब्भमहासवासणअरीसोहग्गपारब्भिआ ।
णेत्तेंदीवरदीहिआ मह पुरो सिंगारसंजीअणी
जं जादा अह बम्महेण धणुहे तिक्खो सरो पुंखिदो ॥ ३ ॥

सोन्मादमिव । दंसणक्खणादो पहुदि कुरंगच्छी ।

चित्ते विलुट्टदि ण खुट्टदि सा गुणेसुं
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं ।
बोल्लम्मि वट्टदि पअट्टदि कव्वबन्धे
झाणे ण तुट्टदि चिरं तरुणी तरट्टी ॥ ४ ॥

अवि अ ।

जे तीअ तिक्खचलचक्खुतिहाअदिट्ठा
ते कामचंदमहुपंचममारणिज्जा ।
जेसूं पुणो णिवडिदा सअला वि दिट्ठी
वट्टंति ते तिलजलंजलिदाणजोग्गा ॥ ५ ॥

सस्मरणमिव ।

अग्गम्मि भिंगसरणी णअणाण तीए
मज्झे पुणो कधिददुद्धतरंगमाला ।
पच्छा अ से सरदि तस्सनिरिक्खिदेसुं
आअण्णमंडलिदचावधरो अणंगो ॥ ६ ॥

विचिन्त्य । कधं चिरअदि पिअवअस्सो ।

विदूषकः प्रविश्य विचक्षणा च परिक्रामतः ।

विदू । अइ विअक्खणे सव्वं सच्चं एदं ।

विच । सव्वं सच्चअरं ।

विदू । णाहं पत्तिएमि । जदो परिहासलीला क्खु तुमं ।

विच । अज्ज मा एव्वं भण अण्णो वक्करकालो अण्णो कज्जकालो ।

विदू । पुरोवलोक्य । एसो पिअवअस्सो हंसो विअ मुक्कमाणसो करी विअ मदक्खामो मुणालदंडो विअ

---

वेण्या पुनराननेन्दुवलने लब्धं स्तनालिङ्गनं
जाता तस्याश्चतुर्विधा तनुलता त्र्यस्रं वलन्तीमपि ॥ १ ॥

कथमद्यापि स एव तालीसंचयः ता एवाक्षरपङ्क्तयः तद्वसन्तवर्णनेन शिथिलयामि तद्गतं हृदयाक्षेपम् । दृष्टिं ददातु महाराज ईषदीषज्जरठायमाने कुसुमाकरे ।

मूलात्प्रभृति परभृतवधूकण्ठमुद्रा दलयन्तः
ददतो दीर्घं मधुरिमगुणं जल्पिते षट्पदानाम् ।
संचारयन्तो विरहिषु नवं पञ्चमं किं च रागं
रागोन्मत्ता रतिकुलगृहा वासरा विस्तरन्ति ॥ २ ॥

आस्थानी जनलोचनानां बहुला लावण्यकल्लोलिनी
लीलाविभ्रमहासवासनगरी सौभाग्यप्रारब्धिका ।
नेत्रेन्दीवरदीर्घिका मम पुरः शृङ्गारसंजीविनी
यज्जाता अथ मन्मथेन धनुषि तीक्ष्णः शरः पुङ्खितः ॥ ३ ॥

दर्शनक्षणात्प्रभृति कुरङ्गाक्षी ।

चित्ते विलुठति न कुण्ठति सा गुणेषु
शय्यासु लुठति विसर्पति दिङ्मुखेषु ।
वचने वर्तते प्रवर्तते काव्यबन्धे
ध्याने न त्रुटति चिरं तरुणी प्रौढा ॥ ४ ॥

ये तस्यास्तीक्ष्णचलचक्षुस्त्रिभागदृष्टा-
स्ते कामचन्द्रमधुपञ्चममारणीयाः ।
येषु पुनर्निपतिता सकलापि दृष्टि-
र्वर्तन्ते ते तिलाञ्जलि दानयोग्याः ॥ ५ ॥

अग्रे भृङ्गसरणी नयनयोस्तस्या
मध्ये पुनः क्वथितदुग्धतरङ्गमाला ।
पश्चाच्चास्याः सरति त्र्यस्रनिरीक्षितेषु
आकर्णमण्डलितचापधरोऽनङ्गः ॥ ६ ॥

कथं चिरयति प्रियवयस्यः ॥ अयि विचक्षणे सर्वं सत्यमेतत् ॥ सर्वं सत्यतरम् ॥ नाहं प्रत्येमि । यतः परिहासशीला खलु त्वम् ॥ आर्य मा एवं भण अन्यो विनोदकालः अन्यः कार्यकालः ॥ एष प्रियवयस्यो हंस इव मुक्तमानसः करीव

घणघम्ममलिणो दिणदीवो विश्र विश्रलिश्रच्छाश्रो पहादपुण्णिमाचंदो विश्र पंडुरपरिक्खीणो चिट्ठदि । उभे परिक्रामतः ।

उभे । जेदुजेदु महाराश्रो ।

राजा । वश्रस्स कहिं उण विश्रक्खणाए मिलिदोसि ।

विदू । अज्ज विश्रक्खणा मए सह संधिं कादुं श्रागदा । किदसंधाए इमाए सह मंतश्रंतस्स एत्तिश्रा वेला लग्गा ।

राजा । संधिकरणस्स किं फलं ।

विदू । एसा अहिमदजणप्पेसिदा लेहहत्था णं विश्रक्खणा श्राश्रदा ।

राजा । गन्धं सूचयित्वा । केश्रईकुसुमगंधो विश्र श्राश्रच्छदि ।

विच । केश्रईदललेहो एसो मह हत्थे ।

राजा । महुसमए कुदो केश्रईकुसुमाइं ।

विच । भेरवाणंददिण्णमंतप्पहावेण देईए भवणुज्जाणे केश्रईलट्ठीए एक्को दाव पसवो दंसिदो । तस्स वि तीए दलसंपुडेहिं अज्ज हिंदोलणपहंजणीए चउत्थीए हरवल्लहा देई अच्चिदा । अण्णं श्र दलसंपुडजुश्रलं उण कणिट्ठाए बहिणिश्राए कप्पूरमंजरीए पसादीकदं तीए पि एक्केण दलसंपुडेण भश्रवदी गोरी एव्व अच्चिदा ।

अण्णं श्र

---

मदक्षामो मृणालदण्ड इव घनघर्ममलिनो दिनदीप इव विगलितच्छायः प्रभातपूर्णिमाचन्द्र इव पाण्डुरपरिक्षीणस्तिष्ठति ॥ जयतु २ महाराजः ॥ वयस्य कुत्र पुनर्विचक्षणया मिलितोसि ॥ अद्य विचक्षणा मया सह संधिं कर्तुमागता । कृतसंध्या एतया सह मन्त्रयतः एतावतीवेला लग्ना ॥ संधिकरणस्य किं फलम् ॥ एषा अभिमतजनप्रेषिता लेखहस्ता ननु विचक्षणा आगता ॥ केतकीकुसुमगन्ध इवागच्छति ॥ केतकीदललेख एष मम हस्ते ॥ मधुसमये कुतः केतकीकुसुमानि ॥ भैरवानन्ददत्तमन्त्रप्रभावेन देव्या भवनोद्याने केतकीयष्ट्या एकस्तावत्प्रसवो दर्शितः तस्यापि तया दलसंपुटैरद्य हिन्दोलनप्रभञ्जिन्यां चतुर्थ्यां हरवल्लभा देवी अर्चिता । अन्यच्च दलसंपुटयुगलं पुनः कनिष्ठिकाया भगिनिकायाः कर्पूरमञ्जर्याः प्रसादीकृतम् तयापि एकेन दलसंपुटेन भगवती गौर्येवार्चिता । अन्यच्च

केश्रईकुसुमपत्तसंपुडं पाहुदं तुह सहीश्र पेसिदं ।
एणणाहिमसिवण्णसोहिणा जं सिलोश्रजुश्रलेण लंछिदं ॥ ७ ॥

इति लेखमर्पयति ।

राजा । प्रसार्य वाचयति । स्वस्ति ।

हंसीं कुंकुमपंकपिंजरतणुं काऊण जं वंचिदो
तब्भत्ता किल चक्कवाश्रघरिणी एस त्ति मण्णंतहो ।
एदं तं मह दुक्किदं परिणदं दुक्खाण सिक्खावणं
एकत्थो वि ण जासि जेण विसए दिट्ठी तिहाअस्स वि ॥ ८ ॥

द्विर्वाचयति । एदाइं ताइं मश्रणरसाश्रणाइं अक्खराइं ।

विच । दुदीश्रो उण मह पिश्रसहीए अवत्थाणिवेदश्रो कदुश्र सिलोश्रो लिहिदो एत्थ तं वाचेदु महाराश्रो ।

राजा । वाचयति ।

सह दिश्रहणिसाहीं दीहरा सासदंडा
सह मणिवलएहीं बाहधारा गलंति ।
सुहश्र तुह विश्रोए तीश्र उव्विग्गिश्राए
सह श्र तणुलदाए दुब्बला जीविदासा ॥ ९ ॥

विच । विहस्य । एत्थ जेव्व एदाए अवत्थाए मह ज्जेट्ठबहिणिश्राए सुलक्खणाए श्रोलग्गाविश्राए हुविश्र सिलोश्रो किदो तं महाराश्रो सुणादु । पठति ।

---

केतकीकुसुमपत्रसंपुटं प्राभृतं तव सख्या प्रेषितम् ।
एणनाभिमसीवर्णशोभिना यत् श्लोकयुगलेन लाञ्छितम् ॥ ७ ॥

हंसीं कुङ्कुमपङ्कपिञ्जरतनुं कृत्वा यद्वञ्चित-
स्तद्भर्ता किल चक्रवाकगृहिणी एषेति मन्यमानः ।
एतत्तन्मम दुष्कृतं परिणतं दुःखानां शिक्षापण-
मेकस्यापि न यासि येन विषयं दृष्टिं त्रिभागस्यापि ॥ ८ ॥

एतानि तानि मदनरसायनानि अक्षराणि ॥ द्वितीयः पुनः मम प्रियसख्या अवस्थानिवेदकः कृत्वा श्लोको लिखितः अत्र तं वाचयतु महाराजः ॥

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति ।
सुभग तव वियोगे तस्या उद्विग्नायाः
सह च तनुलतया दुर्बला जीविताशा ॥ ९ ॥

अत्रैवैतस्या अवस्थाया मम ज्येष्ठभगिनिकया सुलक्षणया आदेशकारिण्या भूत्वा श्लोकः कृतस्तं महाराजः शृणोतु ।

णीसासा हारलट्ठीपसरणतरला चंदनं फोडकारि
चंदो देहस्स दाहो सुमरणसरणा हाससोहा मुहम्मि ।
अंगाणं पंडुभावो दिअहससिअलाकोमलो किं अ तीए
णिच्चं बाहप्पवाहा तुह सुहअ किदे होंति कुल्लाहि तुल्ला ॥ १० ॥

राजा । निःश्वस्य । किं भणीअदि सुकइत्तणेण । तुह एव्व जेट्ठबहिणिआ क्खु एसा ।

विदू । एसा विअक्खणा महीअलसरस्सई एदाए जेट्ठबहिणिआ वि तिहुअणसरस्सई । ता एदाहिं समं पाडिसिद्धिं ण करिस्सं । किं उण पिअवअस्सस्स पुरदो मअणावत्थं अत्तणो उचिदेहिं अक्खरेहिं किं पि णिवेदेमि ।

राजा । पठ एदं पि सुणीअदि ।

विदू । पठति ।

परं जोह्ना उह्ना गरलसरिसो चंदनरसो
खदक्खारो हारो मलअपवणा देहतवणा ।
मुणाली बाणाली जलदि अ जलद्दा तणुलदा
वरिट्ठा जं दिट्ठा कमलवअणा सा सुणअणा ॥ ११ ॥

राजा । वअस्स तुमं पि दिव्वेण चंदणरसेण समालहिज्जसि । ता कधेहि संपदं तग्गदं किं पि वुत्तं । अध अंतेउरं णेउण देईए किं कदं तस्सा ।

विदू । विअक्खणे किं कदं ।

---

निःश्वासा हारयष्टिप्रसरणतरलाश्चन्दनं स्फोटकारि
चन्द्रो देहस्य दाहः स्मरणशरणा हासशोभा मुखे ।
अङ्गानां पाण्डुभावो दिवसशशिकलाकोमलः किं च तस्य
नित्यं बाष्पप्रवाहास्तव सुभग कृते भवन्ति कुल्याभिस्तुल्याः ॥ १० ॥

किं भण्यते सुकवित्वेन, तवैव ज्येष्ठभगिनिका खल्वेषा ॥ एषा विचक्षणा महीतलसरस्वती । एतस्या ज्येष्ठभगिनिकापि त्रिभुवनसरस्वती । तदेताभ्यां समं प्रतिस्पर्धां न करिष्ये । किं पुनः प्रियवयस्यस्य पुरतो मदनावस्थामात्मनउचितैरक्षरैः किमपि निवेदयामि ॥ पठ एतदपि श्रूयते ॥

परं ज्योत्स्ना उष्णा गरलसदृशश्चन्दनरसः
क्षतक्षारो हारो मलयपवना देहतपनाः ।
मृणाली बाणाली ज्वलति च जलार्द्रा तनुलता
वरिष्ठा यद्दृष्टा कमलवदना सा सुनयना ॥ ११ ॥

वयस्य त्वमपि दिव्येन चन्दनरसेन समालभ्यसे । तत्कथय सांप्रतं तद्गतां किमपि वार्ताम् । अथान्तःपुरं नीत्वा देव्या किं कृतं तस्याः ॥ विचक्षणे किं कृतम् ॥

विच । देईअ मंजिदा टिक्किदा भूसिदा तोसिदा अ ।

राजा । कधं विअ ।

विच । घणमुद्दट्टिअमंगं कुंकुमरसपंकपिंजरं तस्सा ।

राजा । रोसाणिअं परं ता कंचणमअमालिआरूपं ॥ १२ ॥

विच । मरगअमंजीरजुअं चरणे स्से लंभिआ वअस्साहिं ।

राजा । भमिअमहोमुहपंकअजुअलं ता भमरमालाए ॥ १३ ॥

विच । राअसुअपिच्छणीलं पट्टंसुअजुअलं णिवसिदा सा ।

राजा । कदलीए कंदली ता खरपवणपल्लोल्लिअदलग्गा ॥ १४ ॥

विच । तीए णिअंबफलए णिवेसिआ पोम्मराअमणिकंची ।

राजा । कंचणसेलासिलाए ता बरही कारिओ णट्टं ॥ १५ ॥

विच । दिण्णा वलआवलीओ करकमलप्पओट्ठणालजुअलम्मि ।

राजा । ता भण किं ण सोहइ विवरीअं मअणतोणीरं ॥ १६ ॥

विच । कंठम्मि तीए ठविदो छम्मासीअमोत्तिअण वरहारो ।

राजा । सेवइ ता पंतीहिं मुहअंदं तारआणिअरो ॥ १७ ॥

विच । उहवेसुं वि सवणेसुं णिवेसिअं रअणकुंडलं तिस्सा ।

राजा । ता वअणमम्महे रहो दोहिं वि चक्केहिं चंकमिदो ॥ १८ ॥

विच । अंजणजणिदप्पसाहणाइं कदाइं तीए णअणाइं ।

राजा । उप्पुंखिदे णवकुवलअसिलीमुहे पंचबाणस्स ॥ १९ ॥

---

देव्या मज्जिता तिलकिता विभूषिता तोषिता च ॥ कथमिव ॥

घनमुद्वर्तितमङ्गं कुङ्कुमरसपङ्कपिञ्जरं तस्याः ।
रोषाक्षणितं परं तत् काञ्चनमयमालिकारूपम् ॥ १२ ॥
मरकतमञ्जरीयुगं चरणावस्या आलम्भितौ वयस्याभिः ॥
भ्रमितमधोमुखपङ्कजयुगलं तद् भ्रमरमालया ॥ १३ ॥
राजशुकपिच्छनील पट्टांशुकयुगल निवसिता सा ॥
कदल्यां कन्दली तत् खरपवनप्रेरितदलाग्रा ॥ १४ ॥
तस्या नितम्बफलके निवेशिता पद्मरागमणिकाञ्ची ॥
काञ्चनशैलशिलायां तद्बर्हो कारितो नृत्यम् ॥ १५ ॥
दत्ता वलयावल्यः करकमलप्रकोष्ठनालयुगले ॥
तद् भण किं न शोभते विपरीतं मदनतूणीरम् ॥ १६ ॥
कण्ठे तस्याः स्थापितः षाण्मासिकमौक्तिकानां वरहारः ॥
सेवते तत्पङ्क्तिभिर्मुखचन्द्रं तारकानिकरः ॥ १७ ॥
उभयोरपि श्रवणयोर्निवेशितं रत्नकुण्डलं तस्याः ॥
तद्वदनमन्मथे रथो द्वाभ्यामपि चक्राभ्यां चङ्क्रमितः ॥ १८ ॥
यच्चाञ्जनजनितप्रसाधने कृते तस्या नयने ॥
उत्पुङ्खितौ नवकुवलयशिलीमुखौ पञ्चबाणस्य ॥ १९ ॥

विच । कुडिलालआलं माला णिडाललोलग्गसंगिणी रइआ ।
राजा । ता ससिबिंबस्सोवरि वट्टइ मझ्झम्मि कसणसारंगो ॥२०॥
विच । घणसारतारणअणाए गूढकुसुमक्करो चिहुरभारो ।
राजा । ससिराहुमल्लजुझ्झं विअ दंसिदं एणणअणाए ॥ २१ ॥
विच । इअ देइए जहिच्छं पसाहणेहिं पसाहिदा कुमारी ।
राजा । ता केलिकाणणमही विहूसिदा सुरहिलच्छीए ॥ २२॥
विदू । देअ एदं परमत्थं विण्णवीअदि ।

जिस्सा दिठ्ठी सरलधवला कज्जलं तीअ जोग्गं
जा वित्थिण्णत्थणअलसिनी सोहए तीअ हारो ।
चक्काआरे रमणफलए कोवि कंचीभरट्टो
जिस्सा तिस्सा उण वि भणिमो भूसणं दूसणं अ ॥ २३ ॥

राजा । पुनस्तामनुसंधाय ।

तिवलिवलिअणाहीबाहुमूलेसु लग्गं
थणअलसणिअंबा डंबरेसूस्ससंतं ।
जलनिबिडमिमीए लहु अह्णाणपोत्तं
पिसुणदि तणुलठ्ठी चंगिमं लग्गिमं अ ॥ २४ ॥

विदू । सक्रोधमिव । भो मए सव्वालंकारसहिदा वण्णिदा । तुमं उण जलविलुत्तप्पसाहणं एव्व सुमरसि । ता किं ण सुदं देवेन ।

---

कुटिलालकानां माला ललाटलोलाग्रसङ्गिनी रचिता ॥
तत् शशिबिम्बोपरि वर्तते मध्ये कृष्णसारङ्गः ॥ २० ॥
घनसारतारनयनाया ग्रथितकुसुमोत्करश्चिकुरभारः ॥
शशिराहुमल्लयुद्धमिव दर्शितमेणनयनया ॥ २१ ॥
इति देव्या यथेच्छं प्रसाधनैः प्रसाधिता कुमारी ॥
तत्केलिकाननमही विभूषिता सुरभिलक्ष्म्या ॥ २२ ॥
देव एतत्परमार्थं विज्ञाप्यते ॥

यस्या दृष्टिः सरलधवला कज्जलं तस्या योग्यं
या विस्तीर्णस्तनकलशिनी शोभते तस्या हारः ।
चक्राकारे रमणफलके कोऽपि काञ्चीकलापः
यस्यास्तस्याः पुनरपि भणामो भूषणं दूषणं च ॥ २३ ॥
त्रिवलिवलितनाभीबाहुमूलेषु लग्नं
स्तनकलशनितम्बाडम्बरेषूच्छ्वसत् ।
जलनिबिडमेतस्याः श्लक्ष्ण स्नानपोत्रं
पिशुनयति तनुयष्टिः सौन्दर्यं लग्नं च ॥ २४ ॥

भो मया सर्वालंकारसहिता वर्णिता । त्वं पुनर्जलविलुप्तप्रसाधनामेव स्मरसि । तत्किं न श्रुतं देवेन ।

णिहंणचंगस्स वि माणुसस्स
सोहा समुम्मीलदि भूसणेहिं ।
मणीण मुत्ताण वि हारएहिं
विहूसणे लग्गदि का वि लच्छी ॥ २५ ॥

राजा ।

मुद्धाण णाम हिअआइं हरंति हंत
णेवच्छकप्पणगुणेण णिअंबिणीओ ।
छेआ पुणो पकिदिचंगिमहावणिज्जा
दक्खारसो ण महुरिज्जदि सक्कराए ॥ २६ ॥

विच । जधा देवेण दिठ्ठं ।

थोराणं थणआण कण्णकलिआलंघीण अच्छीण वा
भूचंदस्स मुहस्स कंतिसरिआ सोत्तस्स गत्तस्स अ ।
को णेवच्छकलाअ कीरदि गुणो जं तं पि सच्चं पिअं
सच्चं तं सुणु तत्थ कारणमिणं रूढीअ का खंडणा ॥२७॥

राजा । सुपंजल कविंजल एस सिक्खावीअसि ।

किं कज्जं कित्तिमेणं विरअणविहिणा सो णडीणं विडंबो
तं चंगं जं णिसग्गं जणमणहरणं तेण सीमंतिणीओ ।
जस्सिं सव्वंगसंगो सअलगुणगणो सो अदंभो अलंभो
तस्सिं णेच्छंति काले परमसुहअरे किंपि णेवच्छलच्छी॥२८॥

---

निसर्गसुन्दरस्यापि मानुषस्य
शोभा समुन्मीलति भूषणैः ।
मणीनां मुक्तानामपि हारकै-
र्विभूषणे लगति कापि लक्ष्मीः ॥ २५ ॥
मुग्धानां नाम हृदयानि हरन्ति हन्त
नेपथ्यकल्पनगुणेन नितम्बिन्यः ।
विदग्धाः पुनः प्रकृतिसौन्दर्यहावनीया
द्राक्षारसो न मधुरीयते शर्करया ॥ २६ ॥

यथा देवेनादिष्टम् ।

स्थूलयोः स्तनयोः कर्णकलिकालङ्घिनोरक्ष्णोर्वा
भूचन्द्रस्य मुखस्य कान्तिसरित्स्रोतसो गात्रस्य च ।
को नेपथ्यकलया क्रियते गुणो यत्तदपि सर्वं प्रियं
सत्यं तत् शृणु तत्र कारणमिदं रूढेः का खण्डना ॥ २७ ॥

सुप्राञ्जल कपिञ्जल एष शिक्षाप्यसे ।

किं कार्यं कृत्रिमेण विरचनविधिना स नटीनां विडम्ब-
स्तत्सुन्दरं यन्निसर्गजनमनोहरणं तेन सीमन्तिन्यः ।
यस्मिन् सर्वाङ्गसङ्गः सकलगुणगणः सो ऽदम्भोऽप्राप्यं
तस्मिन्नेच्छन्ति काले परमसुखकरे कामपि नेपथ्यलक्ष्मीम् ॥ २८ ॥

त्रिच । देव्र एदं अ विण्णवीअदि । ण केवलं देईए णिओएण तिस्सा अणुगदह्मि किं उण तारामेत्तीए विसहित्तणं पत्ता कप्पूरमंजरीए तेण तक्कज्जसज्जा अहं पुणो वि ओलग्गाविआ भविअ णिवेदइस्सं ।

तिस्सा दाव परिक्खणाअ णिहिदो हत्तो त्थणुत्संगदो
दाहुड्डामरिदो सहीहिं बहुसो हेलाअ कड्ढिज्जदे ।
किं तेणा वि इमं णिसामअ गिरं संतोसविट्टेसिणी
हत्तच्छत्तणिवारितिंदुकिरणा बोलेइ सा जामिणी ॥ २९ ॥

कज्जसेसं उण कविंजलो णिवेदइस्सदि । तं अ देवेण तधा कादव्वं । इति परिक्रम्य निष्क्रान्ता ॥

राजा । वअस्स किं उण तं कज्जसेस ।

विदू । अज्ज हिंदोलणचउत्थी तत्थ देईए कप्पूरमंजरी हिंदोलए आरोहिदव्वा । ता मरगदपुंजट्ठिदेण देवेण कप्पूरमंजरी हिंदोलंती दट्ठव्वा। एदं तं कज्जसेसं ।

राजा । विचिन्त्य । ता अइणिउणा वि छलिदा देई ।

विदू । पाइआ जुण्णमज्जरिआ दुद्धं ति तक्कं ।

राजा । को अण्णो तुह्मोहिंतो मह कज्जसज्जो । जादो, को अण्णो चंदाहिंतो समुद्दवड्ढणे दिट्ठो । इति परिक्रम्य कदलीगृहप्रवेशं नाटयतः ।

विदू । इअं जोग्गा उत्तुंगफलिहमणिवेदिआ । ता इह उवविसदु पिअवअस्सो ।

---

देव एतच्च विज्ञाप्यते । न केवलं देव्या नियोगेन तस्या अनुगतास्मि किं पुनस्तारामैत्र्यापि सखित्वं प्राप्ता कर्पूरमञ्जर्याः तेन तत्कार्यसज्जा अहं पुनरपि आज्ञाकारिणी भूत्वा निवेदयिष्ये ।

तस्यास्तावत्परीक्षणाय निहितो हस्तः स्तनोत्सङ्गतो
दाहोड्डामरितः सखीभिर्बहुशो हेलयाकृष्यते ।
किं तेनापि इमां निशामय गिरं संतोषविद्वेषिणीं
हस्तच्छत्रनिवारितेन्दुकिरणा अतिवाहयति सा यामिनी॥२९॥

कार्यशेषं पुनः कपिञ्जलो निवेदयिष्यति । तच्च देवेन तथा कर्तव्यम् ॥

वयस्य कः पुनः स कार्यशेषः॥ अद्य हिन्दोलनचतुर्थी तत्र देव्या गौरीं कृत्वा कर्पूरमञ्जरी हिन्दोलके आरोहयितव्या तन्मरकतपुञ्जस्थितेन देवेन कर्पूरमञ्जरी हिन्दोलन्ती द्रष्टव्या । एतत्तत्कार्यशेषम् ॥ तदतिनिपुणापि छलिता देवी ॥ पायिता जीर्णमार्जारिका दुग्धमिति तक्रम् ॥ कोन्यो युष्मत्तो मम कार्यसज्जः । यतः कोन्यश्चन्द्रतः समुद्रवर्धने दृष्टः ॥ इयं योग्या उत्तुङ्गस्फटिकमणिवेदिका । तदिहोपविशतु प्रिय-

राजा । तथा करोति ।

विदू । हस्तमुद्यम्य । भोभो दीसदु पुण्णिमाचंदो ।

राजा । विलोक्य । स्वगतम् । अए दोलारूढाए मह वल्लहाए वअणं पुण्णिमाचंदो त्ति णिद्दिसदि । समंतादवलोक्य । प्रकाशम् ।

विच्छाअंतो णअररमणीमंडलस्साणणाइं
पच्छाअंतो गअणकुहरं कंतिजोह्लाजलेण ।
पेच्छंतीणं हिअअणिहिदं णिट्ठलंतो अदप्पं
दोलालीलासरलतरलो दीसए से मुहेंदू ॥ ३० ॥

अवि अ ।

उच्चेहिं चामरेहिं धअधवलवडा डंबरिल्लावलीहिं
घंटाहिं विद्दुरिल्ला सुरतरुणिविमाणाणुआरं वहंती ।
पाआरं लंघअंती कुणइ रअवसा उण्णमंती णमंती
एंती जंती अ दोला जणमणहरणं कट्ठणाकट्ठणेहिं॥३१॥

अवि अ ।

रणंतमणिणेउरं झणझणंतहारच्छडं
कणक्कणिदकिंकिणीमुहरमेहलाडंबरं ।
विलोलवलआवलीजणिदमंजुसिंजारवं
ण कस्स मणमोहणं ससिमुहीअ हिंदोलणं ॥ ३२ ॥

विदू । भो सुत्तआरो तुमं, अहं उण वित्तिआरो भविअ वित्थरेण वण्णइस्सं ।

---

वयस्यः ॥ भोभो दृश्यतां पूर्णिमाचन्द्रः ॥ अये दोलारूढाया मम वल्लभाया वदनं पूर्णिमाचन्द्र इति निर्दिशति ॥

विच्छाययन्नगरमण्डलस्याननानि
प्रक्षालयन् गगनकुहरं कान्तिज्योत्स्नाजलेन ।
प्रेक्षन्तीनां हृदयनिहितं निर्दलंश्च दर्पं
दोलालीलासरलतरलो दृश्यतेस्या मुखेन्दुः ॥ ३० ॥

उच्चैश्चामरैर्ध्वजधवलपटाडम्बरबहलावलीभिः
घण्टाभिर्विद्रावणबहला सुरतरुणीविमानानुकारं वहन्ती ।
प्राकारं लङ्घयन्ती करोति रयवशादुन्नमन्ती नमन्ती
आगच्छन्ती यान्ती च दोला जनमनोहरणं कर्षणाकर्षणैः ॥३१॥

रणन्मणिनूपुरं झणझणद्धारच्छटं
क्वणक्वणितकिङ्किणीमुखरमेखलाडम्बरम् ।
विलोलमलयावलीजनितमञ्जुसिञ्जीरवं
न कस्य मनोमोहनं शशिमुख्या हिन्दोलनम् ॥ ३२ ॥

भो सूत्रधारस्त्वमहं पुनर्वृत्तिकारो भूत्वा विस्तरेण वर्णयिष्ये ।

उवरिट्ठिदथणपब्भारचंपिअ चरणपंकआणजुअलं ।
हक्कारइव्व मअणं रणंतमणिणेउररवेण ॥ ३३ ॥

हिंदोलणलीलारहसा तीअ चक्कवक्कणं रमणं ।
किलकिलइव्व सहरिसं मणिकंचीकिंकिणीरवेण ॥ ३४ ॥

दोलंदोलणहेलासरंतसरिआच्छलेण हारो स्से ।
विक्किरइव्व कुसुमाउहणरवइणो किंत्तिवल्लीओ ॥ ३५ ॥

सम्मुहवणपल्लिअवरिल्लदरदासाविआइं अंगाइं ।
हक्कारिउणमअणं पासम्मि णिवेसअंतिव्व ॥ ३६ ॥

ताडंकजुअं गंडेसु बहलघुसिणेसु घडणलीलाहीं ।
देइव्व दोलंदोलणरेहाओ गणणकोडेण ॥ ३७ ॥

णअणाइं पसइ सरिसाइं झत्ति फुल्लाइं कोदुहल्लेण ।
उप्पुंखिअव्व कुवलअदलसिलीमुहे पंचबाणस्स ॥ ३८ ॥

दोलारअविच्छेओ कहिं वि मा होउत्ति पडइव्व ।
पुट्ठम्मि वेणिदंडो मम्महचम्मट्ठिआअंतो ॥ ३९ ॥

इअ एआइं विलासुज्जलाइं दोलापवंचचरिआइं ।
कस्स ण लिहइ चित्ते णिउणो कंदप्पचित्तअरो ॥ ४० ॥

राजा । सविषादम् । कधं अवइण्णा कप्पूरमंजरी । रित्ता दोला रित्तं अ मज्झ चित्तं । रित्ताइं दंसणूसुकाइं मज्झ णअणाइं ।

---

उपरिस्थितस्तनप्राग्भारपीडितचरणपङ्कजयोर्युगलम् ।
आकारयतीव मदनं रणन्मणिनूपुररवेण ॥ ३३ ॥

हिन्दोलनलीलारभसा तस्याश्चक्रविस्तीर्णं रमणम् ।
किलकिलयतीव सहर्षं मणिकाञ्चीकिङ्किणीरवेण ॥ ३४ ॥

दोलान्दोलनहेलासरत्सरिकाछलेन हारोस्याः ।
विस्तारयन्ती कुसुमायुधनरपतेः कीर्तिवल्लिः ॥ ३५ ॥

"सरिकावलयाकारं गलभूषणम्"

सन्मुखपवनप्रेरितवस्त्रदरदर्शितानि अङ्गानि ।
आकार्यमदनं पार्श्वे निवेशयन्तीव ॥ ३६ ॥

ताटङ्कयुगं गण्डयोर्बहलघुसृणयोर्घटनलीलाभिः ।
ददादिव दोलान्दोलनरेखा गणनकौतुकेन ॥ ३७ ॥

नयने प्रसृति सदृशे झटिति फुल्ले कौतूहलेन ।
उत्पुङ्खिताविव कुवलयदलशिलीमुखौ पञ्चबाणस्य ॥ ३८ ॥

दोलारयविच्छेदः कुत्रापि मा भवत्विति पतन्तीव ।
पृष्ठे वेणीदण्डो मन्मथचर्मयष्टिकायमानः ॥ ३९ ॥

इत्येतानि विलासोज्ज्वलानि दोलाप्रपञ्चचरितानि ।
कस्य न लिखति चित्ते निपुणः कन्दर्पचित्रकारः ॥ ४० ॥

कथमवतीर्णा कर्पूरमञ्जरी रिक्ता दोला रिक्तं च मम चित्तम् रिक्ते दर्शनोत्सुके मम नयने ॥

विदू । ता विज्जुल्लेहा विअ खणदिट्ठणट्ठा ।

राजा । मा एवं भण हरिअंदपुरी विअ दिट्ठा पणट्ठा अ । स्मृतनाटितकेन ।

मंजिट्ठी ओट्ठमुद्दा णवघडणसुवण्णुज्जला अंगलट्ठी
दिट्ठीबालेंदुलेहाधवलिमजणणी कुंतला कज्जलाहा ।
इत्थं वण्णाणलेहा विहरइ हरिणी चंचलच्छीअ एसा
कंदप्पो दीहदप्पो जुअजणजअणे बद्धलक्खव्व ठादि ॥ ४१ ॥

विदू । एदं तं मरगअपुंजं । ता इह उवविसिअ पिअवअस्सो पडिवालेदु तं । संझावि संणिहिदा वट्टदि । उभौ तथा कुरुतः ।

राजा । अए सिसिरं वि जामिणीं संदावदाइणीं अणुहवामि ।

विदू । ता लच्छीसहअरो खणं चिट्ठदु देओ जाव अहं सिसिरोवआरसामग्गीं संपादेह्मि । इति नाटयेन निष्क्रम्य पुरोवलोक्य च । किं उण एसा विअक्खणा इदो णिअडं आअच्छदि ।

राजा । संणिहिदो संझाकालो कहिदो अ बन्दिहीं पि । स्मृत्वा मदनाकूतमभिनीय ।

किसलअकरचरणा वि कुवलअणअणा मिअंकवअणा वि ।
अहहणवचंपअंगी तह वि हुलावेइ अच्छरिअं ॥ ४२ ॥

विदू । सम्यगवलोक्य । अए विअक्खणा सिसिरोवआरसामग्गी सहिदा विअ ।

---

तद्विद्युल्लेखेव क्षणदृष्टनष्टा ॥ मैवं भण हरिचन्द्रपुरीव दृष्टा प्रणष्टा च ।

माञ्जिष्ठी ओष्ठमुद्रा नवघटनसुवर्णोज्ज्वला अङ्गयष्टि-
र्दृष्टिर्बालेन्दुलेखाधवलिमजननी कुन्तलाः कज्जलाभाः ।
इत्थं वर्णानां रेखा विहरति हरिणी चञ्चलाक्ष्या एषा
कन्दर्पो दीर्घदर्पो युवजयजयने बद्धलक्ष्य इव तिष्ठति ॥ ४१ ॥

एतत्तन्मरकतपुञ्जम् । तदिहोपविश्य प्रियवयस्यः प्रतिपालयतु ताम् । संध्यापि संनिहिता वर्तते ॥ अये शिशिरामपि यामिनीं संतापदायिनी मनुभवामि ॥ तल्लक्ष्मीसहचरः क्षणं तिष्ठतु देवो यावदहं शिशिरोपचारसामग्रीं संपादयामि ॥ किं पुनरेषा विचक्षणा इतो निकटमागच्छति ॥ संनिहितः संध्याकालः कथितश्च बन्दिभ्यामपि ॥

किसलयकरचरणापि कुवलयनयना मृगाङ्कवदनापि ।
अहह नवचम्पकाङ्गी तथापि खलु नाययति आश्चर्यम् ॥ ४२ ॥

अये विचक्षणा शिशिरोपचारसामग्रीसहितेव ॥ अहो

ततः प्रविशति शिशिरोपचारसामग्रीसहिता विचक्षणा। परिक्रम्य। अहो पिअसहीए। महंतो खु विरहदाहज्जरो।

विदू। उपसृत्य। भोदि किं एदं।

विच। सिसिरोवआरसामग्गी।

विदू। कस्स किदे।

विच। पिअसहीअ कदे।

विदू। ता मम वि अद्धं देहि।

विच। किं णिमित्तं।

विदू। महाराअस्स कदे।

विच। किं उण कारणं तस्स।

विदू। कप्पूरमंजरीए वि किं कारणं।

विच। किं ण जाणासि महाराअस्स दंसणं।

विदू। तुमं पि किं ण जाणासि महाराअस्स कप्पूरमंजरीए दंसणं। उभौ हसतः।

विच। ता कहिं महाराओ।

विदू। तुह वअणेण मरगअपुंजे चिट्ठदि।

विच। ता महाराएण सह मरगअपुंजे दुआरदेसे चिट्ठ खणं जेण उहअदंसणे जादे सिसिरोवआरसामग्गीए जलंजली दिज्जदि।

विदू। तहिं गच्छ जदो ण आअच्छसि। इति प्रक्षिपति। पुनस्तां प्रति। ता कीत्ति दुआरदेसे होदव्वं।

विच। देईए आदेसेण कप्पूरमंजरी समाअच्छदि।

विदू। किं तीए आदेसो।

विच। तहिं देईए बालतरुणो तिण्णि आरोविदा।

विदू। केके।

विच। कुरवअतिलअअसोआ।

विदू। ता किं तेहिं।

विच। भणिदा सा कप्पूरमंजरी देवीए। जधा,

कुरवअतिलअअसोआ आलिंगणदंसणचलणग्गहआ।
विअसंति सुंदरीणं ता ताणं देहि दोहलअं ॥ ४३ ॥

णिहं त संपादइस्सदि त्ति।

विदू। ता मरगअपुंजादो पिअवअस्सं आणिअ तमालविडवंतरिद ठविअ एदं पच्चक्खं करिस्सं। तथा नाटयित्वा राजानं प्रति। भोभो उट्ठिअ पेक्ख णिअहिअअसमुद्दचंदलेहं।

राजा। तथा करोति।

ततः प्रविशति विशेषविभूषिताङ्गी कर्पूरमंजरी। कहिं उण विअक्खणा।

विच। तामुपसृत्य। सहिं करीअदु देईए संदिट्ठं।

राजा। वअस्स किं उण संदिट्ठं।

विदू। तमालविडवंतरिदो जाणेसु।

विच। एस कुरवअतरू।

कर्पूर। तमालिङ्गति।

विच।

णवकुरवअवच्छो कुंभथोरत्थणीए
रहसविरइएणं णिब्भरालिंगणेण।
तह कुसुमसमिद्धिं जंभिदो सुंदरीए
जह भमरकुलाणं तत्थ जत्ता पउत्ता ॥ ४४ ॥

---

प्रियसख्याः महान् खलु विरहदाहज्वरः ॥ भवति किमेतत् ॥ शिशिरोपचारसामग्री ॥ कस्य कृते ॥ प्रियसख्याः कृते ॥ तन्ममाप्यर्धं देहि ॥ किं निमित्तम् ॥ महाराजस्य कृते ॥ किं पुनः कारणं तस्य ॥ कर्पूरमञ्जर्या अपि किं कारणम् ॥ किं न जानासि महाराजस्य दर्शनम् ॥ त्वमपि किं न जानासि महाराजस्य कर्पूरमञ्जर्या दर्शनम् ॥ तत् कुत्र महाराजः ॥ तव वचनेन मरकतपुञ्जे तिष्ठति ॥ तत् महाराजेन सह मरकतपुञ्जे द्वारदेशे तिष्ठ क्षणं येनोभयदर्शने जाते शिशिरोपचारसामग्र्या जलाञ्जलिर्दीयते ॥ तत्र गच्छ यतो नागच्छसि। तत् किमिति द्वारदेशे भवितव्यम् ॥ देव्या आदेशेन कर्पूरमञ्जरी समागच्छति ॥ कस्तस्या आदेशः ॥ तत्र देव्या बालतरवस्त्रय आरोपिताः ॥

कुरबकतिलकाशोकाः ॥ तत्किं तैः ॥ भणिता सा कर्पूरमञ्जरी देव्या। यथा,

कुरबकतिलकाशोका आलिङ्गनदर्शनचरणग्रहतः।
विकसन्ति सुन्दरीणां तत्तेषां देहि दोहलकम् ॥ ४३ ॥

इदानीं तत्संपादयिष्यतीति ॥ तत् मरकतपुञ्जात् प्रियवयस्य मानीय तमालविटपान्तरितं स्थापयित्वा एतत्प्रत्यक्षं करिष्ये। भोभो उत्थाय प्रेक्ष निजहृदयसमुद्रचन्द्रलेखाम् ॥ कुत्र पुनर्विचक्षणा ॥ सखि क्रियतां देव्या संदिष्टम् ॥ वयस्य किं पुनः संदिष्टम् ॥ तमालविटपान्तरितो जानीहि ॥ एष कुरबकतरुः।

नवकुरबकवृक्षः कुम्भस्थूलस्तन्या
रभसविरचितेन निर्भरालिङ्गनेन।
तथा कुसुमसमृद्धिं लम्भितः सुन्दर्या
यथा भ्रमरकुलानां तत्र यात्रा प्रवृत्ता ॥ ४४ ॥

विदू । भोभो पेक्खपेक्ख महेंदजालं । जेण बालो वि कुरबअतरू तरुणीए गाढमवगूढो झत्ति सुपुप्फिदो ।

राजा । ईदिसो एव दोहलकस्स प्पहावो ।

विच । अह एसो तिलअद्दुमो ।

कर्पूर । चिरं तिर्यगवलोकयति ।

राजा ।

तिक्खाणं तरलाण कज्जलकलासंवग्गिदाणं वि से
पासे पंचसरं सिलीमुहधरं णिच्चं कुणंता विअ ।
णेत्ताणं तिलअद्दुमेण वडिदा धाडी मिअच्छी अजं
तं सो मंजरिपुंजदंतुरसिरो रोमञ्चिदं व्व ठिदो ॥ ४५ ॥

विच । एसा वि असोअसही ।

कर्पूर । चरणताडनं नाटयति ।

विच ।

असोअतरुताडणं रणिदणेउरेणंघिणा
कदं अ मिअलंछणच्छविमुहीअ हेलुल्लसं ।
सिहासु सअलासु वि त्थवअमंडणाडंबरं
ठिदं अ गअणंगणं जणणिरिक्खणिज्जं खणं ॥ ४६ ॥

विदू । भो वअस्स जं सअं ण किदं दोहलदाणं देईए तत्थ किं कारणं जाणेसि ।

राजा । तुमं जाणेहि ।

विदू । भणामि जइ देओ ण कुप्पदि ।

राजा । को एत्थ रोसावसरो भण उणिद्दजीहाए ।

---

भोभो प्रेक्ष महेन्द्रजालम् । येन बालोपि कुरबकतरुस्तरुण्या गाढमवगूढो झटिति सुपुष्पितः ॥ ईदृश एव दोहलकस्य प्रभावः ॥ अयमेष तिलकद्रुमः ॥

तीक्ष्णयोस्तरलयोः कज्जलकलासंवलितयोरप्यस्याः
पार्श्वे पञ्चशरं शिलीमुखधरं नित्यं कुर्वतोरिव ॥
नेत्रयोस्तिलकद्रुमेन पतिता धाटी मृगाक्ष्या यत्
तत्समञ्जरीपुञ्जदन्तुरशिरा रोमाञ्चित इव स्थितः ॥४५॥

एषाप्यशोकसखी ।

अशोकतरुताडनं रणितनूपुरेणाङ्घ्रिणा
कृतं च मृगलाञ्छनच्छविमुख्या हेलोल्लसत् ।
शिखासु सकलास्वपि स्तबकमण्डनाडम्बरं
स्थितं च गगनाङ्गणं जननिरीक्षणीयं क्षणम् ॥ ४६ ॥

भो वयस्य यत् स्वयं न कृतं दोहलदानं देव्या तत्र किं कारणं जानासि ॥ त्वं जानीहि ॥ भणामि यदि देवो न कुप्यति ॥ कोत्र रोषावसरो भणोन्निद्रजिह्वया ॥

विदू ।

इह जइ वि कामिणीणं सुंदेरं धरइ अवअवाणसिरी ।
अहिदेअदव्व णिवसइ तह वि हु तारुण्णए लच्छी ॥४७॥

---

इह यद्यपि कामिनीनां सौन्दर्यं धारयत्यवयवानां श्रीः ।
अधिदैवतेव निवसति तथापि खलु तारुण्यके लक्ष्मीः ॥४७॥

॥ शेष उत्तराङ्के ॥

---

॥ श्रीः ॥

## ॥ कीर्तिस्तम्भस्थो लेखः ॥

इण्डियनमेलनामकपत्राद् ज्ञायते । सिंहलद्वीपस्थबोन्टोटानगरनिवासी पाल्माड्डुलानामकनगरस्थायास्तृपिताभिधायाः पुस्तकसंशोधनाय व्यवस्थापितायाः प्रधानधर्माचार्यसभायाः संपादकस्तद्देशीयपाल्युपपदकप्रधानपण्डितेभ्यो वयसा न्यूनोपि विद्यया प्रज्ञया चान्यूनो बौद्धमतशास्त्रविचक्षणशिरोमणिर्यात्रामूले धर्म्मारामनामको बौद्धाचार्यस्त्रिचतुर्भ्यो वर्षेभ्यो दुःसहक्लेशकरेण रोगविशेषेण मुहुर्मुहुराक्रान्तकलेवरः शय्यातलगतस्तत्क्लेशमसहमानो भगवतः श्रीबुद्धस्य सान्निध्यमिच्छन्निवेमं लोकं विहाय स्वरारुरोह । ह्यो ऽहं स्थविरसुभूतेः सकाशादिमं वृत्तान्तमश्रौषम् । "तव पियमित्तभूदो वनवासविहारवासी यात्रामूल्ले धम्मारामो नाम थेरो इमस्सि जनवारिमासे अट्ठावीसत्तिमे दिने रात्तियं परलोकं गदो, अहो सव्वो संघारो अणिच्चो त्ति" । तव प्रियमित्र स्थविरो वन्यैकान्ताश्रमवासी यात्रामूल्ले धर्मारामोनाम अस्मिन् जनवरिमासे अष्टाविंशतितमे दिने रात्र्या पश्चिमयामे परलोकं गतः । अहो सर्वः संसारो ऽनित्य इति । ह : ! ! ! महदेतत्खेदस्य पदमेतादृशनिःसीमशमदमदयानिधेस्तस्याकाले मरणं, को नामेदानीं दुरूहतरप्राचीननिबन्धसंशोधनाय व्यवस्थापितां तृपितकाभिधा सभामलंकुर्यात्, कश्च तानतिप्रौढान् बौद्धमतनिबन्धान् संशोध्य मुद्रयेत् । ये च स्वीयभाग्योदयोद्रेकेण तमपश्यंस्ते नूनमिदानीं सस्मृत्यसस्मृत्य तदीयामतिसज्जनतां दयालुतां निर्लोभिता परमं पावित्र्यं दृढां चेश्वरभक्तिमन्यानप्यनेकान् लोकोत्तरांस्तदीयसद्गुणगणान् विगलिताङ्गाः शयनाशने अपि विहाय विनष्टसञ्ज्ञाः केवलं महते शोकाय चिराय भविष्यन्ति । किं बहुना, यदि जगति कश्चन मृत्योरुपायो ऽभविष्यत्तर्हि के नाम तन्नगरनिवासिनो जनास्तत्प्रातिनिध्येनातिप्रियतमानपि स्वीयानसून् मृत्यवे समर्प्य तं नारक्षिष्यन् । अहह ! ! ! नूनमूनपञ्चाशद्वर्षस्यास्य मरणं सर्वाणि बौद्धकुलानि तद्द्वीपनिवासिनो ऽन्यांश्च जनानवश्यं खेदयति स्म । अहो विषमः कालो यदनवद्यगुणगणाकरस्याकाले

एव मरणम् । अशश्याश्च स्वयशोराजिराजितानेकदिगन्तास्तदीयसद्गुणगणाः प्रादेशमात्रे ऽत्र वृत्तपत्रे मुद्रयितुमिति । इदं तावत्सानुनयं प्रार्थये जगत्यस्मिन्सुकीर्तनीयगुणगणाकराणां शिरोमुकुटत्वेन कीर्तनीयस्यास्य स्तुतिपूर्वकं स्मरणं प्रमाणीकरणीयं सहृदयहृदयैरार्यैरिति ॥

## ॥ कस्याप्येतल्लोकं स्वविरहखेदशालिनं कुर्वाणस्य जीवनवृत्तान्तवर्णनम् ॥

अथ कोपि प्रशियादेशीयकोनिग्बर्गाभिधाननगरनिवासी श्रीमान् थियोडरगोल्डष्टकरसाहिबाभिधः सत्यविनयाद्यगण्यगुणगणनिकरैरुपशोभमानस्तत्रैव पाठशालायां प्रधानाध्यापकवरश्रीपेटरबोन्साहिबमहाशयस्य निकटे किंचित्संस्कृतमारभ्याधिकं पिपठिषुर्बोरनाम्नि नगरे श्रीमदतीतकन्सर्टाभिधराजकुमारवरश्रीमन्महाराज्ञीपतिना सह अगस्तविहेल्मबान्स्लीगल्, ख्रीष्टमतानुयायिल्यासन्, संज्ञकाभ्यां तत्रत्यप्रधानपाठशालाध्यापकाभ्यां समीचीनं पाण्डित्यमवाप्याचिरादेव संस्कृतव्युत्पत्तिनैपुण्यपूर्णकलानिधिचन्द्रिकाभी रसिकविद्वज्जनमनःकुमुदिनीसमोदमापादयामास । ततः परं कतिपयैरेवाहोभिः पेरिसाख्यनगरमलंकुर्वाणो गीर्वाणवाणीसचरणे 'बर्नूफ' 'लेद्रोन्' नामस्वीयमित्रजनगणानानन्दयन् कतिपयमासांस्तत्र निवसति स्म । बर्लिनाभिधनगरे च कदा चिन्निवसन् जगन्मण्डलनाम्नि अलग्जाण्डरबोन् हम्बोल्डसाहिबकृतग्रन्थे साहाय्यमातन्वंस्ततोपि विविधं बहुमानं समपादयत् । यदीयाभ्यासशालिता संस्कृतविद्याचातुर्यैणां विविधदेशसंचारसमुत्पन्नानन्दनिकरैर्नन्दनमिव लन्दननगरं प्रति निवसद्भी राजकीयाधिकारिजनैः सबहुमानं पञ्चाशदधिकाष्टादशशततमे ईशवीयशके महाराज्ञीपाठशालायां संस्कृतप्रधानाध्यापकपदमधिष्ठापितस्तत्र बहून् विद्यार्थिनः संस्कृतनिपुणान् व्यधात् । षट्षष्ट्यधिकाष्टादशशततमे ऽब्दे संस्कृतपुस्तकानां मुद्रणाय श्रीमद्वेल्साभिधनगरयुवराजदत्तपरमाश्रयामध्यक्षीकृतड्यूकाफ्डोमालेतिसुप्रसिद्धनामधेयां नानाविधविद्वद्वनिकवरसभासत्सभाजितां सभां परोपकारधिया विराजयामास । स चायं सततं पाठनग्रन्थनिर्माणादिनिरत उद्भवसमये उपेक्षितेन यमपाशेनेव कण्ठगतेन रोगविशेषेण ग्रस्तो द्विसप्तत्यधिकाष्टादशशततमे ख्रीष्टाब्दे मार्चमासीयषष्ठदिने बुधवासरे प्रातर्द्वादशात्मरश्मीनवलम्ब्योत्तरोत्तरमुन्नतिमिच्छुः श्रीमन्मसीहदक्षिणकरावलम्बं संपादयितुमिव नाकमधिरुरोह । अनेन च बहवो ग्रन्था निर्मितास्तत्रातिविस्तृतः संस्कृतकोशः परमोपयोग्यप्रसिद्धसप्रमाणशब्दालिसमलंकृतो ऽपूर्ण एवास्ते । कृष्णमिश्रपण्डितनिर्मितस्य प्रबोधचन्द्रोदयनामनाटकस्य जर्मन्देशीयभाषया ऽवतारं चक्रे, यस्य प्रस्तावनां श्रीमान् ऐसेन्क्रान्साहिबो लिलेख । अयं च परमबुद्धिमान् पाणिनीयव्याकरणनिपुणो मानवकल्पसूत्रस्यात्यन्तं परिशोधितमुद्रितपुस्तके शास्त्रीयाणां कालक्रमसंबन्धिनीनां च जिज्ञासानां शोधनानि तत्परिचायिकारूपेण प्रकाशयन्, जैमिनिन्यायमालाविस्तरस्य मूलं च सशोध्य मुद्रयांचकार । तदीयकृतिश्च चतुर्भ्यो वर्षेभ्यः पूर्वम् 'अथेनिय'नामके शास्त्रीयोदन्तपत्रे परमदर्शनीया ऽऽसीत् । अयं पुनः शब्दशास्त्रार्थविचारिणीनाम्न्याः सभायाः सभ्यस्तत्र शब्दसादृश्यविषयं पुराणं चाधिकृत्य परमोत्तमान्संग्रहयोग्यान् वादानवदत् । परंतु दुरदृष्टदूषितचित्ता न केपि तत्रत्याः सभासदः सभालेख्यवृत्तान्तपत्रे तान् वादान् संघटयितुमेनं प्रेरयन्ति स्म । अनेन च वेस्टमिनिष्टर्रिव्यूनामकादिनियतपत्रेषु विषयदानेन साहाय्यमकारि । तत्रायं महान् विषयो रमणीयतमो महाभारताख्यः स चेदानीं परमोत्साहशालिभिः पृथङ्मुद्रितो विराजते । भारतवर्षीयपुराणं शास्त्रं चाधिकृत्य चेम्बरसाहिबाभिधमहाशयप्रकाशिते निखिलशब्दार्थप्रकाशककोशे संगृहीताः सर्वे एतद्विरचिता एव लेखाः सन्ति ।

अहोअहो पश्यतपश्यतैतस्य निस्सीमधीरतामुद्योगिसार्वभौमितां च, यदयं व्याकरणमहाभाष्यस्य जीर्णमेकं पुस्तकमुपलभमानस्तच्छोधने च पुस्तकनाशं संभावयन् फोटोग्राफाभिधयन्त्रेण यथावदाभास्य तत्र शुद्धाशुद्धविवेकपुरःसरं पुनर्मुद्रणे कृतप्रयत्नः श्रीमन्महाराज्ञ्या तत्साधनीभूतद्रव्यदानप्रतिश्रवेण जातपरमाश्रयः सादरं तन्मुद्रणे प्रवृत्तः प्राय एतद्धुर्धरकर्मणि प्रवर्तनेन शङ्कितरोगो निसर्गजनहितैषी, पुण्यकथायां नाटककाव्यादिषु दायभागव्यवहारेषु च विवादविषयेषु आचार्यइवायमेव सर्वजनानुमतवचनो मान्यजनमनोनन्दने नन्दनन्दनावरजः स्वीययशोराजिप्रकाशितदिङ्मण्डलो ऽमासोम इव केवलं कीर्तिमात्रावशेष इदानीं सुजनतां स्मरयति ॥

हा ! ! ! दायभागव्यवस्थानामतीवोपकारकोग्रन्थो निर्मातव्य इति महाशयस्याशयं क इदानीं संपाद्य सभासदां व्यवस्थाविदां चानन्दं जनयेत् ॥ कोवा तद्देशीयानां परमोपकाराय नवनवान् ग्रन्थान्निर्माय महासंस्कृतप्रवीणस्य हृद्यं संपादयेदिति वयं खिन्नमनसो महामहिमजगद्विचित्रचरितेन परमकारुणिकेन भगवतैवानन्दनीया इति मुहुर्मुहुः प्रार्थयाम इति शिवम् ॥

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO. AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 75. Benares, August 1st, 1872. Vol. VII.

## ॥ चिन्तामणेः शब्दखण्डम् ॥

(१) आचारमूलत्वं वेदस्य प्रवर्तकज्ञानजनकत्वेन भवतीति प्रवर्तकज्ञानं निरूप्यते ॥ (२) तत्राभिधासंक-

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

उपोद्घातसंगतिमाह । (१) आचारेति । प्रसङ्ग एवात्र संगतिरित्यन्ये । (२) तत्राभिधेति । तत्राभिधा लिङाद्यर्थः । सैव च प्रवृत्तिहेतुरिति भावः । तथाहि । लिङादेस्तावदभिधानामकः स्वनिष्ठो व्यापारो ऽवश्याभ्युपेयः, व्यापारभिन्नस्य परनिष्ठव्यापारजनकत्वं स्वनिष्ठव्यापारद्वारा, यथा दण्डस्य स्वनिष्ठस्पन्दद्वारा चक्रनिष्ठस्पन्दजनकत्वम् । अत्र च व्यापारे व्यभिचारवारणाय व्यापारभिन्नस्येति । व्यापारिणः स्वनिष्ठव्यापारजननेपि न व्यापारापेक्षा ऽनवस्थापत्तेरित्यत उक्तं परनिष्ठेति । ज्ञानद्वारैव लिङादि प्रवृत्तिं जनयत्विति शब्दाश्रया सा नायास्यतीत्यत उक्तं स्वनिष्ठेति । सा च शब्दाश्रयत्वात् शब्दभावनेत्युच्यते, अपरा चार्थविषयत्वेनार्थभावनेत्युच्यते, सा च सर्वाख्यातवाच्या । तदुक्तम् ।

> अभिधाभावनामाहुरन्यामेव लिङादयः ।
> अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥

अर्थात्मत्वमर्थविषयत्वम् । अर्थभावना च कर्म करणमितिकर्त्तव्यतां चापेक्षते, इत्यंशत्रयवती भवति । अन्यथा फलं स्वर्गादि सा न भावयेत् तस्यैतत्त्रितयाधीनत्वात् । एवं च

ल्पापूर्वभावनाज्ञानं न प्रवर्तकम् ।

शब्दभावनापि भावनात्वात् किं केन कथमिति अंशत्रयवती भवति, तदिदमाह ।

> लिङो ऽभिधा सैव च शब्दभावना
> भाव्या च तस्याः पुरुषप्रवृत्तिः ।
> संबन्धबोधः करणं तदीयं
> प्ररोचना चाङ्गतयोपयुज्यते ॥

इति । तत्र किमित्याकाङ्क्षायां प्रवर्तनीयपुरुषप्रवृत्तिर्भाव्या, सैव च कर्म, केनेत्याकाङ्क्षायां संबन्धबोध इति । अव्युत्पन्नस्य लिङादिपदादर्थप्रवृत्तेः संबन्धबोधेन तच्छक्तिग्रहरूपेण सहकारिणा सा प्रवर्त्तयतीत्यर्थः । कथमित्याकाङ्क्षायां प्ररोचनेति । प्ररोचना स्तुत्यर्थवादः, स च कर्मणः प्रशस्तत्वज्ञानमन्तरेणावसीदन्तीं प्रवृत्तिमप्रापयन्तीं विधिशक्तिं प्राशस्त्यज्ञानद्वारा उत्तम्भाति । प्रवृत्तिजननीं करोति । अत एव यत्र प्ररोचना न श्रूयते तत्रापि कल्प्यतइति तस्या विध्यविनाभाव इति । इदमत्र तत्त्वम् । अभिधापि न तत्त्वेन ज्ञाता स्वरूपसती वा हेतुरतिप्रसङ्गादिति प्रवर्त्तनात्वेन भावनात्वेन च ज्ञाता तथा, तथा च यज्यादिपदसमभिव्याहारेण यागादिजनकप्रवृत्तिजनकत्वग्रहे समानसंवित्संवेद्यतया यागादावपि कृतिसाध्यत्वभानम् । भाव्यानुपस्थितौ च भावनात्वेन ज्ञानमसंभवीति समभिव्याहृतफलं प्रति भावनात्वेन ज्ञायते । अत एवाश्रुतफलेपि विश्वजिदादौ फलं कल्प्यते । तथा चाभिधागतमिष्टसाधनत्वमपि भासते । तच्च क्रियागतमिष्टसाधनत्वं विना नेत्याक्षिप्तदिष्टसाधनताबोधोपि, तथा च प्रवर्त्त-

(३) तस्मिन् सत्यप्रवृत्तेः । असत्यपि प्रवृत्तेश्च । कार्यत्वज्ञानं प्रवर्तकमिति गुरवः । तथाहि । (४) ज्ञानस्य कृतौ जन्यायां चिकीर्षातिरिक्तं न कर्तव्यमस्ति । तत्सत्त्वे कृतिविलम्बे हेत्वन्तराभावात् । (५) चिकीर्षा च कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयेच्छा । (६) पाकं कृत्या साधयामीति तदनुभवात् । (७) सा स्वकृतिसाध्यताज्ञानसाध्या । (८) इच्छायाः स्वप्रकारकधीसाध्यतानियमात् । अत एव स्वकृतिसाध्ये पाके प्रवर्त्तते । न त्विष्टसाधनताज्ञानसाध्या । (९) स्वकृत्यसाध्येपि चिकीर्षापत्तेः । (१०) स्वकृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेत् । न । तदभावकारणत्वे गौरवात् । अथाभाव उभयसिद्धः, कृतिसाध्यताधीरसिद्धेत्यतो न लाघवावसर इति चेत् । न । यत्र शब्दादनुमानाद्वा दैवात्सा तत्र (११) लाघवावतारात् । इच्छायाः स्वप्रकारकज्ञान(१२)साध्यत्वनियमेन कृतिसाध्यत्वज्ञानस्यावश्यकत्वात् । (१३) जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वाच्च । व्याप्तिज्ञानविघटनद्वारानुमितिप्रतिबन्धकानैकान्तिकज्ञानवत् । (१४) अन्यथा स्वकृत्यसाध्यत्वानिष्टसाधनत्वोपेक्षणीयत्वनिष्फलत्वज्ञानं प्रतिबन्धकं क्रियाज्ञानमेव प्रवर्तकं कल्प्येत । ननु सनो धात्वर्थगोचरेच्छावाचित्वा(१५)ल्लाघवाच्च कृताविच्छा चिकीर्षा, सा च वृष्टाविवेष्टसाधनताज्ञानादिति चेत् । न । वह्निना साधयामीतिवत् कृत्या

---

नात्वभावनात्वज्ञानानुकूला ऽपरा शक्तिर्लिङादिपदे एव, अत एवैका प्रवृत्त्यनुकूला ऽपरा च ज्ञानानुकूला इति शक्तिचतुष्टयमिति ॥ अन्ये तु व्यवहारेण व्युत्पित्सुर्बालः स्वप्रवृत्तिजनकत्वेनावधारिते शक्तिं कल्पयति, तादृशी चेच्छैवेति, सैव लिङाद्यर्थ इत्याहुः ॥ अपरे त्वपूर्वमेव विध्यर्थो वैदिके तज्ज्ञानस्यैव प्रवर्त्तकत्वादित्याहुः ॥ अपरे तु प्रयत्नरूपभावनाज्ञानं प्रवर्त्तकमिति, सैव विध्यर्थ इति वदन्ति ॥ तदेतत्सर्वं दूषयति । (३) तस्मिन्नित्यादि । इदं च हेतुद्वयं यथायथं बोध्यम् । अभिधायां मानाभावेन तत्र तस्मिन् सतीत्यादिहेतोरनन्वयात् । इदमत्राकूतम् । पदतदर्थभिन्नायामभिधायां मानाभावः । व्यवहाराधीनव्युत्पत्तिबलेन शब्दस्य ज्ञानमात्रजनकत्वावधारणेन प्रवृत्तिजनकत्वाभावात् । भावे वा ऽऽवश्यकेष्टसाधनताज्ञानमात्रव्यापारत्वेनोपपत्तावभिधालक्षणव्यापारकत्वे मानाभावात् । न चोक्तनियमात् तत्कल्पनम् । नियमे स्वनिष्ठत्वस्य गौरवेणाप्रयोजकतया व्यर्थविशेषणत्वात् । अनुमित्यादिकरणव्याप्तिस्मृत्यादौ व्यभिचाराच्च । इच्छा ऽपि न लिङर्थः, तस्याः स्वरूपसत्या एव प्रवर्त्तकत्वेन ज्ञानफलकत्वशक्तेस्तत्राकल्पनात् । स्वर्गकामादिपदलभ्यत्वाच्च । अपूर्वज्ञानमपि न प्रवर्त्तकम् । अपूर्वपदादिना तज्ज्ञाने ऽप्यप्रवृत्तेस्तदज्ञानेपीष्टसाधनत्वज्ञाने प्रवृत्तेश्च । भावनाज्ञानमपि सर्वाख्यातसाधारण्याद् न प्रवर्त्तकमिति । (४) ज्ञानस्येति । साक्षादसाधनस्येति शेषः, तेन प्रवृत्तिविषयप्रत्यक्षे न व्यभिचारः । फलज्ञानं तु न प्रवर्त्तकमित्युक्तं प्रत्यक्षप्रकाशे । व्यापारीभूतां चिकीर्षां लक्षयति । (५) चिकीर्षा चेति । अत एव क्रियाविषयत्वं फलान्यविषयत्वं विशेषणं फलगोचरतादृशेच्छाया अप्रवर्त्तकत्वात् । अत एव कृत्यसाध्यक्रियायां तादृशेच्छासंभवेपि न कृतौ व्यापार इति क्रिया कृतिसाध्यत्वेन वास्तवेन विशेषितेत्याहुः । तच्चिन्त्यम् । गुरुतरभारोत्तोलनादौ कृत्यसाध्येपि तादृशेच्छायाः कृतौ व्यापारत्वात् । अत एव तत्र कृतिजन्य एव श्रम इति वक्ष्यते । तस्मात्काचित्काभिप्रायेण स्वरूपनिर्वचनं तदिति मन्तव्यम् । (६) पाकमिति । पाकं कृत्या साधयामीत्येवमाकारिकाया इच्छाया अनुभवात् । कृतिसाध्यत्वेन पाकमिच्छामीत्यनुभवेनेति शेषः । अन्यथा यथाश्रुते इतिशब्देनेच्छानुभवप्रकारकथनपरत्वलाभे विरोधादिति भावः । ततः किमित्यत आह । (७) सेति । स्वपदमत्र प्रवर्त्तकज्ञानं तादृशमिति कृत्वा, प्रकृते तु तदनन्तर्भावेप्यदोषादिति ध्येयम् । (८) इच्छाया इति । जन्येच्छायाः स्वप्रकारकधीसाध्यत्वनियमादित्यर्थः । (९) स्वकृत्यसाध्ये । स्वकृत्यसाध्यत्वेन ज्ञाते, अत एवाह । (१०) स्वेति । (११) लाघवावतारादिति । यद्यप्येवंविधलाघवावतारे त्वन्मते भेदाग्रहेपि न प्रवृत्तिहेतुः स्याद् अभेदग्रहापेक्षया गुरुत्वात् तथापि तद्धेतोरेवेति न्यायाद् अतिरिक्तविशिष्टज्ञानकल्पनागौरवाच्च युगपदुपस्थित्यभावेन तत्र तथा, अत्र तु युगपदुपस्थितौ लाघवादर इति भावः । (१२) साध्यत्वनियमेन, प्रयोज्यत्वनियमेनेत्यर्थः । तेन रजतस्मरणाजन्यभ्रमस्थलीयरजतेच्छायां तन्मते न व्यभिचारः । नन्वावश्यकत्वेपि रजतस्मरणवद्धेतुत्वं मास्त्वित्यत आह । (१३) जनकेति । साक्षादविरोधिन इति शेषः । तेन बाधादिबुद्धौ न व्यभिचारः । ननु जनकं विघटयत इत्येवास्तु लाघवा,त्तथा च स्वाभावं जनकं विघटयतस्तथात्वं स्यादित्यत आह । (१४) अन्यथेति । एवं तवापीष्टसाधनताज्ञानं हेतुर्न स्यादिति भावः । (१५) लाघवादिति । कृतिसाध्यत्वप्रकारेच्छापेक्षया कृतीच्छात्वस्य प्रवृत्तिनिमित्तस्य लघुत्वादित्यर्थः । तथा चेष्टसाधनताज्ञानादेव प्रवृत्तिरिति

साधयामीतीच्छाया: (१६) कृतिपूर्वमनुभूयमानाया: सन्नन्तावाच्यत्वेन गौरवेण च प्रत्याख्यातुमशक्यत्वात् । किं च पाकं चिकीर्षतीत्यत्र प्राधान्येन पाकस्येच्छाविषयत्वमनुभूयते न तु कृते: । (१७) धातोश्च सन्प्रत्ययाभिधेयेच्छाप्रकारवाचित्वमोदनं बुभुक्षतइत्यत्र भोजनविशेष्यतयौदनस्येच्छाविषयत्वानुभवात् । (१८) इष्टसाधनत्वेन वृष्टाविव कृताविच्छासंभवेपि कृतीच्छा न प्रवर्त्तिका, किं तु कृतिसाध्येच्छैव । घटं जानाति चिकीर्षति करोति इति ज्ञानचिकीर्षाप्रवृत्तीना(१९)मेकविषयत्वानुभवात् । (२०) अथ यदि (२१) कृत्या साधयितुमिच्छा सा, तदा चिकीर्षितस्य पाकस्यान्यत: सिद्धौ सा नापगच्छेत् । नह्युपायविशेषसाध्यत्वेनेच्छोपायान्तराधीनफललाभेन निवार्यते । प्रीत्या धनलाभेपि प्रतिग्रहेण तल्लिप्साया अनिवृत्तेरिति चेत् । न । स्व(२२)विषयसिद्धत्वस्य फलेच्छाविच्छेदस्य चोपायेच्छाविरोधित्वात् । (२३) अस्ति च तत्र पाकौदनयो: सिद्धत्वम्, अन्योदनेच्छायां पाकचिकीर्षा भवत्येव । प्रत्युतासिद्धत्वात् कृतावेवेच्छा न विच्छिद्येत । यदि कृतिविषयसिद्धत्वफलेच्छाविच्छेदौ न विरोधिनौ, प्रीत्या धनलाभे च तदधिकधनेच्छा न विच्छिद्यते । तस्यासिद्धत्वात् तत्फलेच्छाया: सत्त्वात् । धनमात्रार्थिनश्च प्रीत्या तल्लाभे प्रतिग्रहेण तल्लिप्सा नास्त्येव, धनमात्रस्य सिद्धत्वात् । किंचिद्विशेषस्य सिद्धावेव हि सामान्येच्छाविच्छेद: । अन्यथा सकलस्वविषयसिद्धेरसंभवेन तद्विच्छेदो न स्यादेव ॥ (२४) वस्तुतस्तु क्रियानुकूला कृतिरिष्टोपाय इति ज्ञाने क्रियाया: कृतिसाध्यत्वमिष्टोपायत्वं च भातं, (२५) क्रियाद्वारैव कृतेरिष्टसाधनत्वादिति तद्बोधात् कृताविव कृतिसाध्यत्वेन क्रियायामपि सैवेच्छेति चिकीर्षायां कृतिसाध्यत्वप्रकारनैयत्यम् । अत: कृतिसमानविषयचिकीर्षात्वेन चिकीर्षाया: कृतिकारणत्वं न तु कृतीच्छात्वेन, भिन्नविषयतया गौरवात् (२६) तथापि येन रूपेण यस्येष्टसाधनत्वं तेन प्रकारेण तत्रेच्छा । यथा स्वकेदारवृष्टित्वेनेष्टसाधनत्वात्तथैवेच्छा, तथा कृतिसाध्यत्वेन पाकस्येष्टसाधनत्वमत: कृतिसाध्यत्वेन तत्रेच्छा भवतीति कृतौ कृतिविषये वा चिकीर्षायां न वृष्टीच्छाविलक्षणसामग्र्यन्तरकल्पनमिति चेत् । भवेदेवं यदि कृतिसाध्यत्वेन पाकस्यौदनसाधनता स्यात् । न चैवं, गौरवात् । किं तु पाकत्वेन, स तु कृतिं विना नेत्यन्यदेतत् । वह्निना साधयामीतिवत् कृत्या साधयामीतीच्छा इष्टसाधनताज्ञानादेवेति वत् । (२७) तर्हि तत्र वह्निसाध्यताज्ञानवदत्रापि कृतिसाध्यत्वज्ञानं कारणमावश्यकं, कृतौ चानुभवसिद्धं

---

भाव: । (१६) कृतिपूर्वमिति । एतेन स्वतन्त्रान्वयव्यतिरेकित्वमुक्तम् । सन्नन्तवाच्यत्वमप्युपपादयति । (१७) धातोश्चेति । तथा च यथौदनादिविशेष्यकभोजनप्रकारेच्छा बुभुक्षा, तथा पाकादिविशेष्यककृतिप्रकारकेच्छा चिकीर्षेत्यर्थ: । एवं च सनो धात्वर्थप्रकारकेच्छावाचित्वमिति भाव: । यद्यप्येवमपि कृतिप्रकारकत्वमायाति न तु कृतिसाध्यत्वप्रकारकत्वं तथाप्यत्र कृतिप्रकारकेच्छैव चिकीर्षा, साध्यत्वं च विषये वैशिष्ट्यमर्यादया भासतइत्याहु: । ननु तथाप्युक्तलाघवेन कृतीच्छैव कृतिहेतु: तस्यापि प्रमाणसिद्धत्वादित्यत आह । (१८) इष्टेति । (१९) एकेति । एकविशेष्यकत्वेनेत्यर्थ: । यद्यपि गुरुमते ज्ञानादीनां नैकविषयत्वेन हेतुहेतुमद्भावस्तथापि परमतेनैतदुक्तमित्याहु: । स्वपक्षे दोषमपश्यन्नाह । (२०) अथेति । (२१) कृत्या, स्वकृत्या । (२२) विषयेति । स्वविषयसिद्धत्वज्ञानस्येत्यर्थ: । ज्ञानातिरिक्तेच्छायां तज्ज्ञानस्य तथात्वादित्याहु: । वस्तुत: सिद्धत्वज्ञानं नेच्छाविरोधि, किंतु विरोधिगुणान्तरमेव । परं तु तदा [illegible] हेत्वभावादयमिच्छा न जायते । एवं च धनादावुत्पन्ने ऽपि तदसिद्धत्वभ्रमसंभवान्नेच्छाविच्छेद इति सिद्धत्वज्ञाने सत्येव विच्छेद: । न तथा ज्ञाने । अनुमितिज्ञाने तु ज्ञाते तदभावात् तत् स्वरूपसदेव संदेहनिवृत्तिप्रयोजकम् । अत एव सिद्धत्वज्ञानमपि स्वरूपसदेव तथेति भाव: । (२३) अस्ति चेति । पाकसिद्धतया स्वविषयसिद्धत्वम् । ओदनसिद्धतया फलेच्छाविच्छेद इति भाव: । ननु कृतिसाध्यत्वप्रकारकेच्छां विनापि कृतीच्छास्थले प्रवृत्तेरनुभूयमानत्वेन व्यभिचारादनन्यगत्या भिन्नविषयकेच्छाया अपि हेतुत्वं कल्प्यमित्यत आह । (२४) वस्तुतस्त्विति । ननु कथं भासतइत्यत आह । (२५) क्रियाद्वारैवेति । साक्षात्साधनत्वबाधे परंपरासाधनत्वमादायैव साधनत्वप्रतीतिरिति सिद्धान्तात् क्रियाद्वारत्वभाने तदुभयं भाति । तज्जन्यत्वे सति तज्जन्यजनकत्वस्यैव द्वारत्वादित्येके । क्रियानुकूला कृतिरित्यत्र समानसंवित्संवेद्यतया कृतिसाध्यत्वभानमित्यपरे । (२६) तथापीति । स्वकेदारवृष्टित्वज्ञानवत् कृतिसाध्यताज्ञानमिष्टसाधनोपक्षीणमिति भाव: । (२७) तर्हीति । अनन्यथासिद्धान्वयाद्यनुविधायित्वादिति

चिकीर्षाधीनत्वं विशेषः, तेन प्राणपञ्चकसंचारे (२८) जीवनयोनिकृतिसाध्ये न प्रवृत्तिः । अन्यथा कृतिसाध्येष्टसाधनतापक्षेऽपि तत्र प्रवर्त्तेत । (२९) ननु चिकीर्षाधीनत्वस्योपलक्षणत्वे उपलक्ष्यमात्रगतानतिप्रसक्तधर्माभावात् कृतिमात्रस्य चातिप्रसङ्गात्तत्तत्कृतिविशेषा उपलक्ष्याः, तथा च तदननुगमात्प्रवृत्त्यननुगमः । विशेषणत्वे चिकीर्षायां प्रवृत्तौ च चिकीर्षाज्ञानकारणत्वे गौरवं, (३०) प्रमाणाभावश्च । किं च चिकीर्षासाध्यावस्थायाः कृतेः सिद्धावस्थसाधनत्व(३१)विरोधेन कृतिसाध्यता पाकादौ न ज्ञायेतेति चेत् । न । अस्ति हि कृतिविशेषो मानसप्रत्यक्षसिद्धः जीवनयोनियत्नव्यावृत्तः चिकीर्षोपलक्ष्यः, यत्र चिकीर्षाकारणत्वग्रहः, (३२) स

---

भावः । (२८) जीवनयोनीति । ननु तद्धेतोरेवेति न्यायात् प्राणपञ्चकसंचारो जीवनादृष्टजन्य एव न तु तज्जन्यकृतिजन्य इति चेत् । अत्र वदन्ति । वायूदीरणत्वेन भस्त्रावायूदीरणवत् तस्यापि यत्नजन्यत्वानुमानात् । न च बाह्यवायूदीरणत्वेन व्यभिचारः, तस्यापीश्वरजन्यत्वादिति । तन्न । एवं हीश्वरयत्नेनैव प्रकृतेरर्थान्तरं स्यात् । यदि जन्ययत्नजन्यत्वं साध्यं तदोक्तव्यभिचारानुद्धार एव । ईश्वरस्य परैरनङ्गीकाराच्च ॥ अन्ये तु धावतः प्रयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनात् श्वासक्रियात्वावच्छेदेन प्रयत्नजन्यत्वम् । सुषुप्त्यादिकाले च प्रयत्नान्तराभावात् तज्जन्यत्वम् । किं च समाधिस्थानां श्वासधारणे श्वासक्रियाप्रतिबन्ध इत्यविवादम् । जीवनादृष्टं तु तदापि लब्धवृत्ति, तथा च जीवनयोनिकृतिव्यतिरेकादेव तत्र श्वासक्रियाविरह इति तत्र तज्जन्यत्वमिति वदन्ति ॥ यद्यपि संचारोद्देशेन प्राणे प्रवृत्तिरापाद्या, सा च प्राणातीन्द्रियतया न संभवति, प्रवृत्तिविषयप्रत्यक्षस्य तद्धेतुत्वात्तथापि तन्मते प्राणस्य प्रत्यक्षत्वादिदमुक्तम् । अस्मन्मते तु प्राणवहनाडीभ्यामतिप्रसङ्गो बोध्यः । न च मनोवहनाडीवत्तत्रेष्टापत्तिः, फलबलेन तत्रैव तथाभावात् । अस्यास्तु फलाभावेन फलवत्प्रवृत्तिविषयत्वायोगादित्याहुः ॥ ननु विषभक्षणादिव्यावर्त्तकं स्वविशेषणवत्ताप्रतिसंधानजन्यत्वं कार्यताज्ञाने विशेषणमावश्यकं तत एवोक्तातिप्रसङ्गवारणे चिकीर्षाधीनत्वविशेषणं व्यर्थमेवेति चेत्, न । अहं कृतिसाध्यप्राणपञ्चकसंचारो जीवित्वादित्याद्यनुमानसंभवात् । अत एव भ्रमेऽप्यतिप्रसङ्गवारणार्थं विशेषणोपादानमिति भावः । न च यत्कृतिसाध्यताज्ञानं ततः सा कृतिरिति जीवनयोनिकृतिसाध्यताज्ञानात्सैव कृतिरिति नोक्तातिप्रसङ्ग इति वाच्यम् । तादृशज्ञानं विनापि जीवनयोनिकृत्युत्पादेन व्यभिचारात्तस्यास्तज्ज्ञानाजन्यत्वात् । तस्मात् प्रयत्नरूपकृतिविशेषं प्रत्येव तज्ज्ञानस्य हेतुत्वं तत्र चातिप्रसङ्गनिरासाय चिकीर्षाधीनत्वं विशेषणमावश्यकम् ॥ अत्रवदन्ति । कृतिसाध्यताधीरेव हेतुर्न तु कृतावुक्तविशेषणापेक्षा । तथाहि, चिकीर्षाधीनकृतिसाध्यताज्ञानस्य हेतुत्वेऽपि प्रकृते चिकीर्षाधीना कृतिरयोग्यैव विषयस्वाभाव्यादित्येव बीजम् । तथा च कृतिसाध्यताधीरेव चिकीर्षाधीनकृतौ कारणम् । तथा च तथा ज्ञानेऽप्युक्तस्थले चिकीर्षाधीनकृतिरयोग्यत्वादेव नोत्पद्यते । न चान्वयव्यभिचारः । तादृशविषयविलम्बादेव विलम्बात् । अन्यथा भ्रमेण चिकीर्षाधीनकृतिसाध्यताज्ञाने चिकीर्षायामपि प्राणपञ्चकसंचारे प्रवृत्त्यापत्तेर्वज्रलेपायमानत्वात् । ननु चिकीर्षाधीनत्वं न ज्ञातं तन्त्रं येन चिकीर्षाधीनकृत्यसाध्यमपि तादृशकृतिसाध्यत्वेन बुध्येतेति कथं भ्रमनिबन्धनोऽतिप्रसङ्ग इति चेन्न । चिकीर्षाधीनत्वेनोपलक्षितकृतिविशेषासाध्यस्य प्राणपञ्चकसंचारादेस्तत्साध्यत्वभ्रमसंभवात् । अन्यथा सुखेऽतिप्रसङ्गभङ्गायोपायविषयत्वविशेषणप्रवेशापत्तेः । न चान्वयव्यभिचारः । सिद्धे इच्छाभाववद्व विषययोग्यताविलम्बादेव विलम्बात् । न च तत्रासिद्धत्वज्ञानविलम्बाद् विलम्ब,स्तद्वदिहापि तादृशविषययोग्यताज्ञानहेतुत्वौचित्या,देवं भ्रमेऽतिप्रसङ्गवारणाय स्वपदप्रवेशोऽप्यनावश्यकः । तस्य तादृशकृत्ययोग्यत्वादिति ॥

अत्र ब्रूमः । स्वेच्छाधीनकृतिसाध्यताज्ञानं प्रवर्तकमित्यर्थे स्फुटम् । स्वेच्छाधीनत्वं च न ज्ञातं तन्त्रं, किं तु स्वरूपसत् । एवं च वस्तुगत्या स्वेच्छाधीना या कृतिः तत्साध्यताज्ञानस्य प्रवर्तकत्वे प्राणपञ्चकसंचारस्थले तादृशकृतेरसिद्धतया तद्भ्रमासंभवेन तन्निबन्धनातिप्रसङ्गाभावात् । एवं च यथाश्रुतेनैवोपपत्तौ कृतिसाध्यताज्ञानेऽवच्छेदककल्पनैवातिप्रसङ्गनिरासाय युज्यते, न तु तादृशकृतिविषययोग्यताज्ञानरूपहेत्वन्तरकल्पनं, गौरवादिति मन्तव्यम् । न च सुखेऽतिप्रसङ्गनिरासाय तस्यावश्यकत्वमिति वाच्यम् । उपायेच्छाधीनकृतितः सुखसंभवे तत्रापि स्वेच्छाधीनकृतेरसिद्धतया तादृशज्ञानासंभवेनातिप्रसङ्गाभावात् । यथा फलज्ञानं फलेच्छा वा न प्रवर्तिका तथोक्तं प्रत्यक्षप्रकाशे । अस्तु वा स्वचिकीर्षाधीनत्वं विशेषणम् । सुखचिकीर्षाजन्या न कृतिरित्यर्थे स्फुटत्वादिति । तटस्थः शङ्कते । (२९) नन्विति । ननु सप्रमाणकत्वाच्याप्यमित्यत आह । (३०) प्रमाणेति । (३१) विरोधेनेति । तत्साध्यत्वभाने समानसंवित्संवेद्यतया साधनत्वभानमिति भावः । ननु को धर्मस्तत्कार्यतावच्छेदक इत्यत आह । (३२)

च तवापि जातिरूपो (३३) मम (३४)त्वनुगतकारणो-पाधिरूपः । (३५) एवं च चिकीर्षाधीनत्वेनानुगतेन कृतिविशेषाणामुपलक्ष्याणामनुगतत्वमपि । (३६) यथा गोत्वेन तटस्थेनोपलक्षिता महिष्यादिव्यावृत्तधानकर्मव्यक्तिविशेषा धेनुपदेनोच्यन्ते, न तु गोत्वमपि, तथा चिकीर्षापि । एवं जीवनयोनियत्नव्यावृत्तकृतिविशेषाणां कृतित्वेन ज्ञानं कारणमिति नाननुगमः । ननु कृतिसाध्ये न कृतिर्विशेषणम्, । असत्त्वात्, सत्त्वे वा कृतौ सत्यां ज्ञानं, ज्ञाने च कृतिरित्यन्योन्याश्रयः । नोपलक्षणमतिप्रसङ्गादिति चेत् । न । कृतिर्हि ज्ञाने विषयतया विशेषणमेव । साध्ये च परिचायकतयोपलक्षणम् । अन्यथा इष्टसाधनेपि इष्टं न विशेषणमसत्त्वात् । नोपलक्षणमतिप्रसङ्गात् । (३७) लिङ्गज्ञानादौ वा का गतिः । नन्वेवं भोजनादिनान्तरीयकश्रमेपि चिकीर्षा स्यात्, तस्यापि चिकीर्षाधीनकृतिसाध्यत्वात् । (३८) अत्र श्रमस्तु भोजनादिक्रियासाध्यो, न तु तत्कृतिसाध्यो ऽचिकीर्षितत्वात् । (३९) कृतेः स्वध्वंससाक्षात्कारातिरिक्ते (४०) चिकीर्षाविषयमात्रे जनकत्वात् । (४१) नहि भोजनादिचिकीर्षाधीनकृत्या गमनं साध्यतइति के चित् । तन्न । गुरुतरभारोत्तोलने कृत्यसाध्ये भ्रमात् प्रवृत्तस्य (४२) निगडनिश्चलदेहस्य वा कृतौ सत्यामुत्तोलनचलनक्रियानुत्पादेपि श्रमानुभवात् कृतेरेव कारणत्वात् । न तु तज्जन्यक्रियायाः । (४३) सुखे व्यभिचाराच्च । (४४) नहि सुखं कृतिकारण(४५)चिकीर्षाविषयः । उपायचिकीर्षाजन्या हि कृतिः न तु सुखचिकीर्षाजन्या । चिकीर्षाजन्यकृतिसाध्यत्वं न श्रमे, द्वेषयोनियत्नादपि तदुत्पत्तेरित्यपरे । तन्न । (४६) शत्रुवधस्येष्टसाधनत्वेन चिकीर्षाजन्यकृतिसाध्यत्वाद् द्वेषस्य यत्नाजनकत्वात् । द्वेषसिद्धिस्तु शत्रुं द्वेष्मीत्यनुभवबलात् । यत्तु श्रमः कृतित्वेन कृतिसाध्यो न चिकीर्षाधीनकृतित्वेन, यद्यचिकीर्षितेपि श्रमे चिकीर्षाधीनकृतित्वेन कारणता स्यात्तदा चिकीर्षितमेव भोजनं कृत्या साध्यते नाचिकीर्षितं गमनादीति न स्यात् । श्रमवद्गमनेपि तज्जन्यत्वप्रसङ्गात् । भोजनादिश्च चिकीर्षाधीनकृतिविशेषात् । स हि कृतिमात्रं व्यभिचरति जीवनयोनिकृतेस्तदनुत्पादात् । यद्वा श्रमो न भोजनकृतिसाध्यः, किं तु तन्निरन्तरोत्पन्नाज्जीवयोनियत्नादेवेति । (४७) तन्न । नहि कृतित्वेन श्रमजनकत्वं, नापि कृत्यन्तरादेव श्रमो-

---

स चेति । (३३) ममेति । गुणगतजात्यनङ्गीकर्तुरित्यर्थः । (३४) अनुगतेति । अनुगतकारणे चिकीर्षालक्षणे उपाधिरूपस्तत्तद्व्यक्तित्वरूप इति यावत् । कार्यतावच्छेदकस्याननुगतस्यादोषत्वात् । न त्वनुगतकारणघटित उपाधिः चिकीर्षाजन्यत्वलक्षण इत्यर्थः । तज्जन्यत्वे ग्राह्ये तज्जन्यत्वस्यानवच्छेदकत्वात् । यत्तु अनुगतकारणप्रयोज्यानुगतोपाधिरूप इत्यर्थ इति । तन्न । तस्यैवानुगतत्वे चिकीर्षाधीनत्वेनानुगतत्वमित्यग्रिमग्रन्थविरोधात् । एवं पूर्वोक्ताननुगममुद्धरति । (३५) एवं चेति । यथा धूमत्वावच्छेदेन वह्निजन्यत्वग्रहेपि धूमालोकादीनां वह्निजन्यत्वमनुगतं तथा तत्तत्कृतित्वाद्यवच्छेदेन चिकीर्षाजन्यत्वग्रहेपि चिकीर्षाजन्यत्वं सर्वानुगतमित्यर्थः । नन्वेवं चिकीर्षापि लिङादिपदशक्या स्यादित्यत आह । (३६) यथेति । (३७) लिङ्गज्ञानादाविति । अतीतलिङ्गज्ञानादावित्यर्थः । नन्वेवं श्रमेपि चिकीर्षाधीनकृतिसाध्यताज्ञानात् प्रवर्त्तेतेत्यत्र कस्य चित्समाधानमाह । (३८) श्रमस्त्विति । नन्वचिकीर्षितमपि तथास्त्वित्यत आह । (३९) कृतेरिति । कृतित्वेन जनकत्वे नियमो ऽयमित्यत्र स्वध्वंसेत्यादेस्तात्पर्यम् । तेन स्वाश्रयवृत्तिगुणान्तरध्वंसे विरोधिगुणत्वेन कृतेर्जनकत्वे ऽपि न दोषः । यद्यप्येवमप्यदृष्टादिकं प्रति कृतित्वेन कृतेर्जनकत्वाद्व्यभिचार एव तथापि तद्भिन्नत्वेनापि विशेषणीयमिति भावः । (४०) चिकीर्षेति । स्वजनकचिकीर्षाविषयमात्रइत्यर्थः । अप्रयोजकत्वनिरासायाह । (४१) नहीति । ननु तत्राप्यङ्गचालनक्रियाजन्यः श्रम इत्यरुचेराह । (४२) निगडेति । आमवातजडीकृतकलेवरस्योत्थातुकामस्येत्यपि बोध्यम् । उक्तव्याप्तौ व्यभिचारमाह । (४३) सुखइति । तस्य स्वजनकचिकीर्षाविषयत्वाभावादिति भावः । तदेवाह । (४४) नहीति । तत्रैवान्येषां समाधानमाह । (४५) चिकीर्षेति । (४६) शत्रुवधस्येति । प्रतियोगिविषयद्वेषस्य भिन्नविषयतया गौरवेणाप्रवर्त्तकत्वात्, किं तु लाघवेन समानविषयकेच्छाया एव । नन्वेवं तन्निवृत्तौ द्वेष एव हेतुरुक्तयुक्त्येति चेत् । न । दृष्टत्वात् । तदुक्तं कुसुमाञ्जलौ, रागद्वेषविनाभावेपीत्यादि । न च निवृत्तिप्रयत्नतोपि श्रमे पूर्वपक्षतादवस्थ्यमिति वाच्यम् । निवृत्तिप्रयत्नस्य क्रियां प्रत्यजनकत्वेन तच्छ्रमजनकत्वस्य शङ्कानास्कन्दतया प्रवृत्तिहेतुत्वस्यैव द्वेषे शङ्कितत्वादित्याहुः । वस्तुतस्तु प्रवृत्तिविरह एव निवृत्तिः, तथा च प्राचीनमते ऽनुशयप्रकाश एवायं ग्रन्थकृत इति प्रपञ्चितमस्माभिरनुमानप्रकाशे । उभयमपि दूषयति । (४७) तन्नेति । कृत्यन्तरात्, जीवनयोनियत्नात् । उभयहेतुमाह ।

त्पत्तिः (४८) जीवनयोनियत्ने सत्यपि भारोद्वहनादिकमकुर्वतस्तादृशश्रमाननुभवेन (४९) तस्य श्रमाजनकत्वात्। तस्माद्भोजनादिवत् श्रमविशेषाणामपि भोजनादिकृतिसाध्यत्वमनन्यगतिकत्वात्। सुप्तस्य स्वेदाद्यनुमितः श्रमस्तज्जन्य इति चेत्। न। स्वेदादेः श्रमान्यहेतुकत्वात्। (५०) अन्यथा जागरेपि (५१) तदनुवृत्तौ श्रमानुवृत्तिप्रसङ्गादिति। (५२) मैवम्। स्वेच्छाधीनत्वस्य कृतिविशेषणत्वात्। (५३) श्रमश्च नियमतोन्येच्छाधीनकृतिसाध्यः, श्रमे दुःखत्वेनेच्छाविरहात्। अत एवान्येच्छाजन्यकृतिसाध्यत्वेन श्रमो नान्तरीयक इत्युच्यते। (५४) स्वचिकीर्षाधीनत्वं तु न कृतौ विशेषणं, (५५) गौरवात्। अन्ये तु कृतिगतं (५६) धर्मान्तरमेवोद्देश्यत्वं तद्विशिष्टकृतिसाध्यश्च न श्रमः। (५७) अचिकीर्षितत्वात्। किं तु कृतिमात्रसाध्यः। (५८) अत एव कष्टं कर्मेत्यनुभवो लोकानाम्। (५९) एवं चिकीर्षायां ममैकं कृतिसाध्यत्वं प्रयोजकं, तव तु कृतिसाध्यत्वे सति इष्टसाधनत्वं सुखत्वं दुःखाभावत्वं चेति (६०) चतुष्टयम्। इच्छाप्रयोजकं तु मम सुखत्वं दुःखाभावत्वं चेति (६१) द्वयम्। (६२) वृष्टिसाध्ये सुखे हीच्छा वृष्टिमपि विषयीकरोति, न त्विष्टसाधनत्वेन तत्र इच्छासाधनत्वस्येच्छाविरोधित्वात्। तव तु त्रयम्। (६३) विषभक्षणे कृतिसाध्यत्वेपि बलवदनिष्टसाधनत्वेन चिकीर्षा नास्तीति कृतौ चिकीर्षाजन्यत्वं विशेषणमिति कश्चित्। तत्तुच्छम्। (६४) एवं हि विषभक्षणं कृतिसाध्यमेव न स्यात्। जीवनयोनिकृतेस्तस्यानुत्पत्तेरिति व्यर्थं विशेषणम्। स्यादेतत्। इष्टसाधनताभ्रमाद्विषभक्षणे चैत्यवन्दने च चिकीर्षाजन्यकृतिसाध्यत्वमस्ति, ज्ञानप्रयुक्तत्वात्कार्यत्वस्य। तथा च संजातबाधेपि तत्र कार्यत्वज्ञानात्प्रवर्तेत, तथा तृप्तोपि (६५) भोजने। ननु कृतिसाध्यतानुभवस्तथा। अन्यथेष्टसाधनतास्मरणे विषभक्षणेपि प्रवर्तेत। न चेष्टसाधनताज्ञानं वेदो वाऽनुभावकमस्तीति चेत्, न। (६६) वस्तुतस्तत्र कृतिसाध्यत्वे लिङ्गान्तरेणाप्तवाक्येन वा तदनुभवसंभवात्। लिङ्गाभासाच्छब्दाभासाद्वाऽप्रवृत्तिप्रसङ्गाच्च। (६७) भेदाग्रहवादिनस्तत्र तव तदनुभवाभावात्।

(४८) जीवनयोनीति। यद्यपि चिकीर्षाधीनकृतिमात्रादपि न श्रम इति कृतिविशेषस्तादृशो वाच्यस्तथा च जीवनयोनिकृतिविशेष एव तथास्त्विति नायं परिहारस्तथापि चिकीर्षाधीनकृतौ क्रियाविशेषरूपविषयवैलक्षण्यात् ततः श्रमो, न च जीवनयोनिप्रयत्ने तथेति वैषम्यमित्याशयः। तादृशेति संपातायातं, श्रमाननुभवेनेत्येव विवक्षितम्। (४९) तस्येति। जीवनयोनिप्रयत्नस्येत्यर्थः। श्रमहेतुत्वे किं बाधकमत आह। (५०) अन्यथेति। (५१) तदनुवृत्तौ, स्वेदानुवृत्तौ। स्वकारणीभूतश्रमानुवृत्तिप्रसङ्गादित्यर्थः। जीवनयोनियत्नानुवृत्तौ तज्जन्यश्रमानुवृत्तिप्रसङ्गादित्यर्थ इत्यन्ये॥ एकदेशिना समाधानं निरस्य स्वयं समाधत्ते। (५२) मैवमिति। (५३) श्रमश्चेति। इष्टसाधनीभूत इत्यर्थः। इष्टसाधनीभूतश्च मल्लादेः श्रमः स्वेच्छाधीनकृतिसाध्यः प्रवृत्तिविषयश्चेतिभावः। न च फलेच्छाया हेतुत्वात्तां विना कथं श्रमे प्रवृत्तिरापाद्यतइति वाच्यम्। तस्या इष्टसाधनतालिङ्गोपक्षीणत्वेनाहेतुत्वात्। अन्यथा तन्मते नित्ये प्रवृत्तिर्न स्यात्। फलेच्छायास्तत्राभावादिति भावः। (५४) स्वचिकीर्षेति। यद्यपि प्रवर्त्तकं ज्ञानं न स्वेच्छाधीनत्व चिकीर्षाधीनत्वं वाऽवगाहते किं तु तदुपलक्ष्यकृतिविशेषे वस्तुत एतदुभयमस्तीति किं लाघवेन। तथापि कारणताग्राहकेणावच्छेदकतया तत्र धर्मान्तरमवश्यं ग्रहीतव्यमिति तत्र लाघवावतार इति भावः। (५५) गौरवादिति। कृतिसाध्यत्वप्रकारकत्वभागप्रवेशादिति भावः। (५६) धर्मान्तरम्, अनित्यम्। (५७) अचिकीर्षितत्वादिति। चिकीर्षितस्यैव तादृशकृतिसाध्यत्वाभ्युपगमादिति भावः। (५८) अत एवेति। यत एव कृतिमात्रसाध्यः श्रमोऽत एव कमेकार्यजातं कष्टं श्रमसंवलितमिति सार्वलौकिकोनुभव इति भावः। धर्मान्तरकल्पने गौरवमिति विपरीतं, तदाह। (५९) एवमिति। (६०) चतुष्टयमिति। सत्यन्तं सर्वत्रान्वितं कृतिसाध्यत्वमादाय चतुष्टयत्वं बोध्यम्। भोगेपि चिकीर्षासंभवमादायैव चतुष्टयत्वमित्यन्ये। (६१) द्वयमिति। भोगेच्छाभ्युपगमे भोगत्वमपि बोध्यम्। नन्वेवं वृष्टाविच्छा न स्यादित्यत आह। (६२) वृष्टीति। सुखेच्छायां सुखत्वमिवावच्छेदकतया वृष्टिरपि विषय इति भावः। प्रवर्तकज्ञाने चिकीर्षाधीनत्वप्रयोजनं कैश्चिदुक्तं तदुपन्यस्य निराकरोति। (६३) विषेति। (६४) एवं हीति। द्वेषयोनिप्रयत्नस्तु नास्त्येव तत्सत्त्वे वा ततोपि तदनुत्पत्तेः। तस्य निवृत्तिरूपत्वादिति भावः। तथा विषभक्षणव्यावृत्त्यर्थं तद्विशेषणं ततस्तद्व्यावृत्त्यभावादिति भावः। भ्रमादिति नैयायिकमतेन। (६५) भोजनइति। न च फलेच्छाविच्छेदः प्रतिबन्धक इति वाच्यम्। तस्याः प्रवृत्तिजनकज्ञानोपक्षीणत्वात्। अन्यथा तन्मते नित्ये प्रवृत्तिर्न स्यादित्याशयात्। आद्यप्रवृत्तौ व्यभिचार इति दूषणमन्त्ये च दोषान्तरमाह। (६६) वस्तुत इति। (६७) भे-

मैवम् । (६८) स्वविशेषणवत्ताप्रतिसधानजन्यं हि का-
र्यताज्ञानं प्रवर्त्तकम् । तथाहि । काम्ये पुरुषविशेषणं का-
मना, ततः काम्यसाधनताज्ञानेन यागपाकादौ कार्यता-
ज्ञानम् । नित्ये च कालशौचादिस्वविशेषणं, तथा चै(६९)
तत्संध्यायामहं कृतिसाध्यसंध्यावन्दनः, (७०) संध्या-
समये शौचादिमत्त्वात्, पूर्वसंध्यायामहमिवेति कार्यता-
ज्ञानं शौचादिस्वविशेषणज्ञानजन्यम् । तदुक्तम् । स का-
र्यविशेषः (७१) पुरुषविशेषणावगतः प्रवृत्तिहेतुरिति ।
संजातबाधस्य च विषभक्षणे चैत्यवन्दने च भ्रमदशाया-
मिव नेष्टसाधनताज्ञानमस्ति येन तज्जन्यकार्यताज्ञाना-
त्प्रवर्तेत । तृप्तस्य च तृप्तौ कामनाविरहेणेष्टसाधनताज्ञा-
नाभावान्न तथा बोधः । अन्ये त्वात्मनो जीवित्वप्रति-
संधानजन्यं भ्रमे कृतिसाध्यताज्ञानं संभवतीति जीवन-
व्यतिरिक्तत्वं स्वविशेषणे विशेषणमिति । तन्न । भ्रमे स्वेच्छा-
धीनकृतिसाध्यताभावात् । इष्टसाधनतालिङ्गकं कार्यता-
ज्ञानं प्रवर्तकमित्यपरे । तन्न । (७२) नित्ये तदभावात् ॥

---

दायहेति । तथा च स्मृतिसाधारणं कृतिसाध्यताज्ञानमेव हे-
तुस्तच्चास्त्येवेति प्रवृत्त्यापत्तिरिति भावः । न च भाविर्यौव-
राज्यातिप्रसङ्गनिरासायेदानीं कृतिसाध्यताज्ञानं प्रवर्त्तकं, स्मर-
णे चानुभवगोचरकालविशेषस्याभानात्कथं प्रवृत्त्यापत्तिरिति
वाच्यम् । स्मृत्यापि स्वकालस्यानुभवगोचरस्यैव ज्ञानसामान्य-
सामग्रीमहिम्ना विषयीकरणात् । अतीताद्यगोचरज्ञानस्य व-
र्त्तमानसमानविषयतानियमादित्याहुः । (६८) स्वविशेषणव-
त्तेति । स्वस्य प्रवर्त्तमानपुरुषस्य यद्विशेषणं कामनादि तद्वत्ता
तद्वर्त्तमानता तत्प्रतिसंधानजन्यमित्यर्थः । नन्वाद्यप्रवृत्तौ
कार्यतास्मरणस्य हेतुत्वात् तस्य च तत्प्रतिसंधानाजन्यत्वाद्
व्यभिचारः । एवं भेदाग्रहवादिनो विसंवादिप्रवृत्तावपि तथा ।
न च परंपरया पूर्वानुभवद्वारा तत्प्रतिसंधानजन्यत्वाच्च त-
थेति वाच्यम् । एवं हि संजातबाधस्यापि कार्यतास्मरणाद्वि-
षभक्षणे प्रवृत्त्यापत्तेरिति चेत् । न । तदतिरिक्तस्थले हेतुत्वा-
दित्येके । अन्ये तु अनाद्यप्रवृत्तौ तद्धेतुः, विसंवादिप्रवृत्तिस्थलेपि
स्वतन्त्रकार्यत्वस्मृतिरूपस्य इष्टसाधनत्वरूपतत्प्रतिसधाना-
धीनत्वादित्याहुः ॥ अपरे त्वाद्यप्रवृत्तावपि स्मरणरूपेष्टसाधन-
त्वरूपतत्प्रतिसधानाधीनं मत्कृतिविशेषसाध्यमिति ज्ञानं प्रव-
र्तकं, तच्च न स्मृतिरूपं, पूर्वं तादृशानुभवाभावात् । किं तु व्या-
प्त्यादिस्मृतौ सत्यामिष्टसाधनतालिङ्गकमेव तत्र कार्यताज्ञानम् ।
न चैवमग्रिमग्रन्थविरोधः । तस्य मतान्तरेणाभिधानादित्याहुः ॥
नन्वहं कृतिसाध्यविषभक्षणः पुरुषत्वादित्यादिना तादृशका-
र्यताज्ञानं सजातबाधस्याप्यस्तीत्यतिप्रसङ्ग इति चेत् । अत्र
वदन्ति । मदीयेदानींतनेच्छाविषयसाधनत्वशुचित्वसमाना-
धिकरणविहितकालजीवित्वप्रतिसंधानात्मकविशेषद्वयसाम-
ग्रीसहितस्यैव तस्य जनकत्वं, न चेदमुभयं विषभक्षणादाव-
स्तीति । एवं स्वविशेषणवत्ताप्रतिसंधानजन्यत्वात्सर्वस्यैव
कार्यताज्ञानस्य सामान्यसामग्रीत्वमित्यत्र किं मानमिति चि-
न्त्यम् ॥ के चित्तु यस्मिन्विशेषणे सति अननुष्ठाने ऽनिष्टावा-
प्तिरिष्टहानिर्वा तदिह विवक्षितं, कामनायां सत्यामननुष्ठाने
इष्टस्यौदनादेर्हानिः । एवं शौचे ऽननुष्ठाने पापावाप्तिः । पुरुष-
त्वादिकं तु न तथेति नोक्तातिप्रसङ्ग इत्याहुः । तदपि चि-
न्त्यम् । इष्टहान्यादेरननुगमेन विशेषणस्याननुगमात् । यदि
चान्यतरत्वादिना तदनुगमस्तदा कामनाद्यन्यतरप्रतिसंधानज-
न्यत्वमेवास्तु लाघवात् । यदि चान्यतरत्वं न कारणताव-
च्छेदकप्रविष्टमन्यथा तृणाद्यन्यतमत्वेनापि हेतुत्वं स्यादिति
मन्यसे तदा तुल्यमिति । वस्तुतः स्वविशेषणवत्ताप्रतिसंधा-
नजन्यत्वेन हेतुत्वमिति न प्रकृतग्रन्थार्थः, किं तु तज्जन्य-
मित्येव, तथा च प्रवृत्तिसामान्ये कार्यताज्ञानत्वेन हेतुता,
काम्यनित्ययोश्च विशेषसामग्रीद्वयमिति । एवं चाग्रे स्वेच्छा-
धीनत्वन भ्रमे समाधानमभ्युपगमवादेनेति मन्तव्यम् । नित्ये
चेत्युपलक्षणं, नैमित्तिकेपि शौचादिमत्त्वे सति निमित्तवत्त्वं
तथेति ध्येयम् । (६९) एतत्संध्यायामिति । इदं तु प्राथमि-
कमनुमानं, नत्वेतदेव प्रवर्त्तकं, प्रवृत्तिविशेष्यकज्ञानस्यैव प्रव-
र्त्तकत्वात्, किं तूक्तानुमाने सति सध्योपासनमिदानीं मत्कृ-
तिसाध्यं मत्कृतिनिष्ठहेतुताप्रतियोगिककार्यताधिकरणत्वात्,
इत्यनुमानम् । न च सिद्धिः । एकवित्तिवेद्यतया प्रथमानुमा-
नेन तद्ग्रहात् । अत एव प्राक्तदपेता । उक्तानुमानानन्तरं तद्वि-
शेष्यकं मानसमेव वा ज्ञानं प्रवर्त्तकमित्याहुः । तच्चिन्त्यम् ।
तस्य स्वविशेषणवत्ताप्रतिसंधानाजन्यत्वेनाप्रवर्त्तकत्वात्, परं-
परया तज्जन्यत्वस्यातिप्रसक्तत्वात् । तस्मादेतन्मते ज्ञानमात्र-
स्यैवात्मविशेषणतया भिन्नविशेष्यकस्यापि प्रवर्त्तकत्वमित्येव
तत्त्वमिति । (७०) संध्येति । यथा हेतुर्न व्यभिचारी तथा
कार्यः । न च नित्ये वेदाधीनकार्यताज्ञानस्यैव प्रवर्त्तकतया
नैतदनुमानापेक्षेति वाच्यम् । तस्य विशेषणवत्ताप्रतिसंधाना-
जन्यत्वेनाप्रवर्त्तकत्वात् । इदानींतनत्वादेस्तत्राभावाच्च, एवं
च नित्ये वेदाधीनकार्यताज्ञानं प्रवर्त्तकमिति मतान्तरेण बो-
ध्यम् । (७१) पुरुषेति । पुरुषविशेषणं कामनादि । क्व चि-
त्पुरुषविशेषेति पाठः । तत्र स्वविशेषणवत्ताप्रतिसंधानवत्त्वं
पुरुषे विशेषः । (७२) नित्यइति । पण्डापूर्वं नेष्टमिति भावः ।

॥ अथ वेदान्तसूत्रशैवभाष्यप्रथमाध्यायस्य ॥

॥ चतुर्थपादारम्भः ॥

पूर्वपादे स्पष्टास्पष्टब्रह्मलिङ्गानि वाक्यानि विचारितानि । चतुर्थेऽस्मिन् पादेऽस्पष्टलिङ्गानि कानिचिद्वाक्यानि विचार्यन्ते ॥

॥ आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

एकेषां कठानां शाखायामाम्नायतेऽस्य विषयः ।

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः" ॥

इत्यादिकः । अत्र महतः परत्वेनाव्यक्तशब्दवाच्यं प्रधानं कापिलमुत शरीरं वेति संशयः । प्रधानमिति युक्तिः पूर्वपक्षीया । कथम् । महदव्यक्तपुरुषाणां सांख्यतन्त्र एव प्रसिद्धेः । तेषामिह श्रुतौ प्रत्यभिज्ञा भवति । वपुषो न कश्चिदिह प्रसङ्गः । तस्मात् सांख्यं प्रधानमिति । वपुरिति सिद्धान्तोऽयुक्तः । पूर्वत्र

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" ।

इत्यात्मशरीरादिषूपासनोपायेषु वशीकार्यत्वाय रथिरथादिरूपकविन्यस्तेषु परिशिष्टस्य शरीराख्यरूपकस्य विन्यस्तस्याव्यक्तशब्देन गृहीतेः । "इन्द्रियेभ्यः परा ह्यर्था," इत्यारभ्य "सा काष्ठा सा परा गतिः," इत्यन्तेन वशीकार्यत्वाय ह्युत्तरोत्तरं परा उच्यन्ते । "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि यच्छेत तद्यच्छेच्छान्त आत्मनि" ॥

इत्यादिना श्रुतिरेवोत्तरत्र च दर्शयति । ततोऽव्यक्तं वपुरेव प्रतिपाद्यम् ॥ १ ॥

ननु प्रधानमेवाव्यक्तमिति प्रसिद्धम् । कथमिह शरीरमित्याशङ्कायामाह ॥

॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

सूक्ष्ममित्यव्यक्तमुच्यते । अव्यक्तमेव शरीरावस्थं कार्यात्मतयाव्यक्तशब्दवाच्यमिति युक्तम् ॥ २ ॥

युक्त्यन्तरमुच्यते ॥

॥ तदधीनत्वादर्थवत् ॥ ३ ॥

आत्मशरीरादिकं परमेश्वराधीनतयार्थवदुपासनानिर्वृत्तये भवति । परमेश्वरोऽन्तर्यामी सर्वमात्मादिकं प्रेरयत्येव चोपासनोपायत्वेन वशीकार्यकाष्ठाप्राप्यत्वेन

"सा काष्ठा सा परा गतिः"

इत्युच्यते । ततोऽव्यक्तमिह शरीरमेव ॥ ३ ॥

॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥

यदि सांख्यं प्रधानमत्राव्यक्तं, तदास्य ज्ञेयत्वमुच्येत । न च तदस्ति । ततो न कापिलमव्यक्तम् ॥ ४ ॥

ज्ञेयत्वमप्यस्यात्रास्तीत्याशङ्क्य परिहरति ॥

॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

अशब्दमस्पर्शमरूपमव्ययं
तथा रसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥

इत्यारभ्यास्यापि निचाय्यतां वदतीति चेन्न युक्तं; "यच्छेद्वाङ्मनसी प्राज्ञ" इति प्राज्ञस्यैव पूर्वं प्रकृतत्वात् ॥ ५ ॥

ततोऽव्यक्तं शरीरमेव । प्रधानस्य प्रसङ्ग एव नास्तीत्याह ॥

॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

त्रयाणामुपास्योपासनोपासकानामेवात्र प्रकरणे ज्ञेयतया प्रश्न उपन्यासश्च क्रियते, न प्रधानादेः । यथा,

"तं दुर्दर्शं गूढमनुप्रविष्टं
गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं
मत्वा धीरो हर्षशोकौ जहाति" ॥

इत्यादिरुपन्यासः । "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीय" इति, "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत् तत् पश्यसि तद्वद" इति प्रश्नः । तस्मादप्रकृतत्वादपि शरीरमेवाव्यक्तं न प्रधानम् ॥ ६ ॥

किंच, लिङ्गान्तरमप्यस्तीत्याह ॥

॥ महद्वच्च ॥ ७ ॥

यथेह

"बुद्धेरात्मा महान् पर"

इत्यत्र न तान्त्रिको महान् भवति, आत्मशब्दादपि न प्रधानमिति निर्णयः ॥ ७ ॥

अप्रकृतत्वादिह न प्रधानप्रस्ताव इति भवतु। अन्यत्र प्रधानमेव कारणत्वेन श्रूयत इत्याशङ्क्याधिकरणमिदमारभ्यते ॥

॥ चमसवदविशेषात् ॥ ८ ॥

श्वेताश्वतरोपनिषदि श्रूयतेऽस्य विषयः ।

"अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः" ॥

इति। इह सर्वप्रपञ्चकारणत्वेन जन्मरहितत्वादजेति श्रूयमाणा प्रकृतिः सांख्यसिद्धा परा वेति संशये सांख्यसिद्धेति वक्तुं युक्तम्, "अजाम्" इति जन्माभाववचनात्, सर्वप्रजाकारणत्वाच्च, "लोहितशुक्लकृष्णाम्" इति वर्णोपलक्षितगुणत्रयावगमाच्च, तदन्यस्याः कस्याश्चिदेवंविधत्व न युक्तमिति प्राप्ते सिद्धान्त उच्यते। न तन्त्रसिद्धा प्रकृतिरिह कारणत्वेनोच्यते। नहि जन्माभावमात्रेण तस्या एव प्रतीतिः। अर्वाग्बिलश्चमस इतिवत् प्रकरणविशेषाभावात्। यथा इदं तच्छिर इति चमसो विशेष्यते। यौगिकशब्दाद्विशेषप्रतीतिर्हि विशेषकापेक्षा। ततो न तान्त्रिकी प्रकृतिरिति ॥ ८ ॥

तन्त्रसिद्धायाः प्रकृतेरन्या कीदृशीत्यत आह ॥

॥ ज्योतिरुपक्रमात् तु तथा ह्यधीयत एके ॥ ९ ॥

ज्योतिरिति परमेश्वर उच्यते। परमेश्वरकारणिकेयमजा प्रकृतिरित्युच्यते। तथा परमेश्वरकारणिकाया एव प्रतिपादनमेके तैत्तिरीयकास्तत्स्वरूपमधीयते हि। "अणोरणीयान् महतो महीयान्" इत्यारभ्य, परमेश्वरमुपक्रम्य[1] "सप्त प्राणाः प्रभवन्ति तस्मात्" इत्यादिना प्राणादिपञ्चकस्य[2] परमेश्वरादुत्पत्त्या तदात्मकत्वप्रतिपादनसमये ह्यजामिति पठन्ति। अतस्तत्प्रत्यभिज्ञानादियमजापि परमेश्वरकारणिका सर्वथेति निश्चीयते। अतो न तन्त्रसिद्धेति वादोऽयुक्तः[3] ॥ ९ ॥

ननु परमेश्वरकारणिकेत्यस्याः परमेश्वरकार्यत्वमुच्यते। कथमस्यास्तादृश्या अजामिति[4] वाद इत्याशङ्क्याह ॥

॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

कल्पनेति सृष्टिरुच्यते।

"छन्दांसि यज्ञाः क्रतवो व्रतानि
भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत्
तस्मिंश्चान्यो मायया संनिरुद्धः ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" ।

इति सृष्ट्युपदेशादजात्वमहेश्वरकार्यत्वयोरविरोधः। तथाहि, प्रलयकाले नामरूपे विहायाचिद्वस्तुरूपा मायापि सूक्ष्मरूपेण महेश्वरस्य शरीरतया तिष्ठतीत्यजा। सृष्टिसमये नामरूपोपेता तत्कारणिकेति। यथा, आदित्यस्य वृष्टिसमये वस्वादिभोग्यरसाधारत्वेन मधुत्वं कार्यत्व च। तस्य पुनः प्रलयकाले मध्वादिव्यपदेशानर्हात्यन्तसूक्ष्मरूपेणावस्थानमकार्यत्वं च मधुविद्यायां प्रतीयते[1]। एवं प्रकृतेरजात्वेश्वरकारणत्वयोरविरोध एव। तस्मादजा न तन्त्रसिद्धा ॥ १० ॥

पुनरन्यत्र तन्त्रसिद्धानि पञ्चविंशतिसंख्यानि श्रूयन्त इत्याशङ्क्य तत् परिहर्तुमधिकरणान्तरमारभ्यते ॥

॥ न संख्योपसंग्रहादपि
नानाभावादतिरेकाच्च ॥ ११ ॥

श्रूयतेऽस्य विषयः।

"यस्मिन्पञ्च पञ्चजना यस्मिन्नाकाशश्च प्रतिष्ठितः ।
तमेव मन्ये आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्" ॥

इत्यादिः। अत्र पञ्चपञ्च जना इति पदार्थाः किं सांख्यसिद्धानि तत्त्वानि श्रुतिप्रसिद्धानि वेति संशयः। एवं सति पञ्चविंशतिसंख्यायाः सांख्यशास्त्रप्रसिद्धत्वादत्र तदवभासात् सर्वथा पञ्चपञ्च जना इति तान्येव प्रतिपाद्यानीति प्राप्ते ब्रूमः। इह "पञ्चपञ्च" इति पञ्चविंशतिसंख्योपसंग्रहादपि न तान्त्रिकाणि तत्त्वानि। "यस्मिन्" इति यच्छब्दनिर्दिष्टपरमेश्वराधारत्वममीषां प्रतीयते। तेभ्य एषां पृथग्भावात्, आकाशस्य पृथङ्निर्देशेन तत्त्वातिरेकाच्च; तत्त्वातिरेकस्तत्त्वानामधिकसंख्यात्वम्। अतोऽत्र न पञ्चविंशतितत्त्वप्रसङ्गः।

किंच, पञ्चविंशतिसंख्योपसंग्रहोऽपि न युक्तः। "दिक्संख्ये संज्ञायाम्" इति संज्ञाविषयो ह्ययं समासः। तस्मात् पञ्चजना नाम केचित् ते हि पञ्च पञ्चजना इत्युच्यन्ते। सप्त सप्तर्षय इतिवत्। अतो न सांख्यतत्त्वप्रसक्तिः ॥ ११ ॥

के पुनरेत इत्यत आह ॥

प्राणादयो वाक्यशेषात् ॥ १२ ॥

"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति वाक्यशेषात् पञ्चजनसंज्ञकाः

१ तथा परमेश्वरमुपक्रम्य इति पा०।
२ प्राणपञ्चक—इति पा०।
३ वादो निर्निबन्धनः इति पा०।
४ अजात्वमिति इति पा०।

१ वस्थानश्रुतेः इति पा०।

प्राणादयः पञ्चेन्द्रियाणीति गम्यते । अतोऽपि न तान्त्रिकतत्त्वप्रसक्तिः ॥ १२ ॥

पुनरुपपत्तिरुच्यते ॥

॥ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानाम्, "अन्नस्यान्नम्" इति शब्दभावे "तद्देवा ज्योतिषां ज्योतिः" इत्युपक्रमगतेन ज्योतिःशब्देन पञ्चजना इन्द्रियाणीति ज्ञायन्ते । ज्योतिषां ज्योतिःप्रकाशकानामपि प्रकाशकं ब्रह्मेत्युक्त्वा, ततः पञ्चपञ्चजना इत्युक्ते हि तानि प्रकाशकानि पञ्चेन्द्रियाणीति गम्यते ॥ १३ ॥

॥ कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १४ ॥

यथाकाशादिषु कार्यवर्गेषु कारणत्वेन सर्वत्र वेदान्तवाक्येषु "असद्वा इदमग्र आसीत्" "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादिषु अननुज्ञातविशेषेषु च "आत्मा वा इदमेक एवाग्र आसीत्" इति विशेषवाक्यनिर्दिष्टस्यैवोक्तेर्न तान्त्रिकव्याकृतग्रहणम् । तथात्र विशेषवाक्यदृष्टानामिन्द्रियाणामेवोक्तेर्न तान्त्रिकतत्त्वग्रहणम् ॥ १४ ॥

अत्र तान्त्रिकतत्त्वग्रहणायोगः कथमित्यत आह ॥

॥ समाकर्षात् ॥ १५ ॥

"सोऽकामयत बहु स्याम्" इति पूर्वनिर्दिष्टस्य सर्वज्ञस्यैव "असद्वा इदमग्र आसीत्" इति समाकर्षात् पूर्वनिर्दिष्टस्याव्याकृतस्यैव "स एष इह प्रविष्ट आ नखाग्रेभ्य" इति समाकर्षाच्च यथा स एवावगम्यते । तथात्रापि समाकर्षात् पञ्चजनानामिन्द्रियत्वावगतिरिति न विरोधः ॥ १५ ॥

गतः सांख्यतत्त्वाशङ्काप्रसङ्गः । पुनरपि जीवात् परमेश्वरस्यान्यभावमुपपादयति ॥

॥ जगद्वाचित्वात् ॥ १६ ॥

अथैतेऽस्य विषयः कौषीतकिब्राह्मणोपनिषदि । "ब्रह्म ते ब्रवाणि" इत्युपक्रम्य "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत् कर्म स वै वेदितव्य" इत्यादिकः । इह वेद्यत्वेन श्रुतः परमेश्वरो जीवो वेति संशयः । "य एवैष आदित्ये पुरुषस्तमेवाहमुपासे य एवैष चन्द्रमसि पुरुषो य एवैष विद्युति" इत्यादिपूर्ववाक्यसंदर्भे प्रकृतादित्यादिसकलस्य[1] जीवेऽपि विद्यमानत्वात् कर्मशब्दस्यापूर्ववाचित्वादपूर्वस्य तदर्थत्वाद्विधूतनिखिलकर्मसंबन्धे परमेश्वरे तदयोगाज्जीव एवायमिति पूर्वः पक्षः । सिद्धान्तस्तु कर्मशब्दस्यैतच्छब्दस्य सामानाधिकरण्येन क्रियत इति व्युत्पत्त्या च जगद्वाचित्वाज्जगत्कार्यवान् परमेश्वर एवात्र प्रतिपाद्यः । नहि जीवे सकलजगत्कर्तृत्वसंभवः[2] ॥ १६ ॥

पुनराशङ्क्य परिहरति ॥

॥ जीवमुख्यप्राणलिङ्गान्नेति चेत् तद् व्याख्यातम् ॥ १७ ॥

"तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति" इति, "यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन् प्राण एवैकधा भवति" इति जीवमुख्यप्राणलिङ्गदर्शनान्नासौ परमेश्वर इति न वाच्यम् । पूर्वत्र प्रतर्दनविद्याया व्याख्यातत्वादिहापि पूर्वापरपर्यालोचनया ब्रह्मपरत्वे स्थिते तदनुरूपतयान्यानि लिङ्गानि नेतव्यानि । पूर्वत्र हि उपक्रमे "ब्रह्म ते ब्रवाणि" इति ब्रह्मोपक्षिप्तं, मध्ये च "यस्यैतत् कर्म" इति सकलजगत्कर्तृत्वमुक्तं, परत्र चोपसंहारे "सर्वान् पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद" इति ब्रह्मोपासनैकान्तं सर्वपाप्मापहतिपूर्वकं स्वाराज्यफलमुक्तम् । एवमस्य प्रकरणस्य ब्रह्मपरत्वनिश्चये जीवमुख्यप्राणलिङ्गानि तत्परतयैव नेतव्यानि ॥ १७ ॥

पक्षान्तरमुच्यते ॥

॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

"तौ ह सुप्तं पुरुषमाजग्मतुस्तं हाजातशत्रुरामन्त्रयांचक्रे बृहत्पाण्डरवासः सोमराजन्" इति "स इह तूष्णीमेव शिश्ये तदु ह एनं यष्ट्या विचिक्षेप स तत एव समुत्तस्थौ" इत्यत्र प्राणनामभिरामन्त्रणेऽपि तदुत्थानाश्रवणेन ततः परं यष्टिघातोत्थानेन च प्राणाद्यतिरिक्तजीवसद्भावप्रतिपादनं तदतिरिक्तपरमेश्वरप्रज्ञापनार्थमिति "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागात्" इति प्रश्नाद् "यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति" इति "सता सोम्य तदा संपन्नो भवति" इत्यादिवाक्यान्तरसमानार्थात् तत्प्रतिवचनाच्चाप्यवगम्यते । एके वाजसनेयिनोऽयमीश्वर इति स्पष्टमस्मिन् बालाक्यजातशत्रुसंवादे एतत्समानार्थमधीयते । तत्र हि "यत्रैष एतत् सुप्तोऽभूत् क्व एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागात्" इति प्रश्नः । "यत्रैष एतत् सुप्तोऽभूत् क एष विज्ञानमयः पुरुषः" तदेषां प्राणानां विज्ञानमादाय "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इति प्रतिवचनम् । तस्मात् परमेश्वर एवायं सकलजगत्कर्मवत्त्वेन सिद्धः ॥ १८ ॥

सर्वत्र जीवेश्वरयोरेकशब्दविषयत्वे प्रतीयमाने तत्सामानाधिकरण्यं कथमित्येतन्निरूपणायेदमधिकरणमारभ्यते ॥

---

१—संशयः । सकलपुरुषकर्तृत्वस्य इतिवरपा० ।

२—संभवो युक्तः । पूर्वत्र प्रतर्दनविद्यायां व्याख्यातत्वादिहापि पूर्वापरपर्यालोचनाद्ब्रह्मपरत्वम् इति पा० ।

१ "तौ ह सुप्तं पुरुषमाजग्मतुः" इत्यादिना देहातिरिक्त—इति पा० ।

॥ वाक्यान्वयात् ॥ १६ ॥

बृहदारण्यके श्रूयतेऽस्य विषयः । "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति" इत्यारभ्य "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादि श्रूयते । इहात्मनस्तु कामायेत्यादिवाक्यैर्भोगप्रीतियुक्ततयात्मनः संसारित्वावगमादत्र प्रतिपद्यमानो जीव इति पूर्वपक्षे प्राप्ते सिद्धान्तयामः । परमेश्वर इति । कुतः । "अमृतत्वस्य तु नाशास्ति वित्तेन" "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्", "इदं सर्वं यदयमात्मा" इत्यादेः, "येनेदं सर्वं विजानाति तं केन विजानीयात्" इत्यवसानस्य कृत्स्नस्य वाक्यस्य परमेश्वरेऽन्वयाद्भोगप्रीतियुक्तजीवस्यानुवादेन परमेश्वरप्रतिपादनादविरोधः ॥ १९ ॥

कथमिह सर्वत्र जीवशब्देन परमेश्वराभिधानमिति चेत् तदिदं मतान्तरेणोपपादयति ॥

॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

"आत्मनि खल्वरे दृष्टे" इत्यादिनोक्तस्यैकविज्ञानेन सर्वविज्ञानस्य सिद्धये जीवस्य तत्कार्यतया तदव्यतिरिक्ततां ज्ञापयितुं जीवशब्देन परमेश्वरस्याभिधानमित्याश्मरथ्यो मन्यते ॥ २० ॥

॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

उत्क्रमिष्यतो मुक्तस्य परमेश्वरस्वरूपभावादात्मशब्देन परमेश्वराभिधानमित्यौडुलोमिर्मेने ॥ २१ ॥

॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

"य आत्मनि तिष्ठन्"इत्यादिश्रुतेर्जीवात्मनि परमेश्वरस्यात्मतयावस्थानाज्जीवशब्दवाच्यत्व परमेश्वरस्येति काशकृत्स्नो मेने । इदमेव मतं सूत्रकारस्य, मतद्वयमुपन्यस्य तद्विरोधेनैतदभिधानादन्यस्यानभिधानाच्च निश्चीयते । प्रबलश्रुत्यानुगुण्यं चात्र सम्भवति । तथाह्यथर्वशिरसि सर्वचिदचिदनुप्रवेशात् परमेश्वरस्य सर्वशब्दवाच्यत्वमिति श्रूयते । प्रथमखण्डे "देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन् को भवान्" इति । सोऽब्रवीत् "अहमेकः प्रथममासं वर्तामि च भविष्यामि च, नान्यः कश्चिन्मत्तो व्यतिरिक्त" इति । "सोऽन्तरादन्तरं प्राविशत्" "दिशश्चान्तरं स प्राविशत्" "सोऽहं" "नित्यानित्यो ब्रह्माहम्" इत्यारभ्य, "प्राञ्चोऽहं दक्षिणावाञ्चोऽहमधश्चोर्ध्वं च दिशश्च विदिशश्चाहं पुमानहं स्त्री चाहं गायत्र्यहं सावित्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहं छन्दोऽहं गार्हपत्योऽहं दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्यहं ज्येष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहमृग्यजुःसामाथर्वाङ्गिरसोऽहं क्षरमहमक्षरमहं गुह्योऽहं पुष्करमहं पवित्रमहमग्रं च मध्यं च बहिश्च परस्ताज्ज्योतिरित्यहमेव, सर्वं च मा यो वेद स सर्वान् वेद" इत्यन्तेन, द्वितीयखण्डे च सर्वानुप्रवेशादेव "यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नम" इत्यारभ्य ब्रह्मविष्णुमहेश्वरोमाविनायकादिसर्वप्रपञ्चशब्दवाच्यत्वं प्रतिपाद्यते । तथा सर्वश्रुतिसामरस्यविचारे सर्वेषां चिदचिद्वस्तूनामन्तर्यामितयानुप्रविष्टः सर्वशरीरः सर्वशब्दवाच्यः परमेश्वरः शिव इति विज्ञायते । अतः काशकृत्स्नमतमेव श्रुतिसूत्रमहाभियुक्तसमतमिति समञ्जसम् ॥ २२ ॥

पूर्वं "जन्माद्यस्य यत"इति द्वितीयाधिकरणे "यतो वा इमानि भूतानि" इति पञ्चमीश्रवणात् परमेश्वरस्य जगदुपादानत्वं सामान्येन निरूपितम् । तदशेषतः समर्थयितुमिदमधिकरणमारभ्यते ॥

॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" "द्यावाभूमी जनयन् देव एक"इत्यादिवाक्यान्यस्य[1] विषयः । एतेषु प्रसिद्धमुभयकारणत्वं ब्रह्मणो युक्तं न वेति संदेहः । सन्देहश्च निमित्तस्य कुलालादेरुपादानमृत्पिण्डादिभावादर्शनात्, उपादानस्य मृत्पिण्डादेर्निमित्तकुलालादिभावादर्शनात्, कथमेतस्मि[2]न्निमित्तत्वमुपादानत्वं च जगत् कार्यं प्रतीति पूर्वपक्षे तु जगत्स्रष्टो निमित्तमेव, नोपादानमिति, कुतः, असंभवात्, नहि घटं निर्मिमाणः कुलालः स्वयमेव मृत्पिण्डीभूय घटं करोति, पटं वा कुविन्दः; यदि कर्तुमीहते, तन्न सम्भवत्येव; अतो निमित्तभूतस्य ब्रह्मण उपादानत्व न संभाव्यते, निष्प्रयोजनं च निमित्तस्यैवोपादानत्वकल्पनं; विनापि तत्कल्पनं कार्यनिष्पत्तेः, कुलालस्य मृत्पिण्डादन्यत्वेऽपि घटनिष्पत्तिदर्शनात्; अतो ब्रह्म निमित्तमेव, न तूपादानमपीति ॥

अत्रोच्यते ।

जगतो निमित्तमुपादानं च ब्रह्मैव । "स्तब्धोऽस्युत तमादेशमप्राक्षः, येनाश्रुतं श्रुतं भवत्यमत मतमविज्ञात विज्ञातम्" इति श्रुत्या येनाद्रष्टा निमित्तभूतेन विज्ञातेन चिदचिद्रूपं सर्वं जगद्विज्ञातं भवतीत्यादेष्टृविज्ञानेन सर्वविज्ञानात्, "यथैकेन मृत्पिण्डेन विज्ञातेन सर्वमिदं मृन्मयं विज्ञातं स्यात्" इति तदुपपादकमृत्पिण्डदृष्टान्तानुपरोधाच्च; ब्रह्मणो निमित्तमात्रत्वे तद्विज्ञानेन सकलप्रपञ्चविज्ञान न सम्भवति, तथाहि, कुलालज्ञानेन कार्यं न ज्ञायते, किंतु तदुपादानमृत्पिण्डज्ञानेन, अतो निमित्तस्य ब्रह्मण उपादानत्वे तत् संभवतीति ब्रह्मैवोपादानमप्यादिश्यते ॥ २३ ॥

---

१—क्यानि चात्र इति पा० ।

२—मेकस्मि—इति पा० ।

अनेनेत्यादेशशब्दादादेष्टृभूत ब्रह्मोच्यते, न तदर्थान्तरत्वमुपादानस्येति ज्ञापयितुं हेत्वन्तरमाह ॥

॥ अभिध्योपदेशाच्च ॥ २४ ॥

"तदैक्षत बहु स्यां प्रजायेय" इति निमित्तभूतस्यैचितुः सर्वज्ञस्य ब्रह्मण एव विचित्रजगदाकारेण बहुभवनसंकल्प उपदिश्यते । अतो निमित्तादनन्यदुपादानम् ॥ २४ ॥

ननु "विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यति जायमानम्" इति विश्वोत्तीर्ण एव सर्वज्ञः परमेश्वरो निमित्तभूतः स्वव्यतिरिक्तप्रकृतौ स्वसंकल्पेन जायमानं सकलदेवप्रथमं हिरण्यगर्भं सृष्टमनुग्रहदृष्ट्या पश्यतीति विज्ञायते । कथमस्य विश्वाकारत्वं प्रकृतिरूपत्वेन संभवति । "मायां तु प्रकृतिं विद्यात्" इति मायायाः प्रकृतित्वं श्रूयते । "तस्माद्विराडजायत विराजो अधि पूरुषः" इति पुरुषस्य प्रकृतित्वमाम्नायते । अतस्तयोरेव प्रकृतित्वेन जगदाकारत्वमुचितमित्यत[4] आह ॥

॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥

साक्षात् प्रत्यक्षमेव वेदान्तभागेषु परमेश्वरस्य प्रकृतित्वेन जगदाकारत्वं निमित्तत्वेन जगदुत्पादकत्वं[5] च श्रूयते । तथाहि, "विश्वाधिको रुद्र" इत्यादिना यथा विश्वाधिकत्वमवगम्यते, तथा "सर्वो वै रुद्र" इत्यादिना प्रकृतित्वाद्विश्वरूपत्वमपि श्रूयते । शतरुद्रिये "नमो हिरण्यबाहव" इत्यारभ्य, "कुलुञ्चानां पतय" इत्यन्तेन विश्वाधिपत्यम् । ततश्च "नमः पर्णाय च पर्णशदाय च" इत्येतत्पर्यन्तेन जगदाकारत्वं च परमेश्वरस्य श्रूयते । प्रदेशान्तरे च "ब्रह्म स वृक्ष आसीद्ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इत्युभयश्रुतिः । अथर्वशिरसि च प्रथमद्वितीयखण्डयोर्जगदाकारत्व, तदुपरि जगदीश्वरत्वं च । ततः प्रत्यक्षमुभयाम्नानाज्जगज्जगदीश्वरश्च प्रकृतिनिमित्तत्वेन परं ब्रह्म परमेश्वरः शिव इति युक्तमेव ॥ २५ ॥

किंच प्रमाणान्तरमस्तीत्याह ॥

॥ आत्मकृतेः ॥ २६ ॥

"तदात्मानं स्वयमकुरुत" इति स्वस्यैव जगदाकारत्वेन कृतिरवगम्यते परमेश्वरस्य । अतः स एवोपादानं निमित्तं च ॥ २६ ॥

नन्वज्ञानविकारास्पदमाया[1]प्रपञ्चरूपेण प्रकृतिभावेन कथं वर्तते निरस्तसमस्तदोषलवकलङ्को निःसीममङ्गलगुणरत्नाकरो निरङ्कुशनित्यसिद्धवैभवः प्रपञ्चातीतः परमशिव इत्यत आह ॥

॥ परिणामात्* ॥ २७ ॥

नित्यशुद्धानन्दस्य निरतिशयमङ्गलस्वभावस्यापि निमित्तस्य प्रकृतित्वेन जगदाकारत्वं युक्तमेव । परमशिवस्य चिदचिदाकारेण परिणामात् । हन्त कारणविकाररूपो हि परिणामः । पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणाम इति । कथं परमेश्वरोऽनर्थधर्मात् परिह्रियत इति चेत् । सत्यम् । यथा निमित्तस्य प्रकृतित्वेऽपि न विकारादिस्पर्शः, तथा परिणामः संभवति । कोऽयमपूर्वः परिणामः, कुत्रत्यः, कुतूहलिनो वयं तच्छ्रवणे, विविच्यतामिति चेत्, शृणु विवेचयामः,

"यदा तमस्तन्न दिवा न रात्रि-
र्न सन्न चासच्छिव एव केवलः ।
तदक्षरं तत् सवितुर्वरेण्यं
प्रज्ञा च तस्मात् प्रसृता पुराणी" ॥

इति । यस्मिन् काले विगतचन्द्रसूर्यादितेजस्तया दिवारात्रिविभागशून्य नामरूपविशेषराहित्येन स्थूलसूक्ष्मचेतनाचेतनसदसद्व्यक्तिव्यवस्थारहितं सर्वमिदं तमोभूतमवर्तत, तदा शिव एवाद्वितीयः केवलः स्वाविभागापन्नचिदचिच्छक्तिः स्वप्रकाशः परिशिष्टोऽभूत् । तदक्षरं तदेव तदानीं क्षररहितं नाशरहितं परं वस्तु, तत् सवितुर्वरेण्यं तत् सवितुरादित्यस्य पूर्वं तेजःप्रदत्वेन वरेण्यमन्तर्वर्ति तेजस्तदपि तदेव । तस्मात् तादृशात् स्वविलीनस्वेतरनिखिलचिदचित्प्रपञ्चादद्वितीया पुराणी नित्यसिद्धा[2] तत्कालतमोऽपनोदिनी महास्फुरणरूपा परमा प्रज्ञा ज्ञानशक्तिः प्रसृता प्रावर्तत । ततः "सोऽकामयत बहु स्याम्" इति नामरूपादिविभागरहितसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थः परमेश्वरः संविभक्तनामरूपचिदचिद्वस्तुशरीरको[3] भवेयमिति संकल्पमकरोत् । ततश्च "इदं सर्वमसृजत" यदिदं किंच इति । स्वशरीरभूतं सूक्ष्मचिदचिद्वस्तु स्वस्माद्विभज्य, "तत् सृष्ट्वा तदेवानुप्राविशत्" इति स्वतो विभक्ते चिदचिद्वस्तुनि स्वयमात्मतया प्रविश्य "सच्च त्यच्चाभवत्" इत्यादिना सदसत्प्रपञ्चरूपेण बहुधा परिणतोऽभवदिति पुरुषस्य बालत्वयुवत्वादिवद् ब्रह्मणो जगच्छरीरिणः कारणत्वं कार्यत्वं च ।

---

३ येनाश्रुतं श्रुतं भवतीति । येनादेष्ट्रा निमित्तभूतेन श्रुतेनाश्रुतमपि श्रुतं भवतीति ब्रह्मैवोपादानमप्यादिश्यते । अनेनेत्यादेशशब्दादादेष्टृभूतं ब्रह्मोच्यते । तज्ज्ञानेन कार्यस्य ज्ञानत्वप्रतिज्ञोपादानत्वसाधिका । यथा "सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवति" इत्यादिदृष्टान्तश्च । तदुभयानुरोधान्निमित्तमुपादानं च ब्रह्म ॥ २३ ॥ इतश्च न इत्यन्तं पा० ।

४—रेव जगदाकारेण प्रकृतित्व—इति पा० ।

५ जगत्पतित्वं इति पा० ।

१—हेय—इति पा० ।

* शंकर आत्मकृतेः परिणामादित्येकमेव सूत्रमभ्युपगम्य व्याख्याय चान्ते परिणामादिति वा पृथक् सूत्रमिति व्याजहार ।

२ सनातनी इति पा० ।

३ परमेश्वरो व्यक्तचिच्छक्तिप्रतिबिम्बो व्यक्तनामरूपचिदचिद्वस्तुशरीरको इति पा० ।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्" ॥

इति श्रवणान्मायायाः सकलप्रकृतित्वं तद्विशिष्टत्वं महेश्वरस्य तदवयवभूतेनांशभूतेन चिच्छक्तिशकलभूतेन भोक्तृत्वदशायां पुरुषसंज्ञकेन सकलजगद्व्याप्तिश्चावगम्यते । यथा केवलाच्छरीराल्लोमनखाद्युत्पत्तिर्न संभवति, आत्मनश्च तथा न, केवलं तु मायाया जगदुत्पत्तिर्महेश्वराच्च । किंतु मर्त्यशरीरिणः केशनखाद्युत्पत्तिवन्मायिनः परमेश्वरात् सकलचेतनाचेतनप्रकृतिपुरुषाभिव्यक्तिर्भवति । तद्रूपादीश्वरादव्यक्तचतुर्मुखाद्युत्पत्तिः। तथा च श्रुतिरीश्वरस्य पुरुषरूपत्वमभिधत्ते "पुरुषो वै रुद्र"इति । ततः समुचितं चिदचिद्विशिष्टः परमेश्वरः कारणं कार्ये च । तत्तदवस्थाविशेषादिति ॥ २७ ॥

॥ योनिश्च हि गीयते ॥ २८ ॥

साक्षात् परमेश्वर एव भूतयोनिरित्युच्यते ।

"उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ज्ञात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्" ॥

इति समस्तसाक्षिणः सर्वज्ञस्य तमसः परस्य विश्वोत्तीर्णस्य परमशक्त्योमया सहितस्य विशिष्टस्य परमेश्वरस्यैव भूतयोनित्वं भूतभौतिकप्रकृतित्वं गीयते । ततश्चोपादानमपि निमित्तं परं ब्रह्मैव ॥ २८ ॥

॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

"जन्माद्यस्य यत" इत्यादिनैतदन्तेन वेदान्तवाक्यानां व्याख्यानेन ब्रह्मलिङ्गाभिधायिनो वेदान्तरूपाः कर्मकाण्डमध्यपातिनः पुरुषसूक्तशतरुद्रियप्रभृतयो मन्त्रब्राह्मणभागाः, स्मृतीतिहासपुराणाभियुक्तसूक्तिविशेषाश्च, व्याख्याता इति । द्विरुक्तिरध्यायसमाप्त्यर्था । अत्र कर्मप्रकरणपठितानां पुरुषसूक्तशतरुद्रियादीनां स्मृतीतिहासपुराणादीनां च तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधकत्वमस्ति न वेति संशयः । संशयबीजं प्रकरणभेदादिकम् । कर्मप्रकरणगतानां पुरुषसूक्तादीनामनुष्ठातृजीवपरत्वमेव समीचीनम् । न नित्यमुक्तब्रह्मविषयत्वं, प्रयोजनाभावात् । स्मृतिपुराणादीनामपि नैकात्म[1]परत्वमस्ति । यतस्तेषु कतिचिद् ब्रह्माणं परं ब्रह्मेत्याहुः, कतिचिद्विष्णुं, कतिचिद्रुद्रं, कतिचिच्छक्तिमेव, कतिचिदग्निं, कतिचित् सूर्यं, कतिचिद्वायुं, कतिचिदन्यम् । एवमनवस्था भवतीति । अत एतेषां न

१ –र्थ– इति पा० ।

ब्रह्मबोधकत्वमिति न युक्तमिति[1] प्राप्ते ब्रूमः । पुरुषसूक्तादीनां ब्रह्मबोधकत्वमस्ति, तल्लिङ्गदर्शनात् । "तस्माद्विराडजायत" "आदित्यवर्णं तमसस्तु पारे । तमेव विद्वानमृत इह भवति" इति सकलकारणत्वम् । तमः परत्वामृतहेतुत्वादीनां परमेश्वरलिङ्गानामत्र संबन्धो दृश्यते । अत ईश्वर एवात्र पुरुषशब्देन प्रतिपाद्यते । शतरुद्रीये च साक्षात् परमेश्वरस्य जगदाधिपत्यं जगदात्मकत्वं नीलग्रीवत्वादिलक्षणं च श्रूयते । अतः परमेश्वरस्य तद्वाच्यत्वं युक्तम् ।

ननु परमेश्वरस्य मङ्गलगुणैकनिधानस्य[2] शतरुद्रियप्रतिपाद्यत्वमयुक्तमिव प्रतिभाति । प्रथममेवात्र "नमस्ते रुद्र मन्यव"इति हेयगुणमन्युसंबन्धावगमात् इति चेत् । नैवं विचारणीयम् । मन्युशब्दस्यात्र ज्ञानवाचकत्वात् । अथवा क्रोधपर्यायत्वेऽपि मन्युशब्दस्य न दोषः । दुष्टनिग्रहार्थं स्वेच्छागृहीतप्रकृतिगुणत्वेनास्य परमेश्वरे संबन्धाभावात् । पुराणादीनां च तात्पर्यलिङ्गवशेन ब्रह्मविष्ण्वादितत्तच्छब्दवाच्य सर्वात्मकं सर्वज्ञं सर्वशक्ति सर्वाधिकमसामान्यवैभवं ब्रह्मशब्दार्थं[3] विश्रान्तिपदं निखिलवेदान्तवाक्यसामञ्जस्यसमन्वयात् तात्पर्यावसानविषयं शिवमुमासहितं परमेश्वरं प्रति बोधकत्वं युक्तमेव । यदुक्तं कर्मप्रकरणमिति तत्र लिङ्गेन प्रकरणबाधो युक्तः । अनेनैव न्यायेन यत्र यत्र चेतनेऽचेतने वा जगत्कारणत्वादिकं श्रूयते वेदादिषु प्रमाणवचनेषु, तत्र तत्र तदात्मा शिव एव वाच्यः । यत्र यत्रापुरुषार्थविकाराज्ञत्वादिको धर्मस्तत्र तत्र शिवस्य परब्रह्मणः शरीरं चिदचिद्वस्त्वेव बोध्यत इति निपुणतरं निरूप्यमिति[4] सर्वं समञ्जसमेव ॥ २९ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्च प्रथमोऽध्यायः ॥ :: :: ॥

१ त्वमिति वरपा० ।
२ निदानस्य इति पा० ।
३–शब्द–इति पा० ।
४ निपुणमतिभिरूह्यमिति इति पा० ।

॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्य ॥

॥ द्वितीयजवनिकान्तरस्य शेषः ॥

राजा । सुणिदो दे अहिप्पाओ उण किं पि भणामि ।

॥ अथ द्वितीयजवनिकान्तरस्य प्राकृतविवृतिशेषः ॥

श्रुतस्तेऽभिप्रायः पुनः किमपि भणामि ॥

अनेनेत्यादेशशब्दादादेष्टृभूतं ब्रह्मोच्यते, न तदर्थान्तरत्वमुपादानस्येति ज्ञापयितुं हेत्वन्तरमाह ॥

॥ अभिध्योपदेशाच्च ॥ २४ ॥

"तदैक्षत बहु स्यां प्रजायेय" इति निमित्तभूतस्येक्षितुः सर्वज्ञस्य ब्रह्मण एव विचित्रजगदाकारेण बहुभवनसंकल्प उपदिश्यते । अतो निमित्तादनन्यदुपादानम् ॥ २४ ॥

ननु "विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यति जायमानम्" इति विश्वोत्तीर्ण एव सर्वज्ञः परमेश्वरो निमित्तभूतः स्वव्यतिरिक्तप्रकृतौ स्वसंकल्पेन जायमानं सकलदेवप्रथमं हिरण्यगर्भं सृष्टमनुग्रहदृष्ट्या पश्यतीति विज्ञायते । कथमस्य विश्वाकारत्वं प्रकृतिरूपत्वेन सम्भवति । "मायां तु प्रकृतिं विद्यात्" इति मायायाः प्रकृतित्व श्रूयते । "तस्माद्विराडजायत विराजो अधि पूरुषः" इति पुरुषस्य प्रकृतित्वमाम्नायते । अतस्तयोरेव प्रकृतित्वेन जगदाकारत्वमुचितमित्यत आह ॥[2]

॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥

साक्षात् प्रत्यक्षमेव वेदान्तभागेषु परमेश्वरस्य प्रकृतित्वेन जगदाकारत्वं निमित्तत्वेन जगदुत्पादकत्वं[3] च श्रूयते । तथाहि, "विश्वाधिको रुद्र" इत्यादिना यथा विश्वाधिकत्वमवगम्यते, तथा "सर्वो वै रुद्र" इत्यादिना प्रकृतित्वाद्विश्वरूपत्वमपि श्रूयते । शतरुद्रिये "नमो हिरण्यबाहव" इत्यारभ्य, "कुलुञ्चानां पतय" इत्यन्तेन विश्वाधिपत्यञ्च । ततश्च "नमः पर्णाय च पर्णशदाय च" इत्येतत्पर्यन्तेन जगदाकारत्वं च परमेश्वरस्य श्रूयते । प्रदेशान्तरे च "ब्रह्म स वृक्ष आसीद्ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इत्युभयश्रुतिः । अथर्वशिरसि च प्रथमाद्वितीयखण्डयोर्जगदाकारत्व, तदुपरि जगदीश्वरत्वं च । ततः प्रत्यक्षमुभयाम्नानाज्जगज्जगदीश्वरश्च प्रकृतिनिमित्तत्वेन परं ब्रह्म परमेश्वरः शिव इति युक्तमेव ॥ २५ ॥

किंच प्रमाणान्तरमस्तीत्याह ॥

॥ आत्मकृतेः ॥ २६ ॥

"तदात्मानं स्वयमकुरुत" इति स्वस्यैव जगदाकारत्वेन कृतिरवगम्यते परमेश्वरस्य । अतः स एवोपादानं निमित्तं च ॥ २६ ॥

नन्वज्ञानविकारास्पदमाया[1]प्रपञ्चरूपेण प्रकृतिभावेन कथं वर्तते निरस्तसमस्तदोषलवकलङ्को निःसीममङ्गलगुणरत्नाकरो निरङ्कुशनित्यसिद्धवैभवः प्रपञ्चातीतः परमशिव इत्यत आह ॥

॥ परिणामात्* ॥ २७ ॥

नित्यशुद्धानन्दस्य निरतिशयमङ्गलस्वभावस्यापि निमित्तस्य प्रकृतित्वेन जगदाकारत्व युक्तमेव । परमशिवस्य चिदचिदाकारेण परिणामात् । हन्त कारणविकाररूपो हि परिणामः । पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणाम इति । कथं परमेश्वरोऽनर्थधर्मात् परिह्रियत इति चेत् । सत्यम् । यथा निमित्तस्य प्रकृतित्वेऽपि न विकारादिस्पर्शः, तथा परिणामः संभवति । कोऽयमपूर्वः परिणामः, कुतस्त्यः, कुतूहलिनो वयं तच्छ्रवणे, विविच्यतामिति चेत्, शृणु विवेचयामः,

"यदा तमस्तन्न दिवा न रात्रि-
र्न सन्नचासच्छिव एव केवलः ।
तदक्षरं तत् सवितुर्वरेण्यं
प्रज्ञा च तस्मात् प्रसृता पुराणी" ॥

इति । यस्मिन् काले विगतचन्द्रसूर्यादितेजस्तया दिवारात्रिविभागशून्य नामरूपविशेषराहित्येन स्थूलसूक्ष्मचेतनाचेतनसदसद्व्यक्तिव्यवस्थारहितं सर्वमिदं तमोभूतमवर्तत, तदा शिव एवाद्वितीयः केवलः स्वाविभागापन्नचिदचिच्छक्तिः स्वप्रकाशः परिशिष्टोऽभूत् । तदक्षरं तदेव तदानीं क्षररहितं नाशरहितं परं वस्तु, तत् सवितुर्वरेण्य तत् सवितुरादित्यस्य पूर्वं तेजःप्रदत्वेन वरेण्यमन्तर्वर्ति तेजस्तदपि तदेव । तस्मात् तादृशात् स्वविलीनस्वेतरनिखिलचिदचित्प्रपञ्चादद्वितीया पुराणी नित्यसिद्धा[2] तत्कालतमोऽपनोदिनी महास्फुरणरूपा परमा प्रज्ञा ज्ञानशक्तिः प्रसृता प्रावर्तत । ततः "सोऽकामयत बहु स्याम्" इति नामरूपादिविभागरहितसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थः परमेश्वरः संविभक्तनामरूपचिदचिद्वस्तुशरीरको[3] भवेयमिति सङ्कल्पमकरोत् । ततश्च "इदं सर्वमसृजत" यदिदं किंचन इति । स्वशरीरभूतं सूक्ष्मचिदचिद्वस्तु स्वस्माद्विभज्य, "तत् सृष्ट्वा तदेवानुप्राविशत्" इति स्वतो विभक्ते चिदचिद्वस्तुनि स्वयमात्मतया प्रविश्य "सच्च त्यच्चाभवत्" इत्यादिना सदसत्प्रपञ्चरूपेण बहुधा परिणतोऽभवदिति पुरुषस्य बालत्वयुवत्वादिवद् ब्रह्मणो जगच्छरीरिणः कारणत्वं कार्यत्वं च ।

---

३ येनाश्रुतं श्रुतं भवतीति । येनादेष्ट्रा निमित्तभूतेन श्रुतेनाश्रुतमपि श्रुतं भवतीति ब्रह्मैवोपादानमप्यादिश्यते । अनेनेत्यादेशशब्दादादेष्टृभूतं ब्रह्मोच्यते । तज्ज्ञानेन कार्यस्य ज्ञानत्वप्रतिज्ञोपादानत्वसाधिका । यथा "सोम्यैकेन मृत्पिण्डेन सर्वं मन्मयं विज्ञातं भवति" इत्यादिदृष्टान्तश्च । तदुभयानुरोधान्निमित्तमुपादानं च ब्रह्म ॥ २३ ॥ इतश्च न इत्यन्तं पा० ।

४—रेव जगदाकारेण प्रकृतित्व—इति पा० ।

५ जगत्पतित्वं इति पा० ।

१—हेय—इति पा० ।

* शंकर आत्मकृतेः परिणामादित्येकमेव सूत्रमभ्युपगम्य व्याख्याय चान्ते परिणामादिति वा पृथक् सूत्रमिति व्याजहार ।

२ सनातनी इति पा० ।

३ परमेश्वरो व्यक्तचिच्छक्तिप्रतिबिम्बो व्यक्तनामरूपचिदचिद्वस्तुशरीरको इति पा० ।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्" ॥

इति श्रवणान्मायायाः सकलप्रकृतित्वं तद्विशिष्टत्वं महेश्वरस्य तदवयवभूतेनांशभूतेन चिच्छक्तिशकलभूतेन भोक्तृत्वदशायां पुरुषसंज्ञकेन सकलजगद्व्याप्तिश्चावगम्यते । यथा केवलाच्छरीराल्लोमनखाद्युत्पत्तिर्न संभवति, आत्मनश्च तथा न, केवलं तु मायाया जगदुत्पत्तिर्महेश्वराच्च । किंतु मर्त्यशरीरिणः केशनखाद्युत्पत्तिवन्मायिनः परमेश्वरात् सकलचेतनाचेतनप्रकृतिपुरुषाभिव्यक्तिर्भवति । तद्रूपादीश्वरादव्यक्तचतुर्मुखाद्युत्पत्तिः । तथा च श्रुतिरीश्वरस्य पुरुषरूपत्वमभिधत्ते "पुरुषो वै रुद्र" इति । ततः समुचितं चिदचिद्विशिष्टः परमेश्वरः कारणं कार्यं च । तत्तदवस्थाविशेषादिति ॥ २७ ॥

॥ योनिश्च हि गीयते ॥ २८ ॥

साक्षात् परमेश्वर एव भूतयोनिरित्युच्यते ।

"उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ज्ञात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्" ॥

इति समस्तसाक्षिणः सर्वज्ञस्य तमसः परस्य विश्वोत्तीर्णस्य परमशक्त्योमया सहितस्य विशिष्टस्य परमेश्वरस्यैव भूतयोनित्वं भूतभौतिकप्रकृतित्वं गीयते । ततश्चोपादानमपि निमित्तं परं ब्रह्मैव ॥ २८ ॥

॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

"जन्माद्यस्य यत" इत्यादिनैतदन्तेन वेदान्तवाक्यानां व्याख्यानेन ब्रह्मलिङ्गाभिधायिनो वेदान्तरूपाः कर्मकाण्डमध्यपातिनः पुरुषसूक्तशतरुद्रियप्रभृतयो मन्त्रब्राह्मणभागाः, स्मृतीतिहासपुराणाभियुक्तसूक्तिविशेषाश्च, व्याख्याता इति । द्विरुक्तिरध्यायसमाप्त्यर्था । अत्र कर्मप्रकरणपठितानां पुरुषसूक्तशतरुद्रियादीनां स्मृतीतिहासपुराणादीनां च तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधकत्वमस्ति न वेति संशयः । संशयबीजं प्रकरणभेदादिकम् । कर्मप्रकरणगतानां पुरुषसूक्तादीनामनुष्ठातृजीवपरत्वमेव समीचीनम् । न नित्यमुक्तब्रह्मविषयत्वं, प्रयोजनाभावात् । स्मृतिपुराणादीनामपि नैकात्म्यपरत्वमस्ति[1] । यतस्तेषु कतिचिद् ब्रह्माणं परं ब्रह्मेत्याहुः, कतिचिद्विष्णुं, कतिचिद्रुद्रं, कतिचिच्छक्तिमेव, कतिचिदग्निं, कतिचित् सूर्यं, कतिचिद्वायुं, कतिचिदन्यम् । एवमनवस्था भवतीति । अत एतेषां न ब्रह्मबोधकत्वमिति न युक्तमिति[1] प्राप्ते ब्रूमः । पुरुषसूक्तादीनां ब्रह्मबोधकत्वमस्ति, तल्लिङ्गदर्शनात् । "तस्माद्विराडजायत" "आदित्यवर्णं तमसस्तु पारे । तमेव विद्वानमृत इह भवति" इति सकलकारणत्वम् । तमः परत्वामृतहेतुत्वादीनां परमेश्वरलिङ्गानामत्र संबन्धो दृश्यते । अत ईश्वर एवात्र पुरुषशब्देन प्रतिपाद्यते । शतरुद्रीये च साक्षात् परमेश्वरस्य जगदाधिपत्यं जगदात्मकत्वं नीलग्रीवत्वादिलक्षणं च श्रूयते । अतः परमेश्वरस्य तद्बोध्यत्वं युक्तम् ।

ननु परमेश्वरस्य मङ्गलगुणैकनिधानस्य[2] शतरुद्रियप्रतिपाद्यत्वमयुक्तमिव प्रतिभाति । प्रथममेवात्र "नमस्ते रुद्र मन्यव" इति हेयगुणमन्युसंबन्धावगमात् इति चेत् । नैवं विचारणीयम् । मन्युशब्दस्यात्र ज्ञानवाचकत्वात् । अथवा क्रोधपर्यायत्वेऽपि मन्युशब्दस्य न दोषः । दुष्टनिग्रहार्थं स्वेच्छागृहीतप्रकृतिगुणत्वेनास्य परमेश्वरे संबन्धाभावात् । पुराणादीनां च तात्पर्यलिङ्गवशेन ब्रह्मविष्ण्वादितत्तच्छब्दवाच्यं सर्वात्मकं सर्वज्ञं सर्वशक्ति सर्वाधिकमसामान्यवैभवं ब्रह्मशब्दार्थ[3]विश्रान्तिपदं निखिलवेदान्तवाक्यसामञ्जस्यसमन्वयात् तात्पर्यावसानविषयं शिवमुमासहितं परमेश्वरं प्रति बोधकत्वं युक्तमेव । यदुक्तं कर्मप्रकरणमिति तत्र लिङ्गेन प्रकरणबाधो युक्तः । अनेनैव न्यायेन यत्र यत्र चेतनेऽचेतने वा जगत्कारणत्वादिकं श्रूयते वेदादिषु प्रमाणवचनेषु, तत्र तत्र तदात्मा शिव एव वाच्यः । यत्र यत्रापुरुषार्थविकाराज्ञत्वादिको धर्मस्तत्र तत्र शिवस्य परब्रह्मणः शरीरं चिदचिद्वस्त्वेव बोध्यत इति निपुणतरं निरूप्यमिति[4] सर्वं समञ्जसमेव ॥ २९ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्च प्रथमोऽध्यायः ॥ :: :: ॥

१ -र्थ- इति पा० ।

१ त्वमिति वरपा० ।
२ निदानस्य इति पा० ।
३—शब्द—इति पा० ।
४ निपुणमतिभिरूह्यमिति इति पा० ।

## ॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्य ॥

॥ द्वितीयजवनिकान्तरस्य शेषः ॥

राजा । सुणिदो दे अहिप्पाओ उण किं पि भणामि ।

## ॥ अथ द्वितीयजवनिकान्तरस्य प्राकृतविवृतिशेषः ॥

श्रुतस्तेऽभिप्रायः पुनः किमपि भणामि ॥

बालाओ होंति कोदूहलेण पेम्मचवलचित्ताओ ।
दरउल्लसिअत्थणीसु पुणो णिवसइ मअरद्धअरहस्सं ॥४८॥

विदू । तरुणो रूअरेहारहस्सेण फुल्लंति ण उण रहस्सं जाणंति ।

नेपथ्ये । वैतालिकः । सुहसंझा भोदु देअस्स ।

लोआणं लोअणेहिं सह कमलवणं अद्धणिद्दं कुणंतो
मुंचंतो तीव्वभावं सुहअसरहसं माणिणी माणसेहिं ।
मंजिट्ठारत्तसुत्तच्छविकिरणचओ चक्कवाअकमित्तं
जादो अत्थाचलत्थो पउह दिणमणी पक्कणारंगपिंगः ॥ ४६ ॥

राजा । भो वअस्स संणिहिदो संझासमओ वट्टदि ।

विदू । संकेदकालो कधिदो बंदीहिं ।

कर्पूर । सहि विअक्खणे गमिस्सं दाव विआलो संवुत्तो वट्टदि ।

विच । एवं करीअदु ॥ इति परिक्रम्य निष्क्रान्ताः सर्वे ॥

॥ इतिश्रीबालकविकविराजराजशेखरविरचिते
कर्पूरमञ्जर्यभिधसट्टके द्वितीयं जवनिकान्तरम् ॥

---

बाला भवन्ति कौतूहलेन प्रेमचपलचित्ताः ।
दरोल्लसितस्तनीषु पुनर्मकरध्वजरहस्यम् ॥ ४८ ॥

तरवो रूपरेखारहस्येन फुल्लन्ति न पुना रहस्यं जानन्ति ॥ सुखसंध्या भवतु देवस्य ।

लोकानां लोचनैः सह कमलवनमर्धनिद्रं कुर्वन्
मुञ्चन्ती तीव्रभावं सुभगसरभसं मानिनी मनुष्यैः ।
मञ्जिष्ठारक्तसूत्रच्छविकिरणचयश्चक्रवाकैकमित्रं
जातो अस्ताचलस्थः पश्य दिनमणिः पक्वनारङ्गपिङ्गः॥ ४९॥

भो वयस्य संनिहितः संध्याकालो वर्तते ॥ संध्याकालः कथितो बन्दिभ्याम् ॥ सखि विचक्षणे गमिष्यामस्तावद्विकालः संवृतो वर्तते ॥ एवं क्रियताम् ॥

॥ इति द्वितीयजवनिकान्तरप्राकृतविवृतिः ॥

## ॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्य ॥

॥ तृतीयं जवनिकान्तरम् ॥

ततः प्रविशति राजा विदूषकश्च ।

राजा । तामनुसंधाय ।

दूरे किज्जदु चंपअस्स कलिआ कज्जं हलद्दीअ किं
उल्लल्लाइ वि कंचणेण गणणा का णाम जच्चेण वि ।
लाअण्णस्स णउग्गदिंदुमहुरच्छाअस्स तिस्सा पुरो
पच्चग्गेहिं वि केसरस्स कुसुमुक्करेहिं किं कारणं ॥ १ ॥

अवि अ ।

मरगअमणिपुंजा हारलट्ठि व्व तारा-
भमरकवलिअंता मालईमालइ व्व ।
रहसवलिअकंठी तीअ दिट्ठी वरिट्ठा
सवणपहणिविट्ठा माणसं मे पइट्ठा ॥ २ ॥

विदू । भो वअस्स किं तुमं भज्जाजिदो पइ व्व किंपि २ कुरकुराअंतो चिट्ठसि ।

राजा । भो वअस्स सिविणअं दिट्ठं ।

विदू । ता कहेदु पिअवअस्सो ।

राजा ।

जाणे पंकअलोअणा सिविणए मं केलिसेज्जागदं
कंदोदेण झडित्ति ताडिदुमणा एत्थंतरे संठिदा ।

---

## ॥ अथ तृतीयजवनिकान्तरस्य प्राकृतविवृतिः ॥

दूरे क्रियतां चम्पकस्य कलिका कार्यं हरिद्रया किम्
आर्द्रयापि काञ्चनेन गणना का नाम जात्येनापि ।
लावण्यस्य नवोद्गतेन्दुमधुरच्छायस्य तस्याः पुरः
प्रत्यग्रैरपि केसरस्य कुसुमोत्करैः किं कारणम् ॥ १ ॥

अपि च ।

मरकतमणिपुञ्जा हारयष्टिरिव तारा-
भ्रमरकवलयमाला मालतीमालिकेव ।
रभसवलितकण्ठी तस्या दृष्टिर्वरिष्ठा
श्रवणपथनिविष्टा मानसं मे प्रविष्टा ॥ २ ॥

भो वयस्य किं त्वं भार्याजितः पतिरिव किमपि २ कुरकुरायमाणस्तिष्ठसि ॥ भो वयस्य स्वप्नं दृष्टम् ॥ तत्कथयतु प्रियवयस्यः ॥

जाने पङ्कजलोचना स्वप्ने मां केलिशय्यागतं
नीलोत्पलेन झडिति वीक्षितुमना अत्रान्तरे संस्थिता ।

तत्कोडेण मए वि झत्ति धरिदा ढिल्लं वरिल्लंचलं
तं मोत्तूण गदं अ तीअ सहसा णट्ठं अ णिद्दाअ मे ॥ ३ ॥

विदू । स्वगतम् । भोदु एव्वं दाव । प्रकाशम् । भो वअस्स अज्ज मए वि सिविणअं दिट्ठं ।

राजा । सप्रत्याशम् । ता कहिज्जदु कीदिसं ता सिविणअं ।

विदू । अज्ज जाणे सुरसरिआसोत्ते सुत्तोह्मि, ता हरसिरिसो वरि दिण्णलीलाचलणाए गंगाए पक्खालिओह्मि तोएण ।

राजा । तदोतदो ।

विदू । तदो अ सरदसमअवरिसिणा जलहरेण जहिच्छं पीतोह्मि ।

राजा । अच्छरिअं २ ।

विदू । तदो चित्ताणक्खत्तगदे भअवद मत्तंडे तम्मवण्णीणदीसंगदं समुद्दं गदो सो महामेहो । जाणे अहं वि मेहगब्भट्ठिदो गच्छामि ॥

राजा । तदोतदो ।

विदू । तदो अ तहिं सो थूलजलबिंदुहिं बरिसिदुं पउत्तो । अहं अ रअणाअरसुत्तीहिं मोत्तणामहेआहिं संपुडं समुग्घाडिअ जहिच्छं जलबिंदूहिं समं पीदोह्मि । ताणं अ दसमासप्पमाणं मोत्ताणं हलं भविअ गब्भे संट्ठिदो ।

राजा । तदोतदो ।

विदू ।

---

तत्कौतुकेन मयापि झटिति धृता शिथिलं वस्त्राञ्चले
तन्मोचयित्वा गतं च तया सहसा नष्टं च निद्रया मे ॥ ३ ॥

भवत्वेवं तावत् ॥ भो वयस्य अद्य मयापि स्वप्नं दृष्टम् ॥ तत् कथ्यतां कीदृशं तत् स्वप्नम् ॥ अद्य जाने सुरसरित्स्रोतेसुप्तोऽस्मि, तत् हरशिरस उपरि दत्तलीलाचरणाया गङ्गायाः प्रक्षालितोऽस्मि तोयेन ॥ ततस्ततः ॥ ततश्च शरत्समयवर्षिणा जलधरेण यथेच्छं पीतोऽस्मि ॥ आश्चर्यम् २ ॥ ततश्चित्रानक्षत्रगते भगवति मार्तण्डे ताम्रपर्णीनदीसंगमे संगतं समुद्रं गतः स महामेघः, जाने अहमपि मेघगर्भस्थितो गच्छामि ॥ ततस्ततः ॥ ततश्च तत्र सः स्थूलजलबिन्दुभिर्वर्षितुं प्रवृत्तः, अहं च रत्नाकरशुक्तिभिर्मुक्तानामधेयाभिः संपुटं समुद्घाट्य यथेच्छं जलबिन्दुभिः समं पीतोऽस्मि । तासां च दशमासप्रमाणं मुक्ताफलं भूत्वा गर्भे संस्थितः ॥ ततस्ततः ॥

तदो चउस्सट्ठिसुसुत्तिसु ट्ठिदो घणंबुबिंदुज्जिदवंसरोअणो ।
सुवत्तुलं णित्तलमच्छमुज्जलं कमेण पत्तो णवमोत्तिअत्तणं ॥ ४ ॥

राजा । तदोतदो ।

विदू । सोहं अत्ताणअं ताणं गब्भगदं मोत्ताहलत्तणेण मण्णे ।

राजा । तदोतदो ।

विदू । तदो अ परिणदिकाले समुद्दाहिंतो कड्ढिदाओ सुत्तीओ फोरिदाओ अ अहं चउस्सट्ठिमोत्ताहलत्तणं गदो ट्ठिदो किदो अ एक्केण सेट्ठिणा सुवण्णलक्खकं दइअ अहं ।

राजा । अहो विचित्तदा सिविणअस्स । तदो २ ।

विदू । तदो अ तेण आणिअ वेअडिअवेहिआइं ताइं मोत्तिआइं । मम वि इसीसि वेहणा समुप्पण्णा ।

राजा । तदोतदो ।

विदू ।

तेणावि मोत्ताहलमंडलेण एक्केक्कदाए दसमासिएण ।
एक्कावलीगंठिकमेण गुत्था जा संठिदा कोटिसुवण्णमुल्ला ॥ ५ ॥

राजा । तदोतदो ।

विदू । तदो अ तं करंडिआए कदुअ साअरदत्तो पंचालाहिवस्स सिरिवज्जाउहस्स णअरं कण्णउज्जं णाम गदो । तेण तहिं सा विक्कीणीदा कोटिए सुवण्णस्स ।

राजा । तदोतदो ।

विदू । तदो अ ।

---

ततश्चतुःषष्टिसुशुक्तिषु स्थितो घनाम्बुबिन्दूर्जितवंशरोचनः ।
सुवर्तुलं निस्तलमच्छमुज्ज्वलं क्रमेण प्राप्तो नवमौक्तिकत्वम् ॥ ४ ॥

ततस्ततः ॥ सोऽहमात्मानं तासां गर्भगतं मुक्ताफलत्वेन मन्ये ॥ ततस्ततः ॥ ततश्च परिणतिकाले समुद्रात् कर्षिताः शुक्तयः स्फोटिताश्च, अहं चतुःषष्टिमुक्ताफलत्वं गतः स्थितः, क्रीतश्चैकेन श्रेष्टिना सुवर्णलक्षकं दत्वाहम् ॥ अहो विचित्रता स्वप्नस्य, ततस्ततः ॥ ततश्च तेनानीय रत्नवेधकरवेधितानि मौक्तिकानि, ममापीषदीषद्वेदना समुत्पन्ना ॥ ततस्ततः ॥

तेनापि मुक्ताफलमण्डलेन एकैकतया दशमाषिकेण ।
एकावलीग्रन्थिक्रमेण गुम्फिता या संस्थिता कोटिसुवर्णमूल्या ॥ ५ ॥

ततस्ततः ॥ ततश्च तां करण्डिकायां कृत्वा सागरदत्तः पाञ्चालाधिपस्य श्रीवज्रायुधस्य नगरं कान्यकुब्जं नाम गतः, तेन तत्र सा विक्रीणीता कोट्या सुवर्णस्य ॥ ततस्ततः ॥ ततश्च ।

दट्ठूण थोरत्थणतुंगिमाणं एक्कावलीए तह चंगिमाणं ।
स तेण दिण्णा दइआअ कंठे रज्जंति छेआ समसंगमम्मि॥६॥

अवि अ ।

णहवहलिदजोह्णाणिब्भरे रत्तिमज्झे
कुसुमसरपहारुत्ताससंमीलिदाए ।
णिहुअणपरिरंभे णिब्भरुत्तुंगपीण-
त्थणअलसणिवेसा पीडिदोहं विबुद्धो ॥ ७ ॥

राजा । किंचिद्विहस्य विचिन्त्य च । सिविणअमिसेण सव्वं तं दिट्ठं ममाणुसंदधमाणस्स । पडिसिविणएण एदस्स अ विणिवारणं तुह अहिप्पाओ ।

विदू । भट्ठो ठक्कुरो खुहाकिलंतो बह्मणो अविणीदहिअआ बालरंडा विरहिदो अ माणुसो मणोरहमोदएहिं अप्पाणअं विडंबेदि । अवि अ । वअस्स पुच्छेमि कस्स उण एसो प्पहाओ ।

राजा । पेम्मस्स ।

विदू । भो देवीए गदे पणअप्परूढे वि प्पेम्मे किं त्ति कप्पूरमंजरीं पि सव्वंगवित्थारिअलोअणो पिअंतो विअ अवलोएसि किं तदो वि हीअमाणगुणगणा देई ।

राजा । मा एवं भण ।

कीए वि संघडइ कस्स वि पेमगंठी
एमेअ तत्थ ण हु कारणमत्थि रूवं ।
चंगत्तणं उण लहिज्जदि जं तहीं पि
तं दिज्जए पिसुणलोअमुहेसु मुद्दा ॥ ८ ॥

विदू । किं उण एदं पेम्मपेम्म त्ति भणिज्जदि ।

राजा । अण्णोण्णमिलिदमिहुणस्स मकरद्धअसासणोवरूढपणअगंठिं पेम्म त्ति छइल्ला भणंति ।

विदू । कीदिसो सो ।

राजा ।

जस्सिं विअप्पघडणाइकलंकमुक्को
अंताणअम्मि सरलत्तणमेइ भाओ ।
एक्कक्कअस्स पसरंतरसप्पसारो
सिंगारवड्टिअमणोभवदिण्णसारो ॥ ९ ॥

विदू । कधं विअ सो लक्खिज्जदि ।

राजा ।

जाणं सहावपसरंतपलोलदिट्ठी
पेरंतलुंठिअमणाण परप्परेण ।
वड्ढंतवम्महविइण्णरसप्पसारो
ताणं पआसइ लहू वि सचित्तभाओ ॥ १० ॥

विदू ।

---

दृष्ट्वा स्थूलस्तनतुङ्गिमानमेकावल्यास्तथा सुन्दरत्वम् ।
सा तेन दत्ता दयितायाः कण्ठे रज्जन्ति विदग्धाः समसंगमे ॥ ६ ॥

अपि च ।

नभोधवलितज्योत्स्नानिर्भरे रात्रिमध्ये
कुसुमशरप्रहारोत्त्राससंमीलितायाः ।
निधुवनपरिरम्भे निर्भरोत्तुङ्गपीन-
स्तनकलशनिवेशात्पीडितोहं विबुद्धः ॥ ७ ॥

स्वप्नमिषेण सर्वं तद्दृष्टं ममानुसंदधतः । प्रतिस्वप्नेन एतस्यैव विनिवारणं तवाभिप्रायः ॥ भ्रष्टः स्वामी क्षुधाक्रान्तो ब्राह्मणः । अविनीतहृदया बालरण्डा विरहितो मनुष्यश्च मनोरथमोदकैरात्मानं विडम्बयति । अपि च । वयस्य पृच्छामि कस्य पुनरेवप्रभावः ॥ प्रेम्णः ॥ भो देव्यां गते प्रणयप्ररूढेपि प्रेम्णि किमिति कर्पूरमञ्जरीमपि सर्वाङ्गविस्तारितलोचनः पिबन्निवावलोकयसि किं ततोपि हीयमानगुणगणा देवी ॥ मा एवं भण ॥

कस्यामपि संघटते कस्यापि प्रेमग्रन्थि-
रेवमेव तत्र न खलु कारणमस्ति रूपम् ।
सुन्दरत्वं पुनर्लभ्यते यत्तत्रापि
तद्दीयते पिशुनलोकमुखेषु मुद्रा ॥ ८ ॥

किं पुनरेतत् प्रेमप्रेमेति भण्यते ॥ अन्योन्यमिलितमिथुनस्य मकरध्वजशासनोपरूढप्रणयग्रन्थिं प्रेमेति विदग्धा भणन्ति ॥ कीदृशः सः ॥

यस्मिन्विकल्पघटनादिकलङ्कमुक्त आत्मनि सरलत्वमेति भावः ।
एकैकस्य प्रसरद्रसप्रसारः शृङ्गारवर्धितमनोभवदर्पसारः ॥ ९ ॥

कथमिव स लक्ष्यते ॥

ययोः स्वभावप्रसरत्प्रलोलदृष्टि-
पर्यन्तलुण्ठितमनसोः परस्परेण ।
वर्धमानमन्मथवितीर्णरसप्रसार-
स्तयोः प्रकाशते लघुरपि सचित्तभावः ॥ १० ॥

अंतेणिविट्ठमणविब्भमडंबरो जो
सो भम्मइ मअणमंडणमेत्थ पेम्मं ।
दुल्लक्खअं पि पअडेइ जणो जअम्मि
तं जाणिमो सुबहुलं मअणिंदजालं ॥ ११ ॥

किंच । यइ चित्तगदं पेम्ममणुरागमुप्पादेदि ता किं किज्जदि मंडणाडंबरविडंबणाए ।

राजा । वअस्स सच्चमिणं ।

किं मेहलावलअसेहरणेउरेहिं
किं चंगिमाए किमु मंडणडंबरेहिं ।
तं अण्णमत्थि इह किं पि णिअंबिणीओ
जेणं तहंति सुहअत्तणमंजरीओ ॥ १२ ॥

अवि अ ।

किं गेअ णट्टविहिणा किमु वारुणीए
धूवेण किं अगरुणो किमु कुंकुमेण ।
मिठ्ठत्तणे महिअलम्मि ण किं पि अण्णं
रुच्चस्स अत्थि सरिसं उण माणुसस्स ॥ १३ ॥

अवि अ ।

---

अन्तेनिविष्टमनोविभ्रमडम्बरो यः
स भण्यते मदनमण्डनमत्र प्रेम ।
दुर्लक्ष्यमपि प्रकटयति जनो जगति
तज्जानीमः सुबहुलं मदनेन्द्रजालम् ॥ ११ ॥

यदि चित्तगतं प्रेम अनुरागमुत्पादयति तत्किं क्रियते मण्डनाडम्बरविडम्बनया ॥ वयस्य सत्यमिदम् ॥

किं मेखलावलयशेखरनूपुरैः
किं सौन्दर्येण किमु मण्डनडम्बरैः ।
तदन्यदस्ति इह किमपि नितम्बिन्यो
येन लभन्ते सुभगत्वमञ्जरीः ॥ १२ ॥

अपि च ।

किं गेयं नृत्यविधिना किमु वारुण्या
धूपेन किमगुरोः किमु कुङ्कुमेन ।
मिष्टत्वे महीतले न किमप्यन्यद्
रूच्यस्यास्ति सदृशं पुनर्मानुषस्य ॥ १३ ॥

अपि च ।

जा चक्कवट्टिघरिणी जणगेहिणी जा
पेम्मम्मि ताण ण तिलं पि विसेसलंभो ।
जाणे सिरीअ जइ किज्जदि को वि भेओ
माणिक्कभूसणणिवेसणकुंकुमेहिं ॥ १४ ॥

अवि अ ।

किं लोअणेहिं तरलेहिं किमाणणेण
चंदोवमेण थणिणेहिं किमुण्णएहिं ।
तं किं पि अण्णमिह भूवलए णिमित्तं
जेणंगणाउ हिअआउ ण ओसरंति ॥ १५ ॥

विदू । एव्वं णेदं । किं उण अण्णं पि मे कहेसु जं कुमारत्तणं माणुसस्स मणुज्जं । तस्सिं वि तारुण्णए ण चंगत्तणं वठ्ठदि ।

राजा ।

णूणं दुवे इह पजापइणो जअम्मि
जो देहणिम्मअणजोव्वणदाणदक्खो ।
एक्को घडेदि पढमं कुमरीणमंगं
कंडारिऊण पअडेइ पुणो दुदीओ ॥ १६ ॥

तेण अ ।

---

या चक्रवर्तिगृहिणी जनगेहिनी या
प्रेम्णि तयोर्न तिलमपि विशेषलाभः ।
जाने श्रिया यदि क्रियते कोपि भेदो
माणिक्यभूषणनिवेशनकुङ्कुमैः ॥ १४ ॥

अपि च ।

किं लोचनैस्तरलैः किमाननेन
चन्द्रोपमेन स्तनैः किमुन्नतैः ।
तत्किमप्यन्यदिह भूवलये निमित्तं
येनाङ्गना हृदयान्नापसर्पन्ति ॥ १५ ॥

एवमेतत् किं पुनरन्यदपि मे कथयस्व यत्कुमारत्वं मानुषस्य मनोज्ञम् । तस्मिन्नपि तारुण्ये न सौन्दर्यं विधत्ते ॥

नूनं द्वाविह प्रजापती जगति
यौ देहनिर्मापनयौवनदक्षौ ।
एको घटयति प्रथमं कुमारीणामङ्ग-
मुत्कीर्य प्रकटयति पुनर्द्वितीयः ॥ १६ ॥

तेन च ।

रणिअवलअकंचीणेउरावेसलच्छी
मरगअमणिमालागोरिआहारलट्ठी ।
हिअअहरणमंतो जोव्वणं कामिणीणं
जअदि मअणकंडो को वि सट्ठो बलिट्ठो ॥ १७ ॥

तहा अ ।

अंगं लाअण्णपुण्णं सवणपरिसरे लोअणे हारतारं
वच्छं थोरत्थणिल्लं तिवलिवलइअं मुट्ठिगेज्झं अ मज्झं ।
चक्काआरो णिअंबो तरुणिमसमए किं णु अण्णाण कज्जं
पंचेहिं चेअ बाला मअणजअमहाविजअंतीउ होंति ॥ १८ ॥

नेपथ्ये । कुरंगिका । चिरअरगब्भघरवासेण सेअसलिलसित्तगत्ता तत्थभोदी ता वत्थंचलेण वीजइस्सं । तथा कुर्वन्ती । भोदि वइल्लपल्लवपवणेण णिउत्तो दे देहदाहो ।

कर्पूर । सहि कुरंगिए इमिणा सिसिरोवआरेण णलिणि व्व अइसएण किलिम्मामि ।

बिस व्व बिसकंदली बिसहर व्व हारच्छडा
वअस्समिव अत्तणो किरदि तालवेंटाणिलो ।
तहा अ करणिग्गअं जलदि जंतधाराजलं
ण चंदणमहो सही हरइ देहदाहं अ मे ॥ १९ ॥

---

रणितवलयकाञ्चीनूपुरावेशलक्ष्मी-
र्मरकतमणिमालागौरिकाहारयष्टिः ।
हृदयहरणमन्त्रो यौवनं कामिनीनां
जयति मदनकाण्डः कोपि षष्ठो बलिष्ठः ॥ १७ ॥

तथा च ।

अङ्गं लावण्यपूर्णं श्रवणपरिसरे लोचने हारतारं
वक्षः स्थूलस्तनाढ्यं त्रिवलिवलयितं मुष्टिग्राह्यं च मध्यम् ।
चक्राकारो नितम्बस्तरुणिमसमये किं नु अन्येन कार्यं
पञ्चभिरेव बाला मदनजयमहावैजयन्त्यो भवन्ति ॥ १८ ॥

चिरतरगर्भगृहवासेन सेकसलिलसिक्तगात्रा तत्रभवती, तद्वस्त्राञ्चलेन वीजयिष्यामि । भवति वस्त्रपल्लवपवनेन निवृत्तस्ते देहदाहः ॥ सखि कुरङ्गिके एतेन शिशिरोपचारेण नलिनीवातिशयेन क्लाम्यामि ॥

विषमिव बिसकन्दली विषधरमिव भावच्छटा
वयस्यमिव आत्मनः किरति तालवृन्तानिलः ।
तथा च करनिर्गतं ज्वलति यन्त्रधाराजलं
न चन्दनमहौषधिर्हरति देहदाहं च मे ॥ १९ ॥

विदू । सुदं पिअवअस्सेण, ण भरिदा कण्णा पीऊसगंडूसेहिं, ता अज्ज वि किं उवक्खीअदि घणघम्मेण किलिमंती मुणालिआ, गाढकढणदूसहेण सलिलेण सिंचिज्जंती केलिकुंकुमत्थली, छम्मासिअमोत्तिआ तुदंती एक्कावली, गंठिवण्णकेआरिआ लुंठिज्जंती गंधहरिणेण, ता सच्चं सिविणअं दे संपन्नं, ता एहि खिडक्किआदुआरेण पविसह्म, उब्भिज्जंदु मअरद्धअपडाआ, पअट्टदु कण्णकुहरम्मि पंचमहुंकाररिंछोलो, सुक्कंतु बाहप्पहावा, संवरिज्जंतु णीसासप्पसारा, लेहेदु लाअण्णं पुणो णवहावं । इतिखिडक्किकोद्घाटनं प्रवेशं च नाटयतः ॥

ततः प्रविशति नायिका कुरङ्गिका च ।

नायिका । सुसाध्वसमात्मगतम् । अम्मो किं एस सहसा गअणंगणादो अवइण्णो पुण्णिमाहरिणंको, किं वा तुट्ठेण णीलकंठेण णिअदेहं लंभिदो मणोभवो, किं अ हिअअस्स दुज्जणो णअणाणं सज्जणो संभावेदि मं, किं एदं इंदआलं पेक्खामि । प्रकाशम् । सहि कुरंगिए इंदआलं विअ पेक्खामि ।

विदू । राजानं हस्ते गृहीत्वा । भो सच्चं एदं इंदजाल संपण्णं ।

नायिका । लज्जते ।

कुरं । सहि कप्पूरमंजरी अब्भुत्थाणेण संभावेहि भट्टारअं ।

---

श्रुतं प्रियवयस्येन । न भृतौ कर्णौ पीयूषगण्डूषैः, तदद्यापि किमुपेक्ष्यते घनघर्मेण क्लाम्यन्ती मृणालिका, गाढकथनदुःसहेन सलिलेन सिच्यमाना केलिकुङ्कुमस्थली, षाण्मासिकमौक्तिका त्रुट्यन्ती एकावली, ग्रन्थिपर्णकेदारिका लुण्ठ्यमाना गन्धहरिणेन, तत्सत्यं स्वप्नं ते संपन्नं, तदेहि क्षुद्रद्वारेण प्रविशावः, ऊर्ध्वीक्रियतां मकरध्वजपताकाः, प्रवर्ततां कर्णकुहरे पञ्चमहुंकारश्रेणी, शुष्यन्तां बाष्पप्रवाहाः, संव्रियन्तां निश्वासप्रसराः, लभतां लावण्यं पुनर्नवभावम् ॥

अहो किमेष सहसा गगनाङ्गणतोऽवतीर्णः, पूर्णिमाहरिणाङ्कः, किं वा तुष्टेन नीलकण्ठेन निजदेहं लम्भितो मनोभवः किं च हृदयस्य दुर्जनो नयनयोः सज्जनः संभावयति माम् । किमेतदिन्द्रजालं प्रेक्षामि । सखि कुरङ्गिके एतदिन्द्रजालमिव प्रेक्षामि ॥ भो सत्यमेतदिन्द्रजालं संपन्नम् ॥ सखि कर्पूरमञ्जरि अभ्युत्थानेन संभावय भट्टारकम् ॥

नायिका । उत्थातुमिच्छति ।

राजा । हस्तेगृहीत्वा ।

उट्ठिउण थणभारभंगुरं
मा मिअंकमुहि भंज मझ्झअं ।
तुझ्झ ईदिसणिवेसदंसणो
लोअणाण मअणो पसीददु ॥ २० ॥

अवि अ ।

जिस्सा पुरो हरदि णो दलिआ हलद्दी
रोसाणिअं ण कणअं ण अ चंपआइं ।
ताइं सुवण्णकुसुमेहिं विलोअणाइं
अच्चेमि जेहिं हरिणच्छि तुमं सि दिट्ठा ॥ २१ ॥

विदू । गब्भघरवासेण सेअसलिलसित्तगत्ता संभूदा तत्थभोदी कप्पूरमंजरी ता सिचअंचलेण वीजिस्सं दाव । तथा कुर्वन् । हाहा कधं वल्लिपल्लवपवणेण णिव्वाणो पदीओ । विचिन्त्य स्वगतम् । भोदु लीलुज्जाणं चेअ गच्छेह्म । प्रकाशम् । भो अंधआरणच्चिदं वट्टदि ता णिक्कह्म सुरंगामुहेण एव्व पमदुज्जाणं दाव । सर्वे निष्क्रमणं नाटयन्ति ।

राजा । कर्पूरमञ्जरीं करे धृत्वा ।

मझ्झ हत्थठिदपाणिपल्लवा
ईसिसंचरणचंचुरा हव ।
जं चिराअ कलहंसमंडली
भोदु केलिगमणम्मि दूहआ ॥ २२ ॥

---

उत्थाय स्तनभारभङ्गुरं मा मृगाङ्कमुखि भञ्ज मध्यकम् ।
तव ईदृशनिवेशदर्शने लोचनयोर्मदनः प्रसीदतु ॥ २० ॥

अपि च ।

यस्याः पुरो हरति नो दलिता हरिद्रा
रोषाणितं न कनकं न च चम्पकानि ।
ते सुवर्णकुसुमैर्विलोचने
अर्चयामि याभ्यां हरिणाक्षि त्वमसि दृष्टा ॥ २१ ॥

गर्भगृहवासेन सेकसलिलसिक्तगात्रा संभूता तत्रभवती कर्पूरमञ्जरी तत्सिचयाञ्चलेन वीजयिष्ये तावत्, हाहा कथं वल्लिपल्लवपवनेन निर्वाणः प्रदीपः ॥ भवतु लीलोद्यानमेव गच्छावः । भो अन्धकारनर्तितं वर्तते तन्निष्क्रामः सुरङ्गामुखेनैव प्रमदोद्यानं तावत् ॥

मम हस्तस्थितपाणिपल्लवा ईषत्संचरणचञ्चुरा भव ।
यच्चिराय कलहंसमण्डली भवतु केलीगमने दुर्भगा ॥२२॥

स्पर्शसुखमभिनीय ।

जे णवस्स तिउसस्स कंटआ
जे कदंबमुउलस्स केसरा: ।
अज्ज तुझ्झ करफंससंगिणो
ते हुअंति मह अंगसंगिणो ॥ २३ ॥

नेपथ्ये वैतालिकयोरेकः । सुहणिबंधणो होदु देअस्स चंदुज्जोओ ।

भूगोले तिमिराणुबंधमलिणे भूमीघरे वट्टिदे
संजादा णवभुज्जपिंजरमुही जोह्णाअ पुव्वा दिसा ।
मुंचंतोमुचुकुंदकेसरसिहासोहाणुआरे करे
चंदो पेक्ख कलक्कमेण अ गदो संपुण्णबिंबत्तणं ॥ २४ ॥

अवि अ ।

अकुंकुममचंदणं दसदिसावहूमंडणं
अकंकणमकुंडलं भुअणमंडलीभूसणं ।
असोसणममोहणं मअरलंछणस्साउहं
मिअंककिरणावली णहअलम्मि पुंजिज्जदि ॥ २५ ॥

विदू । भो अणकचंदेण वण्णिदा चंदुज्जोअलच्छी । ता संपदं माणिक्कचंदस्स अवसरो ।

नेपथ्ये द्वितीयः ।

धज्जंतागुरुधूववट्टिबहुला दिज्जंतदीउज्जला
लंबिज्जंतविचित्तमोत्तिअलदा मुंचंतपारावदा ।

---

ये नवस्य त्रपुसस्य कण्टका ये कदम्बमुकुलस्य केसराः ।
अद्य तव करस्पर्शसङ्गिन स्ते भवन्तु ममाङ्गसङ्गिनः ॥ २३ ॥

सुखसंबन्धिनो भवतु देवस्य चन्द्रोद्योतः ।

भूगोले तिमिरानुबन्धमलिने भूमीगृहे वर्तिते
सञ्जाता नवभूर्जपिञ्जरमुखी ज्योत्स्नया पूर्वादिक् ।
मुञ्चन्मुचुकुन्दकेसरशिखाशोभानुकारिणः करान्
चन्द्रः प्रेक्ष कलाक्रमेण च गतः संपूर्णबिम्बत्वम् ॥ २४ ॥

अपि च ।

अकुङ्कुमचन्दनं दशदिशावधूमण्डनम्
अकङ्कणमकुण्डलं भुवनमण्डलीभूषणम् ।
अशोषणममोहनं मकरलाञ्छनस्यायुधं
मृगाङ्ककिरणावली नभस्तले पुञ्जीयते ॥ २५ ॥

भो कनकचन्द्रेण वर्णिता चन्द्रोद्योतलक्ष्मीः, तत्सांप्रतं माणिक्यचन्द्रस्यावसरः ॥

दह्यमानागरुधूपवर्तिबहुला दह्यमानदीपोज्ज्वलाः
लम्ब्यमानविचित्रनवमौक्तिकलता मुच्यमानपारावताः ॥

संजिज्जंतमणोहरकेलिसत्र्प्रणा जप्पंतदूईसत्र्प्रा
सेज्जुत्संगवलंतमाणिणिगणा वट्टंति कीलाघरा ॥ २६ ॥

अवि अ ।

दंता कप्पूरपूरच्छुरणमिव दिसासुंदरीणां मुहेसु
लह्णं जुह्णं किरंता भुअणजणमणोणंदणं चंदणं व्व ।
जुण्णं कंदप्पकंदं णिहुअणकलणाकंदलिल्लं कुणंता
जादा णंकपादा सरअजलहरुम्मुक्कहाराणुआरा ॥ २७ ॥

विदू ।

दिसिबहुत्तंसो णहसरहंसो ।
णिहुअणकंदो पअट्टइ चंदो ॥ २८ ॥

कुरं ।

ससहररइअभरट्टो माणिणिमाणघरट्टो ।
णवचंपअकोदंडो मअणो जअइ पअंडो ॥ २९ ॥

कर्पूरमञ्जरीं प्रति । पिअसहि तुए कदं चंदवण्णणं महाराअस्स पुरदो पढिस्सं ।

कर्पूर । लज्जया अधोमुखी तिष्ठति ।

कुरं । पठति ।

मंडले ससहरस्स गोरए दंतिदंतणवछेअचोरए ।
भाइ लंछणमिओ फुरंतओ केलिकोइलतुलं धरंतओ ॥ ३० ॥

राजा । अहो कप्पूरमंजरीए अभिणवत्थदंसणं, रमणिज्जो सद्दो, उत्तिविचित्तदा, रसणीसंदो अ । तां प्रति

मा कहिं पि वअणेण बिब्भमो
होउ इत्ति तुह णूणमिंदुणा ।
लंछणच्छलमसीविसेसओ
पेच्छ बिंबफलए णिए कदो ॥ ३१ ॥

किं च ।

पंडुरेण जइ रज्जए मुहं
कोमलंगि खडिआरसेण दे ।
दिज्जए उण कवोलकज्जलं
ता लहेदु ससिणो विडंबणं ॥ ३२ ॥

चन्द्रमुद्दिश्य ।

मुक्कसंक हरिणंक किं तुमं
सुंदरीपरिसरेण हिंडसि ।
गोरगंडपरिपंडुरत्तणं
पेच्छ दिण्णमिमिणा मुहेण दे ॥ ३३ ॥

नेपथ्ये । महान् कलकलः । सर्वे आकर्णयन्ति ।

राजा । किं उण एसो कलअलो ।

कर्पूर । ससाध्वसम् । पिअसहिपिअसहि एदं अवगमिअ आअच्छ ।

कुरं । निष्क्रम्य प्रविशति ।

विदू । देवीए पिअवअस्सकदं वंचणं अवगमिदं त्ति तक्केमि ।

कुरं । अज्जे गमिअ उण आअदा, कधेमि, पिअसहि भट्टारअस्स वंचणं कदुअ तुए सहसंगमं जाणिअ आअच्छदि देई, तेण कुज्जवामणकिराअवरिसधरसोविदल्लाणं एस कोलाहलो ।

---

सज्ज्यमानमनोज्ञकेलिशयनाः जल्प्यमानदूतीशताः
शय्योत्सङ्गवलन्मानिनिगणा वर्तन्ते क्रीडागृहाः ॥ २६ ॥

अपि च ।

ददतः कर्पूरपूरच्छुरणमिव दिक्सुन्दरीणां मुखेषु
श्लक्ष्णां ज्योत्स्नां किरन्तो भुवनजनमनोनन्दनं चन्दनमिव ।
जीर्णं कन्दर्पकन्दं निधुवनकलनाकन्दलाढ्यं कुर्वन्तः
जाता एणाङ्कपादाः शरज्जलधरोन्मुक्तधारानुकाराः ॥ २७ ॥

दिग्वधूवसन्तो नभस्सरोहंसः ।
निधुवनकन्दः प्रवर्तते चन्द्रः ॥ २८ ॥

शशधररचितगर्वो मानिनीमानदलनः ।
नवचम्पककोदण्डो मदनो जयति प्रचण्डः ॥ २९ ॥

प्रियसखि त्वया कृतं चन्द्रवर्णनं महाराजस्य पुरतः पठिष्ये ॥

मण्डले शशधरस्य गौरके दन्तिदन्तनवछेदचोरके ।
भाति लाञ्छनमृगः स्फुरन् केलिकोकिलतुलां धारयन् ॥ ३० ॥

अहो कर्पूरमञ्जर्या अभिनवार्थदर्शनं रमणीयः शब्द उक्तिविचित्रता रसनिष्यन्दश्च ।

मा कुत्रापि वदनेन विभ्रमो भवत्विति तव नूनमिन्दुना ।
लाञ्छनच्छलमसीविशेषकः प्रेक्ष बिम्बफलके निजे कृतः ॥ ३१ ॥

पाण्डुरेण यदि रज्यते मुखं कोमलाङ्गि खटिकारसेन ते ।
दीयते पुनः कपोलकज्जलं तल्लभेत शशिनो विडम्बनम् ॥ ३२ ॥

मुक्तशङ्क हरिणाङ्क किं त्वं सुन्दरीपरिसरेण हिण्डसि ।
गौरगण्डपरिपाण्डुरत्वं प्रेक्ष दत्तमेतेन मुखेन ते ॥ ३३ ॥

किं पुनरेष कलकलः ॥ प्रियसखि २ एतदवगम्यागच्छ ॥ देव्या प्रियवयस्यकृतं वञ्चनमवगमितमिति तर्कयामि ॥ आर्ये गत्वा पुनरागता । कथयामि प्रियसखि भट्टारकस्य वञ्चनं कृत्वा त्वया सह संगमं ज्ञात्वा आगच्छति देवी । तेन वामनकुब्जकिरातवर्षधरसौविदल्लानामेष कोलाहलः ॥

कर्पूर । ता मं पेसदु महाराओ जेण इमिणा सुरंगामुहेण एव्व पविसिअ रक्खाघरअं गच्छामि जेण देई महाराएण सह संगमं ण जाणादि ।

इति परिक्रम्य निष्क्रान्ताः सर्वे ॥

इति श्रीबालकविकविराजराजशेखरविरचिते कर्पूरमञ्जर्यभिधसट्टके तृतीयं जवनिकान्तरं संपूर्णम् ॥

---

तन्मां प्रेषयतु महाराजः । येनैतेन सुरङ्गामुखेनैव प्रविश्य रक्षागृहं गच्छामि । येन देवी महाराजेन सह संगमं न जानाति ॥

॥ इति तृतीयजवनिकान्तरस्य प्राकृतविवृतिः ॥

---

# THE VIDVAN-MANO-RANJINI'

OR

## REJOICER OF THE MIND OF THE LEARNED.

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA SÁRA, BY RÁMA TÍRTHA

*(Continued from page 30.)*

There is therefore in this system a utility (or means) to those who desire to know supreme soul, in performance of reflection on the latter part of the Veda, without works, inasmuch as such reflection can be achieved even without works (or observances.) Nor is there absence of contradiction for observances are repugnant to reflection, since one whose intellect is distracted by works cannot determine the meaning of the Vedánta.

For the title of these investigators of pure spirit to perform works cannot fail to involve a contradiction, such works depending on the cognition of soul as determined by eternal false imputation to the supreme; whereas spirit is considered by these investigators thus I am the supreme, which is not a Bráhman, nor a Kshatriya &c, and neither an actor nor subject to fruition of actions; so that works should not require to be renounced by the investigator of spirit The drift, therefore, is that renunciation which is established to be incumbent as subsidiary to knowledge of spirit, by revelation, scripture, and argumentation, is cessation By the words *et cætera* in the text *heat, cold, et cætera,* are included honour and dishonour, gain and loss, sorrow and joy, and other pairs of correlates In the text *on the hearing et cætera,* the words *et cætera* are intended to comprise pondering on what has been heard, and the like *The object if conformable to hearing and the like,* is obedience to the spiritual teacher in conformity therewith, the procuring of books, their preservation, and the like. It is not taught also that intentness of mind is to be bestowed on building huts and receiving gifts &c, with the notion that accumulation of comfortable dwellings, wealth, and provisions is favourable to hearing and the like, since such accumulation is not authorised in the absence of an injunction to resume that which has been required to be laid aside at the time of renunciation, in conformity to the rule, Let him lay aside his staff, clothes, cincture, and the rest of his habiliments, with exception of the resumption of that which is other than his staff, cincture, and the like Intentness is concentration, in other words, the being engrossed on one object In the text *of the spiritual guide, of the Vedánta, et cætera,* the words *et cætera* comprise the scriptures, sacred history, and the legendaries Belief is an intellection consisting of assurance of the words of the spiritual guide and the rest, that so and so is thus and not otherwise; and this belief is faith. The author defines the last requisite.

*Desire of liberation* Liberation is the abiding in identity with the supreme, the effect of ignorance (or illusion) expelled by knowledge Desire, whereof this is the object, is desire of liberation; possession of such desire is the state of one who desires liberation It may be asked: How can desire be a predicate of the authorised student, whereas the title to emancipation belongs to one free from all desires, as it is revealed in the text When all the desires which exist in his heart are put away, then the mortal becomes immortal. This is no objection: for this desire is a wish which has not soul for its object; and the text refers to wish having soul for its object, and the wish for liberation, having soul for its object, is not such a desire, it being known from the Vedic text, He who is not desiring, and desireless, and absolutely void of desire, has attained his desire, that he who desires spirit, having attained his desire, is free from

---

तदिह ब्रह्मात्मजिज्ञासूनां वेदान्तविचारे क्रियमाणे निष्कर्म्मणामुपयोगो विनापि कर्म्म तदनुष्ठानसिद्धेः नाप्यविरोधः कर्म्मविक्षिप्तचित्तस्य वेदान्तार्थनिर्णयाशक्तेः कर्म्मणां विचारविरोधित्वात् नह्यप्येतेषामब्रह्मक्षत्राद्यकर्त्रभोक्तृब्रह्मास्मीत्यात्मनि विचार्य्यमाणे ब्रह्मणयनाद्यध्यासविशिष्टात्मप्रतिपत्त्यधीनेषु कर्म्मस्वधिकारो न विरुध्यते येनात्मजिज्ञासुना कर्म्माणि न त्यक्तव्यानि स्युः तस्माच्छ्रुतिस्मृतिन्यायैरात्मज्ञानाङ्गतया यः सन्न्यासः कर्त्तव्यतया प्राप्तः स उपरतिरितिभावः। शीतोष्णादीत्यादिपदात् मानापमानलाभालाभशोकहर्षादिग्रहः। श्रवणादावित्यत्रादिशब्दो मननादिसंग्रहार्थः। तदनुगुणोऽत्रगुरुशुश्रूषा पुस्तकसम्पादनतद्रक्षणादिः श्रवणाद्यनुगुणो विषयो निर्दिश्यते । न पुनः सुखवासद्रव्यान्नादिसंग्रहादेरपि श्रवणाद्यनुकूलत्वात्तदर्थं मठारम्भप्रतिग्रहादावपि चित्तसमाधिः कर्त्तव्य इहोपदिश्यते। दण्डमाच्छादनं कौपीनं परिग्रहोच्छेषं विसृजेदितिसन्न्यासकाले त्याजितस्य दण्डकौपीनाद्यतिरिक्तस्य विना प्रतिप्रसवशास्त्रं संग्रहानुपपत्तेरित्यर्थः । समाधिरैकाग्र्यं तत्परत्वमिति यावत् । गुरुवेदान्तादीत्यादिपदात् स्मृतीतिहासपुराणानां ग्रहः । विश्वासइदमित्थमेव नान्यथेति गुर्वादिवाक्येषु निश्चयात्मिका बुद्धिः सा श्रद्धेत्यर्थः । चरममनुबन्धं लक्षयति ॥

desire. The author proceeds to quote the Veda to prove that the authorised student should possess tranquillity and other means The Kâṇvas read: After becoming tranquil, self-subdued, having ceased from works, ready to endure, intent, he should be spirit in spirit The Mâdhyandinas read in place of *intent, rich in faith.* It is to be observed that six instruments, tranquillity and the rest, according to the rule that attributes should be supplied [where not mentioned, from other sources], are in conformity with both readings. The Lord (Krishṇa) also has declared that tranquillity and the rest are conditions of knowledge. Of one engaged in union (with infinite spirit), tranquillity is declared a cause, whence is happiness to him that has not tranquillity? Again, And when he withdraws his organs from the objects of sense, as a tortoise withdraws its limbs from all sides, then his knowledge is concentrated; Renouncing all duties, come to me alone for refuge; The contacts of sense-objects, son of Kuntí, bring heat and cold, pleasure and pain, coming and going, transient, suffer them, O Bharata; In intentness the intellection is unmoved; place thy mind on me alone, fix thy intellect on me, He that has faith, acquires knowledge, engrossed, his sense restrained, but he that has not knowledge, or faith, wavering in spirit, perishes. And with reference to desire of liberation texts of the Veda and the scriptures are to be considered: Desirous of emancipation, I resort to thee for refuge, That place is to be sought for, which having reached, souls never return again, I take refuge with that primeval person from whom this primeval activity has proceeded.

One who possesses such qualifications is the authorised student of the Vedânta, and to this effect he exemplifies the statement of a competent authority.

*And it has been said, To him who is tranquil, &c. To him who is tranquil in mind,* means, to one quiescent; *who has his organs in subjection* self-controlled; *whose sins have disappeared,* entirely purified within; *who acts according to the commandments,* one who has acquired the grace of God by performance of constant and other observances, besides avoiding interested and prohibited actions; *who is possessed of good qualities,* who is endowed with discrimination, dispassionateness, cessation, endurance, and contemplation; *docile,* ever following his spiritual guide, desiring liberation. To such a person, desiring emancipation, this knowledge of soul must always be imparted by the spiritual guide such is the sense of the stanza quoted in the text Thus, then, the requisite in the form of the authorised student, has been described The author now sets forth the object matter as a requisite.

*The object-matter &c.* A doubt may arise that the unity of the individuated spirit and the supreme, is a commixture of two essentially different things, since a common combination of two objects mutually exclusive, as of milk and water, may be the meaning of the word one Lest such a doubt should arise, the author makes the following explanation

*Pure intelligence &c* Purity of intelligence is the transcending of all attributes, simplicity It may be asked: How can pure intelligence be an object of reflection, since antecedently to reflection, such intelligence being self-luminous, shines forth of itself Anticipating this objection the author proceeds, considering that it may be proved to be an object, inasmuch as though it is essentially luminous, it is unknown in its nature of absolute existence, intelligence, bliss, and self-consciousness

---

मुमुक्षुत्वमिति। मोक्षोनाम विद्यानिरस्ताऽविद्या तत्कार्य्यं ब्रह्मात्मनावस्थानं। तद्विषयेच्छा मोक्षेच्छा तद्वत्त्वं मुमुक्षुत्वमित्यर्थः। ननु यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवतीति श्रुतेः। सर्व्वकामविमुक्तस्य मोक्षाधिकारात् कथमिच्छा अधिकारिविशेषणमिति चेत्। नायं दोषः अनात्मविषयेच्छाया एव कामत्वात्तदभिप्राया श्रुतिः। मोक्षेच्छायास्त्वात्मविषयतयाऽकामत्वात्। अथाकामयमानो योऽकामो निःकामः आप्तकामइति श्रुतेरात्मकामस्याप्तकामत्वेनाकामत्वाच्छमादिति। विद्याधिकारिणः शमादिसाधनवत्त्वे श्रुतिं प्रमाणयति। शान्तोदान्तउपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदिति काण्वाः पठन्ति। समाहित इत्यस्य स्थाने श्रद्धावित्तोभूत्वेति माध्यन्दिनास्तदुभयपाठानुरोधेन गुणोपसंहारन्यायमाश्रित्येह शमादयः षट् निर्दिष्टाइति द्रष्टव्यं। शमादेर्विद्याहेतुत्वं भगवानप्याह योगारूढस्य तस्यैव शमः कारणमुच्यते। अशान्तस्य कुतः सुखं। तथा यदा संहरते चायं कूर्म्मोऽङ्गानीव सर्व्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता इति। सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रजेति। मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः आगमापायिनो नित्यास्तांस्तितिक्षस्व भारतइति। समाधावचला बुद्धिः। मय्येव मनआधत्स्व मयि बुद्धिं निवेशयेति। श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः। अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यतीति च। मुमुक्षुत्वेऽपि मुमुक्षुर्वै शरणमहं प्रपद्ये ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्त्तन्ते भूयः। तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणीति श्रुति स्मृती द्रष्टव्ये। एवं विशेषणविशिष्टोवेदान्ताधिकारीति निरूपितेऽर्थेऽभियुक्तस्य वचनमुदाहरति॥

उक्तञ्च प्रशान्तेति। प्रशान्तचित्ताय शान्ताय जितेन्द्रियाय दान्ताय प्रहीणदोषाय नितान्तनिर्म्मलस्वान्ताय यथोक्तकारिणे काम्यनिषिद्धवर्ज्जनपुरःसरं नित्याद्यनुष्ठानलब्धेश्वरप्रीतये गुणान्विताय विवेकवैराग्योपरतितितिक्षासमाधानयुक्ताय सर्व्वदा गुरुमनुगताय श्रद्धालवे एवम्भूताय मुमुक्षवे एतदात्मज्ञानं सततं गुरुणा देयमिति श्लोकार्थः। तदेवमधिकार्य्यनुबन्धो निरूपितः। इदानीं विषयानुबन्धं व्यपदिशति॥

विषयइति। क्षीरनीरवत् परस्परविभिन्नयोः समानभिहारस्यैक्यशब्दार्थत्वाज्जीवब्रह्मणोरपि स्वरूपतो भिन्नयोरैक्यं मिश्रीभाव इति शङ्का स्यात् सा माभूदिति व्याचष्टे॥

शुद्धचैतन्यमिति। चैतन्यस्य शुद्धत्वं सर्व्वधर्म्मातीतत्वमेकरसत्वं। ननु कथं शुद्धचैतन्यस्य विचारविषयत्वं यावता प्रागपि विचारात्तत्स्वप्रकाशं स्वयमेवावभासत इत्याशङ्क्य स्वरूपेणावभासमानत्वेऽपि परिपूर्णसच्चिदानन्दप्रत्यक्स्वरूपतया अज्ञायमानत्वाद्विषयत्वोपपत्तिरित्यभिप्रेत्याह॥

कृतिसाध्यत्वं कथमवगम्येत । (६६) किं च तवापीष्टसाधनताज्ञानात् कथं वृष्ट्यादाविच्छा, सिद्धत्वस्येच्छाविरोधित्वादनागतस्य ज्ञातुमशक्यत्वात् । अत एव सिद्धविषयत्वनिरासेन सुखादिज्ञानात्फलेपि नेच्छेति न वृष्ट्यादाविष्टसाधनतापि । न च वृष्ट्यादिसाध्येष्टज्ञानाद्वृष्ट्यादाविच्छा, इच्छायाः सिद्धासिद्धवृष्ट्यादितत्फलविषयत्वविकल्पग्रासात् । अथ सामान्यलक्षणप्रत्यासत्त्या वृष्ट्यादित्वेन सुखादित्वेन च सिद्धासिद्धवृष्ट्यादितत्फलविषयकं ज्ञानमुत्पन्नं तेन सिद्धं विरोधिनं त्यक्त्वा ऽसिद्धविषयेच्छोत्पद्यते । यदि च सामान्यलक्षणा नास्ति तदा येन रूपेणेष्टसाधनत्वग्रहः तेन रूपेणाज्ञाते ऽसिद्धे वेच्छोत्पद्यते । अन्वयव्यतिरेकाभ्यां तादृशज्ञानस्य तादृशेच्छाजनकत्वावधारणात् । सुखेच्छायामप्येवमिति चेत् । (६७) तर्हि ममापि पाकत्वावच्छेदेन कृतिसाध्यताज्ञानादनागते चिकीर्षा, तच्च ज्ञानं सकलपाकविषयं सन्निकृष्टविषयं वेत्यन्यदेतत् । बालस्य व्याघ्राद्याघ्रहे ऽप्याद्या प्रवृत्तिर्जीवनादृष्टोद्बोधितजन्मान्तरसंस्कारजन्या (६८) स्तनपानं कार्यमिति स्मरणात् । तवापीष्टसाधनतास्मरणात्तत्प्रवृत्तिरनन्यगतिकत्वात् । न च जन्मान्तरेपि पर्यनुयोगः, जन्मधाराया अनादित्वात् । प्रत्यक्षानुमानमूलकत्वाच्च नान्धपरम्परा ॥

साध्यताज्ञानं प्रतिबन्धकमिष्टसाधनताज्ञानमेव प्रवर्तकमिति ब्रूयात्तत्राह । (६६) किं चेति । (६७) तर्हीति । यद्यपि सिद्धपाकविषयकं कृतिसाध्यताप्रकारकं ज्ञानं नेच्छाप्रकारीभूतकृत्यनन्तरभविष्यत्तारूपकृतिसाध्यत्वप्रकारकमिति भिन्नप्रकारकतया तस्येच्छाजनकत्वानुपपत्तिः, अन्यथा ऽप्रसिद्धपाकविशेष्यककृतिसाध्यतानुमित्यनुसरणमनर्थकं, तथापि चिकीर्षाकालासंभिन्नविषयाननुभाविनं कृत्या साधयामीत्याकारेति मतेनेदं बोध्यम् । (६८) स्तनपानमिति । स्मरणस्य स्वविशेषणवत्ताप्रतिसाधनजन्यत्वाभावात्ततः कथं प्रवृत्तिरित्यत्रोक्तमधस्तात् ॥

## ॥ अथ वेदान्तसूत्रशैवभाष्यद्वितीयाध्यायस्य ॥

॥ प्रथमपादारम्भः ॥

॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

अतीतेऽध्याये सच्चिदानन्दस्वरूपे सर्वज्ञत्वसर्वशक्तिकत्वादिस्वरूपलक्षणे सकलजगज्जन्माद्युपलक्षणे[२] सर्वविलक्षणे सर्वात्मनि विरूपाक्षत्वकृष्णपिङ्गलत्वनीलकण्ठत्वादिविशिष्टलीलामङ्गलस्वभावे[१] भवशिवमहादेवपरमेश्वरशब्दादिमुख्यवाच्ये परमकारुणिके परब्रह्मणि शिवे निखिलवेदान्तवाक्यानां तदनुगुणानां स्मृत्यादीनां च तात्पर्येण समन्वयोऽभिहितः । इदानीमनेनाध्यायेन तस्य समन्वयस्य वेदान्तविरुद्धस्मृतितर्कादिभिर्विरोधः परिह्रियते । प्रथमं सांख्यस्मृतिविरोधः परिह्रियते । अस्मिन् सर्वत्र पूर्वोक्तसमन्वयो विषयः । इह वैदिकसमन्वयस्य सांख्यस्मृत्या संकोचोऽस्ति न वेति संदेहः । कथम् । ब्रह्मणो जगत्कारणत्वं वेदोऽभिधत्ते, कपिलस्मृतिः प्रधानस्य; कपिलो हि महातपस्वी, ततस्तद्वचनमपि[२] प्रमाणमेव । वेदोऽपि भगवानखिल[३]प्रमाणसार्वभौमः, स चाप्रामाण्यगन्धमपि न सहते । तदनयोः कस्य केन बाध इति संशयप्राप्तिः । तत्र[४] सांख्यस्मृतेरनवकाशत्वेन प्रबलत्वाद् वेदस्य धर्मे सावकाशतया दुर्बलत्वादनवकाशया स्मृत्या वेदस्य संकोचो युक्त इति चेद्वदति पूर्वपक्षी । वयमपि नेति वदामः । कथम् । अन्यासां वेदाविरोधिनीनां मन्वादिस्मृतीनामनवकाशदोषप्रसङ्गात् ।

"अप एव ससर्जादौ तासु वीर्यमवासृजत्" ।

इत्यादिना,

"हिरण्यगर्भं पश्यति जायमानम्" ।

इत्यादिप्रत्यक्षश्रुतिसिद्धब्रह्मकारणत्ववादिन्या[५]नुमेयश्रुतिमूलायाः सांख्यस्मृतेरेव बाधः प्रामाणिकजनपरिग्राह्य इति ॥ १ ॥

॥ इतरेषां चानुपलब्धेः ॥ २ ॥

इतरेषां च मन्वादीनां सर्वज्ञानां स्मृतिषु कपिलदृष्टस्य प्रधानकारणत्वादेरनुपलब्धेः प्रधानस्मृतिरनागममूलैवेति वक्तुं युक्तम् । अतः सांख्यस्मृत्या समन्वयस्य न संकोचः ॥ २ ॥

॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥

योगाङ्गप्रतिपादिनी हिरण्यगर्भस्मृतिरपि प्रधानकारणत्वमेव वदति । तथाच यथा प्रधानकारणत्ववादिन्या सांख्यस्मृत्या विरोधाद् वैदिकसमन्वयस्य संकोचो नाभवत्, तथानयापि स्मृत्या संकोचो भवति न वेति[७] संदेहे भवतीति वदामः । कथम् । श्वेताश्वतरोपनिषदि ब्रह्मसाक्षात्कारहेतुतया

१—दिधर्म—इति पा० ।

२—न्मादिकारणत्वाद्युपलक्षणे इति पा० ।

१—रूपस्वभावे इति पा० ।

२ तद्वचनं इति पा० ।

३ वेदो हि भगवान् निखिल—इति पा० ।

४ इह इति पा० ।

५—कारणत्वपराभिर्मन्वादिस्मृतिभिस्तद्विरुद्धाभिधायिन्या—इति पा० ।

६ कपिलस्मृति—इति पा० ।

७ न भवति भवति वेति इति पा० ।

प्रपञ्चिता योगविद्या । तथाच सांख्यस्मृतेरनुमेयश्रुतिमूलत्वेऽपि[1] प्रत्यक्षश्रुतिमूलया[2] हिरण्यगर्भस्मृत्या प्रधानकारणवादिन्या ब्रह्मवादिसमन्वयस्य संकोचो युक्त इति प्राप्ते ब्रूमः । न योगस्मृत्या श्रुतिसमन्वय[3]संकोचः । तस्य "योगश्चित्तवृत्तिनिरोध"इत्यारभ्य वैदिकाष्टाङ्गयोगप्रतिपादनमात्रे हि तात्पर्यं, नावैदिके प्रधानकारणवादेऽपि, यदि तत्रापि तात्पर्यं, सांख्यस्मृतिवदस्या अपि प्रत्याख्यानमेव न्याय्यम् । ततो हिरण्यगर्भस्मृत्यापि प्रधानकारणवादिन्या ब्रह्मकारणवादिश्रुतिसमन्वयस्य न संकोच इति युक्तमेव[4] ॥ ३ ॥

पुनरपि साख्यतर्कबाध्यता समन्वयस्याशङ्क्य परिहरति ॥

॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

यथा सांख्यस्मृत्या समन्वयस्य न बाधः, तथा तर्केणापि बाधोऽस्ति न वेति संशये पूर्वपक्षः प्रवर्तते । सर्वथा तर्कबाध्योऽयं ब्रह्मकारणतावादः । कथम् । ब्रह्मणः[5] प्रपञ्चस्यान्योन्यविलक्षणत्वाच तत्कार्यत्वं संभवति । कुतो वैलक्षण्यमवगतमिति चेत् । शब्दादेव । "विज्ञानं चाविज्ञानं च" इत्यादिशब्दो हि प्रपञ्चस्य विकारास्पदत्वाज्ञत्वादपुरुषार्थरूपत्वमभिधत्ते । अतः सत्यज्ञानानन्दरूपाद् ब्रह्मणोऽस्य वैलक्षण्यं सिद्धम् ॥ ४ ॥

कथमनयोर्गोमहिषयोरिव कार्यकारणभावः संभवति ॥

॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

यद्यचेतनत्वेन चेतनाद् ब्रह्मणो विलक्षणमिदं जगत् । तत् कथमस्मिन्ननुस्यूतं पृथिव्यब्रवीत् । "आपो वा अकामयन्त" "शृणोत ग्रावाणो विदुष"इत्यादौ चेतनकार्यव्यपदेशः । तस्मादिदं चेतनमेव सर्वं जगत् । अतो ब्रह्मप्रपञ्चयोश्चेतनाचेतनरूपतया न वैलक्षण्यमिति शङ्क्य, यतस्तथा सर्वत्र ज्ञानकार्यव्यपदेशस्तु तदभिमानिदेवताविषय एवेत्यवगम्यते । "हन्ताहमिमास्तिस्रो देवता" इति देवताशब्दविशेषात्, "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इत्यादिनार्चिद्वस्त्वभिमानिदेवतानुगतेश्च । तस्मादचेतनत्वादिना विलक्षणमेव जगद्[6] ब्रह्मणः । ततोऽस्य कार्यत्वं ब्रह्मणः कारणत्वं च युक्तिबाध्यमेव ॥ ५ ॥

१—सिद्ध—इति पा० ।
२—सिद्धया इति पा० ।
३ श्रुतिसमन्वयस्य इति पा० ।
४—स्य संकोच इत्ययुक्तमेव इति पा० ।
५ कारणाद्ब्रह्मणः इति पा० ।
६—स्यास्य इति पा० ।
७ जगत् कारणाद् इति पा० ।

॥ दृश्यते तु ॥ ६ ॥

सिद्धान्त उच्यते । विलक्षणयोरपि ब्रह्मप्रपञ्चयोः कार्यकारणभावः संभवति, अचेतनाद्गोमयाच्चेतनवृश्चिकोत्पत्तिदर्शनात्, चेतनात् पुरुषादचेतनकेशाद्युत्पत्तिदर्शनाच्च, अतः शुष्कतर्को न बाधकः श्रुतिसमन्वयस्येति निर्णयः ॥ ६ ॥

पुनः शङ्कित्वा परिहरति[1] ॥

॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

एवं कार्यकारणयोर्वैलक्षण्यात् कारणे कार्यमसदेव । "असद्वा इदमग्र आसीत्" इति श्रुतेरिति चेन्नैवं वाच्यम् । सालक्षण्यनियमप्रतिषेधमात्रपरत्वाच्छ्रुतेः । अतः कार्यकारणयोर्वस्त्वैकता न हीयत एव ॥ ७ ॥

॥ अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् ॥ ८ ॥

सत्कार्यवादेन कार्यकारणयोर्जगद्ब्रह्मणोर्वस्त्वेकत्वे समन्वयस्य तर्कबाध्यत्वमस्ति न वेति संदेहेऽस्तीति पूर्वः पक्षः कुतः । यत एव जगद्ब्रह्मणोर्वस्त्वैक्यमुक्तम् । तथा सति हि जगत इव ब्रह्मणोऽपि विकाराज्ञानाद्यनिष्टप्रसङ्गः समुन्मिषति । ततो वेदान्तवाक्यानां सामरस्यमसमञ्जसं भवति । अतस्तर्केण समन्वयबाध इति ॥ ८ ॥

॥ न तु दृष्टान्तभावात् ॥ ९ ॥

नेति पूर्वपक्षं व्यावर्तयति । "यस्यात्मा शरीरं" "यस्याव्यक्तं शरीरम्" इत्यादिश्रुत्या,

"विग्रहं देवदेवस्य जगदेतच्चराचरम् ।
एतमर्थं न जानन्ति पशवः पाशगौरवात्" ॥

इत्यादिपुराणोक्त्या च सिद्धचिदचिच्छरीरकस्य परब्रह्मणः शिवस्य कार्यतया कारणतया चावस्थाने गुणदोषव्यवस्थाया दृष्टान्तसद्भावात् तत्र वेदान्तवाक्यसमन्वयसामरस्यमसमञ्जसं न भवति । कथम् । यथा शरीरस्य मनुष्याद्यात्मनो बालत्वयुवत्वस्थविरत्वादयः[2] शरीर एव, सुखादयस्त्वात्मन्येव, तद्वदत्रापि शरीरभूतचिदचिद्वस्तुगतान्यज्ञानविकाराद्यनिष्टानि शरीरभूते चिदचिद्वस्तुन्येव[3] तिष्ठन्ति, निरवयत्वाविकारत्वसार्वज्ञसत्यसंकल्पत्वादय आत्मभूते परमेश्वर एव । तदेवं दृष्टान्तभावाच्छ्रुत्यसामञ्जस्यं ब्रह्मणि नास्त्येव ॥ ९ ॥

स्वपक्षदोषाच्च ॥ १० ॥

केवलं तर्कावलम्बने स्वपक्ष एव प्रधानकारणवादेन निर्वि-

१—ङ्कते परिहरति च इति पा० ।
२—त्वादिभावेऽपि बालत्वयुवत्वस्थविरत्वादयः इति पा० ।
३—चिद्रूपे वस्तुन्येव इति पा० ।

का[1]रपुरुषसंनिधिवशात् प्रकृतिप्रवृत्तौ सत्यामन्योन्यधर्माध्यासा दुरुपपादा भवन्ति। अन्यत्रान्यधर्मानुसंधानरूपोऽध्यासो निर्विकारस्य पुरुषस्य न संभवति। अचेतनायाः प्रकृतेश्चानुसंधानरूपोऽध्यासो न सभवत्येव। अतः प्रधानकारणवाद एव तर्कबाध्यः ॥ १० ॥

॥ तर्काप्रतिष्ठानात् ॥ ११ ॥

तर्कस्याप्रतिष्ठितत्वात् प्रधानकारणवादस्य तन्मूलत्वात् तत्र प्रतितर्कसंभवात् तस्यैव[2] त्याज्यत्वं न ब्रह्मकारणवादस्येति ॥ ११ ॥

॥ अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः*: ॥ १२ ॥

अन्यथा यथा प्रतितर्कपराहतिस्तर्कमवति, तथा प्रकारान्तरेण[3] प्रधानमनुमेयमिति वादोऽपि युक्तो न भवति। तत्राप्येवं प्रतितर्ककलहसभावनया प्रतिष्ठितत्वाभावदोषादनिर्मोक्ष एव प्रसज्यते। ततः शुष्कतर्कमूलः प्रधानकारणवाद एव त्याज्यः। न तु प्रबलश्रुतिप्रमाणसिद्धो ब्रह्मकारणवाद, इति युक्तम् ॥ १२ ॥

॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १३ ॥

यथेदं सांख्यदर्शनं तर्कमूलत्वेनाप्रतिष्ठितत्वादिना प्रत्याख्यातं, तथैतेनैव हेतुना शिष्टानामपरिग्रहाः कणभक्षाक्षपादादीनां पक्षा अपरिग्राह्या इति व्याख्याताः, एतदुक्तं[4] भवति। कणादादिमतसिद्धपरमाणुकारणवादोऽपि निराकृत इति ॥१३॥

॥ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १४ ॥

यदुक्तं पूर्वत्र "चिदचित्प्रपञ्चविशिष्टात्मा शिव एवाद्वितीयः कारणं कार्यं च भवतीति विशिष्टशिवाद्वैतम्" तस्य समन्वयसिद्धस्य युक्तिबाधापत्तिरस्ति न वेति सशयः। एवं सति पूर्वपक्षः प्रवर्तते[5]। यदि चिदचिच्छरीरकत्वमिष्यते परमेश्वरस्य तदा शरीरित्वं[6]मस्य सिद्धम्। तथाच जीववत् सशरीरत्वेन तस्यापि शरीरसंबन्धप्रयुक्तसुखदुःखभोक्तृत्वापत्तेरस्मात् संसारिणो जीवात् तस्य परमेश्वरस्याविभागः प्राप्नोति। अतोऽयं जीवोऽयमीश्वर इति विशेषानुपपत्त्या जगद्विशिष्टत्ववादे परमेश्वरस्यानिर्दोषस्वरूपासिद्धिप्रसङ्ग इत्येवं पूर्वपक्षी मन्यते। नात्र विरोध इति सिद्धान्तः। स्यादेव विभागो जीवात् परमेश्वरस्य निष्कलङ्कनिखिलमङ्गलाकरत्वेन, न खलु शरीरित्वप्रयुक्तमनिष्टभोक्तृत्व भवति, किंतु पराधीनत्वप्रयुक्तमेव; यथा लोके राज्ञः सशरीरत्वेऽप्यनन्यवश्यस्य न स्वाज्ञाननु[1]वृत्तिकृतानिष्टप्रसङ्ग इति भोक्तृत्वं नेतरसमानम्। "ज्ञाज्ञौ द्वावजावीशानीशौ" इति जीवेश्वरयोः स्वातन्त्र्यमस्वातन्त्र्यं च स्वतः सिद्धमेव। अतः स्वतन्त्रस्य परमेश्वरस्य जीवादस्वतन्त्राच्छरीरसंबन्धसामान्येन नाविभागप्राप्तिः। नातो विशिष्टाद्वैतहानिः ॥ १४ ॥

यद्यपि स्वातन्त्र्यास्वातन्त्र्यादिविरुद्धधर्मसंबन्धेन जीवेश्वरयोर्विभाग उच्यते। तथापि तयोः कार्यकारणयोरनन्यत्वमव्यतिरिक्तत्वं च सिध्यत्येवेत्याह ॥

॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥

इह कार्यकारणयोः प्रपञ्चब्रह्मणोः समन्वयसिद्धमनन्यत्वं संदिह्यते, युक्तं न वेति। संदेहस्य चेतनाचेतनत्वपरस्याविरुद्धधर्मसंबन्धवैलक्षण्यं कारणम्। कथमनयोरननन्यत्वमुपपद्यते। पूर्वाधिकरणे सर्वज्ञत्वादिमत्त्वेन परमेश्वरस्य भोक्तृत्वाज्ञत्वादिना जीवस्य चोभयोर्विभागो निर्दिष्टः। अचिद्वस्तुनोऽप्यनेनात्यन्तविलक्षणत्वादनन्यत्वकथा दूरत एव। नहि कारणत्वमनन्यत्वसाधकं, गोमयवृश्चिकादौ सत्यपि तस्मिन् वैलक्षण्यदर्शनात्। घटमृत्पिण्डादिष्वप्यर्थक्रियादिव्यवहारभेदो नास्त्येव। अथवा कार्यकारणयोरत्यन्ताभेदे प्रपञ्चब्रह्मणोरखण्डतया सर्वत्र कर्तृकर्मक्रियादिव्यवहारलोपः[2] स्यात्, इत्येवं प्राप्ते ब्रूमः। कारणाद् ब्रह्मणः कार्यं जगदनन्यदेव। कथमवगम्यते। आरम्भण[3]शब्दादिभ्यः। यथा "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य" "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयं" "तदैक्षत बहु स्यां प्रजायेय" इति। "ऐतदात्म्यमिदं सर्वं" "तत् सत्यं स आत्मा" "तत् त्वमसि श्वेतकेतो" "विश्व भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् तत् सर्वो ह्येष रुद्र" इत्यादिशब्देभ्यः ॥ १५ ॥

यदुक्तं नहि कार्यकारणत्वमनन्यत्वसाधकमिति तत्राह ॥

॥ भावे चोपलब्धेः ॥ १६ ॥

घटादिकार्यभावे च तदेव मृद्द्रव्यं घट इत्युपलभ्यते। ततः कारणादनन्यदेव कार्यम्। तथा "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुत्यापि प्रतिपाद्यते। विकारो नामधेयं च वाचारम्भणं, वाचाया अभिलापार्थक्रि-

१—वादे दोषो दुर्वारो भवति। अयमेव युक्तः। तथाहि, प्रधानकारणवादे तु निर्विकार—इति पा०।

२ तन्मूलत्वात् तस्यैव इति पा०।

* शंकरमते तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्ग इत्याकारकमेकमेव सूत्रम्।

३ अन्यथा प्रकारान्तरेण इति पा०,

४ शिष्टानां कथास्वपरिगृहीतानां कणभक्षाक्षपादादीनां पक्षपरिग्रहा व्याख्याता एव। किमुक्तं इति पा०।

५ प्रसज्यते इति पा०।

६—चिद्वस्तु शरीरमिष्यते परमेश्वरस्य तदा सशरीरत्व—इति पा०।

१ स्वाज्ञानिवृत्ति—इति पा०।

२—लोप एव इति पा०।

३ वाचारम्भण—इति पा०।

यारूपव्यवहारस्यानिष्पादकं भवति । मृद्द्रव्यस्यैव घटाद्यवस्था घटादिनामधेयं चार्थक्रियाभिलापरूपव्यवहारनिष्पत्तये भवतीति यावत् । वस्तुतो घटादिकमपि मृत्तिकेत्येव सत्यं प्रामाणिकं,[1] मृद्व्यतिरेकेण घटभावादर्शनात् । अथवा वाचारम्भणं विकारः । विकारो घटो वाचारम्भणम् । घटोऽयमिति वाचारम्भविषयमात्रम्[2] । मृद्द्रव्यमेव व्यवहारसिद्ध्यर्थं जायमानमवस्थान्तरम् । नतु मृदो द्रव्यान्तरम् । मृत्तिकेत्येव नामधेयं सत्यम् । घटादिकं मृत्तिकेति कृत्वैव तत्र सर्वं मृत्पिण्डादिनामधेयं सत्यम् । सति च प्रामाणिकेऽर्थे साधु, नतु द्रव्यान्तरमिति कृत्वा, यतो घटो मृदेवेति । अतः कारणादनन्यदेव कार्यम् । अर्थक्रियादिव्यवहारभेदस्तु मृद्घटयोर्वस्त्वैक्येऽप्यवस्थाभेदाद् भवत्येव । ततो मृद्घटयोरिव ब्रह्मप्रपञ्चयोरपि व्याप्यव्यापकभावादनन्यत्वम् । तथा पुराणवाणी ।

"शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ।
तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा" ॥

इति । मृदयं घट इत्यत्र यथा मृद्व्याप्तिर्घटे[3] दृश्यते । तथा ब्रह्मेदं जगदिति ब्रह्मव्याप्तिर्न दृश्यत[4] इति चेत् । सन् घटः सन् पट इति सर्वत्र दृश्यत एव सद्रूपस्य ब्रह्मणो व्याप्तिः । सच्चिद्रूपेण शिवेन यदि न व्याप्तं जगत् तदा सत्तास्फूर्तिभ्यां विना कृतं कथमस्ति स्फुरतीति च दृश्येत । अवस्त्वेव भवेत् । अतो मृदा घटादिकमिव कारणेन शिवेन कार्यमिदं व्याप्तं तदनन्यभूतं चेति सिद्धम् ॥ १६ ॥

॥ सत्त्वाच्चावरस्य[5] ॥ १७ ॥

कार्यस्य कारणे सत्त्वाच्च कारणादनन्यदेव कार्यम् । घटशरावादिकं पूर्वं मृदेवासीदिति हि घटादिकं मृदात्मनोपलभ्यते ॥ १७ ॥

॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद् युक्तेः शब्दान्तराच्च* ॥ १८ ॥

"इदं वा अग्रे नैव किंचनासीत्" इति कार्यस्य पूर्वमसद्व्यपदेशात् कारणे कार्यमसदिति चेत् । न । स्थूलत्वविरोधिसूक्ष्मत्वरूपधर्मान्तरयोगादेवायमसद्व्यपदेशो नाभावादिति । कुतः । "तदसदेव सन्मनोऽकुरुत स्याम्" इति वाक्यशेषात्[1] । मनस्कारोऽपि विद्यमानस्यैव भवति । युक्तिरपि तथा धर्मान्तरयोगनिमित्ततामसद्व्यपदेशस्यावगमयति । पिण्डत्वघटत्वकपालत्वरूपैः परस्परविरोधिभिर्भावरूपैर्धर्मैर्घटः प्राङ्नासीदिदानीमस्ति तदानीं न भविष्यतीति सदा विद्यमानस्यैव मृद्द्रव्यस्यासदादिव्यपदेशोपपत्तो न तद्व्यतिरिक्तः कश्चिदभावो नामासद्व्यपदेशालम्बनं धर्मान्तरं कल्पनीयमिति । तथा शब्दान्तरं च "तद्धेदं तर्ह्यव्याकृतमासीत्" "तन्नामरूपाभ्यां व्याक्रियत" इत्यादि । अयमभिप्रायः । पूर्वं स्वाभिन्ननामरूपविभागानर्हसूक्ष्मचिदचिद्रूपपरशक्तिगर्भितो हि शिवः केवलो भवति । पुनः स्वात्मिका तादृशीं शक्तिं पूर्वदशाविरोधिस्थूलत्वयुक्तनामरूपविभागार्हचिदचिद्रूपां बहिर्विस्तारयति । तत्र शक्तिमतः शिवस्य संकोचावस्था प्रलयः । विकाशावस्था सृष्टिरिति तथाप्तवचनमपि,

"चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत्" ॥

इति । निरुपादानमित्यनपेक्षितोपादानान्तरं, स्वयमुपादानं भूत्वेत्यर्थः । ततः परमकारणात् परब्रह्मणः शिवादभिन्नमेव जगत् कार्यमिति ॥ १८ ॥

निदर्शनान्तरमुच्यते ॥

॥ पटवच्च ॥ १६ ॥

यथा संकुचितः सूक्ष्मरूपः पटः प्रसारितो महापटः कुटीरूपेण कार्यं भवति, तथा ब्रह्मापि संकुचितरूपं कारणं प्रसारितरूपं कार्यं भवति ॥ १९ ॥

यथा च प्राणादिः* ॥ २० ॥

यथा वायुरेक एव वृत्तिविशेषेण प्राणादिभेदं भजते, तथा ब्रह्मापि शक्तिव्यापारभेदेन सदाशिवादिविश्वरूपभेदं भजते । ततो ब्रह्मणः कारणादनन्यदेव कार्यं जगदिति युक्तम्[2] ॥ २० ॥

उक्तमर्थमाक्षिप्य समाधत्ते ॥

॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

"तत् त्वमसि" "अयमात्मा ब्रह्म" इत्यादिना कार्यभूतस्य जीवस्य कारणभूतब्रह्मव्यपदेशादनन्यत्वमुपपादितम् । एवं सति सर्वज्ञस्य परमेश्वरस्य सर्वगतस्य जगदकरणं[?] स्वस्य हितरूपं तत्करणमहितरूपं च प्रसज्यते दोषाय । ततश्च सर्वज्ञः सत्यसंकल्प ईश्वरः स्वस्मादनन्यजीवस्य तापः स्वस्येति जानन् कथं संसारनिमित्तमहितं जगत्करणमनुवर्तते । हितं

१ इत्यत्र विकारो नामधेयं वाचारम्भणं भवति । यत् सत्यं मृत्तिकेत्येव । इति पा० ।

२ वागारम्भण—इति पा० ।

३ मृत्तिका व्याप्तिस्वरूपेण घटे इति पा० ।

४—दित्यत्र ब्रह्मव्याप्तिः कथं दृश्यते सर्वत्र इति पा० ।

५—च्चापरस्य इति पा० ।

* असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् इति युक्तेः शब्दान्तराच्च इति च शंकरमते सूत्रद्वयम् ।

१—षादवगम्यत इति पा० ।

* क्वचिच्छंकरभाष्ये निर्विसर्गः पाठः ।

२ समीचीनम् इति पा० ।

जगदकरणं च नानुवर्तते । ततश्च[1] जीवानन्यत्वे सिद्धे परमेश्वरस्य सर्वज्ञस्यापि स्वहिताहितकरणविचार[2]शून्यत्वादिदोषप्रसक्तिः ॥ २१ ॥

अतः कार्यकारणयोर्जीवेश्वरयोरनन्यत्वमयुक्तमिति चेद्युक्तमित्युच्यते ॥

॥ अधिकं तु भेदनिर्देशात् ॥ २२ ॥

कार्यकारणयोरनन्यत्वेऽपि कार्यभूताच्चिदचित्प्रपञ्चात् कारणमत्राधिकमिति[3] श्रूयते "विश्वाधिको रुद्रो महर्षिः", इति। तथा भेदनिर्देशाज्जीवेश्वरयोर्[4]भेदो निर्दिश्यते ।

"विद्याविद्ये ईशते यस्तु सोऽन्यः ।
क्षरात्मानावीशते देव एकः ॥
पृथगात्मानं प्रेरितारं च मत्वा" ।

"द्वा सुपर्णा सयुजा सखाया" "द्वे ब्रह्मणी वेदितव्ये । परं चापरं च" । "ज्ञाज्ञौ द्वावजावीशानीशौ" "नित्यो नित्यानां चेतनश्चेतनानाम्" "अन्तःप्रविष्टः शास्ता जनानाम्" ।

"मायां तु प्रकृतिं विद्या-
न्मायिनं तु महेश्वरम्" ।
अस्मान्मायी सृजते विश्वमेतत्
तस्मिंश्चान्यो मायया संनिरुद्धः" ॥
"जुष्टं यदा पश्यत्यन्यमीशम्" ।
"प्रधानक्षेत्रज्ञपतिर्गुणेशः" ।
"येषामीशः पशुपतिः पशूनाम्" ।

इत्यादिभिरनन्तश्रुतिभिः । अतो विश्वस्मादधिकमेव शिवापरनामधेयं ब्रह्म । ननु "तदनन्यत्वम्" इत्यभेदप्रतिपादनात् "अधिकं तु" इति भेदप्रतिपादनात् प्रपञ्चब्रह्मणोर्भेदाभेदः साधितो भवतीति चेत् । न भेदाभेदकल्प विशिष्टाद्वैतं साधयामः । न वयं ब्रह्मप्रपञ्चयोरत्यन्तमेव भेदवादिनः । घटपटयोरिव । तदनन्यत्वपरश्रुतिविरोधात् । न वात्यन्ताभेदवादिनः । शुक्तिरजतयोरिवैकतरमिथ्यात्वेन, तत्स्वा[5]भाविकगुणभेदपरश्रुतिविरोधात् । नच भेदाभेदवादिनः । वस्तुविरोधात् । किंतु शरीरशरीरिणोरिव गुणगुणिनोरिव च विशिष्टाद्वैतवादिनः । प्रपञ्चब्रह्मणोरनन्यत्वं नाम मृद्घटयोरिव गुणगुणिनोरिव कार्यकारणत्वेन विशेषणविशेष्यत्वेन विनाभावरहितत्वम् । नहि मृदं विना घटो दृश्यते । नीलिमानं विना चोत्पलम् । तथा ब्रह्म विना न प्रपञ्चशक्तिस्थितिः । शक्तिव्यतिरेकेण न कदाचिदपि ब्रह्म विज्ञायते । वह्निरिवौष्ण्यं विना । येन विना यन्न ज्ञायते, तत् तेन विशिष्टमेव । तत्त्वं च तस्य स्वभाव एव । अतः सर्वथा प्रपञ्चाविनाभूतं ब्रह्म तस्मादनन्यदित्युच्यते । भेदश्च स्वाभाविकः । ततश्च विश्वस्मादधिकमेव परं ब्रह्म । कार्यत्वकारणत्वव्यवस्थास्य "न तु दृष्टान्तभावात्" इत्यत्र निरूपितैव । तस्माद्भेदाभेदश्रुतीनामविरुद्ध एवायं मार्गः ॥ २२ ॥

॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

सर्वथा जीवेश्वरयोरभेद एव अभेदश्रुतिभिरिति चेत् । न । अनुपपत्तेः । अश्मकाष्ठतृणादेरचेतनस्येव[1] जीवस्याप्यज्ञत्वादिना सर्वज्ञत्वादियुक्तादीश्वरादत्यन्तविजातीयत्वश्रवणात् तयोरैकभावानुपपत्तिः । तस्मादीश्वरो जीवादर्थान्तरभूत एव । एवं चेतनस्याप्यधिकगुणवैषम्यादीश्वरभावानुपपत्तिः । किमुता[2]चेतनस्य स्वविलक्षणस्येति तात्पर्यम् । सर्वथा श्रुतिस्मृतिन्यायैः कार्यत्वेन स्वानन्यभूतादपि चेतनाचेतनप्रपञ्चाद्विश्वस्मादधिक एव सर्वज्ञः सर्वशक्तिः परमेश्वरः ॥ २३ ॥

॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

"एकमेवाद्वितीयं" "द्यावापृथिवी जनयन् देव एकः" इत्यादिषु परमेश्वर एक एव जगतः कारणमवगम्यते । तस्यैकस्य विचित्रजगत्कारणत्वं युक्तं न वेति संशये[3] न युक्तमिति वदामः । तदसंभवात् । कार्यमेतदाकाशवाय्वग्निसलिलरूपं विचित्रम् । कथमेतत् कारणवैचित्र्यमन्तरेण संभवति । दृश्यते हि रथादिकार्येषु बहुकारकोपसंहारः । तस्मादेककारणत्वं न संभवतीति[4] चेत् । नैतद् युक्तम्[5] । एकस्यापि कार्यरूपेण परिणामः संभवति । यथा क्षीरस्यैकस्यैव दधिभावेन । तस्माद् ब्रह्मैककारणकं जगत् कार्यम् ॥ २४ ॥

यदुक्तं "कार्यवैचित्र्यं कारणवैचित्र्यापेक्षमिति । तदसत् । चेतनादेकस्मात् पुरुषात् केशनखादिविचित्रकार्यनिष्पत्तिदर्शनात् । अतो विचित्रजगत्कार्यनिर्वाहे ब्रह्म न कारणान्तरापेक्षमिति, शक्तिमतां सर्वं संभाव्यत एवेत्याह ॥

॥ देवादिवदपि लोके ॥ २५ ॥

देवादेः शास्त्रावगतशक्तेर्यथा स्वापेक्षितनानारूपभावः ।

१ तस्माद्--इति पा० ।
२ स्वहितकरणे स्वाहितकरणे च विवेक--इति पा० ।
३ कारणं ब्रह्माधिकमेव इति पा० ।
४ इति तत्तद्भेदनिर्देशाद्भवति । तथाहि जीवे--इति पा० ।
५ न वा शुक्तिरजतयोरिवैकतरमिथ्यात्ववादिनः । तत्स्वा--इति पा० ।

१ अश्मकादिषु लोष्ठतृणादिभेदेनैवैतस्य इति पा० ।
२ कथम--इति पा० ।
३--यः । इति पा० ।
४ न संभाव्यमिति इति पा० ।
५ नैतद्युक्तं युक्तमिति ब्रूमः इति पा० ।

एवं शास्त्रावगतशक्तेः परमेश्वरस्य सर्वमुपपद्यते । "य इमाल्लोकानीशत ईशनीभिः" जननीभिः परमशक्तिभिरिति परमेश्वरस्यानन्तशक्तिमत्त्वं श्रूयते । तस्य किमसाध्यम् ॥ २५ ॥

॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

अत्र ब्रह्मणो जगदाकारेण परिणामः पूर्वोक्तो युज्यते न वेति संदेहः । कथं युज्यते एकस्यैव जगदाकारेण परिणाम इत्युक्तम् । तस्य क्षीरस्येव दधिरूपेण सर्वात्मना जगदाकारेण परिणामे कृत्स्नस्यापि कार्यत्वप्रसक्तिः । न ब्रह्म परिशिष्येत केनचिदंशेन । चेतस्य निरवयवत्वश्रुतिकोपो वा भवति ॥ २६ ॥

तस्माद्ब्रह्मणः परिणामो न युक्त इति प्राप्ते ब्रूमः ॥

॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

ब्रह्मणो जगत्परिणामो युक्त एव । तच्छ्रुतेः । श्रुतिरेवात्र प्रमाणम् । न प्रमाणान्तरम् । शब्दमूलत्वादेव । तस्य सकलेतरप्रमाणावगतवस्तुविजातीयत्वेन तत्रादृष्टशक्तियोगेन विरोधाभावात् । अतः परिपूर्णस्य तस्यैव कार्यत्वं कारणत्वं च संभवति । यथा जातिवादिनां जातिः खण्डमुण्डाद्यत्यन्तविलक्षणेष्वनन्तेषु प्रत्येकमेकस्या एव परिसमाप्य वृत्तिः । न तत्रेतरवस्तुदृष्टान्तेन शङ्का चोद्या । तस्माद् ब्रह्मस्वरूपनिरूपणे शब्द एव मूलमिति न कश्चिद्विरोधः ॥ २७ ॥

॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

जीवात्मनि चाचिद्धर्मविरोधिचिद्धर्मयोगोऽपि विजातीयत्वादेव भवति । अग्निजलादयोऽप्यचिद्विशेषा अन्योन्यविलक्षणशक्तयो दृश्यन्ते विचित्रा एव । ततो ब्रह्मापि शब्दैकप्रमाणकं विचित्रानन्तशक्तिकमिति । ततः सर्वाविरोधः[1] ॥ २८ ॥

॥ स्वपक्षदोषाच्च ॥ २९ ॥

कृत्स्नप्रसक्त्यादिदोषो निरवयवेऽचित्सजातीये प्रधानादौ न ब्रह्मणि शास्त्रप्रमाणके सर्वशक्तिमत्त्वेन ॥ २९ ॥

सर्वोपपत्तिमाह[2] ॥

॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

"परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च" ।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्" ॥

इत्यादिदर्शनात् सर्वापि शक्तिर्ब्रह्माश्रितेति विज्ञायते । अतः सर्वशक्तिमतस्तस्य किं न संभवति ॥ ३० ॥

१ शक्तिकमेव । न तत्र विरोधः इति पा० ।
२—के ॥ २९ ॥ सर्वोप—इति पा० ।

॥ विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३१ ॥

"न तस्य कार्यं करणं च विद्यते" इति ब्रह्मणो विकरणत्वमुच्यते । ततोऽस्य न कारणत्वमिति चेन्न । तस्योत्तरं शब्दमूलत्वादिति पूर्वमुक्तमेव । विचित्रानन्तशक्तिशबलमायापरमशक्तिविशिष्टः परमेश्वरः स्वशक्तिशकलेन प्रपञ्चाकारः स्वतः प्रपञ्चातीतश्च भवतीत्यत्र,

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्" ॥

इति श्रुतिरेव भगवती प्रमाणम् । अत्र विषये पुराणं च ।

"विश्वोत्तरोत्तरविचित्रमनोरथस्य
यस्यैकशक्तिशकले सकलः समाप्तः ।
अध्वानमध्वपतिमध्वविदो वदन्ति
तस्मै नमः सकललोकविलक्षणाय ॥

इति । एवं सकलदोषकलङ्करहितशब्दप्रमाणैकसिद्धसर्वशक्तिसंपद्विलासे परमेश्वरे शिवे परब्रह्मणि संभावनासंभावनाविचारः सर्वोऽपि निरवकाश एव ॥ ३१ ॥

पुनरन्यथाक्षिप्य समाधत्ते ॥

॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥

शास्त्रावगतसर्वशक्तेर्ब्रह्मणः सर्वेषु कार्येषु कारणसामर्थ्यमस्तीति निर्णीतम् । तथापि सर्वप्रवृत्तेः प्रयोजनवत्त्वादवाप्तसकलकामस्य परमेश्वरस्य जगत्सृष्ट्यादिव्यापारः संभवति नवेति संदिह्यते । अत्र कथं संभवति । "आनन्दो ब्रह्म"

"विभुं चिदानन्दमरूपमद्भुतम्"
"उमासहायम्"

इत्यादिभिर्निरतिशयानन्दस्वरूपो नित्यतृप्तो हि शिवः श्रूयते । कथमसौ सृष्ट्यादिव्यापारेषु प्रयोजननिरपेक्षः प्रवर्तते । यदि सप्रयोजनास्य प्रवृत्तिः । नित्यतृप्तताहानिः स्यात् । अन्यथा जडादिवदनुचितकारिता स्यात् ॥ ३२ ॥

इति प्राप्ते ब्रूमः ॥

॥ लोकवत् तु लीलाकैवल्यम् ॥ ३३ ॥

यदुक्तं "नित्यतृप्तस्य प्रयोजनाभावादप्रयोजनजगत्सृष्ट्यादिप्रवृत्तिर्न संभवति" इति । तन्न । संभवत्येव निष्प्रयोजनापि प्रवृत्तिः केवललीलामात्रेण परमेश्वरस्य । यथा लोके प्रयोजनमन्तरेणापि केवलं लीलया कन्दुकताडनादिषु प्रवृत्तिः । तथा परमेश्वरस्यावाप्तसकलकामस्यापि लीलया सृष्ट्यादिप्रवृत्तेरविरोध एव ॥ ३३ ॥

प्रयोजनाभावेऽपि लीलया परमेश्वरस्य जगत्सृष्ट्यादिषु प्रवृत्तिरिति निरूपितम् । तत्र पुनः संदिह्यते । सैषा संभवति

न वेति । लीलयापि परमेश्वरस्य सृष्टिर्न संभवति । परिपूर्णतया रागद्वेषादिहीनत्वात् । सकलसाम्येन मध्यस्थ एव हि परमेश्वरः । तस्य केषांचित् सुखमयं देवादिशरीरं केषांचिद्दुःखोत्तरं मनुष्यादिशरीरं सृजतो वैषम्यं दुर्वारम् । किंच सृष्टेः संहारपूर्वत्वात् सकलं युगपत् संहरतः परमेश्वरस्य नैर्घृण्यं च भवेत् । तदेवमपुरुषार्थसंबन्धापादिन्या[1] जगत्सृष्ट्या किं परमेश्वरस्येति प्राप्ते ब्रूमः ॥

॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ॥ ३४ ॥

सर्वथा जगत् सृजतः परमेश्वरस्य वैषम्यनैर्घृण्ये न भवतः । कर्मसापेक्षत्वात् सृष्टिवैषम्यस्य । तथाहि दर्शयति श्रुतिः । "रमणीयचरणा रमणीयां योनिमापद्यन्ते, कपूयचरणाः कपूयाम्" इति ॥ ३४ ॥

॥ न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च* ॥ ३५ ॥

सृष्टेः प्राक् कर्म नास्ति । क्षेत्रज्ञाभावात् । तदभावश्च "सदेव सोम्येदम्"इत्यवधारणावगतादविभागात् । इति चेत् । न । "ज्ञाज्ञौ द्वावजावीशानीशौ" इत्यादिश्रुतेर्यथा जीवानामनादित्वं तथा तत्कर्मणामनादित्वम् । दृश्यते हि यतः कर्मप्रवाहसिद्धोऽयं संसारः । परमेश्वरो हि जीवानां विचित्रं कर्म सर्वज्ञतयावलोक्य स्वशक्त्या तत्तदनुगुणमेव भोगायतनं देवादिशरीरं सृजति । ततः कर्ममूलमेव सृष्टिवैषम्यम् । संहारश्च जीवानां संसारव्यापारखिन्नानां सुषुप्तिवद्विश्रान्तिहेतुतया परमेश्वरस्य न नैर्घृण्यापादकः ।

ननु जीवानां सुखदुःखादौ[2] कर्मण एव प्रयोजकत्वात् किमप्रयोजकेन परमेश्वरेणेति चेत् । न । कर्मणोऽपि तदधीनत्वात् तस्य न स्वातन्त्र्यहानिः । पुनरपि घट्टकुटीप्रभातन्यायेन कर्मणः स्वातन्त्र्याभावे परमेश्वरस्य वैषम्यादिदोषापत्तिरिति न वाच्यम् । कर्मशक्तीनामनन्तानां मायागतानां संस्थापकमात्रत्वात् परमेश्वरस्य । कर्मणामेव स्वशक्तिवशात् सृष्टिवैषम्यहेतुत्वे तद्व्यवस्थापकमात्रस्य तस्य न वैषम्यम् ।

ननु जीवानां शरीरसृष्टावचेतनस्य कर्मणश्चेतनाधिष्ठितस्य सामर्थ्याच्चेतनत्वेन परमेश्वर एव प्रयोजक इति वक्तव्यम्[3] । कथमसौ सृष्टेः प्राक् संहृतभोगसाधनतया संसारक्लेशरहितान् सुखिनो जीवान् पुनरपि संसारहेतुना शरीरेण योजयति परमकारुणिकोऽपि सन्निति चेत् ।

उच्यते[1] ।

सर्वानुग्राहकः परमेश्वरो जीवानां कर्मपाकमन्तरेण ज्ञानानुदयाज्ज्ञानमन्तरेण निरतिशयानन्दमोक्षाभावात् कर्मपाकस्य च भोगमन्तरेणानुपपत्तेस्तत्कर्मफलभोगाय पुनरपि तेषां शरीरादिकं कल्पयति । एवं क्रमात् पक्वे स्वकर्मणि भोगेन शुद्धान्तःकरणानां जीवानां स्वविषयं ज्ञानमुत्पाद्य निरतिशयानन्दरूपां मोक्षलक्ष्मीं प्रकाशयति ।

एवंशक्तिमान् परमेश्वरः परमकारुणिकः कथं वा युगपदेव सर्वजीवानां कर्म पाचयित्वा सममेव मोक्षानन्दं न प्रकाशयतीति चेत् । सत्यम् ।

परमेश्वरेण सममेव सर्वेषामनुग्रहे क्रियमाणेऽपि ये पक्वमलास्ते मुच्यन्ते । अपक्वमलाः कालक्रमादेव । यथा सवितृकिरणसंदोहे सममेव संततेऽपि पक्वा एव पद्मा विकसन्ति नापक्वाः । ततः पूर्णोऽपि परमेश्वरः परार्थामेव सर्वां प्रवृत्तिं करोति । तथा पौराणिकी भणितिः परमेश्वरस्य सर्वानुग्राहकत्वप्रतिपादनमुखेनोक्तं सकलमर्थं स्पष्टयति[2] ।

"आदित्येन यथा हीनं तमोभूतमिदं जगत् ।
शिवेनापि विना तद्वत् तमोभूतमिदं जगत् ॥
वैद्यं विना निरानन्दाः क्लिश्यन्ते रोगिणो यथा ।
शिवं विना निरानन्दं क्लिश्यते हि जगत् तथा ॥
व्याधीनां भेषजं यद्वत् प्रतिपक्षः स्वभावतः ।
शिवः संसारदोषाणां प्रतिपक्षः स्वभावतः ॥
यथानादिप्रवृत्तोऽयं घोरः संसारमण्डलः ।
तथानादिप्रवृत्तोऽयं शिवः संसारमोचकः ॥

इत्यादिका । अतः परमेश्वरस्य सर्वानुग्रहप्रवृत्तेर्जगत्सृष्ट्यादिव्यापारः संभवत्येव ॥ ३५ ॥

॥ सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

किं बहुना, प्रधानपरमाणुकर्मकालादीनां ये धर्मा अनुपपन्नास्ते सर्वे ब्रह्मण्युपपद्यन्ते । अतो ब्रह्मैव सर्वातिशायि जगत्सृष्ट्यादिकारणमिति[4] समञ्जसम् ॥ ३६ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥ :: :: ॥

१ तदेवं पुरुषानर्थधर्मसंपादिन्या इति पा० ।
* शंकरमते न कर्माविभागादिति चेन्नानादित्वात् इत्येकम्; उपपद्यते चाप्युपलभ्यते च, इत्यपरमिति सूत्रद्वयं वेदितव्यम् ।
२—दौ इति पा० ।
३ सिद्धम् इति पा० ।

१ चेन्न इति पा० ।
२ भणितिः इत्येव पा० ।
३—रे सर्वानुग्रहप्रवृत्ते जग—इति पा० ।
४—द्यन्ते यतः । ततो ब्रह्मण्येव सर्वातिशायि जगत्सृष्ट्यादिकारणत्वमिति इति पा० ।

## ॥ अथ कर्पूरमञ्जर्यभिधसट्टकस्य चतुर्थं ॥

॥ जवनिकान्तरम् ॥

ततः प्रविशति राजा विदूषकश्च ।

राजा । अहो गाढअरो गिह्मो पबलो अ पवणो, ता कधं णु सहिदव्वो । जदो,

कुसुमसरसरेक्कगोअराणं
इदमुभअ पि सुदुस्सहं ति मण्णे ।
जरढरविकरालिदो अ कालो
सुहअजणेण पिएण विप्पलंभो ॥ १ ॥

विदू । एक्को मम्महबाहणिज्जो अण्णो तावसोसणिज्जो । अह्मारिसो उण जणो ण कामबाहणिज्जो ण तावसोसणिज्जो ।

नेपथ्ये । ता किं ण खु दे मूलुप्पालिअचूलिआविअलं सीसं करइस्सं ॥

राजा । विहस्य । वअस्स लीलावणसच्छंदचारिणा केलिसुएण किं भणिदं ॥

विदू । सक्रोधम् । आः दासीएउत्तक सूलारोवणजोग्गोसि ॥

नेपथ्ये । सच्चं तुह्मारिसाहिंतो संभाविज्जदि । जइ मे ण होंतीओ पक्खावलीओ ॥

राजा । विलोक्य । कधं उड्डीणो विअ । विदूषकं प्रति ।

णिसादलितवित्थरा तह दिणेसु दीग्घत्तणं
ससी लहदि खंडणं तह अखंडबिम्बो रई ।
णिदाहदिअसेसु विप्फुरदि जस्स एस क्कमो
कधं ण सविही तदो खुरसिहाहिं खंडिज्जदि ॥ २ ॥

किं अ । णिउणं सेवणिज्जो जइ सुहअजणसंगमो भोदि । जदो,

मज्झण्णे सिरिखंडपंकक्कलणा आसंझमोल्लंसुअं
लीलामज्जणमाप्पदोससमअं साअं सुरासीअलं ।
गिह्मे पच्छिमजामिणी णिहुवणं जं किं पि पंचेसुणो
एदे पंचसिलीमुहा विजइणो सेसा सरा जज्जरा ॥ ३ ॥

विदू । मा एव्वं भण ।

पंडुच्छइच्छुरिदणाअलदादलाणं
साहोडतिल्लपरिपेसलपोप्फलाणं ।
कप्पूरपंसुपरिवासिदचंदणाणं
भद्दं णिदाहदिअसाण वअस्स भोदु ॥ ४ ॥

राजा एदं उण एत्थ रमणिज्जं ।

सपंचमतरंगिणो सवणसीअला वेणुणो
समं सिसिरवारिणा वअणसीअला वारुणी ।
सचंदणघणत्थणी सअणसीअला कामिणी
णिदाहदिअसोसहं सअलसीअलं कस्स वि ॥ ५ ॥

---

## ॥ अथ चतुर्थजवनिकान्तरप्राकृतविवृतिः ॥

अहो गाढतरो ग्रीष्मः प्रबलश्च पवनः । यतः,

कुसुमशरशरैकगोचराणामिदमुभयमपि दुःसहमिति मन्ये ।
जरठरविकरालितश्च कालः सुभगजनमियेण विप्रलम्भः ॥ १ ॥

एको मन्मथबाधनीयोऽन्यस्तापशोषणीयः । अस्मादृशः पुनर्जनो न कामबाधनीयो न तापशोषणीयः ॥ तत्किं न खलु ते मूलोत्पाटितचूलिकाविकलं शीर्षकं करिष्ये ॥ वयस्य लीलावनस्वच्छन्दचारिणा केलिशुकेन भणितम् ॥ आः दास्याःपुत्रक शूलारोपणयोग्योसि ॥ सत्यं युष्मादृशेभ्यः संभाव्यते यदि मे नाभवन् पक्षावल्यः ॥ कथमुड्डीन इव ॥

निशादलितविस्तरा तथा दिनेषु दीर्घत्वं
शशी लभते खण्डनं तथा अखण्डबिम्बो रविः ।
निदाघदिवसेषु विस्फुरति यस्य एष क्रमः
कथं न सविधिस्ततः क्षुरशिखाभिः खण्ड्यते ॥ २ ॥

निपुणसेवनीयो यदि सुभगजनसंगमो भवति । यतः,

मध्याह्ने श्रीखण्डपङ्ककलना आसंध्यमार्द्रांशुकं
लीलामज्जनमाप्रदोषसमयं सायं सुराशीतला ।
ग्रीष्मे पश्चिमयामिनी निधुवनं यत्किमपि पञ्चेषो-
रेते पञ्चशिलीमुखा विजयिनः शेषाः शरा जर्जराः ॥ ३ ॥

मा एवं भण ।

पाण्डुच्छविच्छुरितनागलतादलानां
सहकारतैलपरिपेशलपूगीफलानाम् ।
कर्पूरपांसुपरिवासितचन्दनानां
भद्रं निदाघदिवसानां वयस्य भवतु ॥ ४ ॥

एतत्पुनरत्र रमणीयम् ।

सपञ्चमतरङ्गिणः श्रवणशीतला वेणवः
समं शिशिरवारिणा वदनशीतला वारुणी ।
सचन्दनघनस्तनी शयनशीतला कामिनी
निदाघदिवसौषधं सकलशीतलं कस्यापि ॥ ५ ॥

अवि अ ।

लीलुत्तंसो सिरीसं सिहिणपरिसरे सिंदुआराण हारो
अंगे उल्लं वरिल्लं रमणपणइणी मेहला उप्पलेहिं ।
दोसूं दोकंदलेसूं णवबिसवलिआ कामविज्जो मणोज्जो
तावातंकक्खमाणं महुसमअगमे एस वेसोबलाणं ॥ ६ ॥

विदू । अहं उण भणामि ।

मज्झह्णलह्णघणचंदनपंकिलाणं
साअं णिरंतरणिसेविदमज्जणाणं ।
सामा सुवीअणअवारिकणुक्खिदाणं
दासत्तणं कुणइ पंचसरोबलाणं ॥ ७ ॥

राजा । स्मरणमभिनीय ।

पच्चग्गं णवरूपभंगिघडणारम्मे जणे संगमं
वंछंताण मणम्मि होंति सहसा जे णाम हल्लोहला ।
ते णिद्दं ण खणं पि देंति ण रइं चित्तस्स संताविणो
ताणं जंति जअम्मि दीहरतमा मासोवमा वासरा ॥ ८ ॥

विदूषकं प्रति । अवि अ वअस्स अत्थि तग्गदा का वि वत्ता ॥

विदू । अत्थि सुणादु पिअवअस्सो कधेमि सुहासिदं दे । जा सा कप्पूरमंजरी रण्णा भवणसुरंगा दिण्णा सा देईए दिट्ठा ।

राजा ॥ तदो २ ॥

विदू । तदो तं सुरंगादुआरं देईए बहुलसिलासंचएण णीरंधीकदुअ पिहिदं । अणंगसेना कलिंगसेणा वसंतसेणा विब्भमसेणा चित्तसेणा त्ति पंच चामरधारिणीओ सेण त्ति णामहेआओ फारकंपिअकरवालधारिणीओ कारामंदिररक्खाणिमित्तं पुव्वदिसाए णिउत्ताओ । अणंगलेहा चित्तलेहा विब्भमलेहा चंदलेहा मिअंकलेह त्ति पंच सेरंधीओ लेह त्ति णामहेआओ पुंखिदसिलीमुहधणुहत्थाओ दक्खिणदिसाए णिवेसिदाओ । कुंदमाला चंदणमाला बउलमाला मंगलमाला माणिक्कमाल त्ति पंच तंबोलकरंकधारिणीओ माल त्ति णामहेआओ णवणिसिदकुंतहत्थाओ पच्छिमदिसाए ठाविदाओ । अणंगकेली चित्तकेली राअकेली सुंदरकेली कंदोट्टकेलि त्ति पंच मज्जणकारिणीओ केलि त्ति णामहेआओ फलअखग्गधारिणीओ उत्तरदिसाए अणुत्ताओ । ताणं पि उवरि मदिरावदी केलिवदी कल्लोलवदी तरंगवदी माणवदी त्ति पंच कुमारिओ वदि त्ति णामहेआओ कणअचित्तदंडहत्थाओ सुहासिअपाढिआओ अट्ठक्खीकदाओ ॥

राजा । अहो देईए सामग्गी अंतेउरोचिदा ॥

विदू । भो वअस्स एसा देईए सारंगिआणाम सही किं पि विण्णावेदुं पेसिदा ॥

---

अपि च ।

लीलोत्तंसः शिरीषं स्तनपरिसरे सिन्दुवाराणां हारः
अङ्गे आर्द्रं वस्त्रं रमणप्रणयिनी मेखला उत्पलैः ।
द्वयोर्दोःकन्दल्योर्नवबिसलतायाः कामवैद्यो मनोज्ञस्तापातङ्कक्षमाणां मधुसमयागमे एष वेषोऽबलानाम् ॥ ६ ॥

अहं पुनर्भणामि ।

मध्याह्नश्लक्ष्णघनचन्दनपङ्किलानां
सायं निरन्तरनिषेवितमज्जनानाम् ।
श्यामासु व्यजनवारिकणोक्षितानां
द्वासत्वं करोति पञ्चशरोऽबलानाम् ॥ ७ ॥

प्रत्यग्रं नवरूपभङ्गिघटनारम्ये जने संगमं
वाञ्छन्तां मनसि भवन्ति सहसा ये नाम हलहलाः ।
ते निद्रां न क्षणमपि न ददति न रतिं चित्तस्य संतापिनस्तेषां यान्ति जगति दीर्घतमा मासोपमा वासराः ॥ ८ ॥

अपि च वयस्यास्ति तद्गता कापि वार्ता ॥ अस्ति, शृणोतु प्रियवयस्यः कथयामि सुभाषितं ते । या सा कर्पूरमञ्जरी राज्ञा भवनसुरङ्गा दत्ता सा देव्या दृष्टा ॥

ततस्ततः ॥ ततस्तत्सुरङ्गाद्वारं देव्या बहुलशिलासंचयेन नीरन्ध्रीकृत्य पिहितम् । अनङ्गसेना कलिङ्गसेना वसन्तसेना विभ्रमसेना चित्तसेनेति पञ्च चामरधारिण्यः सेनेति नामधेयाः स्फारकम्पितकरवालधारिण्यः कारामन्दिररक्षानिमित्तं पूर्वदिशि नियुक्ताः । अनङ्गलेखा चित्रलेखा चन्द्रलेखा मृगाङ्कलेखा विभ्रमलेखेति पञ्च सैरन्ध्र्यो लेखेति नामधेयाः पुङ्खितशिलीमुखधनुर्हस्ताः दक्षिणदिशि निवेशिताः । कुन्दमाला चन्दनमाला बकुलमाला मङ्गलमाला माणिक्यमालेति पञ्च ताम्बूलकरङ्कधारिण्यः मालेति नामधेया नवनिशितकुन्तहस्ताः पश्चिमदिशि स्थापिताः । अनङ्गकेलिः चित्रकेलिः रागकेलिः सुन्दरकेलिः नीलोत्पलकेलिरिति पञ्च मज्जनकारिण्यः केलिरितिनामधेयाः फलकखड्गधारिण्य उत्तरदिश्याज्ञप्ताः । तासामप्युपरि मदिरावती केलिवती कल्लोलवती तरङ्गवती मानवतीति पञ्च कुमार्यो वतीति नामधेयाः कनकचित्रदण्डहस्ताः सुभाषितपाठिका अध्यक्षीकृताः ॥ अहो देव्याः सामग्री अन्तःपुरोचिता ॥ भो वयस्य एषा देव्याः सारङ्गिकानाम सखी किमपि विज्ञापयितुं प्रेषिता ॥

ततः प्रविशति सारङ्गिका ।

सारं । जेदु २ भट्टा । देई विरणवेदि । अज्ज भाविवडसावित्तीमहूत्सवोवअरणाइं देवेण केलिप्पासाअमारुहिअ पेक्खिदव्वाइं त्ति ॥

राजा । जं देई आदिसदि ॥ निष्क्रान्ता चेटी । उभौ निष्क्रम्य केलिप्रासादारोहणं नाटयतः ॥

ततः प्रविशति चर्चरी ॥

विदू ।

मोत्ताहलिल्लाहरणुच्चआओ
लासावसाणे तलिणंसुआओ ।
सिंचंति अरणोरणमिमा उपेच्छ
जंताजलेणं मणिधारणहिं ॥ ६ ॥

इदो वि ।

परिक्कमंतीउ विचित्तबंधं
इमाउ दोसोलह णच्चणीओ ।
खेलंति तालाणुगदप्पदाओ
तुहंगणे दीसदि दंडरासो ॥ १० ॥

समं ससीमासमबाहुदिरणलेहाविसुद्धा अवराउ देन्ति ।
पंतीहिं दोहीं लअतालबंधं
परप्परं साहिमुहीउ होंति ॥ ११ ॥

मोत्तूण अरणा मणिवारआइं
जंतेहिं धारासलिलं खिवंति ।
पडंति ताओ अ पिआणमंगे
मणोहुवो वारुणबाणकप्पा ॥ १२ ॥

एदा मसी कज्जलकालकाआ
तिक्कंडचावाउ विलासिणीओ ।
पुलिंदरूवेण जणस्स हास्सं
मऊरपिच्छाहरणा कुणंति ॥ १३ ॥

हत्थे महामंसवलीधरीओ
हुक्कारफेक्काररवा रउद्दा ।
णिसाअरीणं पडिसीसएहिं
अरणा मसाणाहिणअं कुणंति ॥ १४ ॥

का वि वादिदकरालहुडुक्का
मंदमद्दलरवेण मिअच्छी ।
भूलदाहिं परिपाडिचलाहिं
णच्चकम्म करणम्मि पउत्ता ॥ १५ ॥

किंकिणीकिदझणझणसद्दं
कंठगीदलअजंतिदतालं ।
जोगिणीवलअणच्चणकेलिं
तारणेउररवं विरअंति ॥ १६ ॥

कोडएण लसचंचलवेसा
वेणुवादणपरा अवराओ ।
कालवेसवसहासिदलोआ
ओसरंति पणमंति हसंति ॥ १७ ॥

प्रविश्य सारङ्गिका । पुरोवलोक्य । एसो महाराओ मरअदपुंजं जेव्व गदो कअलीघरं पविट्ठो चिट्ठदि, ता देवीए विण्णविदं णिवेदेम्मि । उपसृत्य । जेदु २ भट्टा ।

---

जयतु २ भर्ता । देवी विज्ञापयति । अद्य भाविवटसावित्रीमहोत्सवोपकरणानि देवेन केलिप्रासादमारुह्य प्रेक्षितव्यानीति ॥ यद्देवी आज्ञापयति ॥

मुक्ताफलाढ्याभरणोच्चयाः लास्यावसाने श्लक्ष्णांशुकाः ।
सिञ्चन्ति अन्योन्यमिमाः प्रेक्ष यन्त्रजलेन मणिपात्रैः ॥ ९ ॥

इतोपि ।

परिक्रामन्त्यो विचित्रबन्धमिमा द्विःषोडश नर्तक्यः ।
खेलन्ति तालानुगतपदाः तवाङ्गणे दृश्यते दण्डरासः ॥ १० ॥

समं सशीर्षाः समबाहुदत्तलेखा विशुद्धा अपरा ददति ।
पङ्क्तिभ्यां द्वाभ्यां लयतालबन्धं परस्परं साभिमुखा भवन्ति ॥ ११ ॥

मुक्त्वा ऽन्या मणीयात्राणि यन्त्रैर्धारासलिलं क्षिपन्ति ।
पतन्ति ताश्च प्रियाणामङ्गे मनोभुवो वारुणबाणकल्पाः ॥ १२ ॥

एता मसीकज्जलकालकायाः त्रिकाण्डचापा विलासिन्यः ।
पुलिन्दरूपेण जनस्य हासं मयूरपिच्छाभरणाः कुर्वन्ति ॥ १३ ॥

हस्ते महामांसावलिधारिण्यः हुंकारफेत्काररवा रौद्राः ।
निशाचरीणां प्रतिशीर्षकैरन्याः श्मशानाभिनयं कुर्वन्ति ॥ १४ ॥

कापि वादितकरालहुडुक्कामन्दमर्दलरवेण मृगाक्षी ।
भ्रूलताभ्यां परिपाटिचलाभ्यां नृत्यकर्मकरणे प्रवृत्ता ॥ १५ ॥

किङ्किणीकृतझणझणशब्दं कण्ठगीतलययन्त्रिततालम् ।
योगिनीवलयनर्तनकेलिं तारनेपुररवं रचयन्ति ॥ १६ ॥

कौतुकेन लसच्चञ्चलवेषा वेणुवादनपरा अपराः ।
कालवेशवशहासितलोका अपसर्पन्ति प्रणमन्ति हसन्ति ॥ १७ ॥

एष महाराजो मरकतपुञ्जमिव गतः कदलीगृहं प्रविष्टस्तिष्ठति । तद्देव्या विज्ञप्तं निवेदयामि । जयतु २ भर्ता ।

देवी एदं विणवेदि । जधा, संझासमए तुह्मे मए परिणाइदव्व त्ति ॥

विदू । भो किं एदं, अकंडकुह्मंडपडणं ॥

राजा । सारंगिए सवित्थरं कधेसु किं एदं त्ति ॥

सारं । देव एदं विणवीअदि । अणंतरातिक्कंतचउद्दसीदिवसे देईए पम्मराअमणिमई गोरी कदुअ भेरवाणंदेण पडिट्ठाविदा, सअं अ देईए दिक्खा गहीदा, तदो ताए विणत्तो जोईसरो गुरुदक्खिणाणिमित्तं ।

भणिदं अ तेण जोईसरेण जइ मे अवस्सं गुरुदक्खिणा दादव्वा, ता अहिलहिदो अत्थो करीअदु ता एसा दीज्जदु । तदो देईए विणत्तं, जं आदिसदि भेरवाणंदो त्ति । पुणो भणिदं तेण । अत्थि एत्थ लाडदेसे चंडसेणो णाम राआ, तस्स दुहिदा घणसारमंजरी णाम, सा देवण्णेहिं समादिट्ठा, एसा चक्कवट्टिघरिणी भविस्सदि त्ति, तदो तए महाराओ परिणाविदव्वो त्ति । जेण अह्मे वि गुरुदक्खिणा दिण्णा भोदि । भट्टा वि चक्कवत्ती कदो भोदि त्ति । तदो देईए विहसिअ भणिअं । जं आदिसदि भअवं । अहं अ विणवेदुं पेसिदा गुरुस्स दक्खिणाणिमित्तं ॥

विदू । विहस्य । एदं तं संविहाणअं सीस्से सप्पो देसंतरे विज्जो, इह अज्ज विआहो लाडदेसे घणसारमंजरीत्ति ॥

राजा । किं दे भेरवाणंदस्स पहावो ण पच्चक्खो । तां प्रति । कहिं संपदं भेरवाणंदो ॥

सारं । देईए कारिदपमदुज्जाणस्स मज्झट्ठिदे बउलतरुमूले चामुंडाभअणे भेरवाणंदो देईए सममागमिस्सदि, ता अज्ज आगउअ दक्खिणाविहिदो गोउरघरे कोदूहलेण विआहो, ता देवेण इह ज्जेव्व ट्ठिदेण होदव्वं ॥ इति परिक्रम्य निष्क्रान्ता ॥

राजा । विहस्य । वअस्स सच्चं एदं भेरवाणंदस्स विअंभिअं ति तक्केमि ॥

विदू । एव्वं णेदं । ण हु मिअलंछणमंतरेण अण्णो मिअंकमणिपुत्तलिं पज्झरावेदि । ण हु रुदुसमअमंतरेण सेहालिआ कुसुमुक्करं वा विकिरेदि ॥

ततः प्रविशति भैरवानन्दः ।

भैर । इअं सा वडतरुमूलणिब्भिण्णसुरुंगादुआरस्स पिहाणचामुंडा एत्थ ज्जेव्व खणमेत्तं चिट्ठामि । चामुण्डां हस्ताभ्यां प्रणम्य पठति ।

कप्पंतकेलिभवणे कालस्स पुरो सुरासुररुहिरसंपूरं ।
जअदि पिअंती काली परमेट्ठिकवालचसएण ॥ १८ ॥

प्रविश्योपविश्य च । अज्ज वि ण आअच्छदि सुरंगादुआरेण कप्पूरमंजरी ॥

ततः प्रविशति सुरङ्गाद्वारोद्घाटितकेन कर्पूरमञ्जरी ॥

कर्पू । भअवं पणमिज्जसि ॥

---

देवी एतद्विज्ञापयति । यथा, संध्यासमये यूयं मया परिणायितव्या इति ॥ भो किमेतत् । अकाण्डकूष्माण्डपतनम् ॥ सारङ्गिके सविस्तरं कथय किमेतदिति ॥ एवं विज्ञाप्यते । अनन्तरातिक्रान्तचतुर्दशीदिवसे देव्या पद्मरागमणिमयी गौरी कृत्वा भैरवानन्देन प्रतिष्ठापिता । स्वयं च देव्या दीक्षा गृहीता । ततस्तया विज्ञप्तो योगीश्वरो गुरुदक्षिणानिमित्तम् । भणितं च तेन योगीश्वरेण यदि मेऽवश्यं गुरुदक्षिणा दातव्या, तदभिलषितोऽर्थः क्रियताम्, तदेषा दीयताम् । ततो देव्या विज्ञप्तं, यदादिशति भैरवानन्द इति । पुनर्भणितं तेन । अस्त्यत्र लाटदेशे चण्डसेनो नाम राजा तस्य दुहिता घनसारमञ्जरी नाम, सा दैवज्ञैः समादिष्टा एषा चक्रवर्तिगृहिणी भविष्यतीति । ततस्तया महाराजः परिणायितव्यो येन गुरुदक्षिणा दत्ता भवति भर्तापि चक्रवर्ती कृतो भवति । ततो देव्या विहस्य भणितम् यदा दिशति भगवान् । अहं च विज्ञापयितुं प्रेषिता गुरुदक्षिणानिमित्तम् ॥ एतत्तत्संविधानकं शीर्षे सर्पो देशान्तरे वैद्यः । इहाद्यविवाहो लाटदेशे घनसारमञ्जरीति ॥ किं ते भैरवानन्दस्य प्रभावो न प्रत्यक्षः । कुत्र सांप्रतं भैरवानन्दः ॥ देव्या कारितप्रमदोद्यानस्य मध्यस्थिते बकुलतरुमूले चामुण्डाभवने देव्या सममागमिष्यति । तदद्यागत्य च दक्षिणाविहितः कौतूहलेन गोपुरगृहे विवाहः । तद्देवेन इहैव स्थितेन भवितव्यम् ॥ वयस्य सर्वमेतद् भैरवानन्दस्य विजृम्भितमिति तर्कयामि ॥ एवमेतत् । न खलु मृगलाञ्छनमन्तरेणान्यो मृगाङ्कपुत्तलिकां प्रक्षरयति । न खलु ऋतुसमयमन्तरेण शेफालिकाः कुसुमोत्करं वा विकिरन्ति ॥ इयं सा वटतरुमूलनिर्भिन्नसुरङ्गाद्वारस्य पिधानचामुण्डा ।

कल्पान्तकेलिभवने कालस्य पुरः सुरासुररुधिरसंपूरम् ।
जयति पिबन्ती काली परमेष्ठिकपालचषकेण ॥ १८ ॥

अद्यापि नागच्छति सुरङ्गाद्वारेण कर्पूरमञ्जरी ॥
भगवन् प्रणम्यसे ॥

भैर । उइदं वरं लहेसु, इह ज्जेव्व उअविससु ॥

कर्पू । उपविशति ॥

भैर । स्वगतम् । अज्ज वि ण एदि देई ॥

प्रविश्य राज्ञी परिक्रम्य पुरोवलोक्य च । भअवं पणमामि ॥

भैर । चिरंजीअ, उवविससु ॥

देवी । अए इअं भगवदी चामुंडा, इदो इअं कप्पूरमंजरी । ता किं एदं । भैरवानन्दं प्रति । एदं विण्णवीअदि । णिअभवने कदुअ विआहसामग्गिं आगदह्मि । तदो तं गेह्णिअ आगमिस्सं ॥

भैर । वत्से एव्वं कीरेदु ॥

राज्ञी । व्यावृत्य परिक्रामति ॥

भैर । विहस्य स्वगतम् । इअं कप्पूरमंजरी ठाणं अण्णेसिदुं गदा । प्रकाशम् । पुत्ति कप्पूरमंजरि, सुरंगादुआरं जेव्व तुरिदपदं गदुअ सठाणे चिठ्ठ । देईए आगमणे पुणो वि आगंतव्वं ॥

कर्पू । तथा करोति । जं भवं आणवेदि त्ति निष्क्रान्ता ॥

देवी । एदं रक्खाघरं । प्रविश्यावलोक्य च । अए इअं कप्पूरमंजरी ता सा का वि इस्सा सरिक्खए चिठ्ठदि । कर्पूरमञ्जरीं प्रति । वत्से कप्पूरमंजरि कीदिसं दे सरीरं ॥

आकाशे । किं भणसि महरिसिवअणादो ॥

राज्ञी । स्वगतम् । ता पुणो तहिं गमिस्सं । प्रविश्य पार्श्वतोवलोक्य च । हला सहीओ विवाहोवअरणाइं लघुं गेह्णिअ आअच्छध । इति परिक्रामति ॥

---

उचितं वरं लभस्व । इहैवोपविश ॥ अद्यापि नैतिदेवी ॥ भगवन् प्रणमामि ॥ चिरंजीव उपविश ॥ अये इयं भगवती चामुण्डा । इत इयं कर्पूरमञ्जरी । तत्किमेतत् । एतद्विज्ञाप्यते । निजभवने कृत्वा विवाहसामग्रीमागतास्मि । ततस्तां गृहीत्वा आगमिष्ये ॥ वत्से एवं क्रियताम् ॥ इयं कर्पूरमञ्जरी स्थानमन्वेषितुं गता । पुत्रि कर्पूरमञ्जरि, सुरङ्गाद्वारेणैव त्वरितपदं गत्वा स्वस्थाने तिष्ठ । देव्या आगमने पुनरप्यागन्तव्यम् ॥ यद्भवानाज्ञापयतीति ॥ एतद्रक्षागृहम् । अये इयं कर्पूरमञ्जरी । तत्सा कापि अस्याः सदृक्षता तिष्ठति । वत्से कर्पूरमञ्जरी कीदृशं ते शरीरम् ॥ किं भणसि महर्षिवचनात् ॥ तत्पुनस्तत्र गमिष्ये । हला सख्यो विवाहोपकरणानि लघु गृहीत्वा आगच्छत ॥

प्रविश्य कर्पूरमञ्जरी तथैवास्ते ॥

राज्ञी । पुरोवलोक्य । इअं कप्पूरमंजरी ॥

भैर । वत्से विब्भमलेहे आणिदाइं विवाहोवअरणाइं ॥

राज्ञी । आणिदाइं किं पुणो घणसारमंजरीसमुचिदाइं आहरणाइ विसुमरिदाइं ता पुणो पि गमिस्सं ॥

भैर । एव्वं कीरेदु ॥

देवी । नाटितकेन निष्क्रामति ॥

भैर । पुत्ति कप्पूरमंजरि तह ज्जेव्व कीरदु ॥

कर्पू । निष्क्रान्ता ॥

राज्ञी । रक्षागृहप्रवेशं नाटयति । अए सारिक्खदाए वि णडिद ह्मि । स्वगतम् । झाणविमाणेण णिद्दिट्टं पडिसरंतीमाणेदि महाजोगी । प्रकाशम् । सहीओ जंजं णिवेदिदं तंतं गेह्णिअ आअच्छध ॥ चामुण्डाभवनप्रवेशनाटितकेन तामवलोक्य । अहो सारिक्खदा ॥

भैर । देवि उवविस, महाराओ वि आअदो एव्व वट्टदि ॥

ततः प्रविशति राजा विदूषकः सारङ्गिका च ।

भैर । आसणमासणं महाराअस्स ॥ सर्वे यथोचितमुपविशन्ति ॥

राजा । नायिकां प्रति । एसा सा सरीरिणी मअरद्धअस्स सव्वाधिआ देहंतरसंठिदा सिंगाररसचावलठ्ठी दिवहसंचारिणी पुण्णिमाचंदचंदिआ । अवि अ । प्पगुणगणमाणिक्कमंजूसा रअणमई अंजणसलाआ । तधा अ । एसा रअणकुसुमणिउणा महुलच्छी । किं अ ।

---

इयं कर्पूरमञ्जरी ॥ वत्से विभ्रमलेखे आनीतानि विवाहोपकरणानि ॥ आनीतानि, किं पुनर्घनसारमञ्जरीसमुचितान्याभरणानि विस्मृतानि तत्पुनरपि गमिष्ये ॥ एवं क्रियताम् ॥ पुत्रि कर्पूरमञ्जरि तथैव क्रियताम् ॥ अए सदृक्षतयापि नाटितास्मि ॥ ध्यानविमानेन निर्दिष्टां प्रतिसरन्तीमानयति महायोगी ॥ सख्यो यद्यन्निवेदितं तत्तद् गृहीत्वा आगताः ॥ अहो सदृक्षता ॥ देवि उपविश, महाराजोपि आगत एव वर्तते ॥ आसनमासनं महाराजस्य ॥ एषा सा शरीरिणी मकरध्वजस्य सर्वाधिका देहान्तरसंस्थिता शृङ्गाररसचापयष्टिः दिवससंचारिणी पूर्णिमाचन्द्रचन्द्रिका ॥ अपि च । प्रगुणगणमाणिक्यमञ्जूषा, रत्नमयी अञ्जनशलाका । तथा च । एषा रत्नकुसुमनिपुणा मधुलक्ष्मीः । किं च ।

भुवणजअवडाआ ह्रूवरेहा इमीए
जहजह णअणाणं गोअरो जस्स जादि ।
वसइ मअरकेतू तस्स चित्ते विचित्तो
वलइद धणुदंडो पुंखिदेहीं सरेहीं ॥ १८ ॥

विदू । जनान्तिकम् । सच्चं कदं तए आहाणअं । तडंगदाए वि णाआए ण वीससीदव्वं । तुमं मअणसरप्पहारजज्जरिअहिअअं जेव्व कुरकुराअंतं सुणिअ देवी तुह अहिप्पाअं सुणिस्सदि । तुह्मि क्खणं चिठ्ठ ।

भैर । एदं विवाहमंगलमुहुत्तं ता महाराअस्स किज्जदु । जधोचिदं तए पडिवण्णं ॥

राज्ञी । कुरङ्गिकां प्रति । कुरंगिए तुमं महाराअस्स विवाहणेवच्छं कुरु । सारंगिआ वि घणसारमंजरीए करेदु ॥ इत्युभे उभयोर्विवाहघटनं नाटयतः ॥

भैर । उवज्झारीओ हक्कारीअदु ॥

राज्ञी । अज्जउत्त एसो वि उवज्झाओ अज्ज कविंजलो चिठ्ठदि । ता करेदु अग्गिकारिज्जं ॥

विदू । एस सज्जो ह्मि । त्वरितमुत्थाय । भो वअस्स उत्तरीअपडस्स गंठिं देइस्सं दाव,तुमं हत्थेण हत्थं गेण्ह कप्पूरमंजरीए, इति चमत्कृत्य,कधं भुल्लोहं ॥

भैर । तं तस्य भावमुपलक्ष्य विदूषकं प्रति । भो तुमं सुठ्ठुदरं भुल्लोसि । जदो कप्पूरमंजरीए घणसारमंजरी त्ति णामंतरं ॥

---

भुवनजयपताका रूपरेखा एतस्याः
यथायथा नयनयोर्गोचरो यस्य याति ।
वसति मकरकेतुस्तस्य चित्ते विचित्रो
वलयितधनुर्दण्डः पुङ्खितैः शरैः ॥ १९ ॥

सत्यं कृतं तया आभाणकम् । तटंगतायामपि नौकायां न विश्वसितव्यम् । त्वं मदनशरप्रहारजर्जरितहृदयमेव कुरकुरायन्तं श्रुत्वा देवी तवाभिप्रायं श्रोष्यति । त्वं क्षणं तिष्ठ ॥ एतद्विवाहमङ्गलमुहूर्तं तन्महाराजस्य क्रियताम् । यथोचितं तया प्रतिपन्नम् ॥ कुरङ्गिके त्वं महाराजस्य विवाहनेपथ्यं कुरु । सारङ्गिकापि घनसारमञ्जर्याः करोतु ॥ उपाध्याय आकार्यताम् ॥ आर्यपुत्र एषोप्युपाध्याय आर्यः कपिञ्जलस्तिष्ठति । तत् क्रियतामग्निकार्यम् ॥ एष सज्जोस्मि । भो वयस्य उत्तरीयपटस्य ग्रन्थिं दास्ये तावत्, त्वं हस्तेन हस्तं गृहाण कर्पूरमञ्जर्याः । कथं विस्मृतोहम् ॥ भो त्वं सुष्ठुतरं विस्मृतोसि । यतः कर्पूरमञ्जर्या घनसारमञ्जरीति नामान्तरम् ॥

जे कंटआ तिउसमुद्धफलम्मि संति
जे केअईकुसुमगब्भदलावलीसु ।
फंसेण पाणिणलिणस्स वि सुंदरीए
रोमंचकंटअचएण विणिज्जिदा दे ॥ २० ॥

विदू । भो वअस्स भामरीओ दिज्जदु,हुदवहे लाजंजलीओ खिवदु ।

राजा । भ्रमणं नाटयति ॥

नायि । धूमेन व्यावृत्तमुखी तिष्ठति ॥

राज्ञी । सपरिवारा निष्क्रान्ता ॥

भैर । विवाहे दक्खिणा दिज्जदु आचारीअस्स ॥

राजा । दिज्जदु । वअस्स गामसअं दे दिण्णं ॥

विदू । सोत्थि होदु त्ति । नृत्यति ॥

भैर । राजानं प्रति । महाराअ किं दे पुणो भूयो पियमुवकरोमि ॥

राजा । भअवं तुह प्पसादेण एसा लद्धा ॥

नेपथ्ये वैतालिकः पठति । सुहणिबंधणो होदु विवाहमहुत्सवो देवस्स । जधा अ । मअणं व्व रइ एसा, वासुदेवं व लच्छी,हरं व गिरिपुत्ती, महिला संपउत्ता । सुहअदु तुह्मे सा,सुहेदु चक्कवत्ति सिरिरिव किदवेसा सा मअरद्धजस्सव्व ॥

राजा । विवाहं निर्वर्त्य । योगिनंप्रति । जोईसर किमपरं पिअं वट्टदि । जदो,

---

ये कण्टकास्त्रपुसमुग्धफले सन्ति
ये केतकीकुसुमगर्भदलावलीषु ।
स्पर्शेन पाणिनलिनस्यापि सुन्दर्या
रोमाञ्चकण्टकचयेन विनिर्जितास्ते ॥ २० ॥

भो वयस्य भ्रामर्यो दीयताम् । हुतवहे लाजाञ्जलयः क्षिप्यन्ताम् ॥

विवाहे दक्षिणा दीयन्तामाचार्यस्य ॥ दीयताम् । वयस्य ग्रामशतं ते दत्तम् ॥ स्वस्तिभवत्विति ॥ महाराज किं ते पुनर्भूयः प्रियमुपकरोमि ॥ भगवन् तव प्रसादेन एषा लब्धा ॥ सुखनिबन्धनो भवतु विवाहमहोत्सवो देवस्य । यथा च । मदनमिव रतिरेषा, वासुदेवमिव लक्ष्मीः, हरमिव गिरिपुत्री, महिला संप्रवृत्ता । सुखयतु त्वां सा, सुखयतु तां चक्रवर्ती श्रीरिव कृतवेषा सा मकरध्वजस्येव । योगीश्वर किमपरं प्रियं वर्तते । यतः,

कुंतलेसरसुआकरफंसप्फारसोक्खसिढिलीकिदसग्गो ।
पालएमि वसुहातलरज्जं चक्कवत्तिपअवीरमणिज्जं ॥२१॥

संस्कृतमाश्रित्य ।

स्वामिंस्त्वच्चरणारविन्दवशतः शृङ्गारसंजीविनी
लब्धा पञ्चशरप्रिया ननु मया कर्पूरमञ्जर्यसौ ।
तल्लाभेन च चक्रवर्तिपदवी लोके समासादिता
किंकिं नेह करोति हन्त महतां संदर्शनं जन्तुषु ॥ २२ ॥

तधा वि । एदं भोदु भअववअणं ।

णिच्चं वठ्ठदु सज्जणाण सअलो वग्गो, खलाणं पुणो
णिच्चं खिज्जदु, भोदु बह्मणजणो सच्चासिहो सव्वदा ।
मेहो मुंचदु संचिअं पि सलिलं सस्सोचिअं भूअले
लोओ लोभपरम्मुहोणुदिअहं धम्मे मदिं पावदु ॥ २३ ॥

इति श्रीमन्महाराष्ट्रचूडामणिना महेन्द्रपालोपाध्यायेन राजशेखरेण बालकविना कविराजेन विरचिते नाटकविशेषे कर्पूरमञ्जरीनामके सट्टके चतुर्थं जवनिकान्तरं समाप्तम् । सट्टकं च समाप्तिमगमत् ॥

---

कुन्तलेश्वरसुताकरस्पर्शस्फारसौख्यशिथिलीकृतस्वर्गः ।
पालयामि वसुधातलराज्यं चक्रवर्तिपदवीरमणीयम् ॥ २१ ॥

तथापि एतद्भवतु तावत् ।

नित्यं वर्धतां सज्जनानां सकलो वर्गः खलानां पुन-
र्नित्यं खिद्यतां भवतु ब्राह्मणजनः सत्याशीः सर्वदा ।
मेघो मुञ्चतु संचितमपि सलिलं सस्योचितं भूतले
लोको लोभपराङ्मुखोनुदिवसं धर्मे मतिं बिभर्तु ॥ २३ ॥

॥ इति चतुर्थजवनिकान्तरस्य प्राकृतविवृतिः ॥

---

## भूमिका ।

पुरा किल श्रीमद्भास्कराचार्यप्रभृतिभिर्विद्वद्भिः सिद्धान्तशिरोमणिप्रभृतयो ग्रन्था विरचितास्तत्र च तैः पूर्वपूर्वशास्त्रेभ्यो लघुभूताः प्रकाराः पूर्वाचार्यानुक्तकतिपयप्रश्नानां नवीनप्रकाराश्च प्रदर्शिताः । अद्यत्वे त्वस्मद्गुरुप्रवरैः श्रीमद्बापूदेवशास्त्रिभिश्चानेके नवीनाः प्रश्नाः सभङ्गाः कल्पिताः । किंच यत्रयत्र सिद्धान्तग्रन्थेष्वसकृत्कर्मोक्तं तत्र सर्वत्र सकृत्प्रकारेणैव निर्वाहः कृतः । अथ तेषामाज्ञया तत्सविधमधीयानेन मया बहूनां नवीनानां प्रश्नानां भङ्गान् विरचय्य पूर्वोक्तकतिपयप्रश्नानां प्रकारान्तराणि च निर्माय ग्रन्थरूपेणोपनिबद्धः कतिपयप्रश्नविचार इति तस्य नामाभिधाय । स चायं प्रबन्धको विद्वज्जननयनगोचरीभूय विद्यार्थिनां च कर्णपदवीमनुसृत्य मदीयं परिश्रमं सफलयतादिति सर्वान् विज्ञापये ।

वेतालोपाह्वो विनायकशास्त्री ।

## ॥ श्रीगुरुभ्यो नमः ॥

संकटां विघ्नराजं च नत्वा गुरुपदद्वयम् ।
ध्यात्वा कतिपयप्रश्नविचारः क्रियते मया ॥ १ ॥

अनन्ते चिप्रश्ने नभसि यदि हंसा बुधवराः
समुड्डीयास्यान्तं चिरमलभमानाः खलु तदा ।
खगोऽत्यल्पीयोऽहं परिचितयथाशक्तिपतनः
समुड्डीये नो किं सकलसुजनप्रार्थनमिदम् ॥ २ ॥

त्रिप्रश्नसिन्धौ गहने विशाले
नान्तं न पारं यदवापुरार्याः ।
तथापि पोतं चरणौ गुरूणां
विधाय तर्तुं मनसि स्पृहा मे ॥ ३ ॥

उद्देशकः ।

उद्वृत्तशङ्कुं समवृत्तशङ्कुं
यद्वा कुजीवामथ तद्धृतिं च ।
ज्ञात्वाक्षभां मे वद शीघ्रमग्रा-
मग्राग्रखण्डं च निरीक्ष्य विद्वन् ॥ ४ ॥

उत्तरम् ।

समशङ्कूर्ध्वखण्डेन हृतादुद्वृत्तशङ्कुतः ।
यद्वाग्रकादिखण्डेन भक्तादग्राग्रखण्डतः ॥ ५ ॥
कुगुणाच्च कुजीवोनतद्धृत्या विहृतात् पदम् ।
रविनिघ्नं पलाभा स्याद् बहुचैतत् प्रयुज्यते ॥ ६ ॥

उद्देशकः ।

अग्रादिखण्डं समवृत्तशङ्कुं
ज्ञात्वाथ तद्धृत्यपमज्यके वा ।
उद्वृत्तशङ्कुं समवेक्ष्य चाग्रां
पलप्रभां कोविद मे वद त्वम् ॥ ७ ॥

उत्तरम् ।

अग्रादिखण्डकृत्या वेदाहतया विहीनो यः ।
समवृत्तशङ्कुवर्गो हीनयुतस्तत्पदेन समशङ्कुः ॥ ८ ॥
अग्रादिखण्डविहृतः षड्गुणितः स्याद्द्विधा पलभा ।
अथोन्मण्डलशङ्कू समशङ्क्वग्रादिखण्डयोः स्थाने ॥ ९ ॥

तद्धृत्यपमज्ये वा प्रकल्प्य साध्याथवा द्विधा पलभा ।
सद्युक्तियुक्तमेतत् प्रोक्तं स्फुटमेव गोलविदाम् ॥ १० ॥

उद्देशकः ।

विद्धोन्नतांशान् सममण्डलस्थे
रवौ चितिज्यामभिवीक्ष्य शीघ्रम् ।
पलप्रभां चेद्बुध बोबुधीषि
त्वत्तोऽपरः को भुवि गोलवेत्ता ॥ ११ ॥

उत्तरम् ।

कुज्यार्धवर्गसहितात् समशङ्कुवर्गा-
न्मूलं ततः किल कुमौर्विकयोनितं स्यात् ।
कुज्योनतद्धृतिरतः सुलभा पलाभा
कुर्यात् क्रियां यदि सुधीरिह पूर्वमुक्ताम् ॥ १२ ॥

उद्देशकः ।

यो वेत्ति पलभां शीघ्रमग्राकुज्योनतद्धृती ।
ज्ञात्वा स गणितारण्यचारी गणककेसरी ॥ १३ ॥

उत्तरम् ।

कुज्योनतद्धृतिदलस्य तथाग्रकायाः
कृत्योर्युतेः पदमदश्च विहीनितं सत् ।
कुज्योनतद्धृतिदलेन कुशिञ्जिनी स्यात्
साध्याक्षभाच कृतिभिः खलु पूर्वयुक्त्या ॥ १४ ॥

क्रान्तिज्यायाग्रखण्डे सुगणक यदि वा कुज्यकाद्यादिखण्डे
ज्ञात्वा वाग्राग्रखण्डं पुनरथ समवृत्तस्थितेऽर्के तु शङ्कोः ।
ऊर्ध्वे खण्डं विलोक्य प्रवद विषुवतीं वीक्ष्य वा क्रान्तिमौर्वीं
बुद्ध्वा चोद्वृत्तशङ्कुं नहि जगति तदा गोलविज्ञस्त्वदन्यः॥१५॥

उत्तरम् ।

अग्राग्रखण्डस्य दलस्य वर्गात्
क्रान्तिज्यकावर्गयुतात् पदं यत् ।
अग्राग्रखण्डार्धयुतं तदग्रा
ततोऽक्षभा पूर्ववदेव साध्या ॥ १६ ॥

कुज्याद्यादिमखण्डे क्रान्तिगुणाग्राग्रखण्डयोः स्थाने ।
कल्प्ये ततोऽग्रमौर्वी ततः पलाभा च संसाध्या ॥ १७ ॥

यदूर्ध्वखण्डं समवृत्तशङ्को-
रग्राग्रखण्डं परिकल्प्य साध्या ।
अग्रा भवेत् सैव समाख्यशङ्कुः
पूर्वप्रकारेण ततः पलाभा ॥ १८ ॥

प्रकल्प्य वोद्वृत्तनरं समाख्य-
शङ्कूर्ध्वखण्डं च तथापमज्याम् ।
कुज्योनितां तद्धृतिमत्र साध्यः
समाख्यशङ्कुः पलभापि तस्मात् ॥ १९ ॥

उद्देशकः ।

अग्राग्रखण्डकं यद्वा समशङ्कूर्ध्वखण्डकम् ।
विज्ञाय तद्धृतिज्ञाशु विद्धन्नक्षप्रभां वद ॥ २० ॥

उत्तरम् ।

अग्राग्रखण्डसमवृत्तनरोर्ध्वखण्ड-
वर्गौ च तद्धृतिहतौ घनमूलमाभ्याम् ।
स्यात् कुज्यका किल तदूनिततद्धृतिश्च
साध्या ततोऽत्र पलभोक्तवदेव विद्भिः ॥ २१ ॥

उद्देशकः ।

अग्राग्रखण्डकं ज्ञात्वा समशङ्कूर्ध्वखण्डकम् ।
विज्ञाय गोलविज्ञाशु विद्धन्नक्षप्रभां वद ॥ २२ ॥

उत्तरम् ।

समशङ्कूर्ध्वखण्डेन हृतादग्राग्रखण्डतः ।
घनमूलं तदर्कघ्नं पलभा भवति ध्रुवम् ॥ २३ ॥

उद्देशकः ।

ज्ञात्वा समवृत्तनरं यद्वा कुज्योनतद्धृतिं वीक्ष्य ।
ब्रूहि द्रुतमक्षाभां विद्धन्नग्राग्रखण्डञ्च ॥ २४ ॥

उत्तरम् ।

अग्राग्रखण्डकसमं परिकल्प्य पूर्व-
मुद्वृत्तशङ्कुमथ तेन समाख्यशङ्कुः ।
भक्तः फलात् कुरहितात् पदमग्रकाग्र-
खण्डघ्नमेवमसकृत् परिसाधनीयः ॥ २५ ॥

उद्वृत्तशङ्कुरथ तद्धृतमर्कनिघ्न-
मग्राग्रखण्डमिदमेव पलप्रभा स्यात् ।
अग्राग्रखण्डकसमां परिकल्प्य कुज्यां
कुज्योनतद्धृतिरनेन विभाजिताप्तात् ॥ २६ ॥

सैकात् पदं निहतमेतदथाग्रकाग्र-
खण्डेन तत् तु भवति चितिमौर्विकैवम् ।
तां साधयेदसकृदत्र ततः पलाभा
पूर्वक्रिया यदि भवेद् द्रुतमेव सिद्ध्येत् ॥ २७ ॥

उद्देशकः ।

चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं विशेषणं, न तु तज्ज्ञानाभावः कारणं, किं तु तदेव विषयतया कारण-

---

इष्टोत्पत्तिपूर्वकालीनश्रमजनके पाकादौ अप्रवृत्तिप्रसङ्गात् । नापि चतुर्थः । उत्कटानिष्टपूर्वककिंचिदिष्टजनकत्वेन ज्ञायमानेपि प्रवृत्त्यापत्तेः ॥ अत्र वदन्ति । इदानींतनमद्बलवद्द्वेषविषयदुःखाजनकत्वे ऽस्य तात्पर्यम् । द्वेषे च बलवत्त्वमुत्कटत्वं जातिविशेषः । अत एव रागान्धस्य यदा नरकादौ तादृशो न द्वेषस्तदा तद्धेतावपि प्रवृत्तिरन्यदा निवृत्तिः । न च द्वेषे बलवत्त्वमधिकं, दुःखमात्रस्यैव द्वेषविषयत्वेन पाकादावप्रवृत्त्यापत्तेः । योगिनामपि सुखदुःखयो रागद्वेषसंभवात् । अन्यथा प्रवृत्तिनिवृत्त्योरसंभवापत्तेः । न चासक्त इत्यादिविरोधः । अस्मदादिसाधारणोत्कटरागद्वेषविरहपरत्वादिति । अत्रेदं चिन्त्यम् । एवं न कलञ्जं भक्षयेदित्यत्र विशिष्टनिषेधस्य विशेषणनिषेधपर्यवसायितया कलञ्जभक्षणमुत्कटद्वेषविषयदुःखसाधनमित्यन्वयबोधः स्यात् । तथा च यस्य रागान्धस्य तद्दुःखे नोत्कटद्वेषस्तं प्रति तद्वेदस्याप्रामाण्यं स्याद् विषयबाधात् । एवं च स एव वेदः कं चित्प्रति प्रमाणं कं चित्प्रत्यप्रमाणमिति महद्वैशसम् । एवं च यजेतेत्यादेरपि तथात्वं स्यात् । यदि च मदनन्तर्भावस्तदापि यत्किंचिद्द्वेषविषयत्वं सकलद्वेषविषयत्वं वा विवक्षितम् । आद्ये यजेतेत्यादौ बाधापत्तिः । बहुवित्तव्ययायाससाध्ययागजन्यदुःखेपि कस्य चित्पाखण्डादेरुत्कटद्वेषसंभवात् । अन्त्ये न कलञ्जं भक्षयेदित्यादेरप्रामाण्यापत्तिः । यच्चोक्तमुत्कटत्वं जातिविशेष इति, तदपि चिन्त्यम् । उत्कटानुत्कटनानादुःखविषयकसमूहालम्बनाद्यत्र तदुभयगोचरो द्वेष एकांशे उत्कटो ऽपरांशे ऽनुत्कटस्तत्र कथं तज्जातिरव्याप्यवृत्तित्वात् । न च तत्र द्वेषद्वयम् । ज्ञानादेरपि समूहालम्बनत्वोच्छेदापत्तेः । सामग्रीयौगपद्यात्क्रमे विनिगमकाभावाच्च । यदि तत्र तथा, तदात्रापि तुल्यम् । यदि च तत्र तस्योपाधित्वं तदा ऽननुगमः । तद्वदेवान्यत्रापि तस्योपाधितापत्तिश्च । अत एवोत्कटकोटिके संशयेपि तत्र जातिरित्युक्तम् । अस्तु वा उत्कटत्वं जातिः तथापि शब्दवद्द्वेषवद्दत्तादिकारणविशेषप्रयोज्यं द्वेषे वैजात्यमावश्यकमिति तत्संकरापत्त्या द्वेषनिष्ठमुत्कटत्वमनेकं वाच्यम् । तथा च तदननुगमेन ज्ञानाननुगमात् प्रवृत्त्यननुगमः । लिङादिपदशक्तिग्रहानुपपत्तिश्च । किं चाजनकत्वस्यान्योन्यात्यन्ताभावगर्भतया ऽननुगमेन शक्तिग्रहानुपपत्तिः । न च जनकत्वविरोधित्वमनुगतमिति वाच्यम् । तत्प्रकारकज्ञानस्याप्रवर्त्तकत्वेन तत्र शक्तिकल्पनानर्हत्वात् । अपि च सविषान्नभोजनजन्यसुखे इच्छाविरहेणेष्टसाधनत्वाभावादेवातिप्रसङ्गवारणे किमुक्तविशेषणेन । ननु यदि विषभक्षणजन्यदुःखासंभिन्नसुखत्वेन तत्रेच्छा तदा तस्य स्वतःपुरुषार्थत्वं भज्येत, इच्छोत्पत्तौ दुःखासंभेदापेक्षणादिति चेत् । अस्तु तावदेवं तथाप्युत्कटेच्छाविषयसाधनताज्ञानं प्रवर्त्तकमस्तु, तदभावादेव तत्रातिप्रसङ्गनिरासे किमुक्तविशेषणेन । तज्जन्यदुःखे द्वेषौत्कट्येन रागौत्कट्याभावात् । यदि च कलञ्जभक्षणजन्यसुखे कस्य चिद्रागौत्कट्यसंभवेन निषेधानुपपत्त्या तत्र विध्यर्थस्तदा तवापि तुल्यम् । एतेनासहिष्णुताविषयदुःखाजनकत्वं तद्विवक्षितमिति परास्तम् । उक्तरीत्या निषेधानुपपत्तेः । द्वेषातिरिक्तायाः सहिष्णुताया निर्वक्तुमशक्यत्वाच्चेति । वयं तु ब्रूमः । एकत्रापि विषये पुरुषभेदसमयभेदाभ्यां द्वेषेच्छयोरौत्कट्यवशाद् अप्रवृत्तिप्रवृत्ती इत्यनुभवसिद्धम् । एवं चोत्कटद्वेषविषयदुःखजनकत्वज्ञानं प्रवृत्तिप्रतिबन्धकमिति नोक्तस्थले प्रवृत्त्यापत्तिः । ननु तदभावज्ञानं कारणम् । तथा च तदननुगतत्वे ऽप्यदोषः । प्रतिबन्धकाननुगमस्यादोषत्वात् । निवृत्तिसामग्रीत्वेन तस्य सत्प्रतिपक्षवत् साक्षादेव प्रतिबन्धकतया जनकज्ञानाविरोधिनः कथं प्रतिबन्धकत्वमिति शङ्कापि न । साक्षादविरोधिनैव जनकज्ञानविघटकतया प्रतिबन्धकत्वात् । अत एवासत्प्रतिपक्षितत्वज्ञानमपि नानुमितौ हेतुः । तथा च तस्य विध्यर्थाप्रवेशान्नोक्तदोषः । उत्कटत्वं जातिरुपाधिर्वेति अन्यदेतत् । अस्तु वा तदभावज्ञानमपि हेतुः । तदीयोत्कटद्वेषविषयदुःखाजनकत्वज्ञानस्य तदीयप्रवृत्तौ विशेषसामग्रीत्वान्नाननुगमः । अन्यथा मदिष्टसाधनताज्ञानस्य प्रवर्तकत्वे तवाप्यननुगमापत्तिः । न चैवं तस्यापि विध्यर्थप्रवेशे पूर्वदोषापत्तिरिति वाच्यम् । नहि यावद्विषयकत्वेन ज्ञानस्य प्रवर्त्तकत्वं तावानवश्यं विध्यर्थः । तादृशस्यापीदानींकालस्य मदंशस्य चातथात्वात् । यदि च बाधकात्तस्य तदनन्तर्भावस्तदोक्तनिषेधानुपपत्त्यादिबाधकादस्यापि तथात्वम् । अत एव श्येनेनाभिचरन् यजेतेत्यत्रापि विधिप्रवृत्तिरप्रत्यूहा । उत्कटेच्छाविषयसाधनताज्ञानमेव वा हेतुरतो नातिप्रसङ्गः । अत एव रागद्वेषयोरुत्कटत्वेन प्रवृत्तिरित्यग्रे विभावयिष्यति । यद्यप्येवमपि न कलञ्जभक्षणमित्यादौ निषेधान्वयानुपपत्तिरेव । इष्टसाधनत्वकृतिसाध्यत्वयोर्निषेधानन्वयात् । तथापि पुरुषभेदसमयभेदाभ्यामेकत्र प्रवृत्त्यप्रवृत्त्योरन्यथोपपादयितुमशक्यतयोक्तस्य प्रवर्त्तकत्वे तत्र निषेधान्वयानुपपत्त्या नञो ऽसुराविद्यावत् पर्युदासलक्षणया विरोध्यनिष्टसाधनत्वपरत्वमस्तु । न च व्युत्पत्तिविरोधः । स्वर्गकामो यजेतेत्यत्र स्वर्गकामस्य यागविषयककार्यमिति प्राभाकरमतेन याग इष्टसाधनं वेति षष्ठ्यर्थमन्तर्भाव्यान्वयबोधेन विधिवाक्ये व्युत्पत्त्यन्तरकल्पनवन्निषेधवाक्येप्यनन्य-

तावच्छेदकं (५२) लाघवात् । तेन मधुविषसंपृक्तान्नभोजने न प्रवृत्तिः । परेणापि प्रवृत्तिपूर्वं लिङ्विशेषणत्वेना- (५३ )न्यथा वा तज्ज्ञानविनियोगस्वीकारात् । एवं चाल्पायाससाध्यादिष्टोत्पत्तिसंभवे (५४ )बह्वायाससाध्ये न प्रवृत्तिः । अत एव श्रुतस्वर्ग(५५ )फले ऽपि बहुवित्तव्ययायाससाध्ये ज्योतिष्टोमादौ फलभूमा कल्प्यते । अन्यथा अल्पायाससाध्यादेव स्वर्गसिद्धिसंभवे तत्राप्रवृत्तावननुष्ठानलक्षणमप्रामाण्यं तद्विधेः स्यात्, बलवदनिष्टाननुबन्धित्वं च न विशेषणम् । बहुवित्तव्ययायाससाध्यबहुतरदुःखस्याप्यबलवत्त्वं क्व चिदल्पदुःखस्यापि बलवत्त्वमित्यनुगतस्याभावात् । न चेष्टापेक्षया ऽनिष्टस्याधिकत्वं बलवत्त्वम् । तस्याप्युक्तातिरिक्तस्याननुगमात् । (५६ ) आस्तिकस्य निषिद्धत्वेन ज्ञातेपि प्रवृत्तिनिवृत्ती रागद्वेषयोरुत्कटत्वेन नरकसाधनत्वज्ञानतिरोधानात् । ननु न कलञ्जं भक्षयेदिति (५७ ) विध्यर्थनिषेधानुपपत्तिः, तद्भक्षणस्य तृप्तिरूपेष्टसाधनत्वात् । न चासुराविद्यादिवत्पर्युदासलक्षणया विरोध्यनिष्टसाधनत्वबोधनम् । (५८) नञो ऽसमस्तत्वात् । (५९ ) क्रियासंगतत्वेन प्रतिषेधवाचकत्वव्युत्पत्तेश्चेति चेत् । (६० ) विशेष्यवति विशिष्टनिषेधस्य सविशेषणे हीतिन्यायेन विशेषणनिषेधपर्यवसायितया कलञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तदुःखसाधनमिति न कलञ्जं भक्षयेदित्यनेन बोधनात् । (६१ ) इष्टसाधनतावाचकस्य विधेः सामान्येन निषेधानुपपत्तेर्बलवदनिष्टाननुबन्धीष्टसाधनत्वविशेषनिषेधतात्पर्यं, तथा चाशक्यविशेषनिषेधपरत्वं नञ इति कश्चित् । तन्न । यथाह्ययोग्यतया छिद्रं विहाय घटत्वेन तदितरान्वयो, न तु छिद्रेतरत्वेन, युगपद्वृत्तिद्वयविरोधात्, तथा ऽत्रापि बलवदनिष्टाननुबन्धित्वेन नोपस्थितिरिति कथं तन्निषेधः ॥

गत्या तत्कल्पनात् । सुब्विभक्तौ लक्षणाया अप्यभावात् । अस्तु वा निषेधानुपपत्त्या आप्ताभिप्राय एव विध्यर्थः । अत एव कुसुमाञ्जलौ आचार्यचरणैरुक्तं प्रवर्त्तकं तूक्तमेवेति सहृदयैराकलनीयम् । एवं च प्रकृतग्रन्थसंगतिश्चिन्त्येति दिक् । (५२) लाघवादिति । कृतीष्टसाधनताज्ञाने अवच्छेदकमात्रं कल्प्यते, न त्वभावरूपकारणान्तरं गौरवादित्यर्थः । (५३ ) अन्यथा वेति । प्रवर्त्तकज्ञाने तदपि वा विषयतयावच्छेदकमित्यर्थः । (५४) बह्वायासेति । तज्जन्यदुःखस्योत्कटद्वेषविषयत्वादिति भावः । (५५) फलेति । तथा च फलाधिक्यात्तज्जन्यदुःखे तादृशो न द्वेष इति भावः । (५६) आस्तिकस्येति । यद्यपि नरकसाधनत्वज्ञानेपि रागोत्कट्यात् प्रवृत्तिरनुभवसिद्धा तथापि तन्नरके तदा नोत्कटद्वेष इति तात्पर्यम् । अत एव वैराग्यदशायां तत्रोत्कटद्वेषात्तस्यैव निवृत्तिरिति । (५७) विध्यर्थेति । यद्यपि नायं विधिः, कलञ्जभक्षणस्य रागप्राप्तत्वात् एकत्रैव विधिनिषेधानुपपत्तेश्च, तथापि निषेध्यकोट्युपस्थापको विधिप्रतिरूपकोऽयं भक्षयेदितिशब्दः प्रवर्त्तकज्ञानजनकशब्दस्यैव विधित्वादिति बोध्यम् । (५८) नञ इति । यद्यपि व्यासेपि न घटः पट इत्यादौ लक्षणाभ्युपगमादसमस्तनञोपि पर्युदासलक्षणा, तथापि विरोधिपरत्वं समस्तस्यैव व्यासेपि तद्भिन्नत्वमात्रबोधनात् । न चात्रापि तथैवास्त्विति वाच्यम् । तथा सतीष्टसाधनभिन्नत्वज्ञानेपि नरकरूपानिष्टसाधनत्वज्ञानानुदयादिति भावः । के चित्तु पूर्वास्वरसादाह । (५९ ) क्रियेति । (६० ) विशेष्यवतीति । एतच्चातिरिक्तविशिष्टाभावानभ्युपगमेन बोध्यम् । वस्तुतो विशिष्टनिषेधसिद्धौ ततो ऽनुमानाद्विशेषणाभावसिद्धिरिति ध्येयम् । तदननुबन्धित्वस्य विध्यर्थानन्तर्भावेपि यो निषेधान्वयमुपपादयति, तन्मतमुपन्यस्य निराकरोति । (६१) इष्टेति ॥

## ॥ अथ वेदान्तसूत्रशैवभाष्यसंबन्धिद्वितीयाध्यायस्य ॥

॥ द्वितीयपादारम्भः ॥

॥ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च* ॥ १ ॥

पूर्वपादे सांख्यादितर्कविरोधमाशङ्क्य स्वपक्षसाधनं कृतम् । पुनरिह तर्कावलम्बनेन सांख्यादिपरपक्षदूषणं क्रियते । प्रथमं सांख्यानां प्रधानकारणवादो युक्तो न वेति संदेहः । संदेहबीजं सर्वत्र प्रसिद्धमूहनीयम् । प्रधानं हि रजःसत्त्वतमोरूपम् । तदेव जगतः कारणं भवितुमर्हति । सर्वत्र तत्कार्यसुखदुःखमोहान्वयदर्शनात् । पटादयो ह्युपलब्धाः प्रावरणादिहेतुतया सुखात्मका[1] भवन्ति । अन्यापहृता दुःखात्मका भवन्ति[2] । कार्याभावादुपेक्षिता मोहात्मकाः[3] । तदेवं सुखाद्यन्वयात् त्रिगुणमेव प्रधानं जगत्कारणमिति प्राप्तेऽभिधीयते । न प्रधानं जगत्कारणम् । अचेतनत्वात् । तथाहि । दार्वादेरचेतनस्य रथप्रासादादिषु[4] तज्ज्ञानधिष्ठितस्य रचनानुपपत्तिर्दृश्यते । तज्ज्ञाधिष्ठितस्य रचनाप्रवृत्तिश्च दृश्यते । अतश्चेतना-

* शंकरमते प्रवृत्तेश्चेति पृथक् सूत्रम् ।

१ सुखाय इति पा० ।

२ दुःखायान्यापहृता इति पा० ।

३ मोहाय इति पा० ।

४—दिनिर्माणे इति पा० ।

नधिष्ठितं प्रधानं जगत्कारणं भवितुं नार्हति । यदुक्तं सुखाद्यन्वयादिति । तदसत् । सुखादीनामान्तरत्वात् । पटादीनां बाह्यत्वात् । अतः प्रधानकारणवादो न युक्तः[1] ॥ १ ॥

आशङ्क्य परिहरति ॥

॥ पयोऽम्बुवच्चेत् तत्रापि ॥ २ ॥

यथा पयोऽम्बु दध्यादिकरकादिभावेऽधिष्ठानानपेक्षं तद्वत् प्रधानमपीति चेत् । न । तत्राप्युक्त एव हेतुः । तस्याप्यचेतनत्वेन पक्षीकृतत्वात् ॥ २ ॥

किंच ॥

॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

यदि प्राज्ञाधिष्ठानानपेक्षत्वमचेतनस्य प्रवृत्तौ, तदा सर्वदा सृष्टिप्रसङ्गेन तद्व्यतिरेकस्य प्रलयस्यानवस्थितिः प्रसज्येत[2] । ततो नाचेतनं जगत्कारणम्[3] ॥ ३ ॥

॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥

क्षीरायमाणधेनूपभुक्ततृणादिवदचेतनमपि प्रधानं न कारणमिति वक्तुं युक्तम् । अनडुहाद्युपयुक्ते च तृणादौ क्षीरपरिणामाभावात् तदपि प्राज्ञाधिष्ठितमेव ॥ ४ ॥

॥ पुरुषाश्मवदिति चेत् तथापि ॥ ५ ॥

अचेतनमपि प्रधानं पुरुषसंनिधानात् प्रवर्तयति । यथा पङ्गुरन्धं, यथावायस्कान्तमणिरयः । ततो न प्राज्ञापेक्षेति चेत्, तथापि प्रधानस्य प्रवृत्तिः संभवति । पुरुषस्याविकृतत्वात् । पङ्ग्वश्मादेर्मार्गोपदेशायःसंनिहितदे[4]शान्तरप्राप्त्यादिः कश्चिद्विकारो भवत्येव । तस्मादविकृतपुरुषसंनिधिः प्रधानप्रवृत्तौ न हेतुः ॥ ५ ॥

॥ अङ्गित्वानुपपत्तेश्च ॥ ६ ॥

गुणानामुत्कर्षापकर्षभावोऽङ्गाङ्गिभावः । ततो[5] जगत्प्रवृत्तिरुच्यते सांख्यैः । प्रतिसर्गावस्थायां साम्यावस्थानां गुणानां वैषम्याभावात् तत्कृताङ्गाङ्गिभावानुपपत्तिः । अतश्च जगदारम्भो न युज्यते प्रधानकारणवादे ॥ ६ ॥

॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥

उक्तप्रकारादन्यप्रकारेण प्रधानेऽनुमीयमानेऽपि ज्ञातृत्वशक्तिवियोगाद्रचनानुपपत्तिस्तदवस्थैव ॥ ७ ॥

॥ अभ्युपगमेऽप्यर्थाभावात्* ॥ ८ ॥

१—दे न युक्तिसंभवः इति पा० ।
२—ङ्गो भवति इति पा० ।
३ ततोऽचेतनं प्रधानं न कारणम् इति पा० ।
४—मार्गोपदर्शनाद्देशान्तर—इति पा० ।
५ ततो हीयं इति पा० ।
* शंकरेण, अभ्युपगमेऽप्यर्थाभावात्, इति सूत्रं पुरुषाश्मवदिति चेत् तथापि, इति सूत्रात् पूर्वमुपन्यस्तम् ।

प्रधानस्याप्यभ्युपगमे[1] यदि प्रयोजनं, तदा कथंचिदभ्यु[2]पगच्छामः । न किमपि प्रयोजनमस्ति । यतः पुरुषस्य निर्विकारत्वात् प्रधानदर्शनादिरूपविकारासंभवः[3] । अत एव प्रकृतिधर्माध्यास[4]निमित्तो भोगस्तद्विवेकानुसंधानकृतं कैवल्यं च न संभवति । अतः प्रयोजनाभावात् प्रधानं न स्वीकार्यम् ॥ ८ ॥

॥ विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

पुरुषस्य द्रष्टृत्वभोक्तृत्वनिर्विकारत्वादिविरुद्धधर्मसहस्राभ्युपगमश्च दृश्यते । अतोऽप्यसमञ्जसमेव कापिलं मतम् ॥ ९ ॥

एवं[5] प्रधानकारणवादो निष्प्रमाणक इति निरूपितम् । अतः परं परमाणुकारणवादनिरसनायाधिकरणमारभ्यते ॥

॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥

अत्र वैशेषिकमतसिद्धः परमाणुकारणवादो युक्तो न वेति संदेहः । प्रधानमतेऽधिष्ठातृपरमेश्वरानङ्गीकारात् तत्कारणवादे विरुद्धेऽपि परमाणुकारणवादो युज्यते । तथाहि, प्रलीने जगति परमेश्वरस्य सिसृक्षायां सत्यां प्राणिनां कर्मवशान्निश्चलेषु[6] परमाणुष्वाद्यं कर्मोत्पद्यते । तस्मात् कर्मणैकः परमाणुः परमाण्वन्तरेण संयुज्यते । तस्माच्च संयोगाद् द्व्यणुकमारभ्यते । तेभ्यस्त्रिभ्यो द्व्यणुकेभ्यस्त्र्यणुकम् । इत्यादिक्रमेण सर्वं जगदुत्पद्यते । अतः परमाणुकारणवादे न विरोध इति पूर्वपक्षे सिद्धान्त उच्यते । ह्रस्वपरिमण्डलाभ्यां महत्त्वदीर्घत्वयुक्तद्व्यणुकात् त्र्यणुकोत्पत्तिरुच्यते काणादमते । कथमेतत् संभवति । तथाहि, परमाणवः पारिमण्डल्यपरिमाणयुक्ताः । न त्वणुपरिमाणयुक्ताः । द्वाभ्यां परमाणुभ्यामणुपरिमाणरहिताभ्यामणुपरिमाणोपेतं द्व्यणुकमुत्पद्यत इत्यभ्युपगम्यते । तथा ह्रस्वपरिमाणोपेतत्वाद्दीर्घपरिमाणोपेतं द्व्यणुकम् । तादृशेभ्यस्त्रिभ्यो द्व्यणुकेभ्यो दीर्घपरिमाणोपेतमणुपरिमाणरहितं त्र्यणुकमुत्पद्यत इत्यभ्युपगम्यते । इदं सर्वमसमञ्जसमेव । तदभ्युपगतकारणगुणप्रक्रियाविरोधात् । अवयवाश्च स्वीयैः षड्भिः पार्श्वैः संयुज्यमानाः पृथुतरमवयविनमारभन्ते । परमाणूनां पार्श्वाभावात्[7] पृथुतरद्रव्यारम्भकास्ते न भवेयुः । अतः परमाणुकारणवादो न युक्तः ॥ १० ॥

पुनरनुपपत्तिमाह ॥

१ यथाकथंचित् प्रधानस्याभ्युपगमे इति पा० ।
२ तदभ्यु—इति पा० ।
३—रूपस्वीकाराभावः इति पा० ।
४—न—इति पा० ।
५ सर्वथा इति पा० ।
६—श्चिर्जीवेषु इति पा० ।
७—नभ्युपगमात् इति पा० ।

॥ उभयथापि न कर्मातस्तदभावः ॥ ११ ॥

अणुगताद्यकर्माभावादेव तत्कृताणुगतसंयोगाभावः । जीवादृष्टाना विपाकानपेक्षत्वे प्रागप्यणुगता कर्मोत्पत्तिः स्यात् । तदपेक्षत्वे[1] न तत्कृतकादाचित्काणुगतकर्मसंभवः । विपाको नामादृष्टगतः कश्चिद्धर्मो न ज्ञायते । किंतु कर्मविधिना[2] कालविशेषनियतफलदातृत्वं यस्य कर्मणश्चोदितं तस्य तत्कालागम एव विपाकः । अनियतकालविशेषाणां कर्मणां प्रबलकर्मान्तरप्रतिबन्धाभावो वा विपाकः[3] । अदृष्टानि तत्तत्कर्मानुगुणफलदानस्वभावानि । अतोऽनन्तैरात्मभिर्विविधकालफलदायित्वेनानुष्ठितानामेकदैकरूपविपाको न संभवति । अतः[4] परमाणुकारणवादो न युक्त एव ॥ ११ ॥

इयं चात्रानुपपत्तिरित्याह ॥

॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥

समवाय इति संबन्धोऽभ्युपगम्यते । अत एवासमञ्जसमेतत् । कथम् । समवायस्यापि जातिगुणादेरिवापृथक्सिद्धत्वमेवासाम्यादनवस्थानात् । अतः कारणादिदं मतमसमञ्जसम् ॥ १२ ॥

॥ नित्यमेव च भावात् ॥ १३ ॥

समवायस्य नित्यत्वाङ्गीकारात् संबन्धिनित्यत्वमन्तरेण तदनुपपत्तेरवयवावयविनोरपि नित्यत्वप्रसङ्गादसमञ्जसमेव तत् ॥ १३ ॥

॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥

परमाणूनामत्र रूपादिमत्त्वमङ्गीक्रियते । ततस्त्वनित्यत्वादिविपर्ययः । तथा घटादिषु दर्शनात् ।[5] तस्मादप्यसमञ्जसम् ॥ १४ ॥

॥ उभयथा च दोषात् ॥ १५ ॥

अनित्यत्वादिपरिहाराय रूपादिमत्त्वादिशून्यत्वाङ्गीकारे[6] कारणपूर्वकत्वासिद्धिः । एतत्सिद्ध्यै[7] पुनरपि रूपादिमत्त्वाङ्गीकारे वानित्यत्वाद्यनर्थापत्तिरित्युभयथापि दोषादसमञ्जसमेव कणादमतम् ॥ १५ ॥

॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥

सांख्यपक्षस्य श्रुतिन्यायविरुद्धस्यापि सत्कार्यवादादौ कचिदंशे वैदिकपरिग्रहोऽस्ति । कणादपक्षस्य तु केनाप्यंशेनापरिग्रहादत्यन्तमनपेक्षैव निःश्रेयसार्थिभिः कार्या[1] ॥ १६ ॥

वैदिकैकदेशिना[2] मतं निराकृतम् । इदानीं वेदबाह्यानां मतं निरस्यते ॥

॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥

प्रथममिह बौद्धसिद्धान्तसिद्धः समुदायकारणवादो युक्तो न वेति संदेहः । युक्त इति पूर्वः पक्षः । तथाहि सन्ति । द्वौ समुदायौ बाह्याभ्यन्तरौ । बाह्यः पृथिव्यादिः । आन्तरश्चित्तचैतन्यात्मकः । समुदायद्वयमेव सर्वं जगत् । तथा हि[3] बाह्यसमुदायस्य परमाणवः कारणम् । ते च चतुर्विधाः । पार्थिवाप्यतैजसवायवीयाः । तेभ्यो युगपत् पुञ्जीभूतेभ्यः समुदायो बाह्यो जायते । आन्तरस्य समुदायस्य स्कन्धपञ्चकं कारणम् । रूपवेदनाविज्ञानसंज्ञासंस्काररूपाः पञ्च स्कन्धाश्चित्तेन निरूप्यमाणाः । शब्दस्पर्शरूपादयो रूपस्कन्धः । तदभिव्यक्तिर्विज्ञानस्कन्धः । तज्जन्यं दुःखं वेदनास्कन्धः । देवदत्तादि नाम संज्ञास्कन्धः । तेषां वासना संस्कारस्कन्धः । तेभ्यः पुञ्जीभूतेभ्य आन्तरः समुदायो जायते । अतः समुदायद्वयकारणवादे न कोऽपि विरोधः । इत्येवं प्राप्ते निरूप्यते । न युक्तः समुदायद्वयकारणवाद इति । ते हि क्षणिकत्ववादिनः । कथमेतेषां समुदायः संभवति । कारणानां[4] क्षणिकत्वेन तदानीमेव नष्टत्वात् कार्योत्पादनासमर्थत्वात् ॥ १७ ॥

॥ इतरेतरप्रत्ययत्वादनुपपन्नमेतदिति
चेन्न संघातभावा*निमित्तत्वात् ॥ १८ ॥

अस्थिरेषु स्थिरत्वबुद्धिरूपाया अविद्याया रागादीनां चान्योन्यकारणत्वात् संघातभावादिकमुपपन्नमिति[5] चेत् । न । अविद्यायाः संघातभावानिमित्तत्वात् । नहि शुक्तिकादिषु रजतादिबुद्धिरूपाविद्यया शुक्तिकादिर्वस्तुनो रजतादि कार्यं करोति । विदुयस्तदानीमेव तत्र नष्टत्वात् । तन्निमित्तरागादयोऽपि न संभवन्ति । तस्मादयुक्तः समुदायकारणवादः ॥ १८ ॥

युक्त्यन्तरमाह ॥

॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥

उत्तरघटक्षणोत्पत्तौ पूर्वघटक्षणस्य नष्टत्वात् । अभावस्यैवोत्पादकत्वाविशेषात् सर्वदा सर्वोत्पत्तिरपि स्यात् ॥ १९ ॥

---

१ विपाकापेक्षत्वेऽपि इति पा० ।

२ कर्मविधिवेलायामेव इति पा० ।

३—भाव एव वा कर्मविपाकः इति पा० ।

४ अनुमेयेश्वरादिसिद्धेश्च तदधिष्ठानं च न संभवति । अतः इति पा० ।

५—दिषु दृश्यते हि । तस्मादिदमस—इति पा० ।

६ अनित्यत्वादिशून्यत्वाङ्गीकारे इति पा० ।

७ कारणपूर्वकत्वात् कार्यसिद्धेस्तत्सिद्ध्यै इति पा० ।

१ कपिलमतसिद्धसत्कार्यवादादिश्रुतिसंवाद्येकदेशपरिग्रहवत् कणादमतसिद्धस्य कस्याप्यंशस्य वैदिकैरपरिग्रहाच्च युक्तिविरोधाच्चात्यन्तमनपेक्षोपेक्षयैव कार्या इति वाक्यजातमेव पा० ।

२ वैदिकदर्शिनां वैदिकैकदेशिनां इति पा० ।

३ तथा इति वरपा० ।

४—नां परमाणूनां इति पा० ।

*—चोत्पत्तिमात्र—इति शंकरमतीयः सूत्रपाठः ।

५ अविद्याया अन्योन्यकारणत्वादुपपद्यत इति इति पा० ।

॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥

असति हेतावुत्पत्तौ[1] अधिपतिसहकार्यादीनां ज्ञानहेतुत्वप्रतिज्ञाविरोधः स्यात् । तस्यापि स्थित्यभ्युपगमे युगपद् घटद्वयोपलब्धिप्रसक्तिः । अस्थितौ संप्रयोगज्ञानादेर्यौगपद्यम् ॥ २० ॥

॥ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥

निरोधो निरन्वयविनाशः । स स्थूलः सूक्ष्मश्च न संभवति । कपालादिभावरूपावस्थाप्राप्तिरेव विनाशशब्दवाच्यत्वात् । मतो द्रव्यस्याविच्छेदात् । ततो न क्षणिकत्वसिद्धिः ॥ २१ ॥

॥ उभयथा च दोषात् ॥ २२ ॥

उत्पन्नस्य तुच्छतापत्तौ तुच्छादुत्पत्तौ चाभावादुत्पत्त्यसंभवात् । अभावात्मककार्योत्पत्तिरूपाद्दोषादसमञ्जसमिदं दर्शनम्[2] ॥ २२ ॥

॥ आकाशे चाविशेषात् ॥ २३ ॥

आकाशे च न तुच्छत्वमुपपद्यते । अबाधप्रतीतिसिद्धत्वादस्य श्येनादिपतनहेतुत्वेन ॥ २३ ॥

॥ अनुस्मृतेश्च ॥ २४ ॥

प्रत्यभिज्ञानादपि न क्षणिकत्वसिद्धिः । तदेवेदमिति सामानाधिकरण्येनातीतवर्तमानकालविशिष्टं वस्त्वेकमिति हि विज्ञायते । सामग्री च तस्याः पूर्वानुभवजनितसंस्कारवतः पुरुषस्येन्द्रियसंयोगः । ततः क्षणिकत्वाद्यनुपपन्नार्थाभिधानादसबद्ध एव समुदायकारणवादः ॥ २४ ॥

बाह्यार्थास्तित्ववादिषु गोघटादीनां प्रत्यक्षत्ववादिनो बौद्धा निरस्ताः । ज्ञानानुमेयत्ववादिनो निरस्यन्ते[3] ॥

॥ नासतोऽदृष्टत्वात् ॥ २५ ॥

इह बौद्धैकदेशिनो ज्ञानानुमेयत्ववादो युक्तो न वेति संशये पूर्वः पक्षप्रसङ्गः । ज्ञाने स्वाकारसमर्पणविनष्टमर्थं ज्ञानाकारवैचित्र्येणानुमिनोति । ततो ज्ञानवैचित्र्येण बाह्यार्थवैचित्र्यमनुमीयत इति । तदेतन्न संभवति । अर्थस्य क्षणिकत्वादसतो विनष्टस्य धर्मिणो धर्मसंक्रमणस्यादृष्टत्वात् ॥ २५ ॥

उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥

क्षणिकत्वाभ्युपगमादन्य एवानुष्ठातान्य एव फलस्वामी । अतो निष्प्रयत्नानामपि सर्वार्थसिद्धिः स्यादिति दुरुपपादोऽयं वाद इति ॥ २६ ॥

॥ नाभाव उपलब्धेः ॥ २७ ॥

इह बौद्धानां केवलविज्ञानवादो युक्तो न वेति संशये युक्त इति पूर्वः पक्षः[1] । तथाहि साकारं विज्ञानमेव त्वान्तरं, न बाह्याः पदार्थाः । स्वप्ने बाह्यपदार्थाननपेक्ष्य केवलया बुद्ध्या व्यवहारदर्शनात् । तद्वज्जाग्रद्व्यवहारस्यापि[2] व्यवस्था युज्यते । ततो विज्ञानमात्रं तत्त्वमित्येवं प्राप्तेऽभिधीयते[3] । घटं जानामीति कर्तुः कर्मतयार्थस्यैवोपलब्धेस्तदभावो न शक्यते वक्तुम् । पुरुषस्यार्थविशेषव्यवहारानुगुण्यापादनमेव हि ज्ञानस्याकारः । यदुक्तम्, स्वप्नदृष्टान्तेन जाग्रद्व्यवहारस्यापि शून्यत्वम् । तदसत् । स्वप्नस्य बाध्यत्वात् जाग्रद्व्यवहारस्याबाधदर्शनात् । विषमो दृष्टान्त इत्यर्थः ॥ २७ ॥

॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥

कारणदोषबाधराहित्यरूपवैधर्म्याच्च न स्वप्नादिवज्जागरितज्ञानस्य मिथ्यात्वम् । अतो न विज्ञानमात्रं तत्त्वम् ॥ २८ ॥

युक्त्यन्तरमाह ॥

॥ नाभावोऽनुपलब्धेः* ॥ २९ ॥

अर्थशून्यस्य ज्ञानस्य सद्भावो न संभवति । तस्य कुत्राप्यनुपलम्भात् । स्वप्नज्ञानस्याप्यर्थवत्ता संभवत्येव । ततो विज्ञानमात्रवादोऽनुपपन्न एव ॥ २९ ॥

॥ सर्वथानुपपत्तेश्च ॥ ३० ॥

इहाधिकरणे सर्वशून्यवादो युक्तो न वेति संदेहः । युक्त इति पूर्वः पक्षः । तथाहि[4], सर्वं जगन्न सत् । बाधितत्वात् । नासत् । प्रतीयमानत्वात् । नोभयात्मकम् । विरोधात् । नानुभयात्मकम् । असंभवात् । किंतु चतुष्कोटिविनिर्मुक्तं सर्वं शून्यमेव । प्रत्यक्षावभासस्तु संवित्तिमूलः । तस्माच्छून्यवादः समीचीन इत्येवं[5] प्राप्ते सिद्धान्त उच्यते ॥

न संभवति सर्वशून्यवादः । कुतः । सदिति प्रतिज्ञायामिवासदिति प्रतिज्ञायामन्यथाप्रतिज्ञाया च तुच्छत्वासंभवानुपपत्तेः[6] सदसदद्बुद्धितच्छब्दानां वस्तुगतान्यतरद्भावाभावरूपावस्थाविशेषविषयत्वात् । यत् तु संवित्तिमूलः प्रत्यक्षावभास इति । तदप्युपहास्यम् । सर्वस्य शून्यत्वे कः संवित्तेराश्रयः । यस्यैवमवभासः । ततः सर्वशून्यवादः सर्वविरुद्ध एव ॥ ३० ॥

गता हि बौद्धाः । जैनमतं निरस्यते ॥

१ असत उत्पत्ता—इति पा० ।

२—यच्च न तुच्छत्वसिद्धिर्भवति इति पा० ।

३ ॥ २४ ॥ सर्वक्षणिकवादी निरस्तः । अतश्च ज्ञानानुवादवादी निरस्यत इति इत्येव पा० ।

१ पूर्वमुच्यते इति पा० ।

२ तथैव जा—इति पा० ।

३—प्ते न युक्तमित्युच्यत इति पा० ।

* अतः सूत्रतः परं शंकरमते क्षणिकत्वाच्च इत्याकारकमपरं सूत्रमस्ति । तदेतन्मते नास्ति ।

४—हः । एवं सति युक्तिमापादयति । इति पा० ।

५ तस्माच्छून्यवादिमतं समीचीनमित्येवं इति पा० ।

६ तुच्छत्वानुपपत्तेः इति परपा० ।

॥ नैकस्मिन्नसंभवात् ॥ ३१ ॥

जैना हि सप्तभङ्गीन्यायेनैकस्मिन्नपि वस्तुनि नानाभावमापादयन्ति । तदेतेषां मतं युक्तं न वेति विचारः । एवं तेषां प्रक्रिया । जीवोऽजीवश्चेति द्वौ पदार्थौ । जीवश्चेतनः शरीरपरिमाणः सावयवः । अजीवः षड्विधः । वनमहीधरादिरेकः । आस्रवसंवरनिर्जरबन्धमोक्षाख्याः पञ्च । आस्रवत्यनेन जीवो विषयेष्वित्यास्रव इन्द्रियसंघातः । संवृणोति विवेकमित्यविवेकादिः संवरः । । निःशेषं जीर्यत्यनेन कामक्रोधादिरिति केशोल्लुञ्चनतप्तशिलारोहणादि तपो[1] निर्जरः । कर्माष्टकेनापादिता[2] जन्मपरंपरा बन्धः । चत्वारि घातिकर्माणि पापरूपाणि । चत्वार्यघातिकर्माणि पुण्यरूपाणि । तेभ्यो मुक्तस्य जीवस्य सततोर्ध्वगमनं मोक्षः । एते सप्त पदार्थाः सप्तभङ्गीन्यायेन व्यवस्थाप्याः । स्यादस्ति । स्यान्नास्ति । स्यादस्ति च नास्ति च । स्यादवक्तव्यः[*] । स्यादस्ति चावक्तव्यः । स्यान्नास्ति चावक्तव्यः । स्यादस्ति च नास्ति चावक्तव्यः । इति सप्तभङ्गीन्यायः । स्याच्छब्द ईषदर्थः[3] । अतः सप्तभङ्गीन्यायात् सप्त पदार्थसिद्धिरिति ।

एतदयुक्तम् । कुतः । एकस्मिन् वस्तुनि सत्त्वासत्त्वनित्यत्वानित्यत्वभेदाभेदादीनामसंभवात् । पर्यायभाविनश्च[4] द्रव्यस्यास्तित्वनास्तित्वादिशब्दबुद्धिविषयाः[5] परस्परविरुद्धाः पिण्डत्वघटत्वकपालत्वाद्यवस्था युगपच्च संभवन्ति । अतो विरुद्ध एव जैनवादः ॥ ३१ ॥

॥ एवं चात्माकार्त्स्न्यम् ॥ ३२ ॥

एवं चात्माकार्त्स्न्यं चानुपपन्नम् । आत्मनः शरीरपरिमाणत्वे बृहच्छरीरादल्पीयसि प्रविशतो विकलत्वं प्रसज्येत । अत आत्मनः शरीरपरिमाणत्वमयुक्तमेव ॥ ३२ ॥

॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३३ ॥

तथाविधाल्पत्वावस्थान्तरयोगादप्यविरोधो न संभवति । घटादिवद्विकारादिदोषप्रसङ्गात्[6] ॥ ३३ ॥

॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३४ ॥

अन्त्यस्य मोक्षदशापरिमाणस्यैकरूपावस्थितेस्तस्य स्वाभाविकत्वेनात्मतत्परिमाणयोरुभयोरपि नित्यतया पूर्वावस्थायामप्यविशेषः । विविधदेहपरिमाणत्वे हि वैकल्यं भवेदेव[1] । अत एकस्मिन् सत्त्वासत्त्वादिवदात्मनः शरीरपरिमाणवादाच्च जैनमतमपि विरुद्धमेव ॥ ३४ ॥

॥ पत्युरसामञ्जस्यात् ॥ ३५ ॥

पत्युः परमेश्वरस्य श्रुतिसिद्धजगदुभयकारणत्वस्यापि तदागमनिष्ठास्तन्मताभिप्रायानभिज्ञा एकदेशिनस्तान्त्रिकाः केवलनिमित्तत्वं वदन्ति । तद्युक्तं न वेति संदेहः । तत्रैवं पूर्वः पक्षः । कुलालादिरनुपादानभूत एव दण्डादिकं नियच्छन् कर्ता भवति । तथा तटस्थ ईश्वरोऽपि निमित्तमात्रम् । माया उपादानम् । शक्तयः कारणम् । अन्यथा मृदादिवदीश्वरस्योपादानत्वे विकारादिप्रसक्तिः । अतो निमित्तमेव परमेश्वर इति । अत्रोच्यते । पत्युरीश्वरस्य केवलनिमित्तत्वमपि न युक्तम् । श्रुतिन्यायविरोधेनासामञ्जस्यात् ॥ ३५ ॥

न्यायविरोधमाह ॥

॥ संबन्धानुपपत्तेः* ॥ ३६ ॥

॥ अधिष्ठानानुपपत्तेश्च ॥ ३७ ॥

नित्यस्य व्यापकस्य निरवयवस्य कूटस्थस्य निर्लेपस्येश्वरस्यादृष्टशरीरादिभिः संबन्धस्यासंभवात् ॥ ३६ ॥

अत एवाशरीरस्य परमेश्वरस्य मायोपादानाधिष्ठानं नोपपन्नम् । लोके शरीरिण एव कुलालादेर्मृत्पिण्डाद्युपादानाधिष्ठानं दृष्टम् । अतः कुलालादिदृष्टान्तो विरुद्धः । अनधिष्ठाने मायादेः, ईश्वरस्यानङ्गीकारात् सांख्यमतमेव युक्तम्[2] । ईश्वरेण प्रयोजनाभावात् । अतः परमेश्वरस्य निमित्तत्वं न संभवति ॥ ३७ ॥

आशङ्क्याह ॥

॥ करणवच्चेन्न भोगादिभ्यः ॥ ३८ ॥

अधिष्ठाने शरीरापेक्षा नास्ति । यथा करणमिन्द्रियमशरीरमपि शरीरमधितिष्ठति । तद्वत् प्रधानमपीश्वर इति चेत । तद्गता[3]नर्थभोगादिभ्यः । यथात्मनोऽशरीरस्य शरीराधिष्ठाने शरीरगतसुखदुःखभोगादिस्तथा परमेश्वरस्यापि तदधिष्ठाने तद्गतभोगादिप्रसक्तिः । अतो न निमित्तमात्रमीश्वरः ॥ ३८ ॥

॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ३९ ॥

वाशब्दश्चार्थे । सशरीर एव परमेश्वरः कुलाल इव मृत्पिण्डं पार्थक्येनोपादानमधितिष्ठतीति चेत् । न । तथा

१ तप इव इति पा० ।
२ कर्माष्टकापादित–इति पा० ।
* सर्वत्र पुस्तकान्तरे नपुंसकतास्ति ।
३ स्याद्वचनमीषदर्थम्, इति पा० ।
४–रूपाश्च इति पा० ।
५–शब्दविषयाः इति पा० ।
६ तथा विकलत्वावस्थायोगादप्यविरोधाभावः । घटादिवद्विकारादियोगप्रसङ्गात् इति पा० ।

१ भवत्येव इति पा० ।
* शंकरमते संबन्धानुपपत्तेश्च ईदृशं चकारघटितं सूत्रम् ।
२ अनधिष्ठाने मायादेरीश्वरस्य सांख्यमतमेव निरीश्वरं युक्तम् इति पा० ।
३ तत्कृता–इति पा० ।

सति पत्युरीश्वरस्य संसारिण इवान्तवत्त्वमसर्वज्ञत्वं च भवति । अतो भोगादिप्रसक्तेः प्रधानाधिष्ठानमीश्वरस्य न संभवति । प्रधानाधिष्ठातृत्वेऽपि परमेश्वरस्य "अनश्नन्नन्योऽभिचाकशीति" इति श्रुतेस्तत्फलभोगादिप्रसक्तिर्न भवतीति चेत् । तथा सति तर्कबलमपहाय श्रुतिरेवावलम्बनीयेति । "तदात्मानं स्वयमकुरुत", "बहु स्यां प्रजायेय", "सर्वं वै ब्रह्म" इत्यादिश्रुतिभिरुपादानमपि परमेश्वर इत्यभ्युपेयम्[1] । जगदुपादाननिमित्तभूतस्यापि परमेश्वरस्य "निष्कलं निष्क्रियम्" इत्यादिश्रुतिभिर्निर्विकारत्वमप्युपपद्यते ।

"शक्तिः प्रथमसंभूता शान्त्यतीतपदोत्तरा ।
ततो माया ततोऽव्यक्तं शिवाच्छक्तिमतः प्रभोः ॥
शान्त्यतीतपदं जज्ञे ततः शान्तिपदं क्रमात्" ।

इत्यादिना मायादिप्रपञ्चे शक्तिमतः शिवस्यैवोपादानत्वमवगम्यते वायुसंहितायाम् । पुनश्च,

"शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ।
तेनैकेन तु तद् व्याप्तं मृदा कुम्भादिकं यथा" ॥

इत्यादिना तत्रैव शिवेनोपादानभूतेन जगद्व्याप्तं मृद्घटादिन्यायेनावगम्यते ।

"चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत्" ॥

इत्याद्यागमप्रामाण्याच्च परमेश्वरस्य जगदुभयकारणत्वमित्यनवद्यमिति ।

शिवागमैकदेशे शिवस्य परब्रह्मणः केवलनिमित्तत्वमुपपादितम् । तत्परिहारार्थमिदमधिकरणमिति पूर्वाचार्याणां व्याख्या ।

वयं तु वेदशिवागमयोर्भेदं[2] न पश्यामः । वेदेऽपि[3] शिवागम इति व्यवहारो युक्तः । तस्य तत्कर्तृकत्वात् । अतः शिवागमो द्विविधः । त्रैवर्णिकविषयः । सर्वविषयश्चेति । वेदस्त्रैवर्णिकविषयः । सर्वविषयश्चान्यः । उभयोरेक एव शिवः कर्ता । "ईशानः सर्वविद्यानाम्," "अस्य महतो भूतस्य निःश्वसितम्" । इत्यादिश्रुत्या ।

"अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।
आदिकर्ता शिवः साक्षाच्छूलपाणिः,"

इति स्मृत्या च वेदे तस्य कर्तृत्वमवगतम् । अन्यत्रापि तस्यैव परमेश्वरस्य । अतः कर्तृसामान्यादुभयमप्येकार्थपरं प्रमाणमेव ।

१—यः इति पा० ।
२—विरोधं इति पा० ।
३ वेदे च इति पा० ।

यद्वा, ब्रह्मप्रपञ्चस्वरूपमाहात्म्यादिमन्त्राणां[1] पशुपतिपाशादिवस्तुव्यवहाराणां भस्मोद्धूलनत्रिपुण्ड्रधारणलिङ्गार्चनरुद्राक्षधारणादिपरधर्माणामन्येषां च सर्वेषां व्यवहाराणामुभयत्रापि सममेव दर्शनादुभावपि प्रमाणभूतौ वेदागमौ ।

कर्तृ[2]सामान्यादेकार्थपरत्वेन च विरोधाभावादिदमधिकरणं केवलेश्वरनिमित्तत्वादिभिर्हिरण्यगर्भोक्तयोगस्मृतिविषयमिति वयं वदामः । अतो हिरण्यगर्भागमनिरसनपरमिदमधिकरणमिति युक्तम् ।

वियदाद्युत्पत्तिशङ्कापरिहारवदवान्तरशङ्कापरिहारप्रवृत्तौ न दोष इति कश्चित् । सर्वथा न केवलमीश्वरो निमित्तमित्यस्माकं राद्धान्तः ॥ ३९ ॥

॥ उत्पत्त्यसंभवात् ॥ ४० ॥

पाञ्चरात्रमतं वासुदेवोक्तम् । तत्र जीवोत्पत्त्यादिकमुच्यते । तत् संभवति न वेति सन्देहः । संभवतीति पूर्वः पक्षः । कुतः । भगवता वासुदेवेन प्रोक्तस्य[3] प्रमाणत्वात् । तथाह्यत्र प्रक्रिया । भगवानेको वासुदेवः परमात्मा । तस्मात् सङ्कर्षणाख्यो जीवो जायते । जीवाच्च प्रद्युम्नाख्यं मनः । मनसश्चानिरुद्धाख्योऽहङ्कारः । एते चत्वारो व्यूहाः सर्वात्मान इति । अतो वासुदेवस्य हिरण्यगर्भादिभ्योऽपि परत्वेन तदुक्तस्य प्रामाण्यादिदं सर्वमुपपन्नमिति प्राप्ते ब्रूमः । जीवोत्पत्त्यभिधायकमिदं शास्त्रमप्रमाणम् । कृतनाशाकृताभ्यागमप्रसङ्गेन जीवोत्पत्त्यसंभवात् । एकस्मिन् किंचित् पुण्यापुण्यात्मकं कर्म कृत्वा प्रलये नष्टे तदन्यः कश्चिज्जीवः प्राप्नोतीत्यकृताभ्यागमः । पूर्वस्य कृतस्य नाश इत्यादिर्दोषः[4] । ततो जीवोत्पत्त्यभिधायकं शास्त्रमप्रमाणम् ॥ ४० ॥

इयं चान्यानुपपत्तिरित्याह ॥

॥ नच कर्तुः करणम् ॥ ४१ ॥

संकर्षणाख्याज्जीवात् प्रद्युम्नाख्यं मनोऽजायत इत्युच्यते । कर्तुर्जीवाच्च करणोत्पत्तिर्न संभवति । तस्य प्रकृतिकार्यत्वेन चेतनकार्यत्वानुपपत्तेः ॥ ४१ ॥

॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४२ ॥

विज्ञानशब्दो जीववाचकः । अत्र जीवादीनामुत्पत्तिर्नाभिधीयते । किंतु संकर्षणादीनां जीवादिभाव उच्यते । जीवाद्यधिष्ठातृत्वं जीवादिभाव इति । ततस्तच्छास्त्रप्रामाण्यप्रतिषेधो मा भूदिति शङ्कार्थः ॥ ४२ ॥

१—दिमाहात्म्यानां इति पा० ।
२ अतो वेदागमरहस्यागमयोः कर्तृ—इति पा० ।
३ दृष्टस्य इति पा० ।
४ इत्यादि च बहुदोषाः इति पा० ।

॥ विप्रतिषेधाच्च ॥ ४३ ॥

एवं जीवोत्पत्त्यभिधाने परिहृतेऽपि पाञ्चरात्रमतस्य नाभ्युपगमः । श्रुतिविरुद्धेश्वरकारणवादमुक्तिहेतुत्वतप्तमुद्राधारणादिधर्मपरत्वादिना विप्रतिषेधात् । अतः पाञ्चरात्रमतमसमञ्जसम् ॥

"पाञ्चरात्रे च बौद्धे च तथा कालामुखेऽपि च ।
श्रद्धया दीक्षिता यूयं भवत[1] ब्राह्मणाधमाः" ॥

इत्यादिषु च विशेषेणास्य[2] प्रतिषेधो दृश्यते । अतो विप्रतिषेधादप्रमाणं[3] पाञ्चरात्रं मतम् ।

ननु "पुरुषो वै रुद्र" इत्यादिश्रुत्या परमेश्वर एव पुरुषो वासुदेवः । तज्ज्ञानाराधनादिकमपि क्रमेण परमेश्वरपदप्राप्तिसाधनमिति श्रूयते । तदाराधनप्रतिपादकस्य पञ्चरात्रस्याप्रामाण्ये तस्यानाराध्यत्वप्रसङ्ग इति चेत् । न । श्रुतिविरोधात् पञ्चरात्रस्याप्रामाण्येऽपि तस्य का हानिः । श्रुतिप्रसिद्धमार्गेण तदाराधनसंभवात् । अतो न विरोधः ॥ ४३ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २ :: :: ॥

---

१ भवेत इति पा० ।
२ इत्यादिविशेषणादस्य इति पा०।
३ विरुद्धधर्माश्रयत्वेन विप्रतिषेधविषयत्वादप्रमाणं इति पा० ।

---

॥ श्रीगुरुभ्यो नमः ॥

॥ अथ चरज्याद्यप्रकरणम् ॥

चरणौ न-
रसिंहस्य
ज्यायस्त्वाद्वन्-
दाता ययोः ।
प्रणमामि
कराञ्जल्या
रम्यो शर-
णदौ नृणाम् ॥ १ ॥

अत्र प्रतिपद्यत्याद्याक्षराणां योगेन चरज्याद्यप्रकरणमिति प्रकरणाभिधानमाविर्भवति ।

प्रश्नः ।

ज्ञात्वा चरज्यामपमज्यकां च
पलप्रभां ब्रूहि चरासभे तु ।
विज्ञाय विद्वन्नपमज्यकां मे
वदाशु चेद् बुध्यसि गोलसंस्थाम् ॥ २ ॥

अस्य भङ्गः ।

त्रिज्याभक्तार्कहता चरशिञ्जिन्यन्यसंज्ञः स्यात् ।
स क्रान्तिज्याविहृतो द्युज्यागुणितो भवेत् पलभा ॥ ३ ॥

परेण भक्ता पलभाप्रवर्गात्
सैकात् पदं तेन हृता त्रिभज्या ।
क्रान्तिज्यका स्यात् पलभापराख्यो
व्यत्यस्य यत् सिद्ध्यति सा द्युजीवा ॥ ४ ॥

द्वितीयप्रकारस्य श्रीमद्गुरुचरणोक्तः प्रकारान्तरेण भङ्गः ।

वेदेन्दुनिघ्न्याश्चरमौर्विकायाः
पलप्रभाघ्न्या त्रिभजीवयाप्तम् ।
अक्षप्रभां तत् प्रविकल्प्य साध्या
पलज्यका क्रान्तिगुणः स एव ॥ ५ ॥

प्रश्नः ।

भानौ सममण्डलगे समुन्नतांशांश्च चरकालम् ।
अवलोक्याशु वदेद्यः पलभामग्रां स गणकाग्र्यः ॥ ६ ॥

अस्य भङ्गः ।

पृथक् चरज्या समशङ्कुभक्ता
त्रिज्याहृता ये फलयोः कृती स्तः ।
तचाद्यखण्डं प्रथमाभिधं स्याद्
द्वयोर्वियोगार्धमथान्यसंज्ञम् ॥ ७ ॥

परवर्गात् प्रथमाढ्यात् पदं पराढ्यं ततः पदं द्विष्ठम् ।
समशङ्क्वर्काभिहतं स्यातां क्रमतोऽग्रकापलभे ॥ ८ ॥

प्रश्नः ।

उदयसमयलब्धांस्तीक्ष्णरश्मेर्दिगंशाश्चरसमयमवेक्ष्य द्राग्वदेद्योऽपमांशान् ।
प्रवदति च पलाभामग्रणीस्तान्त्रिकाणां
स गणकगणवक्त्राम्भोरुहोद्बोधनेऽर्कः ॥ ९ ॥

अस्य भङ्गः ।

अग्रांशकोटिजीवाघ्नी चरज्या प्रथमाभिधा ।
त्रिज्याहतं चरज्याग्रावर्गान्तरपदं परः ॥ १० ॥
चरकोटिज्यया भक्तः परः स्यात् क्रान्तिमौर्विका ।
रविघ्नः प्रथमो भक्तः परेण पलभा भवेत् ॥ ११ ॥

प्रश्नः ।

तद्धृतिं चरकालं च बुध्वा ब्रूहि पलप्रभाम् ।
क्रान्तिज्यकां च चेत् तेऽस्ति गोलालोकनचातुरी ॥१२॥

अस्य भङ्गः ।

चरकोटिज्याविहृता चरज्यका तत्कृतिर्द्विष्ठा ।
व्यासार्धवर्गतद्धृतिगुणिता प्रथमान्यसंज्ञौ स्तः ॥ १३ ॥

अन्यार्धवर्गेण युताद्यदाद्या-
न्मूलं तदन्यार्धविहीनितं सत् ।
कुशिञ्जिनी स्यात् क्रिययाद्ययातः
प्रसाधयेद् द्राक् पलभापमज्ये ॥ १४ ॥

प्रश्नः ।

भुजमुन्नतकालं च ज्ञात्वोद्वृत्तगते रवौ ।
पाटवाहंकृतिस्ते चेद् द्राक् क्रान्तिज्याक्षभे वद ॥ १५ ॥

अस्य भङ्गः ।

क्रमाच्चरज्याचरकोटिजीवे
अग्रादिखण्डत्रिगुणोद्धृते ते ।
वर्गीकृते स्तः प्रथमान्यसंज्ञे
परार्धवर्गात् प्रथमेन युक्तात् ॥ १६ ॥
यन्मूलमन्यार्धयुगस्य मूलं
क्रमादिनाग्रादिमखण्डकाभ्याम् ।
हतं पलश्रुत्यपमज्यके स्त-
स्ततः प्रसाध्या सुधिया पलाभा ॥ १७ ॥

प्रश्नः ।

उन्नतसमयच्छाये दृष्ट्वोद्वृत्तं गते भानौ ।
सत्वरमक्षच्छायां वद विद्वन् क्रान्तिजीवां च ॥ १८ ॥

अस्य भङ्गः ।

क्रमाच्चरज्याचरकोटिजीवे
उद्वृत्तशङ्कुत्रिगुणोद्धृते ते ।
वर्गीकृते आदिमखण्डमाद्यः
पराभिधं योगदलं द्वयोर्यत् ॥ १९ ॥

आद्योनात् परवर्गात् पदं तदूनान्वितात् परान्मूले ।
रविनिघ्ने द्विविधः स्यात् पलकर्णोऽतोऽक्षभापमज्ये च ॥ २० ॥

प्रश्नः ।

शङ्कुतलोन्नतकालावुन्मण्डलगे रवौ वीक्ष्य ।
पलभां ब्रवीति योऽसौ गणकेषु कथं न मान्यः स्यात् ॥ २१ ॥

अस्य भङ्गः ।

अग्राग्रखण्डनिहताच्चरकोटिजीवा-
वर्गार्धतः स्वहतया चरजीवयाप्तम् ।
तत्त्रिज्यकाकृतियुतेः पदमाप्तहीनं
स्यादग्रकाच पलभा सुधियः स्फुटातः ॥ २२ ॥

प्रश्नः ।

चरज्यकाक्षितिज्यके कथंचनावगम्य च ।
विचक्षण प्रचक्ष्व मेऽक्षभा कियत्प्रमाणिका ॥ २३ ॥

अस्य भङ्गः ।

चरजं.वाक्षितिमौर्व्योर्यत् कृतिवियुतेः पदं हृता तेन ।
चरगुणकुज्याभिहती रविभिर्गुणिता त्रिभज्यया भक्ता ॥ २४ ॥
यत् फलमक्षाभा स्यात् क्रान्तिज्यातो बुधैः साध्या ॥
ज्ञायत एतत् सुधिया स्पष्टप्रतिपत्तये मयोक्तमिदम् ॥ २५ ॥

प्रश्नः ।

विज्ञाय संसदि सतां क्षितिजीवयोर्ना
यस्तद्धृतिं चरमपि प्रवदेत् पलाभाम् ।
सोऽयं कुशाग्रमतिरत्र जगत्यमीषां
स्याद्गर्वनाशनपटुर्गणकाग्रणीनाम् ॥ २६ ॥

अस्य भङ्गः ।

चरज्यकावर्गदलेन निघ्नी
कुशिञ्जिनीहीनिततद्धृतिः सा ।
त्रिभज्यया स्वाहतया विभक्ता
चरज्यकावर्गयुताप्तवर्गात् ॥ २७ ॥
यन्मूलमाप्तेन विहीनितं तत्
क्षितिज्यका स्यादिति धीमतोह्यम् ।
अतः सुधीभिः प्रथमोक्तमार्गे
विचिन्त्य चित्ते पलभा प्रसाध्या ॥ २८ ॥

प्रश्नः ।

ज्ञात्वोर्ध्वखण्डं समवृत्तशङ्को-
श्चरज्यकां चापि वदेत् पलाभाम् ।
मन्ये स विद्वान् गणितार्णवान्त-
र्मज्जज्जनोत्तारणकारणं नौः ॥ २९ ॥

अस्य भङ्गः ।

समवृत्तनरोर्ध्वखण्डनिघ्न्या-
श्चरमौर्व्याः पदमत्र चापमज्याम् ।

परिकल्प्य दिनज्यकाचितिज्ये
अथचाग्रां तत एव साधयेज् ज्ञः ॥ ३० ॥

समवृत्तनरोर्ध्वखण्डकाग्रा-
भिहतिः क्रान्तिगुणेन भाजिता स्यात् ।
कुगुणोनिततद्धृतिस्तु तद्घ्नात्
कुगुणान्मूलमिहापमज्यकान्या ॥ ३१ ॥

तत इत्थमिदं मुहुर्विदध्या-
दपमज्याग्रमुखास्ततोऽक्षभा स्यात् ।
असकृद्विधिमन्तरा न सिद्धे-
दिदमुद्दिष्टमपीह कोटियत्नैः ॥ ३२ ॥

प्रकारान्तरेण भङ्गः ।

युतोर्ध्वखण्डेन समाख्यशङ्को-
श्चरज्यका तद्धृतिरच कल्प्या ।
चरज्यकाकल्पिततद्धृतिभ्या-
मुक्तप्रकारात् कुगुणः प्रसाध्यः ॥ ३३ ॥

यत्तद्धृतिघ्नात् समवृत्तशङ्कू-
र्ध्वखण्डवर्गाद् घनमूलमत्र ।
सा स्यात् कुजीवोनिततद्धृतिस्त-
त्कुज्यायुतिस्तद्धृतिरेवमेषा ॥ ३४ ॥

मुहुः प्रसाध्येह परिस्फुटा स्यात्
ततः पलाभा सुलभा बुधानाम् ।
भङ्गो द्विधैवं मयका निरुक्तः
परोऽपि चिन्त्यः स्वधिया सुधीभिः ॥ ३५ ॥

श्रीबालशास्त्रिविदुषां सविधं पठित्वा
प्राक् शब्दशास्त्रमथ तज्जनितावबोधः ।
श्रीबापुदेवगुरुवर्यकृपाकटाक्षात्
सज्ज्योतिषं प्रपठतीह विनायको यः ॥ ३६ ॥

तन्निर्मिते कतिपयप्रश्नविचाराभिधप्रबन्धेऽस्मिन् ।
पूर्णं द्वितीयमभवत् प्रकरणमेतच्चरज्याद्यम् ॥ ३७ ॥

॥ इति चरज्याद्यप्रकरणम् ॥

# THE VIDVAN-MANO-RANJINI

OR

## REJOICER OF THE MIND OF THE LEARNED

A COMMENTARY ON SADÁNANDA'S VEDÁNTA SÁRA, BY RÁMA TÍRTHA

*(Continued from page 110.)*

Moreover it would follow that there would be a discrepancy with the latter portion of the sentence describing real power acquired by the ascetic, in the words

त इह व्याघ्रो वा सिंहोवेत्यादिसत्सम्पत्तिवाक्यशेषासङ्गतिप्रसङ्गश्चेत्य समञ्जसमेतत् । अथाज्ञानजीवयोः स्वरूपेणैवानादितया आश्रयाश्रयिभावस्य नित्यसिद्धत्वान्नान्योन्याश्रयइति मतं तदपि न ब्रह्मण्यज्ञानाभावप्रसङ्गात् । नायमिष्टप्रसङ्गः सोऽकामयत तदात्मानं स्वयमकुरुतेत्यादिश्रुतिभिर्ब्रह्मणि जगत्कारणे कामयितृत्वादेरज्ञानकार्य्यस्य श्रूयमाणत्वात् । न च दृष्टिगतपीतिम्नः शंखेसमारोपवज्जीवगताज्ञानविक्षेपस्य कामयितृत्वादेस्तद्विषये ब्रह्मणि समारोपः श्रुत्या कीर्त्यतइति वाच्यं तथा सति जीवानामेव जगत्सर्गस्थितिप्रलयोपादानत्वात् सर्व्वं खल्विदं ब्रह्मेत्यादि ब्रह्मसामानाधिकरण्यं जगतः श्रूयमाणं एकविज्ञानेन सर्व्वविज्ञानप्रतिज्ञानञ्च पीड्येत । जीवस्य ब्रह्माभेदात् सर्व्वमेवोपपद्यत इति न कश्चिद्दोष इति चेत्तर्हि जीवपक्षपातं परित्यज्य ब्रह्मणएव जगत्स्रष्टृत्वादि यथाश्रुतं स्वीकर्त्तव्यं । विना तस्याज्ञानाश्रयत्वं कूटस्थस्य न कामयितृत्वादीत्युक्तं तस्य च जीवाद्विभक्तस्याज्ञानाश्रयत्वे तत्रापि स्यादन्योन्याश्रयः । ननु ब्रह्मणि जगत्कारणत्वादिनिर्व्वाहकमज्ञानं मायाशब्दवाच्यमन्यदेव जीवगतकर्तृत्वाद्यवभासहेतुभ्योऽज्ञानेभ्योऽविद्याशब्दवाच्येभ्यइति चेन्न । मायाविद्ययोः श्रुतिस्मृतिसूत्राभियुक्तवचनैरेकत्वस्य वृद्धैर्निरूपितत्वात् । अनिर्व्वचनीयत्वे सति तत्त्वावभासप्रतिबन्धविपर्य्ययावभासहेतुत्वस्य लक्षणस्य तुल्यत्वात् अविद्याभेदे च कल्पनागौरवदोषात् । एकाविद्यापक्षेऽप्यनन्तविक्षेपशक्तिकल्पनया जाग्रत्स्वप्नप्रबन्धमोक्षवासनाभुजङ्गादिव्यवहारव्यवस्थोपपत्तेः । नचात्रापि कल्पनागौरवं । समानं धर्म्मभेदकल्पनातोधर्म्मिभेदकल्पने लाघवादित्यास्तां विस्तरः । अतश्चिन्मात्रनिष्टमज्ञानं त जीवब्रह्मविभागहेतुः ब्रह्मणो जगत्स्रष्टृत्वादेश्च हेतुरित्यङ्गीकर्त्तव्यं न च चिन्मात्रस्य प्रकाशत्वादज्ञानाश्रयत्वविरोधः जीवपक्षेऽपि तुल्यत्वात् अन्तःकरणपरिणामोपहितस्यैव चैतन्यस्याज्ञानविरोधित्वात् । नच ज्ञानवदज्ञानस्याप्येकाश्रयविषयत्वानुपपत्तिरावरकत्वेनावरकस्य तमोवत्तदुपपत्तेः तदुक्तमभियुक्तैः । आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला । पूर्व्वसिद्धतमसोहि पश्चिमो नाश्रयो भवति नापि गोचरइति तस्मादेकमज्ञानं चिन्मात्राश्रयविषयमिति स्थितिः । जीवावस्थायामेवाहमज्ञइति स्फुटतः व्यवहारात्तदपेक्षया जीवगताज्ञानानामित्युक्तमिति अनयैव दिशा जीवाश्रया ब्रह्मपदा ह्यविद्यातत्त्वविन्मतेति प्राचां वचनं योजनीयं । ननु नानात्वेन प्रतिभासमानानां जीवानामेकाज्ञानोपाधिकत्वे एकस्य मुक्तौ सर्व्वमुक्तिप्रसङ्ग इति चेन्नायं दोषः । एकस्यैव जीवत्वादितरेषां तद्दृष्टिविजृम्भितत्वेन ततोऽनतिरेकात्तर्हि कोऽसौजीवोयद्दृष्टिविजृम्भितं जीवान्तरमिति चेत् यः पश्यति स एव । अहन्तु संसारिणमात्मानमन्यांश्च मद्विधान् जीवान् पश्यामीति चेत्तर्हि त्वमेव जीवस्त्वदविद्यया वयमन्येच जीवा बद्धा मुक्ताः सुखिनो दुःखिनश्चेत्येवं विचित्राः कल्पितास्तव ब्रह्मसाक्षात्कारमविसम्वादिता प्रतिभासन्ते स्वप्नइवाप्रबोधं । जाते तु ब्रह्मात्मसाक्षात्कारे सर्व्वमेव त्वद्दृष्टिविजृम्भितं त्वया सह मोक्षिष्यते त्वत्सुषुप्ताविवेति । इयांस्तु पुनर्विशेषः सुषुप्तावस्त्यज्ञानं सर्व्वकार्य्यसंस्कारोपरञ्जितं पुनर्व्यवहारप्रवर्त्तकं मुक्तौ तु तस्य ज्ञानेन बाधितत्वात् पुनर्व्यवहाराभावः इत्यलं प्रसङ्गागतप्रपञ्चेन । वनवृक्षयोर्जलाशयजलयोर्व्वा सामान्यविशेषभावो नास्तीति यद्यपि दार्ष्टान्तिकेन वैषम्यं तथापि समुदायसमुदायिनोरनेकत्वे दृष्टान्तदार्ष्टान्तिकयोः साम्यात् सर्व्वांशेन च साम्यस्याविवक्षितत्वान्न कश्चिद्दोषइति गमयितव्यं । अज्ञानैकत्वव्यपदेशिनीं श्रुतिं पठति अजामेकामिति आदिपदात् मायान्तुप्रकृतिं विद्यात् तरत्यविद्यां विततां अक्षरात् परतः परः । तद्धेदन्तर्ह्यव्याकृतं तम आसीत्तमसा गूढमित्याद्येकवचनान्तश्रुत्यन्तरग्रहः । एकमेवाज्ञानं समष्टिव्यष्टिभेदभिन्नं परिकल्प्य समष्ट्यज्ञानोपध्यानानिबन्धनचैतन्यव्यवहारं वक्तुं समष्टिं विशिनष्टि ॥

They here became tiger, or lion, or hawk &c, which would be absurd Again if it be your doctrine that ignorance and individuated spirit being without beginning essentially, and thus the relation of subsistence and inherence between them being constant, there is no mutual inherence or logical see-saw; this we cannot allow, for then it would follow that there is no ignorance in the supreme Nor can you accept the consequence, that there is no ignorance in God, for we hear in the Veda, in the texts, He desired, then himself made spirit &c, that the nature of one who desires and other products of ignorance resided in the supreme as the cause of the world Nor can you argue that there is heard in this text an erroneous imputation to the object thereof, the supreme, of desire &c the illusory product of ignorance residing in the individuated spirit, just as there may be falsely attributed to a conch-shell the yellowness which resides in the eye of the observer [when suffering from jaundice], for were this the case, it would follow that individuated spirits only being the material cause of creation, sustentation, and retractation of the universe, the juxtaposition of universe with the supreme heard in texts such as All this is the supreme &c, would be invalidated; as also the promise of all cognition, by means of cognition of one, would be contravened [inasmuch as to know all we should have to know not only the supreme, but also individuated spirits] If you reply that there being no difference between the supreme and the individuated spirit, all this may be reasonable, and therefore this is no objection; then we reply that you ought to lay aside your partisanship for individuated spirit, and confess, as has been heard in the Veda, that it is the absolute that is the creator, preserver, and destroyer of the world For it has been shewn that unless the supreme be the subject of ignorance, then unconditioned spirit cannot be affected with desire; and if the supreme, as different from the individuated spirit, be conceived the subject of ignorance, then in this case also there will be a logical circle. If you object that the ignorance that renders it possible to the supreme to be the cause &c of the world, designated by the term illusion, is other than the ignorances which are the causes of the phenomenal agency &c., residing in individuated spirits, which ignorances are designated by the term nescience; we disallow the objection, for illusion and nescience are described by the ancients as one, according to the revealed and scriptural texts, aphorisms, and competent authorities. Also, because, there being the same definition for both illusion and nescience, viz, inexplicability and cousation of apparent misconception, and of obstruction to manifestation of the truth, the supposition of a difference between illusion and nescience is unnecessary [as violating the law of parcimony] Moreover, if we allow the unity of illusion and nescience, than, as we may conceive an endless power of illusory production, it is reasonable to suppose practical existence in waking, sleeping, bondage, liberation, illusory serpents &c Nor is there in this supposition an equally complicated hypothesis [or equal violation of the law of parcimony], for it is simpler to assume a difference of accident than to assume a difference of subjects Further prolixity may be dispensed with. It must be allowed, then, that ignorance resides only in pure intelligence, and that such ignorance is the cause of the separation between the supreme and the individuated spirit, and the cause also of the creation of the universe by the supreme Nor can you object that there is a contradiction in pure intelligence being the subject of ignorance, since pure intelligence is self-luminant; for this objection is equally fatal to the view that individuated spirit is the subject of ignorance, for intelligence conditioned by a modification of the internal organ is repugnant to ignorance. Nor is it impossible that ignorance, like knowledge, should have one subject, and one object, for this is possible, as one envelopment may envelop all things, like darkness. Accordingly it has been said by good authority; It is ignorance alone that allows subsistence and inherence, and constitutes the universe, for [liberated soul] beyond the darkness already shewn to be, is neither substratum nor phænomenon. Thus it is shewn that one ignorance, and one only, has for its subject and object pure intelligence. There being a manifest practical assurance I am ignorant, only in the state of individuated spirit, it is with this view that the words ignorances residing in individuated spirits have been employed. In the same direction we may add the saying of the ancients The nescience maintained by those who know the truth inheres in individuated spirit and resides in the supreme. If it be urged that if one ignorance be the condition of many individuated souls appearing many, then it will follow that the liberation of one is the liberation of all; we reply that this is no objection, for there is one only that is individuated spirit, the others being only illusorily exposed to his view, do not differ therefrom. If again thou ask: Who is this individuated spirit, to whose view all other individuated spirits are illusorily exposed? we reply that it is he who sees: and if thou say I behold myself transmigrating and all other individuated spirits like myself, then thou alone art that soul; and it is by thy ignorance that we and others live, are in bondage, liberated, enjoy pleasure, and suffer pain, and are thus made in many modes, and appear as if actual beings, until thy intuition of the absolute, as

if in thy dream till thou awakenest But when thou shalt have intuition of absolute spirit, then all that is illusorily projected by thy gaze, together with thee, shall be emancipated, as in thy dreamless sleep There is, indeed, thus much difference [between dreamless sleep and re-absorption into the absolute,] that in dreamless sleep there abides ignorance tinged with the impress of all its products, again giving birth to practical existence [when we awake]; whereas in liberation, ignorance being sublated by knowledge, there is no further practical existence Further prolixity thus introduced by the order of discussion, may be dispensed with It is to be understood in this illustration that there is a disparity in the example, inasmuch as there is not any relation of universality and individuality between the forest and its trees, and the tank and its waters, yet this does not vitiate the argument, for the collective whole and its constituent parts being identical, there is an equivalence between the example and the thing exemplified, while a total equivalence is not desiderated The author cites a Vedic text declaratory of the unity of ignorance *Unborn, one,&c.* Here the words *et cætera* include He should know illusion to be nature [or the material cause of all], He crosses beyond ignorance, Outspread beyond expression, farther than the farthest, This universe indeed was unevolved, Darkness was by darkness enveloped, and other texts relating to an object in the singular number After thus conceiving one ignorance as divided as collective and distributive, the author proceeds to characterise the collectiveness, in order to explain the practical existence of pure intelligence caused by the conception of collective ignorance *This* [*aggregation of ignorance*] &c [*being the condition of its superior, has chiefly pure goodness in it*] This aggregation is so styled in which pure goodness predominates, not overpowered by pure passion and darkness, because it is the condition of intelligence consisting of unobstructed cognition, such intelligence being superior, that is untinged by any other condition. The author points out a diversity in the names of intelligence conditioned by collective ignorance

*By this* [*collective ignorance conditioned intellect being possessed of such qualities as omniscience, omnipotence, and superintendence over all, imperceptible, all-pervading, Maker of the world, is called the Lord*] &c. Intelligence, though in reality unconditioned, acquiring such attributes as omniscience &c, because through its connection with erroneously imputed ignorance, it manifests all, consists of existence which is the substratum of all limited objects, determines the actions of all individuated spirits, and obtains the titles of real, unreal, the phænomenal, superintendent over all, Lord, and so forth Of this the reason is next assigned.

[*His omniscience may be inferred from the fact that he is the manifester*] of all [*collective ignorance*] All ignorance means collective illusion The word manifester is intended to suggest secondarily that he is the sustainer &c It should be considered that collective ignorance is all that is, even in the unmanifested state inasmuch as ignorance contains the impressions of all illusory products, and because we accept the doctrine that effects pre-exist in their causes The author quotes a Vedic text confirming the aforesaid appellations

*Who is omniscient,* [*who knoweth all*] &c Who is omniscient is taken generally, who knoweth all is taken particularly The words *et cætera* imply such other texts as, Existent indeed, fair sir, was this. This pier is the upholder, This spirit of thine pervades the inner parts undying, Beyond understanding unevolved, From whom indeed these creatures spring, He who is the highest he is the great Lord Having thus stated the different titles of intelligence conditioned by illusion, the author proceeds to recount those of the condition together with their reasons

*Of this* [*ignorance his aggregation, since it is the cause of all, is his causal form*] The word this means ignorance The character of the conditioned is fulness of bliss, the character of ignorance or illusion is envelopment or obscuration These two being inseparate, illusion, the cause of all, is styled the sheath of happiness Since in ignorance ether and all things else subside, ignorance wherein all things subside, is in this nature dreamless sleep, and infinite slumber is universal dissolution The gross world is called the universal frame or divine body, [Virát], the subtile world is Hiranya-gar-

इयमिति । उत्कृष्टस्योपाध्यन्तरा ननु रक्ततयाऽप्रतिहतज्ञानात्मकस्य चैतन्यस्योपाधितया विशुद्धरजस्तमोभ्यामनभिभूतं सत्त्वप्रधानं यस्याः सा तथाभिधेयं समष्टिरित्यर्थः । समष्ट्यज्ञानोपहितचैतन्यस्य व्यपदेशभेदं दर्शयति ॥

एतदिति । परमार्थतोऽसङ्गस्यापि चैतन्यस्याध्यासिकसम्बन्धाज्ज्ञानद्वारा सर्व्वभासकत्वेन सर्व्वामर्य्यादाधारकसत्तारूपत्वेन सर्व्वजीवप्रवर्त्तकत्वेन च लब्धसर्व्वज्ञत्वादिगुणकस्य सदसद्व्यक्तमन्तर्य्यामीश्वरइत्यादि व्यपदेशो भवतीत्यर्थः । उक्तेऽर्थे हेतुमाह ॥

सकलेति । सकलाज्ञानं समष्ट्यज्ञानं अवभासकत्वशब्दो विधारकत्वादेरप्युपलक्षणार्थः । सर्व्वविक्षेपसंस्कारवत्त्वादज्ञानस्य सत्कार्य्यवादाश्रयणाच्चाव्याकृतावस्थास्वपि समष्ट्यज्ञानस्य सर्व्वत्वमिति द्रष्टव्यं । उक्तव्यपदेशिकां श्रुतिमाह ॥

यः सर्व्वज्ञ इति । सर्व्वज्ञः सामान्यतः सर्व्वविद्विशेषतइति भेदः । आदिशब्दात् सदेव सोम्येदं एष सेतुर्विधारण एष त आत्मान्तर्य्याम्यमृतो महतः परमव्यक्तं यतो वा इमानि यः परः स महेश्वरइत्यादिश्रुत्यन्तरग्रहः । उपहितस्य व्यपदेशभेदमुक्तोपाधेरपि तं सहेतुकमाह ॥

ननु भूतानामेवात्रोत्पत्तिरुच्यते । "आकाशः सम्भूत" इत्यादिना सदाशिवादीनां न साक्षात् सृष्टिरुच्यत इति चेत् । उच्यत एव । श्रुत्यन्तराध्याहारात् । तथाथर्वशिखायाम् "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं, ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते, सर्वाणि चेन्द्रियाणि सह भूतैः, कारणं कारणानां ध्याता, कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च शंभुराकाशमध्यग"[2] इति ब्रह्मादीनामिन्द्रियाणां च भूतैः सहोत्पत्तिः श्रूयते । कारणानामपि कारणत्वेन स शंभुः परमाकाशमध्यगः सिद्धः । ततः साक्षादेव ब्रह्मणस्तत्तत्कारणरूपात् तत्तत्कार्योत्पत्तिरिति निर्णयः ॥ १४ ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १५ ॥

इह पूर्वाधिकरणे निरूपितसृष्टिक्रम उपपद्यते न वेति संदेहः । नोपपद्यत इति पूर्वः पक्षः । तथाहि, मुण्डकोपनिषदि ।

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ॥

इति प्राणादीनां वियदादिभ्यः पूर्वमुत्पत्तिः श्रूयते । अथर्वशिखायां च । "ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते, सर्वाणि चेन्द्रियाणि सह भूतैः" इति सहोत्पत्तिर्ब्रह्मादीनां भूतेन्द्रियाणां चाम्नायते । अत आकाशादेः पूर्वोक्तसृष्टिक्रमो नोपपद्यत इत्युच्यते । सिद्धान्तस्तु । उपपन्नः पूर्वोक्तसृष्टिक्रमः । "अन्नमयं हि सोम्य मनः" "आपोमयः प्राणः" "तेजोमयी वाक्" इति श्रुतेः प्राणादीनां भौतिकत्वश्रवणाद् भूतेष्वन्तर्भावाच्च पृथक् क्रमापेक्षा[3] । ब्रह्मादीनां सहोत्पत्तिस्तु भूतैस्तद्रूपत्वात् तेष्वन्तर्भावात् । ततः पूर्वोक्तक्रमे न विरोधः ॥ १५ ॥

॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १६ ॥

"प्राणभूतानामिन्द्रियग्राममनसी[4] क्रमेणान्तरा उत्पद्येते" इति हीदं वाक्यं प्रतिपादयति । "खं वायुर्ज्योतिः" इत्यादौ श्रुत्यन्तरसिद्धक्रमप्रत्यभिज्ञानरूपाल्लिङ्गात् । तत इदमपि पारंपर्यक्रमपरमिति चेत् । न । "एतस्माज्जायत" इत्यस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्येकमन्वयाविशेषात् । अतः सर्वेषामीश्वर एव कारणम् । तथाच पौराणिकी भणितिः ।

शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ।
तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ॥

इति क्रमसद्भावेऽपि सर्वस्य शिवतत्त्वादुत्पत्तिमभिधत्ते । अतः सर्वकारणं ब्रह्मेति समीचीनम् ॥ १६ ॥

१—नं तत्र ब्रह्म—इति पा० ।
२ सर्वेश्वरः स शंभुराकाशमध्ये ध्येयः इति पा० ।
३ पृथग्भाव इति पा० ।
४ भूतप्राणयोरिति शेषः प्राणभू—इति पा० ।

॥ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १७ ॥

पूर्वत्राकाशादिशब्दवाच्यत्वं ब्रह्मणः प्रतिपादितम् । तदिह विचार्यते । चेतनाचेतनचराचरवस्तुसंबन्धी तद्वाचिशब्दो ब्रह्मणि मुख्यो न वेति संदेहे न मुख्य इति वदामः । अन्यवाचकशब्दस्य मुख्यतयान्यत्र वृत्त्यभावात् । तथाहि, "आदित्यो यूपो यजमानः प्रस्तर" इत्यादिषु यूपादेरादित्यादिशब्दवाच्यत्वं सारूप्यादिगुणसंबन्धादेव दृश्यते । न मुख्यत्वेन । अत्रापि "तत् तेज ऐक्षत" इत्यादिषु तेजःप्रभृतीनामचेतनानां चेतनधर्मेक्षितृत्वायोगात् तच्छब्दैस्तदाश्रितं चेतनं ब्रह्म लक्ष्यते । मञ्चाः क्रोशन्तीत्यादिवत् । तस्मादाकाशादिशब्दवाच्यत्वं ब्रह्मणि तदाश्रये गौणमित्येवं[2] प्राप्ते ब्रूमः । चराचरचेतनवस्तुसंबन्धी तद्व्यपदेशशब्दो ब्रह्मणि न भाक्तः । किंतु मुख्य एव । तेषा खल्वेषां भूतानां त्रीण्येव भूतानि बीजानि भवन्ति । अण्डजं स्वेदजमुद्भिज्जम् । इति । "सेयं देवतैक्षत" "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति सर्वस्य वस्तुनो नामरूपविभागाय तदात्मतया ब्रह्मणोऽनुप्रवेशभावभावित्वात् । यूपादीनामादित्यादिशब्दवाच्यत्वमनुपपत्त्या न मुख्यम् । मञ्चादिषु पुरुषाणामवस्थानमात्रत्वात् तेषामपि तच्छब्दवाच्यत्वं न मुख्यम् । इहात्मतया प्रपञ्चानुप्रवेशाद्ब्रह्मणस्तच्छब्दवाच्यत्वं मुख्यमेव । यथात्मनो ब्राह्मणादिशरीरानुप्रविष्टस्य ब्राह्मणादिशब्दवाच्यत्वं मुख्यम् । अन्यथा "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिषूपनयनसंस्कारादेः शरीरमात्रपर्यवसानादात्मनः संस्कार्यत्वाभावप्रसङ्गात् । ततो "यस्यैते चत्वारिंशत् संस्कारा अष्टौ चात्मगुणाः स ब्रह्मणः सायुज्यम्" इत्यादिरात्मनः संस्कारवतः फलश्रुतिरपार्था भवेत् । "ब्राह्मणो यजेत" इत्यादिविधिवैयर्थ्यं च भवेत् । तस्मात् सकलचराचरवस्तुशरीरप्रविष्टस्य ब्रह्मणस्तच्छब्दवाच्यत्वं मुख्यमेव ॥ १७ ॥

॥ नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

पूर्वत्राकाशादीनां ब्रह्मणः साक्षादुत्पत्तिरभिहिता । जीवोऽपि तन्न्यायेन ब्रह्मणः समुत्पद्यते न वेति संदेहः । एवं सति समुत्पद्यत इति पूर्वः पक्षः[3] ।

"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासंश्छिव एव केवलः" ।

"एकमेवाद्वितीयम्" इत्यादिश्रुतेः प्राक् सृष्टेर्ब्रह्मैकत्वावधारणात्,[4] सदसतोर्निषेधाच्च, सृष्टिकाले ब्रह्मण उत्पद्य-

१—संबन्धिशब्दस्तद्वाची न वेति इति पा० ।
२—मिति कः संदेह इति इति पा० ।
३ इति गम्यते इति पा० ।
४—ब्रह्मण एकस्यैवावधारणात् इति पा० ।

त एव जीवः। विस्फुलिङ्गदृष्टान्तोऽपि जीवोत्पत्त्यननुगुणः श्रूयते। "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति। एवमेवैतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युच्चरन्ति" इति। तस्माद्यथाग्नेर्विस्फुलिङ्गो जायते। तथा ब्रह्मण आत्मानो जायन्त इति प्राप्ते ब्रूमः। आत्मा न जायते। "न जायते म्रियते वा विपश्चित्" इति श्रुतेः। नित्यो नित्यानां चेतनश्चेतनानाम्" "ज्ञाज्ञौ द्वावजावीशानीशौ" इत्यादिश्रुतेर्नित्यत्वावगतेश्च सृष्टेः प्राग्ब्रह्मणोऽवधारणम्। तदाकृतिभूतस्याचिद्वस्तुनश्च नामरूपव्यवहाराभावात्। न जीवादिस्वरूपासत्तया। विस्फुलिङ्गश्रुतिश्च तेषां नामरूपसमुन्मेषाभिप्राया। न जन्मपरा। अन्यथा कृतनाशादिदोषप्रसङ्गात्[2]। तस्माद्ब्रह्मणो न जायत एव जीवः॥ १८॥

॥ ज्ञोऽत एव ॥ १९ ॥

पूर्वत्र नित्यतया जीवः सिद्धः। पुनरत्रास्य स्वाभाविकं ज्ञानमस्ति न वेति संदिह्यते। एवं सति पूर्वपक्षः। जीवस्य स्वाभाविकं ज्ञानधर्मित्वं नास्तीति। "ज्ञाज्ञौ द्वौ" इति जीवस्याज्ञत्वमेव हि श्रूयते। तस्मादज्ञ एवासौ चैतन्यमात्ररूपः[3]। किंतु मायाशक्त्यवच्छेदादवाप्तशरीरकरणादिरयं घटः पटोऽयं मनुष्योऽहं देवोऽहमिति कल्पिताहंकारबद्धः संसरतीति संसारदशायामज्ञ एवायं जीवः। स्वतोऽस्य ज्ञातृत्वं[4] नास्त्येव। अन्यथास्य कुतो मुक्तिरिति।

एवं प्राप्ते ब्रूमः। ज्ञातैवायमात्मा। "अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान् कामान् पश्यन् रमते" "य एते ब्रह्मलोके" "मनोऽस्य दैवं चक्षुः" इत्यादिश्रुतेर्धर्मभूतं ज्ञानमेवास्य मनः। अतः स्वत एवायं ज्ञाता। यदुक्तं मायाशक्तिसंबन्धात् संसारदशायां ज्ञातृत्वमस्येति। तत् सत्यम्। मायाशक्तिकवलितस्वाभाविकज्ञानशक्तिविलासोऽयं प्राकृतमनःसंबन्धाद्भोक्ता सुखदुःखयोर्ज्ञाता शरीराहंकारमात्रविश्रान्तः संसरति हि जीवः। यदा पुनरस्य ब्रह्मज्ञानोपासनाभ्यामेन मलत्रयसंबन्धोऽपैति। तदासौ ब्रह्मसदृशोऽभिव्यक्तनैजनिरतिशयज्ञानधर्मा मुक्त इत्युच्यते।

किंच, "प्राणारामं मन आनन्दम्" इति ब्रह्मणो निरतिशयात्मानन्दविषयं मनः स्वाभाविकं करणमवगम्यते। तत्सदृशगुणत्वादपगतसंसारस्य जीवस्य स्वरूपानन्दानुभवसाधनं मनोरूपमन्तःकरणमनपेक्षितबाह्यकरणमस्तीति गम्यते। "ज्ञाज्ञौ" इति जीवस्याज्ञत्व किंचिज्ज्ञत्वमेव। असंसारिणः परमेश्वरस्य तु सर्वज्ञत्वमुच्यते। अतः संसारे किंचिज्ज्ञत्वं मुक्तौ सर्वज्ञत्वमिति ज्ञातैवात्मा॥ १९॥

॥ उत्क्रान्तिगत्यागतीनाम् ॥ २०॥

पूर्वत्र ज्ञातृत्वेन सिद्धस्यात्मन उत्क्रान्त्यादिदर्शनादणुत्वमवगम्यते। तदुच्यते न वेति संदेहः। नास्याणुत्वमुपपद्यते। "स वा एष महानज आत्मा" इति जीवस्य विभुत्वावगमात् "अहं विश्वं भुवनमभ्यभवम्" इति तस्य व्याप्त्या सकलभुवनाभिभावित्वावगमाच्च सर्वथायमात्मा विभुरिति प्राप्ते निरूप्यते। अणुरेवायमात्मा। उत्क्रान्तिगत्यागतीनां श्रुतेः। "तेन प्रयातेनैष आत्मा निष्क्रामति" इति ह्युत्क्रान्तिः श्रूयते। 'ये वैके चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते गच्छन्ति" इति गतिः। "तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इत्यागतिः। विभुत्वे जीवस्यैता उत्क्रान्तिगत्यागतयो नोपपद्येरन्॥ २०॥

यद्यपि शरीरवियोगरूपोत्क्रान्तिर्विभुत्वेऽप्यात्मनः स्यात्, तथापि गत्यागती नैवमित्याह॥

॥ स्वात्मना चोत्तरयोः॥ २१॥

उत्तरयोर्गत्यागत्योः स्वात्मनैव संपाद्यत्वादणुरयमात्मा। यदुक्तम्। "महानज आत्मा" तदीश्वरप्रकरणाच्चैतद्विषयमिति वक्ष्यति। व्याप्त्या विश्वभुवनाभिभावित्वं यदुक्तम्। तत् तु। मलतिरोधानापगमप्रकटितशक्तिमरीचिव्याप्तमुक्तजीवविषयम्। तस्मादणुरेवात्मा[1]॥ २१॥

आशङ्क्य परिहरति॥

॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्॥ २२॥

"स वा एष महानज आत्मा" इति श्रुतेर्नाणुर्जीव इति चेन्न। "यस्यां तु वित्तः प्रतिबुद्ध आत्मा" इति परमेश्वराधिकारात्॥ २२॥

॥ स्वशब्दोन्मानाभ्यां च॥ २३॥

"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा विवेश" इति श्रुतावणुशब्दात्,

"आराग्रमात्रो ह्यवरो हि दृष्टः"

इत्युन्मानाच्च, अणुरात्मा। अणुसदृशं वस्त्वाहृत्य तन्मानत्वप्रदर्शनमुन्मानम्॥ २३॥

अणुत्वेऽस्य सकलदेहव्यापिवेदनानुभवः कुत इत्यत आह॥

॥ अविरोधश्चन्दनवत्॥ २४॥

यथा चन्दनबिन्दुरेकदेशस्थोऽपि सकलदेहव्यापिसुखं जनयति। तद्वदविरोधः॥ २४॥

१ जडीकृतभूतस्या—इति पा०।

२—प्रसङ्ग इति पा०।

३ नाचेतनमात्ररूपः इति पा०।

४ यां ज्ञानाज्जीवस्य स्वतो ज्ञातृत्वं इति पा०।

१ स्वशब्दोऽवधारणार्थः। उत्तरयोर्गमनागमनयोः स्वात्मप्रयुक्तत्वमेव वाच्यम्। उत्क्रान्तेस्तु स्वोपाधिकत्वेऽपि संभवादित्यर्थः॥ २१॥ इत्येव पा०।

पुनराशङ्क्य परिहरति ॥

॥ अवस्थितिवैशेष्यादिति

चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥

देशविशेषस्थितेश्चन्दनस्यास्तीति चेत् । न । आत्मनोऽपि तदभ्युपगमात् । "हृदि ह्ययमात्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति श्रुतेः । इति मतान्तरम् ॥ २५ ॥

स्वमतमाह ॥

॥ गुणाद्वा लोकवत् ॥ २६ ॥

आत्मा स्वगुणेन ज्ञानेन सकलदेह व्याप्यानुभवति । यथा मणिः स्वकीयेन तेजसा संनिहितं व्याप्य प्रकाशयति । तस्मादविरोधः ॥ २६ ॥

ज्ञानात्मनोर्व्यतिरेको नास्तीत्यत्राह ॥

॥ व्यतिरेको गन्धवत् तथाहि दर्शयति* ॥ २७ ॥

गन्धवती पृथिवीतिवद्, गन्धमहं जानामीति गुणत्वेनोपलब्धेर्ज्ञानात्मनोर्व्यतिरेकोऽस्ति । दर्शयति च श्रुतिर्व्यतिरेकं "जानात्येवायं पुरुष"इति ॥ २७ ॥

॥ पृथगुपदेशात् ॥ २८ ॥

आत्मनः पृथगुपदिश्यते[1] ज्ञानम् । "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत" इति । एवं नित्यज्ञानगुणक आत्मा सिद्धः ॥ २८ ॥

एवं ज्ञानगुणकत्वेऽप्यात्मनः कथं ज्ञानमात्रत्वव्यपदेश इत्यत आह ॥

॥ तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

ज्ञानगुणसारत्वादात्मनो ज्ञानव्यपदेशः । न ज्ञानमात्रत्वात् । यथा प्राज्ञस्य विपश्चितोऽपि सत्यं ज्ञानमिति । ततो ज्ञानमात्रत्वव्यपदेशे दोषो न भवत्यात्मन इति ॥ २९ ॥

पुनरुपपत्तिमाह ॥

॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

आत्मस्वरूपानुबन्धित्वाज्ज्ञानस्य, तेन व्यपदेशे न दोषः । स्वरूपानुबन्धिधर्मत्वेन गोत्वादिना षण्ढादेर्गौरित्यादिव्यपदेशो दृश्यते । अतः स्वरूपानुबन्धित्वाज्ज्ञानधर्मस्य तद्व्यपदेशः ॥ ३० ॥

सुषुप्त्यादिष्वसतो ज्ञानस्य यावदात्मभावित्वं कथमित्यत आह ॥

* शंकरमते व्यतिरेको गन्धवत् इत्येकं तथा च दर्शयति, इत्याकारकमपरमिति सूत्रद्वयम् ।

१ पृथक्त्वेनो—इति पा० ।

॥ पुंस्त्वादिवत् तस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

सुषुप्त्यादिषु सतो ज्ञानस्यानभिव्यक्तस्यापि जागरितादावभिव्यक्तिसंभवात् स्वरूपानुबन्ध्येव ज्ञानम् । यथा पुंस्त्वासाधारणसप्तमधातोर्बाल्येऽपि सतो युवत्वेऽभिव्यक्तिः । ततो ज्ञानस्यात्मस्वरूपानुबन्धित्वे न दोषः ॥ ३१ ॥

आत्मनो ज्ञातृत्वाणुत्वप्रतिपादनप्रयोजनमाह ॥

॥ नित्योपलब्ध्यनुपलब्धिप्र-

सङ्गोऽन्यतरनियमो वान्यथा ॥ ३२ ॥

अन्यथा ज्ञप्तिमात्रसर्वगतत्वपक्षे तावन्नित्यवत् सर्वदोपलब्धिः स्यात् । सङ्कोचाभावात्[1] । विद्यमानाया अनुपलब्धेरपि स एव हेतुरिति सापि सर्वदा स्यात् । आगन्तुकज्ञानसर्वगतात्मपक्षेऽपि स एव दोषः । सर्वात्मनां सर्वगतत्वेन ज्ञानहेतूना मनःसंयोगादीनां सर्वसाधारणत्वात् । अदृष्टहेतूनामपि तथात्वात् तेनापि न नियमः । अथोपलब्ध्यनुपलब्ध्योर्विरोधादुपलब्धेर्हेतवः स्युः । अनुपलब्धेर्वा । तथा सत्यन्यतरनियमः स्यात् । अतः पूर्वोक्तमेव समीचीनम् ॥ ३२ ॥

॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

ज्ञातृत्वमणुत्वं च निरूपितमात्मनः । कर्तृत्वमस्ति न वेति संदेहः । कूटस्थस्यात्मनः कर्तृत्वं न संभवति । बुद्धेर्वा कर्तृत्वमुचितं प्रकृतेर्वा । तदध्यासात् स्वस्मिन्नारोप्य कर्तेव प्रतिभाति । तस्मादात्मनः कर्तृत्वमनुपपन्नमिति पूर्वः पक्षः ।

सिद्धान्तस्तु । आत्मा कर्तैव । शास्त्रार्थवत्त्वात् । अन्यथा कुर्यान्न कुर्यादिति शास्त्रस्य वैयर्थ्यं स्यात् ॥ ३३ ॥

॥ उपादानाद्विहारोपदेशाच्च* ॥ ३४ ॥

"एवमेवैष एतान् प्राणान् गृहीत्वा स्वशरीरे यथाकामं विपरिवर्तत" इत्युपादानविहारोपदेशाभ्यां चायं कर्तैव ॥ ३४ ॥

यदुक्तं बुद्धिप्रकृत्योरेव कर्तृत्वमिति । तत्र बुद्धेः कर्तृत्वपक्षं दूषयति[2] ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥

"विज्ञानं यज्ञं तनुत"इत्यादिना यज्ञादौ कर्तृत्वव्यपदेशाच्चात्मैव कर्ता । विज्ञानशब्दो बुद्धेरात्मनो नेति चेन्न । तथा सति विज्ञानेनेति निर्देशविपर्ययः स्यात् । अन्यत्र हि बुद्धिविवक्षा, न शब्दस्य करणविभक्तिनिर्देशो दृश्यते । "तदेषां

१—चे कारणा—इति पा० ।

* शंकरमते विहारोपदेशात्, इति प्रथमं; उपादानात्, इति चकाररहितं द्वितीयं सूत्रमिति ।

२ तत्राह इति पा० ।

३ क्रियाकर्तृत्व—इति पा० ।

प्राणानां विज्ञानेन विज्ञानमादाय" इति। अतो बुद्धेः करणत्वात् कर्तृत्वं नास्तीति[1] ॥ ३५ ॥

प्रकृतेः कर्तृत्वपक्षं दूषयति ॥

॥ उपलब्धिवदनियमः ॥ ३६ ॥

प्रकृतेः कर्तृत्वे तस्याः सर्वसाधारणत्वेन पूर्वोक्तोपलब्धिनियमवत् फलानियमः स्यात् ॥ ३६ ॥

॥ शक्तिविपर्ययात् ॥ ३७ ॥

प्रकृतेः कर्तृत्वे कर्तुरेव भोक्तृत्वमिति सैव भोक्त्री स्यात्। ततश्चात्मनो भोक्तृत्वशक्तेर्विपर्ययो हानिः स्यात् ॥ ३७ ॥

॥ समाध्यभावाच्च ॥ ३८ ॥

किंच, प्रकृतेरेव कर्तृत्वे प्रकृतेरन्योऽस्मीति समाध्यभावप्रसङ्गाच्च कर्तात्मा ॥ ३८ ॥

॥ यथा च तक्षोभयथा ॥ ३९ ॥

आत्मनः कर्तृत्व इच्छायां करोति। अन्यदा न करोत्यात्मेति व्यवस्था। यथा तक्षा स्वकार्ये, तथेति। अत आत्मनः कर्तृत्वमेव। बुद्धेरेवेच्छासंभवान्नाव्यवस्थेति चेन्न। चेतनधर्मत्वादिच्छायाः। तस्मादात्मनः कर्तृत्वं, न बुद्धेर्नापि प्रकृतेरिति निर्णयः ॥ ३९ ॥

॥ परात् तु तच्छ्रुतेः ॥ ४० ॥

ज्ञातृत्वं कर्तृत्व च प्रतिपादितमात्मनः। तत् कर्तृत्वं स्वायत्तमीश्वरायत्तं वेति संदेहः। स्वायत्तमिति प्राप्तम्। अन्यथा कर्मस्विष्टानिष्टरूपेषु प्रवर्तयन् जीवमीश्वरो वैषम्यादिदोषभाजनं स्यात्।

किंच, जीवस्य प्रवृत्तेरीश्वरायत्तत्वे तस्य कर्तृत्वाभावाद्विधिप्रतिषेधवैयर्थ्यं स्यात्। तस्माज्जीवस्य स्वायत्ता प्रवृत्तिः। इति प्राप्ते ब्रूमः। परमेश्वरायत्तमेव जीवस्य कर्तृत्वं न स्वायत्तम्। "य आत्मानमन्तरो यमयति" इति श्रुतेः ॥ ४० ॥

यदुक्तमीश्वरस्य जीवं प्रवर्तयतो वैषम्यादिकम्। अस्य च विधिप्रतिषेधवैयर्थ्यमिति। तत्राह ॥

॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥

जीवः स्वेच्छया प्रवृत्तिनिवृत्तिहेतुं करोति स्वकर्मपाकवशेन। जीवकृतप्रयत्नं प्रवृत्तिनिवृत्तिहेतुमवेक्ष्य तदनुमतिदानेन परः प्रवर्तयतीति विधिनिषेधावैयर्थ्यादि नियहादिभ्योऽवगम्यते। यथा गुरुतरदार्वादिहरणे बालः प्रबलसहायः कुर्वन्नपि स्वप्रयत्ने विधिनिषेधयोग्यो भवति। एवं जीवः परमेश्वरसहायः प्रवर्तमानोऽपि स्वयं विधिनिषेधयोग्यो भवति। अतो जीवकृतप्रयत्नापेक्षत्वात् कर्मसु जीवस्य प्रवर्तक ईश्वरो न वैषम्यभाक्। तस्यापि स्वाधीनप्रवृत्तिसद्भावाद् विधिनिषेधादिवैयर्थ्यं न संभवतीति सिद्धम् ॥ ४१ ॥

॥ अंशो नानाव्यपदेशादन्यथा वापि दाशकितवादित्वमधीय एके ॥ ४२ ॥

नित्यो ज्ञातैव कर्ता परमेश्वरः। साहाय्यापेक्षप्रवृत्तिर्जीव, इति पूर्वत्र निरूपितम्। स इह परमेश्वर एव किंवा तदंशभूत इति प्राप्ते संशये परमेश्वर इति पूर्वः पक्षः[1]। परमेश्वर एव बहुविधोपाधिवशाज्जीवभावमुपगतो दृश्यते। यथैकमाकाशं घटाद्युपाधिवशान्नानाकारं दृश्यते परिच्छिन्नं च[2]। तथाहि, श्रुतिरयमात्मा ब्रह्म इति वदति। तस्मादीश्वर एवाज्ञानाज्जीवभावमुपगत[3] इति। सिद्धान्तस्तु जीवात्मा परमेश्वरस्यांशो मूर्त्येकदेश एव। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" "य आत्मनि तिष्ठन्" "पृथगात्मानं प्रेरितारं च मत्वा"

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत् ॥

इत्यादिषु नानाव्यपदेशात्। यदुक्तम्। "अयमात्मा ब्रह्म" इत्यादिना ब्रह्मण एव जीवत्वमिति। तत्राह। अन्यथा "तत् त्वमसि" "अयमात्मा ब्रह्म" इत्यादिकाद्व्यपदेशात् तयो[4]र्जीवब्रह्मणोर्व्याप्यव्यापकभावेनानन्यत्वम्।

अपिच तथैवानन्यत्वमधीयत एके[5]।

"ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत"

इत्यादिना ब्रह्मणोंऽशत्वेऽपि जीवस्य तद्व्याप्ततया तद्व्यपदेशो युक्तः। यथा वह्निना व्याप्तस्य काष्ठादेर्वह्निव्यपदेशः। तथापि हि तयोर्वह्निकाष्ठयोर्नाभेदः। तस्माज्जीवो ब्रह्मणोंऽशभूत एव तत्स्वरूपं प्रतिपद्यते[6]। ब्रह्मण एवाज्ञानाज्जीवभावकल्पने बहुश्रुतिविरोधादिदोषप्रसक्तिर्दुर्वारा[7] ॥ ४२ ॥

॥ मन्त्रवर्णात् ॥ ४३ ॥

"पादोऽस्य विश्वा भूतानि" इति मन्त्रवर्णाच्च ब्रह्मणोंऽश एव जीवः।

---

१ स्यात्। बुद्धेः करणत्वमेव हि। अतश्च बुद्धेः कर्तृत्वं नास्त्येव इति पा०।

१ पूर्वं निरूप्यते इति पा०।
२—चमेव इति पा०।
३—वमाप्नत्र इति पा०।
४ इत्यादिकोपदेशोक्तयो—इति पा०।
५—नानन्यत्वमधीयत एके इति वरपा०।
६—पः प्रतिभाति इति पा०।
७—धात्व्यवस्थाप्राप्तिर्दुर्वारा भवति इति

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्" ॥

इति श्रुतिः प्रकृतित्वं मायायास्तद्विशिष्टत्वं महेश्वरस्य तदवयवभूतत्वं सर्वस्य जगतः प्रकटयति। ततो मायिनः परमेश्वरस्यावयवलेशः पुरुषः ॥ ४३ ॥

॥ अपि* स्मर्यते ॥ ४४ ॥

"आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः।
व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम्" ॥

इति स्मरणाच्च शिवस्य मूर्त्येकदेश आत्मा ॥ ४४ ॥

॥ प्रकाशादिवन्नैवंपरः ॥ ४५ ॥

ब्रह्मणोंऽशत्वेऽपि जीवो यत्स्वरूपो यत्स्वभावश्च नैवं परमेश्वरः। किंतु सर्वज्ञत्वादियुक्त एव। कथम्। प्रकाशादिवत्। प्रकाशविशिष्टानां मणिप्रभृतीनां प्रकाशो विशिष्टैकदेशो यथांशः। तद्वज्जीवशरीरतया जीवविशिष्टस्य ब्रह्मणोंऽशो जीवः[1]। आदिशब्दाद्विशेषणैकस्वभावा जातिगुणादयो गृह्यन्ते। विशेषणानां विशिष्टैकदेशतया तदंशत्वेऽपि विशिष्टस्वरूपभेदो न विरुद्धः। "य आत्मनि तिष्ठन्" इत्यादिश्रुतेः ॥ ४५ ॥

॥ स्मरन्ति च ॥ ४६ ॥

"विग्रहं देवदेवस्य जगदेतच्चराचरम्।
एतमर्थं[2] न जानन्ति पशवः पाशगौरवात्" ॥

इत्यादि। ततो ब्रह्मणोंऽश एव जीवः। तद्विशिष्टतया स्वरूपभेदश्च सिद्धः ॥ ४६ ॥

॥ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४७ ॥

सर्वेषां जीवानां ब्रह्मांशत्वेऽपि कथं कस्यचिद्वेदादिष्वनुज्ञा कस्यचित् परिहार इति चेत्। ब्राह्मणदेहादिसंबन्धात् तदुपपत्तिः[3]। यथाग्न्यादेः श्रोत्रियागारश्मशानादिसंबन्धात्। तद्वदविरोधः ॥ ४७ ॥

॥ असंततेश्चाव्यतिरेकः ॥ ४८ ॥

असंततिरव्याप्तिः। प्रतिशरीरं भिन्नत्वात् तत्र तत्राणुत्वेनावच्छिन्नत्वादसंततेरव्याप्त्या च स्थूलोऽहं कृशोऽहं सुख्यहं दुःख्यहं ब्राह्मणोऽहं क्षत्रियोऽहमिति देहाभिमानिनां मानससुखाद्यव्यतिरेको भवति। किमुक्तं भवति। देहाभिमानिनां व्याप्त्यभावस्य समानत्वात् परिच्छिन्नज्ञानसुखादिकं[1] सांसारिकमेवासंकीर्णं भवति[2]। अनेन परब्रह्मज्ञानविशेषेण विगलितदेहाभिमानानां महाव्याप्त्या पराहंभावं[3]मुपगतानां मुक्तात्मनां निरतिशयत्वेन नित्यत्वेन च ज्ञानसुखादीनां स्वाभाविकानां सांसारिकज्ञानादितो व्यतिरेक[4] इति सिद्धम् ॥४८॥

अज्ञानोपाधिभ्यां ब्रह्मैव संबध्यत इति यदुक्तं तत्र पक्षद्वयेऽपि न व्यवस्थेत्याह ॥

॥ आभास एव च ॥ ४९ ॥

सत्यपि मिथ्योपाधिभ्यां बद्धस्य ब्रह्मण एव जीवभाव इति पक्षद्वयेऽपि युक्तय आभासा एव ॥ ४९ ॥

तथाहि ॥

॥ अदृष्टानियमात् ॥ ५० ॥

सत्यमिथ्योपाधिकृतत्वे ह्यात्मनां ब्रह्मण एवाज्ञानमुपाधिश्च। इति तत्कृतेनादृष्टेनापि न नियमः ॥ ५० ॥

किंच ॥

॥ अभिसंध्यादिष्वपि चैवम् ॥ ५१ ॥

अदृष्टहेतुभूताभिसंध्यादिषु चैवमेव नियमाभावः ॥ ५१ ॥

॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५२ ॥

उपाधिसंबन्धिब्रह्मप्रदेशभेदाद् व्यवस्थेति चेत्। उपाधिषु गच्छत्सु सर्वप्रदेशानां तदन्तर्भावात्। तस्मात् सत्यं मिथ्योपाधिपरिच्छिन्नब्रह्मजीवत्वपक्षद्वयेऽपि न व्यवस्था संभवति। ततो ब्रह्मणोंऽशभूतो जीवस्तद्विशेषणैकस्वभाव इति युक्तमेव ॥ ५२ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥ :: :: ॥

* अपि च स्मर्यते इति शंकरमते सूत्रपाठः।
१ यथांशः। इत्येव पा०।
२ एतदर्थं इति पा०।
३—न्यविशेषात् तावुपपत्तौ।

१ सामान्यात् परिच्छिन्नज्ञानस्य इति पा०।
२—व, एकप्रकारकमेवासंकीर्णं भवतीति इति पा०।
३ पराङ्भाव—इति पा०।
४—कज्ञात्यादेर्व्यतिरेक इति पा०।

## ॥ अथ सममण्डलप्रवेशप्रकरणम् ॥

यामुने नु पुलिने विहारिणं
हारिणं प्रणतगोपयोषिताम्।
मानसस्य हृदि नन्दनन्दनं
नन्दनं मुनिहृदां स्मराम्यहम् ॥ १ ॥

प्रश्नः।

द्राक् समवृत्तस्यरवौ वीक्ष्य नताङ्गनपमम्।
ब्रूत पलाभां सुधियो माणवकाक्रीडिततः ॥ २ ॥

अस्य भङ्गः ।

त्रिज्यार्कघातो नतकालकोटि-
ज्यया हृतः स्यात् परसंज्ञ एषः ।
द्युज्याहृतः क्रान्तिगुणेन निघ्नः
पलप्रभा स्यात् सुधियेदमूह्यम् ॥ ३ ॥

प्रश्नः ।

सवितरि सममण्डलाश्रिते यो
नतसमयं पलभां च वीक्ष्य शीघ्रम् ।
वदति यदि सुधीरपक्रमज्यां
स तु गणकैः सकलैरपीह वन्द्यः ॥ ४ ॥

अस्य भङ्गः ।

परः पलाभाविहृतोऽस्य वर्गात्
सैकात् पदं तद्विहृता त्रिजीवा ।
स्यात् क्रान्तिजीवाथ पलप्रभान्यो
व्यत्यस्य सिध्येद्यदियं द्युजीवा ॥ ५ ॥

अस्य प्रश्नस्य श्रीमद्गुरुचरणोक्तः प्रकारान्तरेण भङ्गः ।

पलप्रभाघ्नी नतकालकोटि-
ज्यका त्रिभज्याविहृता यदाप्तम् ।
अक्षप्रभां तत् प्रविकल्प्य साध्या
पलज्यका क्रान्तिगुणः स एव ॥ ६ ॥

प्रश्नः ।

नतकालं वीक्ष्य रवौ समाख्यवृत्तं समायाते ।
कुज्योनतद्युतिज्ञ द्राक् क्रान्तिज्याक्षभे ब्रूहि ॥ ७ ॥

अस्य भङ्गः ।

कुज्योनतद्युतिनतासुजकोटिमौर्व्यो-
र्वर्गान्तरात् पदमिदं परसंज्ञनिघ्नम् ।
कुज्योनतद्युतिसमाहृतमक्षभातः
क्रान्तिज्यका निजधिया सुधियावगम्या ॥ ८ ॥

प्रश्नः ।

याति रवौ समवृत्तं नतकालं वेधतोऽवगम्येह ।
समवृत्तशङ्कुवेत्तः शीघ्रं क्रान्तिज्यकाक्षभे ब्रूहि ॥ ९ ॥

अस्य भङ्गः ।

दृग्ज्या त्रिजीवागुणिता नतासु-
ज्यया विभक्ता द्युगुणो भवेत् सः ।
ततो ऽक्षभापक्रमजीवयोः स्याज्
ज्ञानं झटित्येव बुधाग्रणीनाम् ॥ १० ॥

प्रश्नः ।

वीक्ष्याग्रकां च समवृत्तसमाश्रितेऽर्के
ज्ञात्वा नतं समयमाशु वदेत् पलाभाम् ।
क्रान्तिज्यकां च गणितार्णवपारगोऽसौ
धीरेव चाच सुधियां प्रतिभूत्वमेति ॥ ११ ॥

अस्य भङ्गः ।

त्रिज्यावर्गार्धहृताग्रालवकोटिज्यकाकृतिः प्रथमः ।
नतकालकोटिजीवाविहृताग्रायाः कृतिस्त्वन्यः ॥ १२ ॥

या परयुक्ताद्यकृतिस्तन्मूलादाद्यहीनितान्मूलम् ।
भानुहतं पलभा स्यादपमज्यातो ऽवगन्तव्या ॥ १३ ॥

प्रश्नः ।

मार्तण्डे प्रविशति सति सममण्डलमत्र वीक्ष्य नतकालम् ।
तद्द्युतिमपि बुध्वाशु क्रान्तिज्यामक्षभां च मे ब्रूहि ॥ १४ ॥

अस्य भङ्गः ।

नतकालकोटिजीवातद्द्युतिघातो नतासुगुण कृत्या ।
द्विघ्न्या हृतोऽस्य वर्गान्नतासुजीवाहृतत्रिभज्यायाः ॥ १५ ॥
कृत्या युक्तान्मूलं फलोनितं त्रिज्यया गुणितम् ।
द्युज्या भवेदिहातः सुगमः पलभापमज्यकावगमः ॥ १६ ॥

प्रश्नः ।

भास्वति तिष्ठति यः समवृत्तं
वीक्ष्य नतं समयं कुगुणं च ।
वेत्त्यचिरात् पलभामपमज्यां
स्याद् गणितामृतदोहक एषः ॥ १७ ॥

अस्य भङ्गः ।

नतासुकोटिज्यकया विनिघ्नी
चितिज्यका व्यासदलार्धभक्ता ।
लब्धत्रिमौर्व्योः कृतियोगमूलं
लब्धोनितं स्याद् द्युगुणोऽक्षभातः ॥ १८ ॥

प्रश्नः ।

समवृत्तनरोर्ध्वखण्डवेदिन्
नतकालं सममण्डलाश्रितेऽर्के ।
अभिवीक्ष्य वदाक्षभापमज्ये
गणिते ते सुमतेऽस्ति पाटवं चेत् ॥ १९ ॥

अस्य भङ्गः ।

नतकालज्यावर्गात् समवृत्तनरोर्ध्वखण्डकार्धहतात् ।
नतकालकोटिमौर्व्याः कृत्या विहृतात् फलं यत् स्यात् ॥ २० ॥

तत्त्रिज्यावर्गयुतेर्मूलं लब्धोनमत्र समशङ्कुः ।
स्यादस्मात् क्रान्तिज्यापलभे स्तः प्राक्तमार्गेण ॥ २१ ॥

प्रश्नः ।

नतासून् ज्ञात्वा यो विशति समवृत्तं दिनमणौ
नरं चोद्वृत्तेऽर्के वदति पलभापक्रमगुणौ ।
प्रशास्तारं मत्तेभगणकगणानां भुवि न के
विदुर्ज्योतिःशास्त्रे हिमशिखरिणीमं मृगरिपुम् ॥ २२ ॥

अस्य भङ्गः ।

दृग्ज्याशङ्कू ये स्त उद्वृत्तगेऽर्के
ते विज्ञेयौ दृग्ज्यकाशङ्कुभिख्यौ ।
या स्यात् कोटिज्या नतासूद्भवा तद्-
दृग्ज्याघातेनाहृतात् त्रिज्यकाघ्नात् ॥ २३ ॥
शङ्कोर्लब्धेर्वर्गं आद्यस्तदाढ्यो
दृग्ज्यावर्गेणोद्धृतः शङ्कुवर्गः ।
अन्याख्यः स्यादर्धितान्यस्य वर्गा-
दाद्येनाढ्यान्मूलमन्यार्धयुक्तम् ॥ २४ ॥
तस्मान्मूलं भानुनिघ्नं पलाभा
स्यात् क्रान्तिज्यातः प्रसाध्या सुधीभिः ।
स्पष्टं चैतद्धीमतां यन्मयोक्तं
तन्मन्दानामेव बोधाप्तिहेतुः ॥ २५ ॥

प्रश्नः ।

निरीक्ष्य समयं नतं तु समवृत्तगेऽर्केऽग्रका-
दिखण्डमपि वीक्ष्य योऽपमगुणाक्षभे वक्त्यसौ ।
सगोलगणिते सरस्यमिततान्त्रिकैः सारसा-
लिभिर्विलसितेऽप्यलं लसति राजहंसः सुधीः ॥ २६ ॥

अस्य भङ्गः ।

नतकालकोटिजीवाग्रादिमखण्डोद्धृते क्रमतः ।
नतकालज्यात्रिज्ये तत्कृत्योरन्तरार्धमाद्याख्यम् ॥ २७ ॥
स्वघ्नं द्वितीयखण्डं परोऽन्यहीनादथाद्यकृतेः ।
पदमेतदूनयुक्तादाद्यान्मूलं रविघ्नगणम् ॥ २८ ॥
द्विविधः पलकर्णः स्यादस्मादक्षप्रभापमज्ये च ।
द्विविधे स्यातामेतत् स्पष्टं सुधियां धियामग्रे ॥ २९ ॥

प्रश्नः ।

स्वपूर्वापरं वृत्तमाप्ते नतासून्
दिनाधीश्वरे वीक्ष्य चाथो चरासून् ।
अभिज्ञाय विज्ञः पलाभामवैति
तदीयं तु कः साम्यमत्राभ्युपैति ॥ ३० ॥

अस्य भङ्गः ।

सूत्रभक्तचरज्याया मूलं द्वादशभिर्हतम् ।
पलभा स्यात् ततः साध्यो रीत्या पूर्वोक्तयापमः ॥ ३१ ॥

प्रश्नः ।

समवृत्तगते भानौ नतकालं चाक्षजं वलनम् ।
वीक्ष्याक्षभापमज्ये छायां च वदाशु मे विद्वन् ॥ ३२ ॥

अस्य भङ्गः ।

नतासुगुणभाजिताक्षवलनज्यकातो नता-
सुकोटिगुणतो यदाक्षवलनस्य कोटिज्यया ।
हृतात् फलमथैतयोर्वध इदं त्रयं त्रिज्यका-
हृतं त्विह पलज्यकासमनरापमज्याः क्रमात् ॥ ३३ ॥

प्रश्नः ।

अग्राग्रखण्डमभिवीक्ष्य समाख्यवृत्तं
याते तु भास्वति नतं समयं च वीक्ष्य ।
द्रागेव योऽपमगुणं पलभां च वेद
कीदृक् तदस्ति गणितं यदयं न वेद ॥ ३४ ॥

अस्य भङ्गः ।

अग्राग्रखण्डान्नतकालकोटि-
ज्यया हृतान्मूलमपक्रमज्याम् ।
प्रकल्पयित्वा द्युगुणं क्षितिज्यो-
नतद्युतिं चापि समाख्यशङ्कुम् ॥ ३५ ॥
प्रसाधयेत् क्रान्तिगुणेन भक्तो-
ग्रकाग्रखण्डघ्नसमाख्यशङ्कुः ।
कुज्या भवेत् तन्निहतक्षितिज्यो-
नतद्युतेर्मूलमपक्रमज्या ॥ ३६ ॥
इत्थं मुहुः साध्यमिमाः स्फुटाः स्युः
क्रान्तिज्यकाद्याः पलभा ततश्च ।
एवं गताध्यायवदुक्तयुक्त्या
द्वितीययापि द्रुतमेव सिध्येत् ॥ ३७ ॥
श्रीबालशास्त्रिविदुषां सविधे पठित्वा
प्राक् शब्दशास्त्रमथ तज्जनितावबोधः ।
श्रीबापुदेवगुरुवर्यकृपाकटाक्षात्
सज्ज्योतिषं प्रपठतीह विनायको यः ॥ ३८ ॥

तन्निर्मिते कतिपयप्रश्नविचाराभिधप्रबन्धेऽस्मिन् ।
सप्तमण्डलप्रवेशप्रकरणं एतन्नतासुखगण्डमभूत् ॥ ३८ ॥

॥ इति सप्तमण्डलप्रवेशप्रकरणे नतकालखण्ड प्रथमं समाप्तमभूत् ॥

---

# THE VIDVAN-MANO-RANJINI

OR

## REJOICER OF THE MIND OF THE LEARNED

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA SÁRA, BY RÁMA TÍRTHA

*(Continued from page 130.)*

*Thus it is said* [*As the much infatuated man, whose sight is obscured by a cloud, thinks that the sun is obscured by a cloud and void of radiance, so the spirit which in the sight of the infatuated is as if it were bound, this the essence whereof is eternal cognition, is the Ego, the soul &c*] He attributes the aforesaid power of envelopment, mediately through its products, to the understanding.

*With this* [*There arises in regard to spirit enveloped with this, the impression of agency, fruition, happiness, dolour, and other transmigratory states*] There arises an impression, the object of which is contradictory, by the influence of particular envelopment of the essence of the substratum or spirit. Of this the author adduces an example. *As in regard* [*to a rope enveloped*] *by illusion appropriated thereto* [*there arises the impression that it is a serpent*] The author next describes the power of projection

*But the projective power.* [*As illusion relative to a rope creates illusorily in the rope enveloped by such illusion by its own power, a snake &c, so illusion also creates illusorily in spirit enveloped by such illusion, by its own power, ether and the rest of the world Such is the power of projection*] Here the author cites the agreement of another teacher.

*Thus it is said, The projective* [*power may create the universe, from the subtile body up to the mundane egg or two firmaments*] Illusion as characterised by its two powers of envelopment and projection, is the concomitant in causation of the universe to spirit which is absolute, unassociated, without a second, pure intelligence It has, therefore, been said by competent authority: Illusion, enveloping the essence of self-irradiated spirit, projects it illusorily in the form of individuals souls, God, and the universe, through association with the powers of envelopment and dejection, and by reason of its dependence upon pure spirit only for its object With reference to the possible inquiry whether the causation of the universe ascribed to the intelligence of God as conditioned by ignorance of this kind, is an operative causality or a material causality, or both, the author proceeds to state

[*Intelligence having as its concomitant illusion*] *with the two powers thereof* [*is one, as specially considered itself, an operative or efficient cause; and when its concomitant is specially considered, a material cause*] When itself is specially considered, means when it manifests itself essentially as absolute intelligence. When its concomitant is specially considered means when it is in its form of appearance of existence as tinged by its concomitant. He shows by an example how one thing can be both causes. *As* [*a spider, when itself is principally considered, is in relation to a web the efficient cause, and when its body is principally considered, a material cause*] As a spider, in its well-known function of spinning webs, independently of the aid of cotton or spinning-wheel, creates threads and the product thereof, the web make of vertical and horizontal lines of thread, so also God, who prior to creation is one only without a second, without an associate, when under the influence of his power of illusion creates the universe from the subtile body up to the mundane egg, or two firmaments Conformable to this is the Vedic text beginning That which is invisible, incomprehensible; As the spider projects and retracts; As herbs grow on the earth, and as hair from the living man, so the universe below springs from the divine fiat. Thus also the aphorism, And [absolute spirit is] nature, there being no contradiction of thesis or example. The other therefore proceeds to describe the causation of the universe by intelligence, and the order of the production of the universe which is the product thereof

[*From intelligence conditioned by ignorance or illusion possessing the projective power*] *in which darkness prevails* [*arises ether, from ether, air;*

---

तदुक्तमित्यादिना । उक्तामावरणशक्तिं तत्कार्य्यद्वारा बुद्धिमारोहयतीत्याह ॥

अनयेति । अधिष्ठानस्वरूपविशेषावरणवशेन विपरीतार्थसम्भावना भवतीत्यत्र दृष्टान्तमाह ॥

यथास्वाज्ञानेति । विक्षेपशक्तिं सदृष्टान्तमाह ॥

विक्षेपेति । अत्राप्याचार्य्यान्तरसम्मतिमाह ॥

---

तदुक्तं विक्षेपेति । आवरणविक्षेपशक्तिद्वयवि[illegible]मज्ञानं [illegible]द्वयचैतन्यात्मनो जगत्कारणत्वोपाधिरिति भावः । [illegible] विक्षिपति संस्फुरदात्मरूपं जीवेश्वरत्वजगदाकृतिभिर्मृषैव । अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयताबलेनेति । अन्वेवंविधाज्ञानोपाधिकस्येश्वरचैतन्यस्य । यज्जगत्कारणत्वं तन्निमित्तत्वं स्यादुपादानत्वं वा उभयं वेति जिज्ञासायामाह ॥

शक्तिद्वयवदिति । स्वप्रधानतया कूटस्थचैतन्यस्वरूपावभासितया स्वोपाधिप्रधानतया उपाध्युपरक्तसत्तास्फूर्त्तिरूपतयेतिभेदः एकस्योभयविधकारणात्मकत्वे दृष्टान्तमाह ॥

*from air, fire, from fire, water, and from water, earth*] It is to be understood from the mention of the predominance of darkness, that there exist therein partially also goodness and passion He cites authority for the order described as that of the creation of the elements

[*According to such Vedic texts as*] *From that,* [*from this same spirit ether sprang,&c*] It may be objected. Ether is not produced, for it is a subject of attributes and actions, like soul This objection we refuse, since the argument cannot be raised, inasmuch as its object matter is contradicted by the Vedic text quoted above, and it is contradicted by a counter-argument, viz Ether is produced, for it possesses magnitude, and is an element, like earth &c possessed of magnitude Nor can it be rejoined that the argument or middle-term relates to an unestablished subject or minor-term, for the subject, viz ether, is allowed by both disputants Nor can it be objected that the argument relates to an unascertained subject, resulting from the impossibility of any proof establishing such a determinate object as ether · for though the proof establishing the existence of such propertied object, viz its nature as the site of sound, does prove merely the existence of a propertied object which may be called soniferous ether, yet this proof does not establish eternity as residing therein Nor is there in our argument, incompatibility between the middle and minor terms, for it is has been ascertained that the nature of magnitude, and that of being an element, reside in the minor-term. Nor is the middle-term one of unascertained concomitance with the major, as having no concomitant [that is, as not having an attribute attaching universally to the major, but not to the middle] Nor can the nature of being finite, or that of possessing parts, or that of possessing colour, be such fallacious concomitants [of the major, viz the nature of being produced, but not of the middle, viz, the possession of magnitude and the nature of an element], for quality, and action, are not universally accompanied by the major The nature of being an element, of being a subject of attributes, and possession of universality, are not such fallacious concomitants, for they pervade or universally accompany the middle-term If you object that possession of universality subordinate to that which is other than the nature of a subject of attributes, is a fallacious concomitant we deny this for this fallacious concomitant is not concomitant with the major-term in relation to subsequent non-existence, non-existence, though produced, having no universality Nor should it be rejoined that an objection lies against subsequent non-existence inasmuch as the major-term producibility must inhere in an entity, for it is only production, and not entity, that is predicated of ether Otherwise there would result an ignoratio elenchi, the substantiality &c which resides in propertied objects, being predicable of objects which are not in question. No other fallacious concomitant suggests itself, but if you say that ether is not an omnipresent entity, the Vedântins say the same It being revealed in such texts as Older than the sky, by whom the ether and the heaven were enveloped, that ether is of lesser extension than soul, this cannot be, as against the Vedântin, a fallacious concomitant Nor is the argument self-repugnant, there being no concomitance with the contradictory of the major-term Nor is there a general plurality of consequents [in which the middle-term is found both in the minor and in its contradictories], inasmuch as the argument does not apply to contradictory instances Nor is the argument undistributed, for it applies to its proper subject. Nor is the argument one at all times inapplicable, inasmuch as no tollent or destructive proof can be found Nor can it be said that the argument we adduce is itself destructive or tollent, for this argument has been stated as having object matter sublated by the Vedic text, like the argument for proving the purity of a human-skull [viz the skull is pure because it is a human-skull, which is destroyed by the Vedic text After touching a corpse a man should bathe] Nor can it be argued that the text as relative only to the eduction of ether, has no relation to its production, for if your argument [that ether is not produced, being a subject of attributes and actions, but containing no parts] be established as not contradicted or sublated, then you may show that the authoritative text may have some other meaning, and again if this different meaning be evinced, then your inference may be allowed, and thus there is a mutual dependency on circular argument Moreover if you say that the word sprang which is revealed once only in the text From that, from this spirit ether sprang, and which applies directly to ether, is used only in a secondary sense, and the same term again when applied to air and the like has its primary signification, then we re-

यथेति । लूता ऊर्णनाभः तन्तुरेव कार्य्यं तन्तुकार्य्यं यथा लूता तन्तुनिर्म्माणे प्रसिद्धे कार्य्ये सतूलकाष्ठयन्त्रादिसहायमनपेक्ष्यैव तन्तूनातानवितानात्मकश्च तत्कार्य्यं जालरूपं सृजति एवमीश्वरः प्राक्सृष्टेरेकत्वाद्वितीयोऽसहाय एव स्वमायाशक्त्यावेशमात्रेण लिङ्गादिब्रह्माण्डान्तं जगत्सृजेदिति भावः । तथा च श्रुतिः । यत्तदद्रेश्यमग्राह्यमित्युपक्रम्य यथोर्णनाभः सृजति गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाक्षरात्सम्भवतीह विश्वमिति । न्यायोऽपि प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति तदेवं चैतन्यस्य जगत्कारणत्वं प्रपञ्चस्य तत्कार्य्यस्योत्पत्तिक्रमं दर्शयति ॥

तमः प्रधानेति । तमसः प्राधान्यनिर्देशाद्रजःसत्वयोरपि तत्र मात्रया वृत्तिर्द्रष्टव्या । उक्तभूतसृष्टिक्रमे प्रमाणमाह ॥

mark that great is the exegetical skill of the dialectical animal. Nor is this argument vitiated by a doubtful plurality of consequents, since it is manifestly excluded from contradictory instances Nor does the argument admit an equally valid counter-hypothesis, for your argument being the weaker, both cannot be of equal validity for the nature of impartite substance is found, as it should be, in cloth at the time of its destruction But if it be objected that by the term impartite is meant a substratum of the absolute non-existence of parts, we disallow the objection for if the term part means what has position, then since all the positions of the integrate whole are exhausted by the parts, it will follow that there is no such thing as a whole. but if the term part designate the substratum, the argument [viz the nature of being without parts, that is without a substratum] is invalidated in our doctrine, for we declare the supreme being the substratum of ether therefore this inference is not a valid counter-hypothesis Nor can any other alternative be described Therefore since it has been established by an inference that ether is produced, we may pay no attention to superstitious adherence to a dry dialectic, and believe that ether as described in revelation is produced Allowing for the sake of argument that the atoms have no production, the argument has been qualified by the words for it possesses magnitude But if we disallow the eternity of atoms, our argument will be that ether is produced simply because it is an element For atoms are produced in four modes, because they have a limited extension and are elemental, like water-pots and other, common-place objects [which have four kinds of extension viz short and long, minute and great] Nor can it be objected that the argument from limited extension is inapplicable to the internal organ [that is, that the internal sensory is of limited extension, but has not four kinds of extensions], for the internal organ is included in the subject of our inference Nor is there a contradiction of the proof establishing the subject of the attribute [viz the atoms], for though the existence thereof be established, there is no proof thereby of any eternity and the like residing therein Nor can be argued that if atoms are themselves products there will be an infinite regress of causes, and consequently no ultimate cause of the universe · for it is notorious from revelation scripture, sacred history, and the legendaries, that the supreme spirit is the ultimate cause of the universe Similarly space and time are produced, because they are unconscious entities, like a piece of

---

तस्मादिति । नन्वाकाश नोत्पद्यते । निरवयवद्रव्यत्वादात्मवदिति चेन्न । उदाहृतश्रुतिबाधितविषयत्वेनानुमानानुत्थानात् प्रत्यनुमानविरोधाच्च तथाहि आकाशमुत्पद्यते महत्त्वे सति भूतत्वात् महापृथिव्यादिवत् । न चाश्रयासिद्धो हेतुः आश्रयस्याकाशस्योभयवादिसिद्धत्वात् । न च धर्म्मिग्राहकप्रमाणबाधनिबन्धनाश्रयासिद्धता हेतोः । धर्म्मिग्राहकप्रमाणेन शब्दाश्रयत्वेनाकाशाख्यधर्म्मिमात्रसिद्धावपि तद्गतनित्यत्वादेस्तेनासिद्धेः । नच स्वरूपासिद्धिः भूतत्वमहत्त्वयोः पक्षे संप्रतिपत्तेः । नापि व्याप्यत्वासिद्धो निरुपाधिकत्वात् । नच मूर्त्तत्वसावयवत्वरूपवत्त्वादेरुपाधित्वं शक्यं वक्तुं गुणकर्म्मणोः साध्याव्याप्तेः । भूतत्वद्रव्यत्वसामान्यवत्त्वादेश्च साधनव्यापकत्वात् अथ द्रव्यत्वव्यतिरिक्तावान्तरजातिमत्त्वमुपाधिरिति चेन्न प्रध्वंसे साध्याव्याप्तेः । तस्योत्पत्तिमत्त्वेऽपि जात्याश्रयत्वाभावात् । नच साध्यस्योत्पत्तिमत्त्वस्य भावधर्म्मिकत्वान्न प्रध्वंसे प्रसक्तिरितिवाच्यं उत्पत्तिमात्रस्यैवाकाशे साध्यत्वात् अन्यथा विप्रतिपत्त्यविषयाणां द्रव्यत्वादीनां धर्म्मिगतानां साध्यताप्रसङ्गइत्यनुमानाकौशलमापद्येत नचान्यः कश्चिदुपाधिरुत्प्रेक्ष्यते अविभुत्वंत्वाकाशेऽपि वेदान्तिनः समानं ॥ ज्यायानन्तरीक्षात् येनावृतं खञ्च दिवमित्यादावात्मापेक्षया आकाशस्य न्यूनपरिमाणत्वश्रवणात् अतो न तं प्रति तस्योपाधित्वं । नापि विरुद्धः ' साध्यविपर्य्ययाव्याप्तेः नापि साधारणानैकान्तिको विपक्षाप्रवेशात् । नाप्यसाधारणः स्वपक्षगामित्वात् । नापि कालातीतः बाधकप्रमाणानिरूपणात् । नचोक्तानुमानं बाधकमिति वक्तव्यं । तस्य नरशिरःकपालशुद्धतानुमानवदागमबाधितविषयत्वस्योक्तत्वात् । नच श्रुतेराकाशाभिव्यक्तिमात्रार्थत्वान्नोत्पत्त्यर्थतेति वाच्यं । सिद्धे चानुमानस्याबाधितत्वे प्रमाणश्रुतेरन्यार्थत्वसिद्धिस्तत्सिद्धावितरसिद्धिरितीतरेतराश्रयत्वात् । किञ्च तस्माद्वारातस्मादात्मनआकाशःसंभूतइति सकृत् श्रुतः सम्भूतशब्दआकाशे साक्षात्सम्बध्यमानोगौणः स एव वाय्वादावनुषज्यमानो मुख्यइति महदिदं व्याख्यानकौशलं तार्किकपशोः । नापि संन्दिग्धानैकान्तिकता विपक्षव्यावृत्तेः स्फुटत्वात् । नापि प्रकरणसमता तवानुमानस्य दुर्बलत्वेनोभयोः समानबलवत्त्वाभावात् । निरवयवद्रव्यत्वस्य विनश्यदवस्थापन्ने पटे व्यभिचारात् । अवयवत्वात्यन्ताभावाधिकरणत्वं निरवयवत्वशब्दं न विवक्षितमिति चेन्न । अवयवशब्देन प्रदेशविवक्षायां सर्व्वस्याप्यवयविप्रदेशस्यावयवत्वेनोपक्षीणत्वादवयव्यभावप्रसङ्गात् । आश्रय वक्षायामन्यतरासिद्धो हेतुः स्यात् । आकाशाश्रयस्य ब्रह्मणो मयेष्टत्वात् तस्मात्तदनुमानं न प्रतिपक्षः । नापि पक्षान्तरमुत्प्रेक्ष्यते । तस्मादनुमानेनाप्याकाशस्योत्पत्तेः सम्भावितत्वात शुष्कतर्कश्रद्धामनादृत्य श्रुत्युक्तमेवाकाशं जन्मवत् श्रद्धेयं । अभ्युपगम्य चेदं परमाणूनामनुत्पत्तिमत्त्वं महत्वे सतीति हेतुर्विशेषितः । तदनभ्युपगमे तु भूतत्वादित्येव हेतुः । तथाहि चतुर्द्धा परमाणव उत्पद्यन्ते मूर्त्तत्वात् भूतत्वाद्वा घटादिवत् । नच मूर्त्तत्वहेतोर्म्मनस्यनैकान्तिकता । तस्यापि पक्षतुल्यत्वात् नच धर्म्मिग्राहकप्रमाणबाधः सिद्धेऽपि तेन धर्म्मिस्वरूपेतद्गतनित्यत्वादेरसिद्धेः । नच परमाणूनामपि कार्य्यत्वे कारणानवस्थानान्न किमपि मूलकारणं जगतः स्यादिति वाच्यं ब्रह्मण एव जगन्मूलकारणस्य श्रुतिस्मृतीतिहासपुराणप्रसिद्धत्वात्तथा दिक्कालावुत्पत्तिमन्तौ । अचेतनमात्रत्वात् पटवत् । नचास्माकमविद्यायां व्यभिचारः । तस्याभावाभावविलक्षणत्वाभ्युपगमात् । अन्येऽपि हेत्वाभासाः पूर्व्ववदुच्चारणीयाः । नच सामान्यविशेषसमवायेषु व्यभिचारः । तत्र सामान्यस्य विचार्य्यमाणे ब्रह्मस्वरूपानतिरेकादचेतनत्वहेतोस्तत्राप्रवृत्तिः तथाहि विशेषास्तावत् सामान्यं कल्पिता इतित्वविद्यावादे निरूपितं । तथा च द्रव्यत्वादीनां सामान्यविशेषाणां सामान्यमात्ररूपायां सत्तायामन्तर्भावः । सत्तायाअपि स्फुरणविरहितायाः क्वाप्यनुपलम्भात् स्फुरणमात्रत्वं युक्तं । स्फुरणञ्चब्रह्मैव । सदेव सोम्येदं सत्यं ज्ञानमित्यादिश्रुतेः । ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्मवेदेत्यादौ परस्वरूपातिरिक्तत्वेन ब्राह्मणयादिं जातिं विजानतोब्रह्म निन्दाश्रवणाच्च तस्मान्न सामान्ये व्यभिचारः । विशेषसमवायौ तु खपुष्पकल्पौ अनयोर्यथा खपुष्पकल्पत्वं तथा चिदानन्दलहरीटीकायां प्रपञ्चितमस्माभिरितीहोपरम्यते । श्रुतयश्च भवन्ति प्रत्यक्षानुमानबाधिकाः । अणोरणीयानिति परमाणोरणीयः परमकारणं ब्रह्म दर्शयित्वा यस्मात् परं नापरमस्ति किञ्चित् । यस्मान्नाणीयोनज्यायोऽस्ति किञ्चिदिति तैत्तिरीयश्रुतिस्तद्व्यतिरिक्तं अणु महच्चाविशेषेण प्रतिषेधति असतोऽधिमनोऽसृज्यत एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति । तैत्तिरीयाथर्व्वणश्रुतौ मनसउत्पत्तिं स्पष्टमाचक्षते । तथाज्ञः कालकालोगुणीसर्व्वविद्यः सर्व्वे निमेषाजज्ञिरेइति च श्वेताश्वतरतैत्तिरीयश्रुतौ कालस्यापि कार्य्यतामावेदयतः पुरुषएवेदं सर्व्वमित्युपक्रम्य दिशः श्रोत्रादिति पुरुषसूक्तात्मिका श्रुति-

cloth. To this it cannot be rejoined that our argument will be fallacious in regard to illusion [which is an unconscious entity and yet eternal], for it has been treated as different from entity and non-entity. The other fallacies may be considered as in the preceding discussion [of the argument respecting the non-eternity of ether]. Nor is our argument fallacious or misleading in regard to universality, particularity, and co-inherence for on reflection universality turns out to be not difference from the essence of the supreme spirit, and therefore the argument, viz unconsciousness, does not apply to universality. It has been described already in the discussion about illusion, that all particulars or individual things are erroneously surmised in the universal. In this manner the various universals, substantiality and so forth, must be included under existence which contains all universality. As existence is never cognised without the illumination [of pure intelligence], it is rightly regarded as consisting only of such illumination. This illumination is the absolute, according to the Vedic texts Existent indeed, fair sir, was this, Truth, knowledge &c., and according to censure revealed against one who regards the Brâhmanic and other castes as other than the essence of the supreme spirit, in the text The Brâhmanic caste rejected him, who knew a supreme spirit other than himself. There is therefore no fallacious misapplication of our argument to universality.

But particularity and co-inherence are mere figments, like celestial flowers. We have diffusely shown in our commentary on the Chid-ânanda-laharî, how particularity and co-inherence are merely chimerical, and therefore decline the discussion here. Moreover there are Vedic texts tollent of perception and inference [the only methods recognised by the Vaiśeshikas]. Thus the Vedic text of the Taittirîyas having shown in the words, More minute than an atom, that the absolute is more minute than an atom and is the primary cause, and proceeding Beyond which none other is greater, Than which none is smaller, none greater, absolutely denies anything smaller or greater than the absolute. After the unreal, the internal organ was created, From this springs the vital air, with the internal organ and all the organs.

These Taittirîya texts and the Atharva-veda explicitly declare the production [and therefore, the non-eternity] of the internal organ. Similarly The Śvetâśvatara and Taittirîya texts proclaim that time also is a product, in the words The knowing soul, the time of time, comprising the qualities, and Who knows all the moments were produced. The revelation called the Purusha-sûkta, indicates that space is only an evolution of spirit, in the words beginning All this is spirit only and ending with all spaces are from his ear, and it is to be explained that there is no space other than ether, since in reality the name and notion of east &c. is imagined in ether, according to the concomitant, the path of the sun. Nor can you retort that the supreme spirit even is produced, being a cause, like ether, for this would be to contradict such texts as Unborn, everlasting &c., and to contradict to the aphorism There is non-production, for the existent cannot be produced. Thus it is demonstrated that antecedently to a production of the universe there existed nothing except the absolute spirit. For since illusion is a power of the spirit, it cannot be an entity distinct therefrom, and individuated spirits are then absorbed in the absolute spirit, and their merits and demerits residing in the internal organs which are concomitant thereto can have no separate existence, because there are only the illusions remaining in the impression thereof. This matter has been discussed in detail by the founders of the system in the section treating of ether &c., therefore we forbear. In relation to such texts as From ether air, from air fire, and so forth, it is to be conseded that the production of air &c. is from the supreme spirit alone, from association with illusion, and under the condition of ether and the like. For it is revealed in another text, viz That light created, that luminary beheld, that light &c. creates water &c. from prevision, and there cannot be an unconscious beholder. The aphorism moreover, He is, because we may

---

दिशः पुरुषविकारत्वं सूचयति वस्तुतस्तु प्राच्यादिव्यपदेशस्यादित्यगत्युपाधिना नभस्येव कल्पितत्वात् नाकाशातिरिक्ता दिगस्तीति गमयितव्यं । नच ब्रह्माप्युत्पद्यते कारणत्वादाकाशवदितिवाच्यं । अजो नित्यइत्यादिश्रुतिविरोधात् । असम्भवस्तु सतोऽनुपपत्तेरिति न्यायविरोधाच्च एतेन जगतउत्पत्तिप्राक्काले ब्रह्मातिरिक्तं वस्तु नास्तीति दर्शितं । अविद्यायाश्चात्मशक्तित्वेन ततः पार्थगर्थ्यायोगाज्जीवानाञ्च तदा परमात्मनि सम्पन्नत्वात्तददृष्टानाञ्च तदुपाध्यन्तःकरणनिष्ठानां तत्संस्कारशेषा विद्यामात्रत्वेन पृथक्सत्त्वाभावात् । विस्तृतञ्चैतदाचार्य्यैः वियदधिकरणादाविति विरम्यते । आकाशाद्वायुर्वायोरग्निरित्यादौ आकाशादिभावमापन्नादविद्यासहायाद्ब्रह्मणएववाय्वादीनामुत्पत्तिरिति द्रष्टव्यं । तत्तेजोऽसृजत तत्तेज ऐक्षतेत्यादिश्रुत्यन्तरे तेजःप्रभृतेरपीक्षणपूर्व्वकमबादिस्रष्टृत्वश्रवणात् अचेतनस्य च ईक्षणानुपपत्तेः । न्यायोऽपि तदभिध्यानादेव तल्लिङ्गात् स इतीममेवार्थं निर्णयति एतेन प्रधानाणवादिवादानिरस्तावेदितव्याः तेषां श्रुतिविरुद्धत्वान्न्यायविरुद्धत्वाच्च । नह्यचेतनं चेतनानधिष्ठितं किञ्चित् कुर्व्वदुपपद्यते रथशकटादावदर्शनात् अतो न प्रधानवादआश्रयणीयः । तथा परमाणुवादोऽपि अण्वोर्द्वयोः संयोगस्याव्याप्यवृत्तित्वे तयोः सावयवतापत्तेरनित्यत्वप्रसङ्गः तत्संयोगस्य व्याप्यवृत्तित्वे निरवयवयोरणवोरेकस्मिन्नितरस्य संमितत्वात् प्रथिमानुपपत्तिः तथा च तत्कार्य्यस्य द्व्यणुकस्यापि परिमण्डलप्रसङ्गः । किञ्च द्व्यणुकारम्भसमये परमाणुः कथञ्चिद्विक्रियते न वा । आद्येऽनित्यत्वादिदोषोपपत्तिर्मृत्पिण्डादिवत् । द्वितीये परमाणुसमूह एव द्व्यणुकादिकार्य्यं स्यात्तणपूलवदित्यलं प्रपञ्चेन प्रकृतमनुसरामः । तमः प्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यमाकाशादिकारणमित्यु ˚ । तत्कथमवगम्यते भूतकारणज्ञाने तमःप्राधान्यमिति तत्राह ॥

ponder upon him, which is the mark of his existence, ascertains the same fact By this argumentation we must be understood to have refuted the doctrine of atoms [of the Naiyâyikas, and Vaiśeshikas], and that of the plastic principle [of the Sânkhyas], such doctrines being contradicted by revelation, and by reasonings For no unconscious agent, not presided over by something conscious, can possibly do anything, for we observe no such action in chariots, carts, and the like The doctrine, therefore, of a primary plastic principle cannot be accepted. Similarly the atomic theory for the conjunction of two atoms not being total and universal, it follows that they must each have parts [that facet may join facet], and thus they will be non-eternal; whereas, if this conjunction be total and universal, then two impartite atoms being each measured by the other, aggregation becomes impossible, and thus it will follow that their product also, the binary atomic aggregate, will be an absolute minimum [or of atomic dimension] Again, does the atom, during the origination of the binary aggregate, undergo any change, or not? On the first alternative there follow its non-eternity and other objections, as in the case of a lump of clay &c [the gross constituents of a water-pot], on the second alternative, the product, the binary aggregate and the like, will be a mere aggregation of atoms [without any principle of cohesion], like a bundle of straw and the like It has thus been stated that intelligence associated with illusion with its projective power in which darkness predominates, is the cause of ether &c To dismiss further prolixity, and return from our digression It may be asked how it is known that darkness is predominant in illusion as the cause of the elements The author, therefore, proceeds to say

A. E G. and G D.

---

## PARJANYA, THE RAIN GOD

(As represented in the hymns of the Rigveda, v 83 and vii 100, 101.)

I.

Parjanya laud with praises meet;
The fertilising god extol
And bless, of living things the soul,
Whose advent men, exulting, greet.

II.

Like steeds a charioteer has spurred,
His watery scouts before him fly.
Far off, within the darkening sky,
The thundering lion's roar is heard.

III

Fierce blow the blasts, the lightnings flash,
Men, cattle, flee in wild affright
Avenging bolts the wicked smite,
The guiltless quake to hear the crash;

IV.

Malignant demons stricken lie;
The forest's leafy monarchs tall
Convulsed, uprooted, earthward fall,
Whene'er Parjanya passes by

V.

Urge on thy car, Parjanya, haste,
And, as thou sweepest o'er the sky,
Thine ample waterskins* untie
To slake with showers the thirsty waste

VI.

Now forth let swollen streamlets burst,
And o'er the withered meadows flow·
Let plants their quickening influence know,
And pining cattle quench their thirst.

VII

Thy wondrous might, O god, declare;
With verdure bright the earth adorn,
Clothe far and wide the fields with corn,
And food for all the world prepare.

VIII

But O, we pray, Parjanya kind,
Since now our harvests, drenched with showers,
Aloud invoke the Solar powers,
Thy waterskins no more unbind†

EDINBURGH, 13th *September* 1872

J. MUIR

* This image is of course, found in the original It is well known that in Eastern countries skins are used for preserving wine and carrying water.

† This verse, which has been mainly suggested by the disastrous rains of the present season, (In Scotland) is justified by a brief reference in a verse of one of the hymns (v. 83, 10)



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO. AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 79. Benares, December 2nd, 1872. Vol. VII.

## ॥ चिन्तामणेः शब्दखण्डम् ॥

(१) नन्विदमिष्टसाधनमिति ज्ञानादेतत्साध्यमिष्टमिति ज्ञानाच्च प्रवृत्तिदर्शनात्प्रथमस्यैव प्रवर्तकत्वे किं विनिगमकम् । उच्यते । फलेच्छायां स्वविषयविशेष्यकज्ञानस्य हेतुत्वेन क्लृप्तत्वात् । उपायचिकीर्षा ऽपि बाधकं विना तथा । (२) वस्तुतस्तु कृतिसाध्ययागस्य साध्यमिष्टमिति ज्ञानस्य प्रवर्तकत्वे यजेतेतिपदात् (३) प्रथमं कृतिसाध्यो याग इति ज्ञानं ततः कृतिसाध्ययागस्य साध्यमिष्टमिति ज्ञानं विशेषणज्ञानसाध्यत्वाद् विशिष्टज्ञानस्येति ज्ञानद्वयं तव, मम यागः कृतिसाध्य इष्टसाधनमित्येकमेव ज्ञानम् । न च कृतिसाध्यत्वं यागे बोधयित्वा कृतिसाध्ययागस्य साध्य मिष्टमिति लिङा बोधयितुं शक्यमपि एकस्वार्थान्वयमपरमदार्थे बोधयित्वा तदन्वितापरस्वार्थान्वयबोधकत्वस्य पदे ऽव्युत्पत्तेः, यजिपदे च कृत्या सह यागान्वयं बोधयित्वा पर्यवसिते पुनः स्वार्थान्वयबोधकत्वे आवृत्तिप्रसङ्गः । अथ साध्यमिष्टं यस्येति साध्येष्टकत्वं शक्यं, (४) तथा च बहुव्रीह्यर्थापेक्षया इष्टस्य साधनमिति षष्ठ्यर्थस्य लघुत्वात्तदेव शक्यम् । (५) किं च तत्साध्यत्वं न नियमतस्तदुत्तरसत्त्वम् । (६) दण्डसाध्ये घटे व्यभिचारात् । नापि तदवच्छिन्नक्षणोत्तरक्षण एव सत्त्वम् । (७) एवकारव्यवच्छेद्यतदनुत्तरसमयस्याकाशे ऽप्रसिद्धेः । शब्दस्य तदसाध्यत्वापत्तेः । (८) अत एव न तदभावव्यापकाभावप्रतियोगित्व, रूपे रससाध्यकत्वापत्तेश्च । नापि तदवधिकोत्तरत्वव्याप्यसमयसंबन्धः । उत्तरत्वव्याप्यत्वं ह्युत्तरत्वानधिकरणकालावृत्तित्वं, तच्चाकाशे ऽप्रसिद्धं, गुरुतरं च । तस्मात्तत्साधनकत्वमेव तत्सा-

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

तटस्थः पृच्छति । (१) नन्विति । ननु फलेच्छायामपि स्वविषयत्वेनैव हेतुत्वं न तु तद्विशेष्यकत्वेन गौरवादित्यरुचेराह । (२) वस्तुतस्त्विति । एतत्साध्यमिष्टमेतावन्मात्रं न प्रवर्तकं कृत्यसाध्ये ऽतिप्रसङ्गादित्यत्रापि कृतिसाध्यत्वप्रवेश आवश्यक इति दर्शयति । (३) प्रथममिति । (४) तथापीति । यद्यपि लक्षणाया अविशेषाच्च लाघवं तथापि बहुव्रीहौ धर्मी लक्ष्यस्तत्पुरुषे संबन्धमात्रमिति विशेष इत्याहुः । ननु विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेनैकदैवेष्टे यागसाध्यत्वस्य यागे कृतिसाध्यत्वस्य भानं संभवति । तथा चात्राप्येकमेव ज्ञानमत एव न व्युत्पत्तिविरोधो ऽपि, एकदैवोभयबोधेनैकस्वार्थान्वयं बोधयित्वा ऽपरस्वार्थान्वयाबोधनात् । एकदा तद्बोधने व्युत्पत्तिविरोध इत्यत्र मानाभावात् । अत एव च नावृत्तिप्रसङ्गोऽपि । घटमानयेत्यादाविव तादृशावृत्तेरदोषत्वं च । तत्रापि घटपटादेरवान्तरवाक्यार्थबोधजननानन्तरं पुनर्महावाक्यार्थबोधजननादिति पूर्वास्वरसादाह । (५) किं चेति । (६) दण्डेति । दण्डोत्तरमपि कदा चिद् घटाभावादित्यर्थः । शब्दस्याकाशासाध्यत्वापत्तौ हेतुमाह । (७) एवकारेति । (८) अत एवेति । शब्दे आकाशासाध्यत्वापत्तेरेव । नह्याकाशाभावव्यापकः शब्दाभावः । शब्दवत्याकाशात्यन्ताभावसत्त्वेन व्यभिचा-

ध्यत्वम्। एवं च लाघवात् (८) तत्साधनत्वज्ञानमेव प्रवर्तकं न तु तत्साधनकत्वज्ञानमिति ।

स्यादेतत्। इष्टत्वज्ञानस्य प्रवर्तकत्वे तृप्तोऽपि भोजने प्रवर्त्तेत, मनसा तृप्तेरिष्टत्वज्ञानात्। अथ स्वरूपसत्यपि फलेच्छा कारणं, सा च सिद्धतया तृप्तौ नास्तीति चेत्, हन्त्वैवमावश्यकत्वात्फलेच्छा कारणं न तु तज्ज्ञानं, गौरवात् । किं चेच्छाज्ञानस्य कारणत्वे इच्छा कारणं न स्यात् स्वज्ञानेन तन्नाशात्, इच्छा तज्ज्ञानधाराकल्पने ऽनवस्थानात् । (१०) अपि चेच्छाविषयः सुखमिति ज्ञानं न मानसं, सुखस्यासिद्धतया तद्विशेष्यकसाक्षात्कारस्य तत्संनिकर्षं विना ऽभावाद् (११) ओदनादावपीष्टत्वज्ञानं न स्यात्। मनसो बहिरस्वातन्त्र्यात् । नापि चक्षुरादिना ज्ञातः कृत इतिवदिष्टत्वज्ञानं, (१२) तत्र विशेष्यसन्निकर्षात् । (१३) वस्तुतस्त्विष्टस्य विशिष्य सुखत्वादिना ऽज्ञाने यागपाकादाविष्टसाधनताज्ञानेऽप्यप्रवृत्तिप्रसङ्गः । इष्टस्याल्पाधिकभावेन नानाप्रकारकत्वेन च विशिष्यानध्यवसायात् । न चेच्छाविषयत्वावच्छेदकसुखत्वादेरुपलक्षणमिष्टत्वं, सुखदुःखाभावतत्साधनेष्वनुगतस्योपलक्ष्यस्याभावेनाननुगमादिति ।

उच्यते । (१४) यच्चेच्छातत्साधनताज्ञानमेव लोकवेदसाधारणं प्रवर्तकं तेषां सुखदुःखाभावतत्साधनत्वेनेच्छाविषयाणामननुगतानामपि (१५) वस्तु सदि-

---

रादित्याहुः । (९) तत्साधनत्वज्ञानमेव प्रवर्त्तकमिति । अत्रेदं चिन्त्यम्। यदि तत्साधनत्वज्ञानं प्रवर्तकं तदा दुःखप्रागभावार्थितया प्रायश्चित्तादौ प्रवृत्तिर्न स्यात् । तत्साधनत्वं हि तन्नियतपूर्ववर्त्तित्वं, तत्पूर्ववर्तित्वं च तत्प्रागभावावच्छिन्नसमयवृत्तित्वम् । न च प्रागभावस्य प्रागभावाभावेन तत्पूर्ववर्त्तित्वं संभवति । न च प्रागभावस्योक्तसमयसंबन्ध एव तत्र साध्यः तत्साधनत्वज्ञानमविकलमेवेति वाच्यम् । तत्समयसंबन्धस्य समयप्रागभावात्मकतया तस्य च तदसाध्यत्वात्। किं च प्रायश्चित्तादिषु दुःखाभावमुद्दिश्यैव प्रवर्त्तते, न तु तत्समयसंबन्धमुद्दिश्य, तस्य स्वतो ऽपुरुषार्थत्वात् । ननु येन रूपेण यस्य साध्यता तद्रूपाक्रान्तसाध्याधिकरणकालोपाधिपूर्ववर्त्तित्वज्ञानं प्रवर्त्तकम् । तच्चात्राप्यस्ति । दुःखप्रागभावस्य प्रायश्चित्ताद्यनन्तरकालवृत्तिप्रागभावत्वेन साध्यत्वात्तदधिकरणकालोपाधिपूर्ववर्त्तित्वस्य प्रायश्चित्तादौ संभवादिति चेत् । एवं घटाद्यधिकरणसमयात्पूर्ववर्त्तित्वाप्रतिसंधाने घटादिपूर्ववर्तित्वप्रतिसंधानेपि प्रवृत्तिर्न स्यात्, न चेष्टापत्तिः । अनुभवविरोधात् । न चोभयोरपि प्रवर्त्तकत्वम् । अननुगमात् । प्रवृत्तिवैजात्यकल्पने मानाभावात् । किं च गोत्वाद्यधिकरणकालोपाधिपूर्ववर्त्तित्वज्ञानसंभवात्तदर्थितयापि प्रवृत्त्यापत्तिः । तस्मादनन्यगत्या तत्साध्यत्वज्ञानमेव प्रवर्त्तकम् । न च तदपि तत्साधनकत्वम् । अन्यानिरुक्तेः । एवं च दोषतादवस्थ्यमिति वाच्यम् । यस्मिन्सति अग्रिमक्षणे यत्सत्त्वमित्यादिना क्षेमसाधारणस्य तत्साध्यत्वस्य ग्रन्थकृतैव निर्वचनात्। एतेन तत्साधनकत्वमेव तत्साध्यत्वम्, एवं च तत्साधनत्वे लाघवमित्यसंगतं बोध्यम् । न चैवमिष्टसाधनत्वज्ञानात्प्रवृत्तिर्न स्यादिति वाच्यम् । तवाप्येतत्साध्यमिष्टमिति ज्ञानात्प्रवृत्तिर्न स्यादिति तौल्यात् । यदि च लाघवादिना तत्साधनत्वज्ञानस्य प्रवर्तकत्वे निर्णीते तत्र प्रवृत्त्यभाव इष्ट एव, समानसंवित्संवेद्यत्वाद्वा तत्रापि तज्ज्ञानसंभवात्तत एव तत्प्रवृत्तिरिति मन्यसे तदा प्रायश्चित्ते प्रवृत्त्यन्यथानुपपत्त्या तत्साध्यत्वज्ञानस्य प्रवर्तकत्वे निर्णीते तत्रापि प्रवृत्त्यभाव इष्ट एव समानसंवित्संवेद्यत्वात्तज्ज्ञानादेव वा प्रवृत्तिरिति तुल्यम् । तस्मादस्मन्मते दुःखसाधनध्वंसस्य स्वतःपुरुषार्थत्वात्तदर्थितयैव प्रायश्चित्तादौ प्रवृत्तिस्तन्मतएव तत्साधनताज्ञानं प्रवर्त्तकमिति ॥

ननु स्वज्ञानमिच्छायां व्यापारोऽस्तु। तथा च व्यापारिनाशे ऽपि न क्षतिः। किं च विनश्यदवस्थेच्छायाः कारणत्वमस्तु। न चेच्छात्वनिर्विकल्पकेन तन्नाशे तदसंभव इति वाच्यम् । ज्ञानवदिच्छाया अपि विषयनिरूप्यत्वेन निर्विकल्पकानभ्युपगमादित्यस्वरसादाह । (१०) अपि चेति । तथा च सुखसाधने भोजनादाविष्टसाधनत्वज्ञानाभावात्प्रवृत्तिर्न स्यादिति भावः। (११) ओदनादावपीति । तथा च तत्साधने पाके ऽपि न प्रवर्त्तेतेति भावः । (१२) तत्रेति । इह त्वसिद्धतयौदनादेस्तदसंभव इति भावः । ननु सुखमोदनं चेच्छामीत्यनुव्यवसायेन तद्विषयत्वमिच्छायां गृह्णता तुल्यवित्तिवेद्यतया इच्छाविषयत्वमपि सुखादौ गृहीतम् । न चैवमपि तदसन्निकर्षात्सुखादिविशेष्यकमिष्टज्ञानं न स्यादिति वाच्यम्। इष्टसाधनताज्ञानस्य तथा ऽप्यवैकल्यात्। तत्र विशेषणज्ञानत्वेन तदुपयोगात्। किं च ज्ञानोपनीतसुखादेर्विशेष्यत्वं ऽप्यदोषः । अत एवासन्निकृष्टपर्वतादिविशेष्यको मानसः परामर्श इत्यस्वरसादाह । (१३) वस्तुतस्त्विति । फलेच्छा स्वरूपसती प्रवृत्तिप्रयोजिका न प्रवर्त्तकधीविषय इति न तृप्तस्य भोजने प्रवृत्तिरित्याशयेन ।

परिहरति । (१४) यच्चेति । (१५) वस्तु सदिति । नन्विदमसंभवीष्टसाधनताज्ञानफलेच्छावदुपादानप्रत्यक्षस्यापि प्रवृत्तिहेतुत्वं, न चैतेषामात्मगुणानां सहावस्थितिरिति चेन्न। इच्छोत्पत्त्यनन्तरं तद्विरोध्यनुत्पादसमयावच्छिन्नत्वस्यैव वस्तुसदि-

च्छाविषयत्वमेवानुगमकम् । एवं यदा सुखादाविच्छा भवति स्वकृतिसाध्यत्वे सति सुखादिसाधनमिति ज्ञानं च तदा पाकादौ प्रवर्त्तते । (१६) नन्वेवं प्रवर्त्तकज्ञानविषयस्य नानात्वेन तच्छक्तस्य विधिप्रत्ययस्य नानार्थत्वप्रसङ्ग इति चेत् । न । सुखत्वादिना अननुगतमिष्टत्वेनानुगतं फलं प्रति साधनत्वस्य यागादेर्लिङादिना बोधनात् । (१७) तथा च फलानामनुगमार्थं फलेच्छा शक्या, न त्विच्छाज्ञानकारणत्वेन । अथैवं सुखादिसाधनत्वेन ज्ञानं प्रवर्तकं तन्न शक्यमननुगमात्, यच्च शक्यमिष्टसाधनत्वं तज्ज्ञानं न प्रवर्त्तकमिति विधेः प्रवर्त्तकता न स्यादिति चेत् । साक्षादेवमेव, किं त्विष्टसाधनं याग इति लिङा बोधिते इष्टाकाङ्क्षायां काम्यत्वेन श्रुतः स्वर्ग एवेष्टत्वेनाधिगम्यते । (१८) तथा च स्वर्गकामसमभिव्याहारात्स्वर्गसाधनं याग इति ज्ञानं प्रवर्तकमुत्पद्यते, एवं च विधिजन्यज्ञानजन्यं ज्ञानं प्रवर्त्तकम् । यत्तु सर्वेषामेव विधेर्न साक्षात्प्रवर्तकत्वं विधिबोधकात्स्वकृतिसाध्यतादेरनवगमात् । स्वेष्टसाधनत्वं चाहमिष्टसाधनयागकः, स्वर्गकामत्वात्, दर्शवाक्यावगतस्वर्गकामव,दित्यनन्तरमर्थात्प्रतीयते, तन्न, यत्रेच्छा तत्साधनमिति शाब्दज्ञानादेव प्रवृत्त्युपपत्तेस्तत्प्रतीतिर्निष्फला ॥

अन्ये तु साधनत्वमात्रं विध्यर्थः । स्वर्गसाधनतालाभस्तु समभिव्याहारात् । इष्टसाधनतापक्षेपि (१९) तस्योपजीव्यत्वात् । तथा हि । यजेतेत्यनेन यागः कृतिसाध्यः साधनं चेति बोधिते साधनस्य साध्याकाङ्क्षायां कामनाविषयत्वेन श्रुतो ऽसिद्धः स्वर्ग एव साधनाकाङ्क्षी साध्यत्वेनावगम्यते, उपस्थितत्वात् । न च यागस्य साधनाकाङ्क्षा, कृतिसाध्यत्वेनैवोपस्थितेः । (२०) अत एव विश्वजिदादौ स्वर्ग एव साध्यत्वेन कल्प्यतइति । (२१)

---

च्छाविषयत्वेन विवक्षितत्वादित्याहुः । भ्रान्तः शङ्कते । (१६) नन्विति । यज्ज्ञान प्रवर्त्तकं स एव विधिः, तच्च नेष्टसाधनत्व किं तु सुखादिसाधनत्वमिति तत्रैव लिङ्शक्तिरिति नानार्थत्वमित्यर्थः । (१७) तथा चेति । एवं च न नानार्थत्वमिति भावः । ननु स्वर्गत्वेन तज्ज्ञानं न स्यात् । तेन रूपेणानुपस्थितेरित्यत आह । (१८) तथा चेति । एवं च स्वर्गत्वेन कामनाविषयत्वेन चोपस्थितस्य स्वर्गस्य लिङुपस्थाप्येष्टत्वेन सहान्वये स्वर्गरूपेष्टसाधनं याग इति शाब्दं ज्ञानमित्यर्थः । न चैवं विधिजन्येत्यादिविरोधः । विधिजन्यं धात्वाख्यातार्थान्वयज्ञानरूपमेवावान्तरवाक्यार्थज्ञानं तज्जन्यमुक्तरूपमहावाक्यार्थज्ञानं प्रवर्त्तकमित्येतत्परत्वात्तस्येति भावः । अत एवानुमानमाशङ्क्य निषेधति । यस्त्वितीति योजयन्ति । तच्चिन्त्यम् । यत्र यदिच्छा स्वरूपसती तत्साधनताज्ञानस्य प्रवर्त्तकत्वेन स्वेष्टसाधनतानुमानस्य निष्फलत्वेपि मत्कृतिसाध्यत्वज्ञानार्थमनुमानमावश्यकमेव, कृतिसाध्यताज्ञानस्य मदंशविषयत्वेनैव प्रवर्त्तकत्वात् । अन्यथा ऽतिप्रसङ्गात् । विधेश्च तत्रासामर्थ्यात् । इदानीं कालविषयतया ऽपि च तस्य प्रवर्तकत्वात् । तदर्थमप्यनुमानमावश्यकं, तदिदमुक्तं, "विधेः स्वकृतिसाध्यतादेरनवगमा"दिति । किं चेष्टस्य पदार्थैकदेशतया स्वर्गस्य चान्यान्वितस्य निराकाङ्क्षतया कथमिष्टस्वर्गयोरन्वयस्तथा च कथमुक्तं महावाक्यार्थज्ञानं प्रवर्त्तकमिति । तस्माद्विधिजन्यमहावाक्यार्थज्ञानजन्यमानुमानिकं मानसं वा ज्ञानं प्रवर्त्तकमित्यर्थः । न चैवं यस्त्वित्यादिना ऽनुमानमाशङ्क्य निषेधप्रतिपादनविरोधः । तस्य स्वेष्टसाधनतानुरोधेनानुमानापेक्षेत्येवं परत्वात्तदिदमुक्तं "यत्रेच्छेति" । एवं च तत्प्रतीतिर्निष्फलेत्यत्र स्वांशप्रतीतिरिष्टांशे या तत्प्रतीतिरित्यर्थः । स्वकृतिसाध्यत्वबोधनार्थं त्वनुमानमावश्यकमेव । ननु मत्कृतिसाध्यतावद् मदिष्टसाधनताज्ञानस्यैव प्रवर्त्तकत्वात्सापि सफलैवेति चेत्,- न । इच्छायाः स्वरूपसत्या एव प्रवर्त्तकत्वे तद्विशेषणमदीयत्वस्यापि स्वरूपसत एव तदुपयोगात् । कृतौ तु नैवम् । न चैवं शाब्दज्ञानादेव प्रवृत्त्युपपत्तेरित्यनेन विरोधः । शब्दप्रयोज्यानुमानिकादिज्ञानादेवेति तदर्थात् । क्वचित्तु सर्वेषामित्यस्य पूर्वं यस्त्विति न पाठः । तन्नेति स्थाने किं त्विति पाठः । तत्र विधिजन्यज्ञानजन्य मानसादिज्ञानं प्रवर्त्तकमित्यत्रोपष्टम्भनार्थं सर्वेषामित्यादि स्वेष्टसाधनत्वं चार्थात्प्रतीयते किं तु तत्प्रतीतिर्निष्फलेत्यत्र तात्पर्यम् । साधनत्वमात्रमित्यत्र मात्रपदेनेष्टांशमात्रव्यवच्छेदः । न तु कृतिसाध्यत्वादेरपीति बोध्यम् ।

(१९) तस्येति । समभिव्याहारस्येत्यर्थः । न चेत्युपलक्षणं' यागस्य यागसाध्यान्वये बाधोपीति द्रष्टव्यम् । (२०) अत एवेति । उपस्थितान्यस्य साध्यत्वान्वयायोग्यत्वादेवेत्यर्थः । अत्रेदमनभिमतिबीजम् । इष्टसाधनताविधिपक्षे स्वर्गकामपदेन स्वर्गस्यैव कामनाविषयत्वेनोपस्थितत्वादिष्टत्वेन स्वर्ग एवान्वीयते इति युज्यते । साधनताविधिपक्षे कामनादेः साध्यान्तरस्यान्वयसंभवाद् न स्वर्गान्वयनियमः । न चान्यत्रोपस्थितं, कामना च न यागसाध्येत्ययोग्यताज्ञानाद् न तथान्वय इति वाच्यम् । कामनाविशेषो यागसाध्यः स्यादिति योग्यतासंशयसंभवात् । स्वर्गान्वये ऽपि तत्संशय एव । ननु प्रवर्त्तकत्वतात्पर्यग्रहात्तदन्यथानुपपत्त्यैव तल्लाभ इति चेद्धन्तैवं तत एवेष्टसाधनत्वमेवाक्षिप्यतां, कृतं साधनत्वांशेपि शक्त्येति । (२१) इष्टेति इष्टसाधनता-

इष्टसाधनताविधिपक्षे "तरति मृत्युं" "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इत्याद्यर्थवादे विधिबोध्येष्टसाधनत्वस्यार्थवादादेवावगमात् कुतो विधिकल्पनमिति चेत् । न । अविनाभावात् । (२२) तथाभूतसाधनत्वस्य विधेयत्वव्याप्यत्वात् । व्यापकानुपलम्भबाधोद्धाराय वा (२३) प्रयोजनाभावान्न तत्कल्पनं तच्चेत्यप्याहुः ॥ यत्तु इष्टसाधनताभिधाने (२४) करणे लिङो ऽनुशासनाद्दर्शपूर्णमासाभ्यामित्यनभिहिताधिकारविहिता तृतीया न स्यादिति । तन्न । (२५) उपायतामात्राभिधानेपि तद्विशेषकरणत्वानभिधानात् । (२६) वस्तुतस्तु अभिहितान्वयलभ्यं यागेष्टसाधनत्वम्, इष्टसाधनतामात्रस्य लिङ-

---

मात्रविधिपक्षइदं बोध्यम् । अन्यथा कृतिसाध्यत्वलाभायैव विधिकल्पनस्यावश्यकत्वात् । अर्थवादाच्च यथेष्टसाधनत्वलाभस्तच्चिन्त्यम् । अविनाभावमेव विवृणोति । (२२) तथाभूतेति । अप्रयोजकत्वाच्च तथा व्याप्तिरिति ये मन्यन्ते तन्मतमाह । (२३) प्रयोजनेति । (२४) करणइति । इष्टसाधनत्वेन करणस्य यागादेर्लिङाभिधानं ततो ऽभेदान्वयधीरित्यभिमानः । (२५) उपायतेति । तज्ज्ञानमात्रादेव प्रवृत्त्युपपत्तेः । तथा चानभिहितकरणत्वाभिधानाय तृतीयेत्यर्थः । ननूपायत्वेनापि करणस्य यागादेरभिधानादनभिहिताधिकारविहिता तृतीया न स्यादेवेत्यरुचेराह । (२६) वस्तुतस्त्विति । यागादेर्धातुलभ्यत्वादनन्यलभ्यस्यैव शब्दार्थत्वात्केनापि रूपेण न लिङा करणाभिधानमिति भावः । यद्यपि वाक्यार्थतया तदभिधानमस्त्येव तथापि पदार्थतया तदभिधानं नेत्येवानभिहितत्वार्थ इति कुसुमाञ्जलिप्रकाशे स्फुटम् । एवं च यागेष्टसाधनत्वयोराश्रयाश्रयिभाव एवान्वय इति बोध्यम् । न चैवमिष्टसाधनत्वमिष्टसाधनत्वत्वेन शक्यं वाच्यम्, तच्चेष्टसाधनत्वघटितं तदितरावृत्तित्वघटितं चेति लाघवादिष्टसाधनमेव तत्त्वेन शक्यम् अभेद एवान्वय इति वाच्यम् । प्रकृतिप्रत्ययार्थयोरभेदान्वये ऽव्युत्पत्तेः । किं चेष्टसाधनत्वस्य शक्यत्वे तद्धर्मोपि शक्य इत्यत्र मानाभावः । नहि यच्छक्यं तद्धर्मोप्यवश्यं शक्य इति नियमः, शक्यानन्त्यापत्तेः । शक्यस्यैवोपाधिविशेषस्यैकत्वे तदनुगमार्थमपि तदनभ्युपगमात् । गवादिपदे तु व्यक्तेरनुगमार्थं गोत्वादेः शक्यत्वम् । न चैवं लिङ्पदान्निर्विकल्पकत्वापत्तिः । उपाधिविशेषस्य शक्यस्य नानापदार्थघटितत्वेन सविकल्पकमात्रविषयत्वात् । वस्तुतः संख्याभिधानानभिधानं प्रयोजक,मन्यथा कर्तुरवाच्यत्वेनानभिहितत्वाद्देवदत्तः पचतीत्यत्र प्रथमा न स्यात् । एवं च लिङा करणसंख्यानभिधानात्तृतीया स्यादेवेति तत्त्वम् । शङ्कितमप्यधिकाभिधानायाह ।

थेत्वात् । (२७) नव्यास्तु चिकीर्षाद्वारा ज्ञानस्य कृतौ हेतुता, चिकीर्षा च कृताविच्छा, सनः प्रकृत्यर्थगोचरेच्छावाचित्वात्, विवक्षादिवत्, न तु कृतिविषयपाकादिविषयकृतिसाध्यत्वप्रकारकेच्छावाचित्वं, पाकादेः प्रकृत्यनभिधेयत्वात् । नहि कृतिवाचकस्य तद्विषयवाचकत्वं, करोतीत्युक्ते तद्विषयसंशयात् । एवं च कृताविच्छेष्टसाधनताज्ञानात्तत्साध्येष्टज्ञानाद्वा, वृष्ट्यादौ तथा कल्पनात् । यदा च कृताविच्छा तदा सैव चिकीर्षा, अन्यच्च इच्छामात्रम् । न तु कृतिसाध्यत्वज्ञानात् । कृतौ कृतिसाध्यत्वाभावात् । अथ पाकं कृत्यासाधयामीतीच्छा ऽनुभवसिद्धा,ऽनुभवापलापे उपेक्षणीयत्वापत्तेः । सा च कृतिसाध्यताज्ञानात् । सा च चिकीर्षा पदाप्रतिपाद्यापि कृतिहेतुः, समानविषयत्वात्, न तु कृतीच्छा कृतिहेतुः, कृतिविषयाविषयत्वादिति चेत् । अस्ति तावत्पाककृताविच्छा वृष्टीच्छावत् । अस्ति च कृतिसाध्यत्वप्रकारिकेच्छा पाके, तथापि कृतीच्छैव कृतिकारणं (२८) लाघवात्, न तु कृतिसाध्यत्वप्रकारिकेच्छा गौरवात् । धात्वर्थानुरक्ते कृतिस्वरूपे इच्छैव च नोदेतीति चेत् । न । पाकादिकृतीष्टसाधनताज्ञानात् पाककृताविच्छा ततः कृतिरित्यभ्युपगमात् । (२९) न वा च गतिप्रवृत्त्योः समानविषयत्वमुभयसिद्धं, तस्यैव विचार्यत्वात् । (३०) कथं तर्हि पाकं कृत्या साधयानीतीच्छा (३१) यथा वन्हिसाध्यत्वेनेष्टसाधनत्वावगमाद्वन्हिना पाकं साधयानीतीच्छा । तथा

---

(२७) नव्यास्त्विति । तथा च कृतिसाध्यताज्ञानं न प्रवर्त्तकं चिकीर्षाजनकज्ञानस्यैव तथात्वादिति भावः । (२८) लाघवादिति । कृतिसाध्यत्वप्रकारकेच्छापेक्षया कृतीच्छात्वस्य कारणतावच्छेदकत्वस्य लघुत्वादिति भावः । ननूक्तं भिन्नविषयत्वात्कृतीच्छा न हेतुरित्यत आह । (२९) न वेति । तथा चोक्तलाघवात् कृतीच्छैव हेतुरिति भावः । पृच्छति । (३०) कथं तर्हीति । यदि कृतिसाध्यताज्ञानं न चिकीर्षाहेतुरिति शेषः । उत्तरम् । (३१) यथेति । यद्यप्येतच्चिकीर्षायाः कृतिसाध्यत्वज्ञानजन्यत्वेपि नव्यमते न क्षतिः, तत्र कृतीच्छारूपचिकीर्षाहेतुत्वाङ्गीकारेण कृतिसाध्यत्वज्ञानस्य तथाप्यप्रवर्त्तकत्वात्, कृतीष्टसाधनताज्ञानादेव तदुपपत्तेः, तथापि कृतिसाध्यत्वप्रकारकेच्छायाः प्रवर्त्तकत्वेपि कृतिसाध्यताज्ञानं न कारणमिष्टसाधनताज्ञानादेव तस्याप्युपपत्तेरिति दर्शयितुमिदमुक्तमिति ध्येयम् । समानविषयत्वेन हेतुत्वमभ्युपेत्याह ।

कृतिसाध्यत्वेनेष्टसाधनत्वात्पाकस्य पाकं कृत्या साधयामीतीच्छा, ऽन्यथा तत्तदुपायसाध्यत्वेनेच्छा पाकादौ तदुपायसाध्यत्वप्रकारकज्ञानात्स्यादित्यनन्तकारणकल्पना स्यात्। मम तूपायेच्छायामिष्टसाधनत्वज्ञानमेव हेतुः। (३२) क्रियाद्वारा कृतेरिष्टसाधनत्वज्ञाने क्रियाया अपीष्टसाधनत्वं विषय इति कृतीच्छा भवन्ती क्रियाविषयापि भवतीति ज्ञानेच्छाप्रयत्नानां समानविषयतापि। (३३) अत एव पाकं चिकीर्षतीति चिकीर्षाविषयतया पाकः प्रतीयते। (३४) यद्वा इच्छाविषयतया पाकः प्रतीयते इति तस्य कर्मता। ग्रामं जिगमिषति शत्रुं जिघांसतीत्यत्र (३५) ग्रामादेरिव। नहि ग्रामादाविच्छा, सिद्धत्वात्। अत एव भोगे सुखे च चिकीर्षा, तदनुकूलकृतेरिष्टहेतुत्वात्। अन्यथा कृतिसाध्येष्टसाधनतापत्ते तच्चिकीर्षा (३६) सामग्र्यन्तरं कल्प्येत। (३७) एवं संध्यावन्दनं दुःखसाधनावन्दनाभावरूपत्वेनेष्टं तत्साधनं कृतिरिति लिङर्थः। अन्यथा कृतिर्न कृतिसाध्या संध्यावन्दनं च (३८) नेष्टसाधनमिति कस्य कृतिसाध्यत्वे सतीष्टसाधनत्वं विध्यर्थः स्यात्। अत एवैकप्रत्ययाभिधेयत्वप्रत्यासत्तेरन्तरङ्गतया विधिप्रत्ययाभिधेयेष्टसाधनत्वस्य कृतावेवान्वयो न प्रकृत्यर्थे, तथैव चिकीर्षाकारणज्ञानजनकत्वात् (३९) प्रकृत्यर्थस्य च कृतौ विषयत्वेनान्वय इति। उच्यते। (४०) वन्हिसाध्यत्वेन कृतिसाध्यत्वेन वा पाकस्यौदनसाधनतेत्युक्तम्। कथं तर्हि वन्हिना पाकं साधयामीतीच्छेति चेत्। इष्टसाधनत्वेन ज्ञाते यत्र यत्साध्यत्वं ज्ञायते तत्र तत्साध्यत्वेनेच्छा भवतीति यथेष्टसाधनत्वेन ज्ञाते पाके वन्हिसाध्यत्वज्ञानाद्वन्हिना साधयामीतीच्छा एवं कृतिसाध्यत्वेनावगते इष्टस्य साधनताज्ञानात् कृत्या साधयामीतीच्छा, (४१) तथा चेष्टसाधनत्वे कृतिसाध्यत्वे ज्ञाते कृतिसाध्यत्वप्रकारिकेच्छा न त्विष्टसाधनताज्ञानमात्रादिति॥

आचार्यास्तु प्रवर्तकमिष्टसाधनताज्ञानमेव, लिङर्थस्त्वाप्ताभिप्रायः। (४२) लाघवात्। (४३) पाकं कुर्याः पाकं कुर्यामित्यत्र विधिलिङः संबोध्यस्वकर्तृकक्रियेच्छाभिधायकत्वेनाज्ञाप्रार्थनाशंसनादिलिङो वक्रादीच्छाभिधायकत्वेन

---

(३२) क्रियेति। (३३) अत एवेति। यत एव पाकोऽपि चिकीर्षाविषय इत्यर्थः। अन्यथा कृतेरेवेप्सितत्वात्पाकस्य तदभावात्कर्मता न स्याद् इति भावः। पाकस्येच्छाविषयत्वाभावेपि कर्मत्वमुपपादयति। (३४) यद्वेति। इच्छाविषयः कृतिस्तद्विषयतयेत्यर्थः। (३५) ग्रामादेरिति। तत्रापीच्छाविषयगमनादिविषयतयैव कर्मत्वमित्यर्थः। (३६) सामग्र्यन्तरमिति। एतच्च यन्मते भोगे नेच्छा तत्र बोध्य,मन्यथा भुक्तिरूपेष्टसाधनत्वकृतिसाध्यत्वयोः सुखेऽवैकल्पाद् न तत्र सामग्र्यन्तरं स्यादिति। लोकवद्वेदेपि कृतीष्टसाधनताज्ञानमेव प्रवर्त्तकमित्याह। (३७) एवं चेति। (३८) नेष्टसाधनमिति। काम्यत्वे नित्यतात्यतेरिति भावः। ननु कृतीष्टसाधनताज्ञानाद्यत्र क्वचित्प्रवर्त्ततेत्यत आह। (३९) प्रकृत्यर्थस्य चेति। तथा च संध्योपासनयागादिविषयककृतेरिष्टसाधनतावगमाद् नान्यत्र प्रवर्त्ततइति भावः। यद्वा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमुपपादयति। प्रकृत्यर्थस्य चेति। इष्टसाधनत्वस्य च कृतिद्वारैवान्वय इतिभावः। दृष्टान्तं दूषयन्नेव दार्ष्टान्तिकं दूषयति।

(४०) वह्नीति। (४१) तथा चेति। एवं च कृतिसाध्यत्वमपि प्रवर्त्तकं विध्यर्थ इति भावः। नित्येपीष्टसाधनत्वमुपपादितमेव। नन्वस्तु कृतिसाध्यत्वप्रकारिकेच्छायाः कृतिसाध्यत्वज्ञानजन्यत्वं, तथापि सा न कृतिहेतुः, किं तु लाघवात् कृतीच्छैव, सा च कृतीष्टसाधनताज्ञानादेवोपपद्येति कृतिसाध्यताज्ञानं न प्रवर्त्तकं, कृतिहेतुचिकीर्षाजनकज्ञानस्यैव तथात्वादित्यत्र नव्यमते किमपि नोत्तरमुक्तमिति चेत्। अत्राहुः। पाकादेरिष्टसाधनतां विना तत्कृतेस्तद्बोधासंभवे तत्प्राथमिकत्वे इष्टसाधनीभूतपाकजनिका कृतिरिति ज्ञानएव तत्कृतिसाध्यत्वेष्टसाधनत्वयोः प्रत्यये तेनैव तद्धेतोरिति न्यायेन प्रवृत्तौ संभवन्त्यां न तत्कृतिगोचरेष्टसाधनत्वपर्यन्तापेक्षा गौरवात्। न च पाकजनिका कृतिरिति ज्ञानेपि पाकः कृतिसाध्य इति ज्ञानालाभः। समानवित्तिवेद्यतया तल्लाभादिति। तच्चिन्त्यम्। उक्तलाघवेन कृतीच्छायाः प्रवर्त्तकत्वे सिद्धे तदुपपादकत्वेन तावत्पर्यन्तापेक्षाया युक्तत्वात्। वस्तुतः समानप्रकारकज्ञानस्यैव विरोधितया पाककृतिरिष्टसाधनमिति ज्ञानेपि पाकः कृत्यसाध्य इति ज्ञानसंभवात्। तेन च प्रवृत्तिप्रतिबन्धात् कृतिसाध्यताज्ञान प्रवर्त्तकम्। जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वात्। एवं च तज्जन्यकृतिसाध्यत्वप्रकारिकेच्छैव हेतुः। गौरवं च प्रामाणिकमेव।

(४२) लाघवादिति। अभिप्रायविधिपक्षइत्यादिना वक्ष्यमाणादित्यर्थः। नन्वाप्तत्वनिर्वचने गौरवमित्युपपादकान्तरमाह। (४३) पाकमिति। यागो यागयत्नो वेति मतभेदेन। तत्र कृतिसाध्यतयेति न यत्नान्वयी। एवमग्रेपीति बोध्यम्। एवं च कृतिसाध्यत्वमपि शक्यमिति ध्येयम्। ननु यत्त्वतत्त्वं

लिङ्मात्रस्येच्छावाचकत्वकल्पनाच्च । एवं स्वर्गकामो यजेतेत्यस्य स्वर्गकामस्य कृतिसाध्यतया यागो यागयत्नो वा ऽऽप्तेष्ट इत्यर्थः । ततो यो व्यापारो यस्य कृतिसाध्यतया यद्व्यापारविषयकः प्रयत्नो वा यस्याप्तेनेष्यते स तस्य बलवदनिष्टाननुबन्धीष्टसाधनमिति व्याप्तिग्रहाद् यागस्येष्टसाधनत्वमनुमिनोति । (४४) तथाहि । यागो मदिष्टसाधनं, मत्प्रयत्नविषयतया ऽऽप्तेनेष्यमाणत्वात् । तथा मत्पित्रा मत्प्रयत्नविषयतयेष्यमाणमद्भोजनं मदिष्टसाधनं तथा चेदं तस्मात्तथा । एवं न कलञ्जं भक्षयेदित्यस्य मम कलञ्जभक्षणप्रयत्नो नाप्तेच्छाविषय इत्यर्थः । ततः (४५) कलञ्जभक्षणं मम बलवदनिष्टसाधनं, मदिष्टसाधनत्वे सत्या(४६)प्तेन (४७) मत्प्रयत्नविषयतया ऽनिष्यमाणत्वात्, यथा मत्पित्रा मत्प्रयत्नविषयतया ऽनिष्यमाणं मधुविषसंपृक्तान्नभोजनं मम बलवदनिष्टसाधनं, तथा चेदं, तस्मात्तथा, स चाप्तो वेदव्याख्याता भगवानी(४८)श्वर एव । यस्तु वेदे पौरुषेयत्वं नोपैति तं प्रति विधिरेव तावद्गर्भइव श्रुतिकुमार्याः पुंयोगे प्रमाणम् । न तर्हि लाघवं तात्पर्यगौरवादीश्वराद्यनन्तकल्पनादिति चेत् । न । लाघवादिनेच्छाबोधकत्वेन लिङः प्रमाणसिद्धत्वेन फलमुखगौरवस्यादोषत्वात् । न तु कर्तुरस्मरणं बाधकं, प्रागेव निरासात् । (४९) तृप्तिकामनया विषभक्षणप्रवृत्तस्य विषभक्षणं तत्कृतिसाध्यतया नेश्वरेणेष्यते । ततो विषभक्षणस्येश्वरेच्छाविषयत्वेपि न तेन व्यभिचारः । यद्वा यत्कामकृतिसाध्यत्वेन यो व्यापार आप्तेनेष्यते स तस्येष्टसाधनं विषभक्षणं च तृप्तिकामकृतिसाध्यत्वेन नेश्वरेच्छाविषयो मानाभावात् । (५०) अत एव न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणं तृप्तिकामनया भक्षणप्रवृत्तस्य कृतिसाध्यत्वेनाप्तेच्छाविषयो नेति तस्येश्वरेच्छाविषयत्वेपि विशिष्टनिषेध उपपद्यते । अभिप्रायविधिपक्षे (५१) बलवदनिष्टाननु-

---

त्वाननुगतमिति नानुमानमत आह । (४४) तथा हीति । (४५) कलञ्जभक्षणमिति । सत्यन्तमुदासीने व्यभिचारवारणाय । मदनाप्तेन मदिष्टसाधनस्यापि मत्कृतिविषयतया ऽनिष्यमाणत्वाद्व्यभिचार इत्यत आह । (४६) आप्तेनेति । जगत एवेश्वरेच्छाविषयत्वेनाप्रसिद्धिभयादाह । (४७) मत्प्रयत्नविषयतयेति । ईश्वरस्य न तत्प्रकारिका तत्रेच्छेति भावः । तात्पर्यगौरवमेव विवृणोति । (४८) ईश्वरेति । आद्यहेतौ प्रयत्नविषयतयेत्यस्य फलं दर्शयति । (४९) तृप्तीति । द्वितीयानुमानेपि तत्फलमाह । (५०) अत एवेति ।

(५१) बलवदिति । तथा च यागो बलवदनिष्टाननुबन्धीष्टसाधनमिति साध्य,मत एव तद्गर्भव्याप्त्युपदर्शनं प्रागुक्तं संगच्छतइति भावः । अत्रेदमनभिमतिबीजम् । भ्रमेण तृप्तिकामकृते विषभक्षणे तथापि व्यभिचार एव, तस्य तृप्तिकामकृतिसाध्यत्वेनेश्वरेच्छाविषयत्वात् । न चात्र मानाभावः । वस्तुतस्तत्र कृतिसाध्यत्वे तत्प्रकारकतदिच्छाया वज्रलेपत्वात् । तदिच्छायाः सकलप्रकारकत्वात् । अन्यथा घटस्य घटत्वेन तदिच्छाविषयत्वे किं मानम् । न च बलवदनिष्टाजनकत्वमपि लिङ्गविशेषणं, भ्रमकृतजलताडनादौ तथापि व्यभिचारात् । उक्तगत्या तस्यापि तत्कृतिसाध्यत्वेनेश्वरेच्छाविषयत्वात् तस्यानुमानिकत्वाभ्युपगमे विधिवाक्यादनुपस्थितेश्च । न च प्रकारान्तरोपस्थितस्यैव तस्य लिङ्गविशेषणत्वम् । कृतिसाध्यत्वस्याप्यशक्यत्वापत्तेः, तद्वदेव तस्यापि लिङ्गविशेषणत्वसंभवात् । एतेन यद्व्यापारविषयः प्रयत्नो यस्याप्तेनेष्यतइत्यादिव्याप्तौ व्यभिचारो बोध्यः । एवं च भ्रमकृते कलञ्जभक्षणे विशिष्टनिषेधानुपपत्तिरेव, उक्तगत्या तस्यापि कृतिसाध्यत्वेनेश्वरेच्छाविषयत्वादिति दिक् ॥ अन्ये तत्रानुमितेर्व्यापकतावच्छेदकप्रकारकत्वादिष्टसाधनत्वप्रकारकानुमितावपि प्रवर्त्तकस्वर्गसाधनताज्ञानमितो न भवतीत्यस्वरसमाहुः ॥

विधिस्त्वनेकधा भिद्यते । क चिक्रियाविधिः । यथा "व्रीहिभिर्यजेते"ति । क चित्संबन्धविधिः । यथा "ऽऽग्नेयोष्टाकपालो भवती"ति । क चिद्विशिष्टविधिः । यथा "न जीर्णमलवद्वासाः स्नातकः स्या"दिति । अत्र हि नानूयाजेष्वितिवत् पर्युदासलक्षणया जीर्णमलवदन्यत्वविशिष्टवासोविधिरेवायमनन्यगतिकत्वात् । नह्यत्र जीर्णत्वमलवत्त्वाभ्यां विशिष्टं वासो निषिध्यते । विशिष्टवासोनिषेधस्य विशेष्यवासोनिषेधेप्युपपत्तेर्नग्नस्याप्यन्वयापत्तेः । एकैकविशिष्टस्योपादानापत्तेश्च । नाप्येकैकविशिष्टमेव निषिध्यते । वाक्यभेदापत्तेः । विशेषणमात्रनिषेधेप्येवम्, अत एव "सुवाससा भवितव्य"मिति श्रुतिरत्र मूलमिति भट्टोक्तमपि युज्यते । निषेधकत्वे विधायकत्वमूलता न स्यादिति । क चिद्गुणविधिः । यथा "सितासिते स्नाया"दित्यत्र, नित्यविधिप्राप्तएव स्नानद्वये फलार्थं देशरूपो गुणो विधीयते । क चित्कालरूपगुणविधिः । यथा "मध्यान्हे एकोदिष्टं कुर्वीते"ति । क चित्कारकरूपगुणविधिः । यथा "गोदोहेन पशुकामस्य" ति क चित्कालविशिष्टकर्मविधिः । यथा "ऽपरपक्षश्राद्धं कुर्वीत" ति । क्वचित् क्रमविधिः । यथा "दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेते"ति । क चिन्नियमविधिः ।

बन्धित्वमानुमानिकम्, इष्टसाधनताविधिपक्षे तु तदपि शक्यमिति गौरवमिति ॥

यथा "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" इति । अत्र हि न धनार्जनं विधीयते, रागप्राप्तत्वात् । नाप्यर्जनस्य याजनाद्यन्वयः, कृष्याद्यन्वयवत्तस्यापि रागप्राप्तत्वादेव । अप्राप्तस्यैव विधेयत्वात् । तथा च प्राप्तेतरोपायनिषेध एवात्र विधेयः । क्वचित् परिसंख्याविधिः । यथा "पञ्च पञ्चनखा भक्ष्या" इत्यत्र । नन्वत्रापि शशादीनां पञ्चानां भक्षणं रागप्राप्तमेवेति तदितरपञ्चनखभक्षणनिषेध एव विधेय इति नियमपरिसंख्ययोरन्ययोगव्यवच्छेदविधायकत्वादभेद इति चेत्, अत्र वदन्ति । यत्र क्रियायां विकल्पेन कारकान्वयस्तत्र नियमः । यथा धनार्जनम् । नह्येकस्यामेवार्जनक्रियायां याजनप्रतिग्रहादयो मिलिता अन्वीयन्ते । याजनप्रतिग्रहाभ्यामेकस्य धनार्जनस्यासंभवात् । परिसंख्यायां तु नैवम् । शशकादिमांसेन निर्मितस्यैकस्यामेव भक्षणक्रियायामन्वयसंभवात् । तदुक्तम् ॥

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्यानमुच्यते ॥

इति । यत्तु तादृशार्जने विकल्पेनोपायत्रयसंबन्धे शब्दतः प्रतीयमाने कृष्यादीनामनन्वयोऽर्थात्सिध्यति । नहि येषामेकान्वये परानन्वयनियमस्तेषां समुच्चयः संभवति,तथा चात्रेतरोपायव्युदास एव शब्दतात्पर्यं,मप्राप्तत्वात् । किं तु न तत्र शब्दः प्रवर्त्तते, अर्थलभ्यत्वात् । वह्निजिज्ञासुं प्रति धूमोस्तीति शब्दवत्, परिसंख्यायां तु नैवं, तत्र भक्षणक्रियायां पञ्चपञ्चनखान्वये प्रतीते ऽर्थादितरपञ्चनखान्वयो न व्युदस्यते, उक्तगत्या तत्र समुच्चयसंभवात् । तथा चानन्यगत्या पञ्चनखभक्षणनिषेधो ऽत्र वाक्यार्थ एव । एवं च भक्ष्यपञ्चपदयोर्विरोधलक्षणा । तेन पञ्चेतरे पञ्चनखा न भक्ष्या इति वाक्यार्थः सिध्यति । तथा चोपस्थितपदार्थपरित्यागादनुपस्थितपदार्थकल्पनादभाववविधित्वाच्च नियमापेक्षया दोषत्रयवती परिसंख्या जघन्येति । तत्रेदं चिन्त्यम् । याजनादिजन्यतत्तदर्जनेतरोपायव्युदासस्यार्थलभ्यत्वेपि कृष्यादिभिर्नार्जयेदित्यस्याप्राप्तेः । अनन्यगत्या नियमेपि निषेधस्यैव वाक्यार्थत्वौचित्यादन्यथा कृष्यादिभिरर्जयेदेव तज्जन्यार्जने तत्संबन्धव्युदासाभावादिति ।

॥ इतिविधिवादः ॥

## ॥ अथ वेदान्तसूत्रशैवभाष्यद्वितीयाध्यायस्य ॥

॥ चतुर्थपादारम्भः ॥

॥ तथा प्राणाः ॥ १ ॥

पूर्वत्र भूतानि ब्रह्मण उत्पद्यन्त इति निरूपितम्, जीवो नित्य इति । इह भूतानामिवेन्द्रियाणां ब्रह्मण उत्पत्तिः, उत जीववन्नित्यत्वम्, इति विचार्यते । यथा नित्यत्वाच्च जीवः समुत्पद्यते । तथेन्द्रियाण्यपि । जीववदमीषामपि नित्यत्वे श्रुतिसंभवात् । तथाहि, "असद्वा इदमग्र आसीत्" । "ऋषयो वाव ते अग्रे सदासत" । तदाहुः । "के ते ऋषय इति । प्राणा वा ऋषय" इति । प्रलयकाले प्राणानां स्थितिराम्नायते । प्राणास्ततो ब्रह्मणो नोत्पद्यन्ते ॥ १ ॥

इति प्राप्ते ब्रूमः ॥

॥ गौण्यसंभवात् तत्प्राक्श्रुतेश्च* ॥ २ ॥

न प्राणानां सृष्टेः प्रागवस्थितिः । किंतु परमेश्वरस्यैव । "सदेव सोम्येदमग्र आसीत्" इति श्रुतेः । ऋषिशब्दः प्राणशब्दश्च परमेश्वर एव वर्तते । तस्य बहुत्वासंभवात् । बहुवचनश्रुतिस्तत्र गौणी । ततो ब्रह्मण एव प्रागवस्थितिर्नेन्द्रियाणाम् ॥ २ ॥

युक्त्यन्तरमाह ॥

॥ तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

परमेश्वरसृष्टिपूर्वकत्वादितरेषां नामरूपयोगस्य, तदानीं प्राणशब्दो नेन्द्रियविषयः । ततो ब्रह्मैव पूर्वभावीति ॥ ३ ॥

॥ सप्तगतेर्विशेषितत्वाच्च ॥ ४ ॥

पूर्वत्र ब्रह्मकार्यतया सिद्धानीन्द्रियाणि कियत्संख्यानीति संदेहे सप्तेति पूर्वः पक्षः । कुतः ।

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" ॥

इति सप्तानामेवावगतेः । "सप्त प्राणाः प्रभवन्ति" इत्यादिश्रुतौ सप्तेति विशेषितत्वाच्च ॥ ४ ॥

इत्येवं प्राप्तेऽभिधीयते ॥

॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ५ ॥

न सप्तैवेन्द्रियाणि । हस्तादयोऽपीन्द्रियाणि । जीवे देहान्तः स्थिते उपकरणत्वाविशेषात् । अपित्वेकादश । "दशेमे पुरुषे प्राणा आत्मैकादशः" ।

"इन्द्रियाणि दशैकं च"

इति श्रुतिस्मृतिभ्याम् । बुद्ध्यादीनां न पृथगिन्द्रियत्वम् । किंतु ते मनोवृत्तिभेदा एव । सप्तानां गतिश्रवणं विशेषणं च । तेषां प्राधान्यात् । अतो न सप्तेन्द्रियाणि, किंत्वेकादश ॥ ५ ॥

॥ अणवश्च ॥ ६ ॥

तानीन्द्रियाणि विभूनि किमणूनीति संदेहे चक्षुरादीनां दूरगतवस्तुग्रहणसामर्थ्याद्विभूनीति प्राप्तेऽणूनीत्युच्यन्ते । क-

* शंकरमते गौण्यसंभवात् इत्येकं तत्प्राक्श्रुतेश्च इत्यपरमिति सूत्रद्वयम् । चकाररहितपाठोऽपि, इति ।

थम्। "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति श्रवणात्। विभुत्वे हि तेषां न गतिः संभवति। चक्षुरादेर्दूरगतवस्तुग्रहणसामर्थ्यं न विभुत्वेन, किंतु तेजोरूपत्वादणुत्वाच्च शीघ्रगतिमत्त्वात्। तस्मादिन्द्रियाण्यणून्येव ॥ ६ ॥

॥ श्रेष्ठश्च ॥ ७ ॥

"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति सर्वप्राणश्रेष्ठतया श्रूयमाणः पञ्चवृत्त्यात्मा प्राणवायुर्ब्रह्मण उत्पद्यते न वेति संशये न[1]जायते प्राणवायुः। नासदासीये सूक्ते "आनीदवातम्" इति सृष्टेः प्रागपि प्राणचेष्टाश्रवणात् ॥ ७ ॥

इति प्राप्ते वदामः ॥

प्राणवायुरपि जायत एव। आनीच्छब्दो न प्राणव्यापारं वक्ति। अवातमिति तन्निषेधात्। किंतु ब्रह्मसत्त्वमेव ब्रूते। अतो न प्राणानादित्वं संभवति। भवति त्वयं प्राणवायुरुत्पत्तिमान्।

स तु।

"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च।

इति तन्त्रान्तरोक्तरीत्येन्द्रियवृत्तिभ्यो वायुः "यः प्राणः स वायुः" इति श्रुत्या भूतवायोर्वा न[2] पृथग्भूत इत्यत आह ॥

॥ न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥

पञ्चवृत्तिः प्राणोऽयं न वायुः। नचेन्द्रियवृत्तिः।

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।

खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ॥

इति श्रुत्या पृथगुपदेशात्। ततो वायोरिन्द्रियवृत्तिभ्यश्चान्य एव प्राणः ॥ ८ ॥

वायोरन्यत्वेऽपि न तस्य भूतान्तरत्वमित्याह ॥

॥ चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥

वायोः पृथग्भूतोऽप्ययं[3] नाग्न्यादिवद् भूतान्तरम्। किंतु वायुरेव देहधारणयोग्यतामापद्यते स्वयं परमेश्वराधारः। "भर्ता सन् भ्रियमाणो बिभर्ति, एको देवो बहुधा निविष्टः, त्वमेकोऽसि बहूननुप्रविष्टः, प्राणानां ग्रन्थिरसि, रुद्रो मा विशान्तक" इत्यादिश्रुतेः। किंच, अयं चक्षुरादिवज्जीवोपकरणम्। प्राणसंवादादिषु चक्षुरादिभिः सहोपदेशात्। तत्तुल्योपकारमुख्यत्वादिभ्यश्च ॥ ९ ॥

॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥

१—यः। एवं सति न इति पा०।

२ संभवति। अयं प्राणवायुरिन्द्रियवृत्तिभ्यो न भूतवायोर्वा इति पा०।

३—तोऽयं इति पा०।

अकरणमक्रिया[1], न जीवोपकारकजीवनक्रिया, तत्त्वाच्च दोषः। यतः श्रुतिरेव देहेन्द्रियाद्यशैथिल्यकरणं वायुरिति दर्शयति प्राणसंवादे, "यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते, स वः श्रेष्ठ" इति प्रजापतिवचनानन्तरं वागाद्युत्क्रमणेऽपि देहस्येन्द्रियाणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे देहेन्द्रियशैथिल्याभिधानात् ॥ १० ॥

पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥ ११ ॥

प्राण एक एव स्ववृत्तिभिः पञ्चभिः प्राणापानादिसंज्ञाभेदभाग्भवति। यथा कामादिभिर्मन एकमेव। अतः प्राण एक एव भूतेन्द्रियवृत्तिव्यतिरिक्तो जीवोपकारक इति सिद्धम् ॥ ११ ॥

अणुश्च ॥ १२ ॥

पञ्चवृत्तिरयं प्राणवायुरिन्द्रियवदणुर्विभुर्वेति संदेहे सति नाणुरयम्। "समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण, प्राणे सर्वं प्रतिष्ठितं, सर्वं ह्येदं प्राणेनावृतम्"। इति श्रुतेः सर्वाधारकतया[2] व्यापी प्राण इति प्राप्ते ब्रूमः। अणुरेव प्राणवायुः। प्राणमनूत्क्रामन्तमिति तस्य गतिश्रवणात्। आधिदैविकस्य हिरण्यगर्भप्राणस्य समष्टिरूपस्य विभुत्वं, न व्यष्टिरूपस्येति[3] न विरोधः। तस्मादणुरेव प्राणः पञ्चवृत्तिरिति ॥ १२ ॥

॥ ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवताशब्दात्* ॥ १३ ॥

इह "आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" इत्यादिश्रुत्या चक्षुरादीनामादित्याद्यधिष्ठानं श्रूयते जीवस्य रूपादिग्रहणाय। तदधिष्ठानमादित्यादीनां परमेश्वरायत्तमुत स्वतन्त्रमिति संशये "आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" इत्यादिषु स्वातन्त्र्यश्रवणादादित्याद्यधिष्ठानं न परमेश्वरायत्तमिति पूर्वः पक्षः। सिद्धान्तस्तु परमेश्वरायत्तमिन्द्रियाद्यधिष्ठानमादित्यादीनाम्। कुतः। "य आदित्यमन्तरो यमयति" "य आत्मानमन्तरो यमयति" इत्यादिश्रवणात्। परमेश्वरसंकल्पपूर्वकत्वाच्च सर्वप्रवृत्तीनाम्। तस्मादिन्द्रियाद्यधिष्ठानं जीवस्यादित्यादीनां च† परमेश्वरायत्तमेव ॥ १३ ॥

तस्य च नित्यत्वात् ॥ १४ ॥

१ करणं क्रिया इति पा०।

२ सकलान्तर्वर्तितया इति पा०।

३—व्यष्टिवायोरिति इति पा०।

* शंकरमते ज्योतिराद्यधिष्ठानं तु तदामननात् इत्येकं प्राणवता शब्दात् इत्यपरमिति सूत्रद्वयम्।

† अस्मिन् व्याख्याने पुस्तकान्तरे आदित्यशब्दस्थाने अग्निशब्दो बोध्यः सर्वत्रैवेति।

सर्वस्य च परमेश्वरनियम्यत्वं नित्यमेव । अतोऽपि परमेश्वरसंकल्पायत्तमेवैषामधिष्ठातृत्वम्[1] ॥ १४ ॥

॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

इह पूर्वोक्तानि वागादीनीन्द्रियाणि प्राणवृत्तिभ्यो भिन्नानि न वेति संशये तानि मुख्यप्राणवृत्तय एव । "एतस्यैव सर्वे रूपमभवन्" इत्यादिना तेषां प्राणरूपत्वश्रवणात् । वागादीनामुपरमरूपे मरणे प्राणो गत इति व्यवहारसामान्याच्च । तस्मात् प्राणादनन्यानीन्द्रियाणीति प्राप्ते ब्रूमः । मुख्यप्राणादन्यान्येवेन्द्रियाणि । श्रेष्ठादन्यत्र ये प्राणास्त इन्द्रियाणीति चक्षुरादिष्वेव,

"इन्द्रियाणि दशैकं च"

इत्यादिष्विन्द्रियव्यपदेशात्[2] ॥ १५ ॥

॥ भेदश्रुतेर्वैलक्षण्याच्च* ॥ १६ ॥

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति प्राणेन्द्रियाणां भेदेनोत्पत्तिः श्रूयते । इन्द्रियाद्युपरमेऽपि प्राणवृत्त्यनुपरमरूपं वैलक्षण्यं च दृश्यते । अतोऽपि प्राणवृत्तिभ्यो भिन्नानीन्द्रियाणीति ॥ १६ ॥

॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत् कुर्वत उपदेशात् ॥ १७ ॥

पूर्वमाकाशादीनां भूतानां सह सदाशिवादिभिरधिष्ठातृभिः परमेश्वरादुत्पत्तिरभिहिता । तदेवं तेषु जातेषु ततो देवानां नामरूपादिक्लृप्तिस्तस्मादेव मूलकारणादुतान्यस्मादिति संदेहः । एवं सति "तत् तेज ऐक्षत, बहु स्यां प्रजायेय" इति, "तदपोऽसृजत" इति श्रुतेस्तेजोऽभिमानी रुद्रो यः सृजति तासु वीर्यं क्षिपति तासु सत्त्वसहितो विष्णुरभिवर्तते इति । "आपो नारा", "नरो रुद्र" इति श्रुतिदर्शनाद्रुद्रसंभूताप्स्वायतनत्वेन विष्णोर्नारायणसंज्ञा । "ता आप ऐक्षन्त", "ता अन्नमसृजन्त" इति श्रुतेस्तदभिमानी नारायणोऽन्नशब्दवाच्य पृथिवीमुत्पादयति । तत्र पृथिवीतत्त्वेऽण्डरूपो हिरण्यगर्भः संवर्तते । तथाहि श्रूयते । 'अण्डं हिरण्मयं मध्येसमुद्रं रुद्रस्य वीर्यात् प्रथमं सबभूव, तस्मिन् ब्रह्मा विष्णुर्जातो जातवेदा" इति ।

"अप एव ससर्जादौ तासु वीर्यमपासृजत् ।
तदण्डमभवद्धैमं सहस्रार्कसमप्रभम् ॥
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥
अयनं तस्य ता यस्मात् ततो नारायणः[1] स्मृतः ।
नारायणः परोऽव्यक्तोऽव्यक्तादण्डसमुद्भवः ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी" ॥

इति मनुस्मृतिः । पुराणं च,

"रुद्रसंज्ञस्य देवस्य रूपे मूर्तिः प्रजायते ।
तेन क्षिप्तं रसे वीर्यं परं मूर्त्यभिमानिना ॥
तदण्डमभवद्वीर्यं सहस्रकिरणप्रभम् ।
विष्णुस्तत् प्राविशत् साक्षान्मम शक्तेस्तु वैभवात् ॥
पुनर्नारायणाख्यां मे नियोगात् प्राप्तवानसौ ।
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥
आपः सूक्ष्मो रसो ज्ञेयो रसो नारः प्रकीर्तितः ।
नरजातस्ततो ब्रह्मा नरः साक्षाच्छिवः स्मृतः ॥
नारमस्यायनं प्रोक्तं तेन नारायणः स्मृतः ।
ब्रह्मापि नरशार्दूल गन्धजां मूर्तिमाविशत्[2] ॥

इत्यादि । एवं च "वेदो नामरूपे व्याकरोत् सतासती प्रजापतिः" इत्यादिश्रुतेः । "अण्डान्तर्वर्ती हिरण्यगर्भो वाद्भ्यः संभूतः पृथिव्यै रसाच्च" इत्यादिश्रुतेर्नारायणो वा देवादीनामण्डान्तर्वर्तिनां नामरूपकर्ता भवितुमर्हति । न ब्रह्माण्डादेरुत्तीर्णः परमेश्वर इति पूर्वः पक्षः । सिद्धान्तस्तु, न युक्तः प्रतिपादितसृष्टिक्रमः । किंतु "सदेव सोम्येदमग्र आसीत्," "एकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेय" इति "तत् तेजोऽसृजत" इत्यादिश्रुतेः सच्छब्दवाच्यं ब्रह्मैव पञ्चभूतकारणम् । तेजःप्राथम्यं परिहृतम् । ततश्चाकाशादि पृथिव्यन्तं सदाशिवादिसंज्ञया पूर्वकारणरूपं ब्रह्मोत्तरोत्तरं कार्यं सृजतीति, "तदैक्षत," "तत् तेज ऐक्षत," 'ता आप ऐक्षन्त," इति श्रुत्यावगम्यते । "हन्ताहमिमास्तिस्रो देवता" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति त्रिवृत् कुर्वत एव परमेश्वरस्य वाय्वादिरूपस्य तिस्रो देवतास्तेजोऽबन्नात्मिकाः । ब्रह्मविष्णुरुद्ररूपजीवात्मनानुप्रविश्य नामरूपक्लृप्तिरवगम्यते । अतस्त्रिवृत् कुर्वत एव चतुर्मुखाद्यात्मनः सकलनामरूपक्लृप्तिरिति युक्तम् । त्रिवृत्करणं तु केवलं चतुर्मुखस्य न संभवति । त्रिवृत्कृतैर्हि तेजोऽबन्नैरण्डमुत्पद्यते । तत्र पश्चाच्चतुर्मुखसृष्टिः । "अण्डं हिरण्मयं मध्येसमुद्रं रुद्रस्य वीर्यात् प्रथमं संबभूव, तत्र ब्रह्मा विष्णुर्जातो जातवेदा" इति श्रुतेः ॥ १७ ॥

१ अतो न विरोध इति पा० ।

२ मुख्यप्राणादन्यान्येवेन्द्रियाणि । "ये प्राणास्त इन्द्रियाणि" इति तेष्वेवेन्द्रियव्यपदेशात् । "इन्द्रियाणि दशैकं च" इत्यादौ श्रवणाच्च । तस्मादन्यत्र श्रेष्ठादिन्द्रियाणीति इति पा० ।

* शंकरमते भेदश्रुतेः, इत्येकं वैलक्षण्याच्च इत्यपरमिति सूत्रद्वयम् ।

३—तास्वप्सु शयनत्वाद्धि—इति पा० ।

१ ता यदस्यायनं प्रोक्तं तस्मान्नारायणः इति पा० ।

२ गन्धमूर्त्तिं समाविशत् इति पा० ।

ननु त्रिवृत्करणस्य केवलं चतुर्मुखकर्तृत्वं संभवति । अण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते । "यथा खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तन्मे विजानीहि" इति । "अन्नमशितं त्रेधा विधीयते । तस्य यत् स्थविष्ठो धातुस्तत् पुरीषं भवति । यो मध्यमस्तन्मांसम् । योऽणिष्ठस्तन्मन" इत्यादिना, इत्याशङ्क्य परिहरति[4] ॥

॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥

"अन्नमशितं त्रेधा विधीयत" इत्यादौ प्राङ्निरूपितात् त्रिवृत्करणादर्थान्तरभूत एवाण्डान्तर्वर्तिपुरुषोपभुक्तान्नादीनां परिणामप्रकार उच्यते न तु त्रिवृत्करणम् । अन्यथा हि मांसमनसोः पुरीषादणीयस्त्वेनाप्यतैजसत्वप्रसङ्गः । तथा सति "अन्नमशितं त्रेधा", इति भूमेरेव त्रैविध्योपक्रमे "अन्नमयं हि सोम्य मन" इति मनसो भौमत्वं च विरुध्येत । तथेतरयोरप्तेजसोस्त्रैविध्यं विरुध्यते । तदिदमाह, मांसादि भौमं यथाशब्दमितरयोश्चेति । पुरीषवन्मांसमनसी अपि भौमे इष्येते । तथा मूत्रवल्लोहितप्राणावाप्यौ, तथास्थिवन्मनोवाचौ तैजस्ये ॥ १८ ॥

ननु पूर्वमेव त्रिवृत् कृतं चेत् त्र्यात्मकं वस्तु कथमन्नमापस्तेज इत्युच्यत इत्यत आह ॥

॥ वैशेष्यात् तु तद्वादस्तद्वादः ॥ १६ ॥

अन्नादिभूयस्त्वेन वैशेष्यादन्नादिवाद इति । तस्मात् त्रिवृत् कुर्वतः परमेश्वरस्य चतुर्मुखाद्यात्मना सकलनामरूपसृष्टिरिति युक्तमेव ॥ १९ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्च द्वितीयोऽध्यायः ॥ २ ॥ :: :: ॥

४ श्रुतेः ॥ १७ ॥ आशङ्क्य परिहरति इत्येव पा० ।

## ॥ अथ वेदान्तसूत्रसंबन्धितृतीयाध्यायस्य ॥

॥ प्रथमपादारम्भः ॥

॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

अतीतेऽध्याये प्रथमाध्यायसिद्धस्य ब्रह्मकारणवादसमन्वयस्य विरोधः परिहृतः । तथाहि, प्रथमे पादे सांख्यादितर्कविरोधः[2] परिहृतः । द्वितीये प्रधानकारणवादादिषु[3] तर्कविरोधः प्रदर्शितः । तृतीये भूतसृष्ट्यवान्तरविरोधपरिहारपूर्वकं जीवश्च नित्यत्वादिधर्मैर्निरूपितः[1] । चतुर्थे प्राणेन्द्रियाणां स्वरूपं ब्रह्मणः सकाशात् तेषामुत्पत्तिमप्यभिधाय[2] सर्वेषां नामरूपव्याकरणं च निरूपितम् । अत्र तृतीये प्रथमपादे नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणं क्रियते । द्वितीये तदवस्थानिरूपणपूर्वकमीश्वरस्य स्वरूपलक्षणमुच्यते । तृतीये तूपासनाविशेषाणां गुणोपसंहारः । चतुर्थे चाश्रमादिधर्म[3] इति विवेकः । अत्र प्रथमाधिकरणे जीवः परलोकगतागतेषु देहान्तरप्राप्तये भूतसूक्ष्मैर्वेष्टितो याति, उतावेष्टित, इति संशयः । जीवो देहान्निर्गच्छन् भूतसूक्ष्मैर्भाविशरीरबीजैरपरिष्वक्त एव यातीत्युच्यते । भूतानां सर्वत्र सुलभत्वेनापार्थकत्वादायासस्येति प्राप्ते ब्रूमः । जीवो देहान्तरप्राप्तौ भूतसूक्ष्मैः परिष्वक्तो[4] यातीति पञ्चाग्निविद्यायां प्रश्नप्रतिवचनाभ्यामवगम्यते । "वेत्थ[5] यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नः । "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रतिवचनम् । तत्र चायमर्थः संपिण्डितः । ब्राह्मणादिदेहस्थो जीवः स्वाहादानादिकर्म कृत्वा तत्फलभोगायास्माद्देहादुत्थाय गच्छंस्तद्देहस्थाभिरद्भिर्भूतान्तरसंसृष्टाभिः सूक्ष्माभिः परिष्वक्तोऽग्नित्वेन निरूपितं द्युलोकं प्राप्य ताभिरेवामृतमयदेहाकारेण परिणताभिरद्भिः परिष्वक्तो देवानां शेषभावमुपगम्य तैः सह तत्र भोगविशेषाननुभूय कर्मवासनया भुक्तावशिष्टेन ब्राह्मणादिदेहप्रापकेन कर्मणा सह पुनरिमं लोकमागत्य कर्म कर्तुं ताभिरेव परिष्वक्तोऽग्नित्वेन निरूपितं[6] पर्जन्यं प्राप्य वर्षधाराभिः सहाग्नित्वेन निरूपितां पृथिवीमुपगम्य व्रीह्यादिशस्येना[7]न्नाकारपरिणतेन सहाग्नित्वनिरूपितं पुरुषं प्राप्य तत्र शुक्राकारपरिणताभिस्ताभिरद्भिः[9] परिष्वक्तोऽग्नित्वेन निरूपितां योषितं प्राप्य तत्र देहाकारेण[10] ताभिः पुरुषशब्दाभिलापनीयाभिरद्भिः परिष्वक्तः कर्मानुरूपब्राह्मणादिदेहेन जायत इति । तदेतत् सर्वमुत्तरत्राभिव्यज्यते । तस्मात् पुरुषो भूतसूक्ष्मैर्वेष्टित एव देहान्तरं प्राप्नोतीति ॥ १ ॥

१—दि—इति पा० ।
२—दिकैः समन्वयविरोधः इति पा० ।
३ सांख्यादिसिद्धप्रधानादिकारणवादे इति पा० ।

१—जीवनित्यत्वादिधर्मो निरूपितः इति पा० ।
२ प्राणेन्द्रियादीनां स्वरूपनिरूपणं ब्रह्मण उपपत्तिमभिधाय इति पा० ।
३—मधर्म इति पा० ।
४—क्ष्मैर्वेष्टित एव इति पा० ।
५ कथम् । "वेत्थ इति पा० ।
६ निरूपितशब्दस्थाने सर्वत्र रूपितशब्दः पुस्तकान्तरस्थपाठ ऊहनीयः ।
७ पृथिव्यग्निस्थेना—इति पा० ।
८ भुक्त्वा—इति पा० ।
९—ताभिः इति पा० ।
१० तत्र गर्भाकारेण इति पा० ।

॥ त्र्यात्मकत्वात् तु भूयस्त्वात् ॥ २ ॥

सर्वस्य त्रिवृत्करणेन त्र्यात्मकत्वाद्भूतान्तरसंसृष्टा एवापो भूयस्त्वादप्शब्देनोच्यन्ते । अतः पञ्चम्यामाहुतावाप इति केवलाप्शब्दग्रहणेऽपि न विरोधः ॥ २ ॥

॥ प्राणगतेश्च ॥ ३ ॥

"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति जीवेन सहेन्द्रियगतेस्तदाश्रयत्वेन देहगमनमपि प्रतीयते । अतोऽपि भूतसूक्ष्मदेहवेष्टित एव यातीति[1] ॥ ३ ॥

आशङ्क्य परिहरति ॥

॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" इत्यादाविन्द्रियाणामग्न्याद्यभिगमः श्रूयते । ततो जीवेनेन्द्रियाणां न सह गमनमिति चेन्न । वागाद्यभिमानिदेवतासु वागादिशब्दानां भाक्तत्वात् । "ओषधीर्लोमानि वनस्पतीन् केशा" इत्यनपियद्भि[2]र्लोमादिभिः सह पाठात् ॥ ४ ॥

॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

प्रथमे द्युलोकाग्नावपामश्रवणात् "नापो गच्छन्ति" "एतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इति श्रद्धैव श्रूयते । इति चेन्न । आप एव श्रद्धाशब्देनोच्यन्ते । कथम् । अप्सु सृष्टासु तदुत्तरोपपत्तेः । श्रद्धाशब्दश्चाप्सु युज्यते । "श्रद्धा वा आप" इति श्रुतेः ॥ ५ ॥

पुनराशङ्क्य परिहरति ॥

॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

अत्र प्रश्नप्रतिवचनयोराप एव प्रतीयन्ते । न तत्परिष्वक्तो जीव, इति चेन्न । उत्तरत्र "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति, धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यात् षड्दक्षिणैति मासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादादित्यमादित्याच्चन्द्रमसम्, एष सोमो राजा तद्देवानामन्नं तद्देवा[1] भक्षयन्ति, तस्मिन् यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते, यथैतमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वाभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति, तदुह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते, अतो वै खलु दुर्निष्प्रपततरं यो यो ह्यन्नमत्ति, यो रेतः सिञ्चति, तद्भूय एव भवति" इति वाक्ये द्युलोके सोमराजशब्दोक्तामृतमयदेहवेष्टेन पुण्यफलमनुभूय पुण्यकर्मावसाने पुनरिहागत्य गर्भं प्राप्नुवतामिष्टादिकारिणां प्रतीतेस्तेषामेव तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति, "तस्या आहुतेः सोमो राजा संभवति" इत्यत्र सोमे राजशब्देन प्रत्यभिज्ञानात् । तस्मात् प्रश्नप्रतिवचनयोरप्यद्भिः परिष्वक्त[1]स्तच्छरीरको जीव एवाप इत्युच्यन्त इति गम्यते । अतो न विरोधः ॥ ६ ॥

॥ भाक्तं वानात्मवित्त्वात् तथाहि दर्शयति ॥ ७ ॥

"एष सोमो राजा तद्देवानामन्नं, तद्देवा भक्षयन्ति" इति सोमराजभावापन्नस्यैव देवैर्भक्ष्यमाणत्वश्रवणान्नासौ जीव इति चेत् । तद् भाक्तमेव भक्ष्यमाणत्वम्, अनात्मवित्त्वेन देवोपकरणाभिप्रायम्[2] । तथा हि "यथा पशुरेवं स देवानाम्" इति श्रुतिरनात्मविदां[3] पशुवद्देवोपकरणत्वं दर्शयति । तस्मादात्मविदां परमेश्वरोपकरणत्वम् । अनात्मविदां देवोपकरणत्वम् । इति मन्तव्यम् । अतः[4] सर्वथा जीवो देहान्तरप्राप्तौ भूतसूक्ष्मवेष्टित एव यातीति सिद्धम् ॥ ७ ॥

॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

पूर्वत्र भूतसूक्ष्मशरीरयुक्त एव जीवः स्वर्गादिकमुपेत्य देवादिशरीरे निजकर्मानुगुणं भोगं प्राप्नोतीति सिद्धम् । तदिह भोगा[5]नन्तरं स जीवः पुनरिमं लोकं सकर्मशेषोऽवतरति, निःशेषभुक्तकर्मा वेति[6] संशयः । तथा सति पुरुषो निरनुशय एव स्वर्गादिमं लोकमवरोहतीति युक्तम् । अनुशयो नाम कर्मशेषो जीवमनुशेत इति न स्वर्गादवरोहतोऽनुशयः संभवति । अनुशयफलस्य तत्र भुक्तत्वात् । "यावत्सपातमुषित्वा, अथैतमेवाध्वानं पुनर्निवर्तन्ते" इति श्रुतिस्तद्विषया । अत्र संपातः कर्मसमूहः । संपातमनतिक्रम्य, इति यावत्संपातमित्युच्यते । ततो निःशेषं कर्मफलं भुक्त्वा कर्मरहित एव स्वर्गादवरोहति जीव इति पूर्वः पक्षः । सिद्धान्तस्तु स्वर्गात् सुकृतक्षये पुनरिमं लोकमवरोहन् सकर्मशेष एवागच्छति । कथमवगम्यते । श्रुतिस्मृतिभ्यामेव । यथा "रमणीयचरणा रमणीयां योनिमापद्येरन्, ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणाः कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" इति श्रुतिः ।

१ ततो न पूर्वोक्तहानिः इति पा० ।

२–र्लोमानीत्यनपिशद्भि–इति पा० ।

३ तं दे–इति सर्वत्र वरपा० ।

१–मित्युपासत इत्यादाविष्टादिकारिणां प्रतीतेर्गमनप्रकारवचनस्य द्युलोकाग्निसंतर्प्यसंबन्धवाच्यस्य तस्या आहुतेः सोमो राजा संबभूवेति सोमीभूतस्यैव एष सोमो राजेति प्रत्यभिज्ञानादद्भिः परिष्वक्त इति पा० ।

२ चेन्न । तदेतद् भाक्तमेव भक्ष्यमाणत्वम् । अनात्मवित्त्वेन देवोपकरणाभिप्रायात् इति पा० ।

३ तथाहि दर्शयति श्रुतिरेव । "यथा पशुरेवं स देवानाम्" इति इति पा० ।

४–त्वं द्रष्टव्यम् । तस्मात् इति पा० ।

५ देहानन्तरं इति पा० ।

६ उत निःशेषं भुक्तकर्मेति इति पा० ।

"जायन्ते पुण्यकर्माण"

इत्यादिका स्मृतिः। अन्यथा सद्यः समुत्पन्नस्य बालस्य धर्माधर्माद्यभावात् सुखदुःखभोगो न स्यात्। तस्मादनुशयवानेव यथेदमनेवं च समागच्छति, आकाशावरोहणादारोहप्रकारेण वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्च। प्रकारान्तरेण च पुनर्निवर्तन्त इत्यर्थः[1] ॥ ८ ॥

पुनराशङ्क्य मतान्तरेण,[2] परिहरति ॥

॥ चरणादिति चेन्न तदुप-*
लक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

रमणीयचरणाः कपूयचरणा इति चरणशब्दाचानुशयसिद्धिः। चरणशब्दस्य स्मार्ताचरणविषयत्वात्। इति चेन्न। अनुशयोपलक्षणार्था हि चरणश्रुतिः। तस्यैव सुखादिसाधकत्वात् ॥ ९ ॥

॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

एवं सति स्मार्ताचरणस्यानुपयोगादानर्थक्यं स्यादिति चेन्न। तदपेक्षत्वादेव सर्वस्य पुण्यकर्मणः।

"संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत्" ॥

॥ इति कार्ष्णाजिनिमतम् ॥ १० ॥

॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्तु रमणीयचरणाः कपूयचरणा इति चरणशब्दः सुकृतदुष्कृतयोर्वाचकः। नतु लक्षकः। इति बादरेर्मतम्। स्मार्ताचारापेक्षं कर्मेति तु स्वीकृतमेव[3]। अतः सुकृतदुष्कृतानुशयवानेव स्वर्गादवरोहति जीव इति सिद्धम् ॥ ११ ॥

॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इह यथेष्टापूर्तादिकारिणां चन्द्रगमनम्। तथान्येषामप्यस्ति न वेति संशयः। तथा सतीष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनमस्त्येव। "य एवैके चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्यविशेषेण सर्वेषां चन्द्रगमनश्रवणात्। यद्यपि तत्र पापिनां भोगो नास्ति, तथापि पुनरागत्य शरीरग्रहार्थं पञ्चमाहुतिलाभाय स्वर्गगतिरपेक्ष्या ॥ १२ ॥

तस्मादिष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनं युक्तमिति प्राप्तेऽभिधीयते ॥

१—वानेव समागच्छतीति निर्णयः इत्येव पा०।

२ मतान्तरमाशङ्क्य इति पा०।

* शैवपुस्तकमपहाय सर्वत्र नोप—इति पाठः।

३ शब्देन सुकृतदुष्कृते एवेति। तथा "पुण्यं कर्माचरति" इति प्रसिद्धेः। एतदेव स्वीकृतं स्मार्ताचारापेक्षं कर्मेति इति पा०।

॥ संयमने त्वनुभूयेतरेषामारोहा-
वरोहौ तद्गतिदर्शनात् ॥ १३ ॥

इष्टापूर्ताद्यकुर्वतां चन्द्रगमनं नास्ति। किंतु यमसदने कर्मफलमनुभूय प्रत्यवरोहणम्। एवं भूतावेव तेषामारोहावरोहौ "वैवस्वतसंगमनं जनानाम्" इति तद्गतिदर्शनात्। भोगार्थमेव हि स्वर्गगमनम्। न पञ्चमाहुतिलाभाय। द्रोणादीनां योषिदाहुतेरभावेन व्यभिचारात्। अतो यमलोकप्राप्तिरेव पापिनामिति युक्तम् ॥ १३ ॥

॥ स्मरन्ति च ॥ १४ ॥

अस्मिन्नर्थे स्मरन्ति च।

"सर्वे चैते वशं यान्ति यमस्य भगवन् किल"।

इत्यादि ॥ १४ ॥

॥ अपि च† सप्त ॥ १५ ॥

सप्त रौरवादीनपि पापिनो महानरकान् स्मरन्ति ॥ १५ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि चित्रगुप्ताद्यधिष्ठितेषु नरकेष्वपि तेषां प्रेरकस्य तदधिष्ठातृत्वव्यापारसत्त्वाद् यमवश्यताया विरोधाभावः ॥१६॥

॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

विद्याकर्मणोः फलभोगाद्यर्थं ब्रह्मगमनं चन्द्रगमनं च। कथम्। "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्ति," "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति" इति ब्रह्मगमने च विद्याकर्मणोरेव[1] प्रकृतत्वात्। अतो न पापिनां सहगतिप्रसङ्गः ॥ १७ ॥

न तृतीये तथोपलब्धेः ॥ १८ ॥

नच पापिनामपि पञ्चमाहुतिप्राप्तिमूलत्वाद्देहारम्भस्य तदर्थं द्युलोकापेक्षा। तेषां द्युलोकगमनाभावोपलब्धेः। "अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न स पूर्यते" इति तृतीयं स्थानमिति पापकर्मीणमुच्यते[2]। अतः पापिनां न स्वर्गगमनम् ॥ १८ ॥

॥ स्मर्यतेऽपि च लोके ॥ १९ ॥

लोके द्रौपद्यादीनां पुण्यकर्मणामपि[3] पञ्चमाहुत्यनपेक्षा देहारम्भाय स्मर्यते ॥ १९ ॥

† चकाररहितः क्वचित् पाठः।

१ ब्रह्मचन्द्रगमनयोरेव इति वरपा०।

२ पापकर्माण उच्यन्ते इति वरपा०।

३ लोके द्रोणादीनामपि पुण्यकर्मणां इति पा०।

॥ दर्शनाच्च ॥ २० ॥

किंच, श्रुतिदर्शनं च भवति। "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जमिति" तत्र स्वेदजोद्भिज्जयोस्तदनपेक्षत्व दृश्यते ॥ २० ॥

ननु जीवजमुद्भिज्जमिति श्रुतौ स्वेदजग्रहणं नास्तीत्यत आह[1] ॥

॥ तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

संशोकजस्य स्वेदजस्यापि तृतीयेनोद्भिज्जशब्देन संग्रहोऽस्तीत्यर्थः[2]। ततः पापिना न स्वर्गगमनमिति निर्णयः॥ २१॥

॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

पूर्वत्र फलभोगानन्तरं स्वर्गात् सानुशय एव जीवोऽवतरतीति निरूपितम्। घनस्यावरोहत आकाशादिभावः श्रूयते। "अथैतमेवाध्वानं पुनर्निवर्तन्ते, यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वाभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति" इति। तत्र जीवस्येत्याकाशादिरूपतापत्तिस्तत्सादृश्यापत्तिर्वेति संशयः। तत्र भूत्वेति शब्दादाकाशादिरूपत्वं जीवस्येति ब्रूमः[3]। नावरोहतो जीवस्याकाशादिरूपतापत्तिः। किंतु तत्सादृश्यापत्तिः। तत्र सुखदुःखानुभवाभावात्[4]। तदनुभवार्थं हि तत्तच्छरीरसंबन्धः। अन्यस्यान्यत्वानुपपत्तेश्च। तस्मात् तत्सादृश्यापत्तिरवरोहत इत्येवोपपद्यत इति निर्णयः॥ २२॥

॥ नातिचिरेण विशेषात् ॥ २३ ॥

अत्रावरोहन् जीवो विलम्बते न वेत्यनियमः। उत न विलम्बत एव। इति संशयः। तत्र प्रवर्षणानन्तरं व्रीह्यादिभावः श्रूयते। "तदिह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्त" इति प्रागेतस्माद् व्रीहियवादिभावादाकाशादौ विलम्बत्वरयोर्न नियम इति प्राप्ते ब्रूमः। व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति जीवः। कथम्। व्रीह्यादिभावानन्तरम्, अतो वै खलु दुर्निष्प्रपततरमिति व्रीह्यादिभावान्निर्गमनं दुश:कम्। इति[5] हि श्रूयते। अतो व्रीह्यादौ विलम्बादन्यत्र त्वरेत्यवगमादाकाशादौ न विलम्बते जीव इति ॥ २३ ॥

॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

इह व्रीह्यादावपि जीवस्य संश्लेषमात्रमुत जन्मेति संशये व्रीह्यादिरूपेण जायन्त इति श्रवणात् तस्य व्रीह्यादिजन्मेति[1] प्राप्ते ब्रूमः। अन्यजीवाधिष्ठिते व्रीह्यादौ जीवस्य संश्लेषमात्रम्। आकाशादिवावरोहतस्तत्र जननहेतुसंकीर्तनविरहिताभिलापाज्जायन्त[2] इति श्रुतिर्गौणी। यत्र ब्राह्मणादिजन्मास्ति। तत्र रमणीयचरणाः कपूयचरणा इति हेतुरभिलप्यते। अतो ब्राह्मणादावेवास्य जन्माभिलापादन्यत्रास्य संबन्धमात्रमिति निर्णयः॥ २४॥

॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

अवरोहतः पुरुषस्य पूर्वानुष्ठितयागादिष्वग्निषोमीयादिहिंसामिश्रत्वादशुद्धं कर्मेति तत्फलभोगाय व्रीह्यादिष्वप्युत्पत्तिरस्त्विति चेत्। न। श्रूयते हि "हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति न वाडवे तन्म्रियते तरिष्यति" इति पशुहिंसाया अहिंसात्वम्। ततो न तत्प्राप्तिरस्ति ॥ २५ ॥

उपपत्त्यन्तरमाह ॥

॥ रेतःसिग्योगोऽथ ॥ २६ ॥

"यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव च भवति" इत्यनेन रेतःसिचा योगमात्रमप्यानन्तरमुच्यते। अतः पूर्वमपि व्रीह्यादिषु योगमात्रमेव ॥ २६ ॥

॥ योनेः शरीरम् ॥ २७ ॥

यदा योनिप्राप्तिस्तस्य तदैव शरीरमुत्पद्यते। अतः पूर्वं तु संश्लेषमात्रमिति भावः॥ २७॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥ :: :: ॥

१ तत्र स्वेदजस्य ग्रहणं न विवक्षितमित्याशङ्क्याह इति पा०।

२ उद्भिज्जशब्देनैव स्वेदजस्य संग्रहः कृतः। तयोर्भूम्युदकोद्भवत्वस्य तुल्यत्वात् इत्येव पा०।

३ तस्यावरोहतस्तु "अथैतमेवाध्वानं पुनर्निवर्तन्ते, यथैतमाकाशमाकाशाद्वायुं, वायुर्भूत्वा धूमो भवति, धूमो भूत्वाभ्रं भवति, अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" इति श्रूयते ह्याकाशादिभावः। तज्जीवस्याकाशादेः स्वरूपापत्तिः सादृश्यापत्तिर्वेति संशयः। तत्र भूत्वेति शब्दादाकाशादिभावो जीवस्येति प्राप्ते ब्रूमः। इति पा०।

४ तत्र सुखानुभवरूपभोगाभावोपपत्तेः इति पा०।

५ पूर्वोक्ताकाशादवरोहन् जीवो विलम्बते न वेति संशयः। तत्र प्रवर्षणानन्तरं व्रीह्यादिभावे आत्मा जायते। व्रीहियवादेरोषधिवनस्पतयो जायन्त इति प्रागेतस्माद् व्रीहियवादिसंभवादाकाशादौ विलम्बाविलम्बयोर्न नियम इति प्राप्ते ब्रूमः। व्रीह्यादिभावानन्तरम्, अतो वै खलु दुर्निष्प्रपततरमिति व्रीह्यादिभावान्निर्गमनं दुःशकमिति इति पा०।

१—दौ इति वरपा०।

२ न जीवस्य जन्म। किंतु संश्लेषमात्रम्। आकाशादाविवारोहतस्तत्र न जननहेतुः। विरहाभि—इति पा०।

॥ श्रीगुरुभ्यो नमः ॥

॥ सप्तमण्डलप्रवेशप्रकरणम् ॥

शङ्करः शं चरीकर्ति यः शर्वरी-
नायकोऽमुष्य भूषाविशेषोऽप्यभूत्।
उत्तमाङ्गस्थया गङ्गया सङ्गत-
स्तं भजेयोमया साकमङ्कस्थया ॥ १ ॥

प्रश्नः ।

समुन्नतासून् समवृत्तसंस्थे
भास्वत्यभिज्ञाय पलप्रभां च ।
आचक्षते क्रान्तिगुणं द्रुतं यो
मन्येऽवतीर्णं द्युमणिं तमन्यम् ॥ २ ॥

अस्य भङ्गः ।

द्वीन्दुघ्नभावधहृतात् पलकर्णवर्गा-
द्यद्घ्नोन्नतासुविपरीतगुणात् त्रिमौर्व्या ।
लब्धं तयोः कृतिवियोगपदं यदेत-
द्भक्तः समुन्नतगुणोऽपममौर्विका स्यात् ॥ ३ ॥

अस्य प्रश्नस्य श्रीमद्गुरुचरणोक्तौ प्रकारान्तरेण भङ्गौ ।

त्रिज्यानिघ्नादक्षकर्णस्य वर्गा-
द्वेदेन्द्रघ्नीमुन्नतासूत्क्रमज्याम् ।
त्यक्त्वा शेषादुन्नतासुज्यकाक्ष-
श्रुत्याहत्याप्तं समाख्यप्रभा स्यात् ॥ ४ ॥

तस्याः समनरः साध्यस्तस्मादक्षभया हतात् ।
पलकर्णेन लब्धस्य चापं क्रान्तिर्भवेत् सकृत् ॥ ५ ॥

द्विघ्नी त्रिभज्या नयनाहताना-
मक्षांशकानां भुजजीवयाप्ता ।
या योन्नतासूत्क्रममौर्विका च
त्रिजीवया संविहृता तयोर्यत् ॥ ६ ॥

वर्गान्तरान्मूलमनेन भक्तो-
न्नतासुजीवापममौर्विका स्यात् ।
समुन्नतास्वक्षलवावबोधाद्
दृष्टे प्रविष्टे समवृत्तमर्के ॥ ७ ॥

प्रश्नः ।

प्रविशति यदादित्यो वृत्तं समाख्यमिहोन्नतं
समयमपमज्यां ज्ञात्वा यो वदेत् पलभां द्रुतम् ।
निखिलगणकामन्दानन्दप्रदो गणितस्थली
समभिपतितः पाटीरोऽसौ श्रमापहरो विदाम् ॥ ८ ॥

अस्य भङ्गः ।

पृथक् स्थिते उन्नतकालजाते
क्रमोत्क्रमज्ये निहते क्रमेण ।
त्रिराशिजीवापममौर्विकाभ्यां
यदेतयोर्वर्गयुतेः पदं तत् ॥ ९ ॥

त्रिभज्यया भाज्यमदो यदाप्तं
सा तद्धृतिः स्यादथ बुद्धिमद्भिः ।
अतः प्रसाध्या द्विविधा पलाभा
प्रोक्तप्रकारं मनसा विचार्य ॥ १० ॥

अस्य प्रश्नस्य श्रीमद्गुरुचरणोक्ताः प्रकारान्तरेण भङ्गाः ।

स्यादुन्नतः काल इहेष्टसंज्ञ-
स्तस्य ज्यका द्युज्यकया विनिघ्नी ।
त्रिज्योद्धृता तद्धृतिमत्र लब्धं
प्रकल्प्य तस्याः पलभा चरं च ॥ ११ ॥

द्युज्या चरोनेष्टगुणेन निघ्नी
त्रिज्योद्धृता तद्धृतिखण्डमूर्ध्वम् ।
ततोऽक्षभा तद्धृतिखण्डमूर्ध्वं
ततोऽक्षभा स्यादसकृच्च तस्मात् ॥ १२ ॥

इष्टक्रमज्योत्क्रममौर्विके वा
त्रिज्यापमज्यानिहते क्रमेण ।
कार्ये तयोर्वर्गयुतिर्युगाब्धि-
हिमांशुवर्गेण हताद्यसंज्ञा ॥ १३ ॥

या क्रान्तिजीवेष्टदलज्यकाघ्नी
द्विघ्नी च या च द्युगुणेन निघ्नी ।
इष्टज्यका तत्कृतिसंयुतिर्द्वि-
क्ष्माभृद्विनिघ्नी परसंज्ञिका स्यात् ॥ १४ ॥

त्रिज्यापमज्यावधवर्गभक्तौ
तौ चाद्यहीनात् परवर्गतो यत् ।
मूलं तदूनाढ्यपराद्युगेन्द्वै-
र्हीनात् पदं स्याद् द्विविधा पलाभा ॥ १५ ॥

क्रान्तिज्यया त्रिज्यकयोन्नतासु-
क्रमोत्क्रमज्ये क्रमशो विभक्ते ।
तद्वर्गयोगो युतिसंज्ञकः स्या-
द्युत्या हतायाश्चतुरूनयुत्याः ॥ १६ ॥

पदेन नेत्रोनयुतिर्युतोना
पृथक् तदर्धात् पदमर्कनिघ्नम् ।
द्विधाक्षभा स्यादपमोन्नतासु-
ज्ञानाद् दिनेशे समवृत्तयाते ॥ १७ ॥

प्रश्नः ।

विद्वा समुन्नतलवान् समवृत्तयाते
सूर्येऽधिगम्य च समुन्नतकालमानम् ।

यो द्राग्ब्रवीति पलभां खलु भास्करोऽसौ
स्याद् दुष्टगाणितिकगर्वतमोपहारी ॥ १८ ।

अस्य भङ्गः ।

दृग्ज्योन्नतकालज्याभिहतिः समशङ्कुभाजिता लब्धम् ।
योज्याख्यं तत्कृत्या युत उन्नतकालदलमौर्व्याः ॥ १९ ॥
वर्गोऽष्टघ्नस्तत्पदमाढ्यं योज्येन तद्रसैर्गुणितम् ।
त्रिगुणहृतं पलकर्णः पलभावगमस्ततः सुगमः ॥ २० ॥

प्रकारान्तरेण भङ्गः ।

त्रिज्याविनिघ्नः समशङ्कुवर्गो
दृग्ज्यार्धनिघ्न्युन्नतकालजीवा ।
समुन्नतासूत्क्रमजीवया तौ
भक्तौ भवेतां प्रथमान्यसंज्ञौ ॥ २१ ॥

परकृतिसहितादृतः पदं यत्
परहीनं कुगुणोनतद्धृतिः स्यात् ।
इह खलु पलभापमज्यके वा
सुधियातः स्वधियैव साधनीये ॥ २२ ॥

अस्य प्रश्नस्य श्रीमद्गुरुचरणोक्तः प्रकारान्तरेण भङ्गः ।

अथोन्नतासूत्क्रममौर्विकाघ्न-
स्त्रिज्याहृतो द्वादशवर्ग आद्यः ।
समप्रभार्धेन हतोन्नतासु-
ज्यका त्रिभज्याविहृतान्यसंज्ञः ॥ २३ ॥

अन्यस्य वर्गेण युतादाद्या-
न्मूलं तदन्यान्वितमक्षकर्णः ।
ततोऽक्षभाया अपि चापमस्य
ज्ञानं द्रुतं स्याद्गणकाग्रणीनाम् ॥ २४ ॥

प्रश्नः ।

तपने समवृत्तमागते यो
विबुधः शङ्कुतलं समुन्नतासून् ।
अभिवीक्ष्य पलप्रभां वदेद् द्रा-
गपमज्यां च न के विदः स्तुयुस्तम् ॥ २५ ॥

अस्य भङ्गः ।

अग्राग्राकोटिज्ये प्रकल्प्य समशङ्कुदृग्ज्यके साध्या ।
कुज्योनतद्धृतिः स्यात् कुज्या पलभापमज्यके च ततः ॥ २६ ॥

प्रश्नः ।

भास्वति समवृत्तगते विज्ञाय हृतिं समुन्नतं समयम् ।
यः पलभापमजीवे वक्ति स विद्वद्वरो ज्ञेयः ॥ २७ ॥

अस्य भङ्गः ।

तद्धृत्युन्नतकालज्यावर्गान्तरपदं हृतम् ।
त्रिज्ययोन्नतकालस्य व्यस्तमौर्व्या विभाजितम् ॥ २८ ॥
अपमज्या भवेदेवं पलभा द्विविधा ततः ।
सुधिया स्वधिया साध्या विमृश्य प्रोक्तमार्गतः ॥ २९ ॥

प्रश्नः ।

उन्नतकालं च कलां प्रविशति समवृत्तमादित्ये ।
विज्ञायाप्तुब्धः सन्नक्षाभां मे विचक्षणाचक्ष्व ॥ ३० ॥

अस्य भङ्गः ।

अथोन्नतासुविपरीतगुणस्य वर्ग-
णार्धीकृतेन रहितस्त्रिगुणस्य वर्गः ।
कुज्योनतद्धृतिहतः प्रथमः परस्तु
कुज्योनतद्धृतिसमुन्नतकालमौर्व्याः ॥ ३१ ॥

वर्गान्तरं त्वथ परात् प्रथमस्य कृत्या
युक्तात् पदं प्रथमहीनमियं चितिज्या ।
अक्षप्रभापमगुणावत एव साध्यौ
जागर्ति चेतसि यदोक्तविधिः सुधीभिः ३२ ॥

प्रश्नः ।

ज्ञात्वा चितिज्यां च समुन्नतासून्
दिनाधिनाथे सममण्डलस्थे ।
पलप्रभां क्रान्तिगुणं च विद्धि
चेन्नैपुणं ते गणिते सगोले ॥ ३३ ॥

अस्य भङ्गः ।

अनन्तरोक्तमार्गेण कुज्यया कुज्ययोनिता ।
तद्धृतिः सिध्यति क्रान्तिज्याक्षभे तत उक्तवत् ॥ ३४ ॥

प्रश्नः ।

चरासुवेदी समवृत्तसंस्थे
रवौ विलोक्योन्नतकालमानम् ॥
वेत्त्यक्षभां योऽपममौर्विकां च
ज्ञेयः स सिद्धान्तविदां वरिष्ठः ॥ ३५ ॥

अस्य भङ्गः ।

उन्नतकालचरान्तरमौर्व्या चरशिञ्जिनीं विभजेत् ।
तत्पदमर्कहतं स्यात् पलभा सुलभापमज्यातः ॥ ३६ ॥

प्रश्नः ।

ज्ञात्वा नतासूंश्च समुन्नतासून्
दिवाकरे याति समाख्यवृत्तम् ।
योऽग्रप्रभां क्रान्तिगुणं च विद्यात्
स चोदिताशेषविशेषवेदी ॥ ३७ ॥

अस्य भङ्गः ।

नतासून्नतासूद्भवा योगकोटि-
ज्यका स्याच्चरज्या ततोऽग्रप्रभाच ।
बुधैराद्यखण्डोक्तमार्गेण साध्या-
पमज्या च तस्माद्विचिन्त्यावगम्या ॥ ३८ ॥

प्रश्नः ।

अन्त्यामुन्नतकालं समवृत्तस्थे दिवाकरे ज्ञात्वा ।
ब्रूह्यग्रभापमज्ये गणिते गोले च नैपुणं यदि ते॥३९॥

अस्य भङ्गः ।

अन्त्यावर्गादुन्नतकालज्यावर्गविश्लिष्टात् ।
अन्त्योन्नतकालोत्क्रममौर्व्योः कृतियोगसंभक्तात् ॥ ४० ॥
मूलं त्रिभशिञ्जिन्या समाहतं स्यादपक्रमज्यातः ।
द्राक् सिध्यति पलभा चेत् स्फूर्तिः प्रोक्तप्रकाराणाम् ॥ ४१ ॥

प्रश्नः ।

वीक्ष्योर्ध्वखण्डं समवृत्तशङ्कोः
समुन्नतासून् समवृत्तगेऽर्के ।
योऽपक्रमज्यां पलभां वदेद् द्राक्
स एव गोलार्णवतारणे नौः ॥ ४२ ॥

अस्य भङ्गः ।

इह समुन्नतकालदलज्यकां
द्विगुणितां परिकल्प्य तथान्त्यकाम् ।
अथ ततः सुधिया क्रिययोक्तया-
पमगुणं परिसाध्य ततो विदा ॥ ४३ ॥
समवृत्तनरोर्ध्वखण्डवेत्ता
पलभा तद्धृतिरन्त्यका च साध्या ।
क्रमतोऽसकृदित्थमेव कुर्या-
दपमज्यापलभे स्फुटे भवेताम् ॥ ४४ ॥

अथान्ये प्रश्नाः ।

अग्राग्रखण्डमभिवीक्ष्य समाख्यवृत्तं
याते रवौ किल समुन्नतकालमानम् ।
द्रागग्रभां वद तथापममौर्विकां चेद्
गोलस्त्वया गणकमाणवकास्त्यधीतः ॥ ४५ ॥
प्रविशति समाख्यवृत्तं भास्वति वीक्ष्योन्नतं समयम् ।
ज्ञात्वोन्मण्डलशङ्कुं विद्वन् पलभापमज्यके वद मे ॥ ४६ ॥
सवितरि समवृत्तं याति वीक्ष्योन्नतासू-
नथच समभिवीक्ष्याग्रादिखण्डं सुधीर्यः ।
अपमगुणपलाभे शीघ्रमाचष्टेऽसौ
सकलगणकहृद्यार्थप्रदः कल्पवृक्षः ॥ ४७ ॥

एषां भङ्गाः ।

विद्वान् शश्वदनन्तरोक्तविधिना क्रान्तिज्यकां साधयेत्
प्रोक्तं कर्म समाख्यशङ्क्ववयवाद्यत् तूर्ध्वखण्डाद्बुधैः ।
तच्चाग्राग्रिमखण्डतो वितनुयादुद्धृतशङ्कोश्च वा
यच्चाग्रादिमखण्डतोऽपमगुणाक्षाभे भवेतां स्फुटे ॥ ४८ ॥

प्रश्नः ।

ज्ञात्वाक्षजं वलनमुन्नतकालवेदिन्
धाम्नां निधौ तु सममण्डलमाश्रिते द्राक् ।
ब्रूया अपक्रमगुणं पलभां यदि त्वां
मन्ये वसन्ततिलकं गणकर्तुवृन्दे ॥ ४९ ॥

अस्य भङ्गः ।

अनन्तरोक्तेन पथापमज्या
साध्याक्षजं यद्वलनं तदीया ।
कोटिज्यका द्युज्यकया विनिघ्नी
त्रिज्योद्धृता लम्बगुणो भवेत् सः ॥ ५० ॥
अतः प्रसाध्या हृतिरन्त्यकातः
क्रान्तिज्यका लम्बगुणस्ततः स्यात् ।
इत्थं विदध्यादसकृत् स्फुटाः स्युः
क्रान्तिज्यकाद्याः पलभा ततश्च ॥ ५१ ॥

श्रीबालशास्त्रिविदुषां सविधं पठित्वा
प्राक् शब्दशास्त्रमथ तज्जनितावबोधः ।
श्रीबापुदेवगुरुवर्यकृपाकटाक्षात्
सज्ज्योतिषं प्रपठतीह विनायको यः ॥ ५२ ॥
तन्निर्मिते कतिपयप्रश्नविचाराभिधप्रबन्धेऽस्मिन् ।
सममण्डलप्रवेशप्रकरणमितमुन्नतासुखण्डं च ॥ ५३ ॥

॥ इत्युन्नतासुखण्डम् । समाप्तं च सममण्डलप्रवेशप्रकरणम् ॥

# THE
# VIDVAN-MANO-RANJINI'
## OR
## REJOICER OF THE MIND OF THE LEARNED

A COMMENTARY ON SAD ÁNANDA'S VEDÁNTA SÁRA, BY RÁMA TÍRTHA

(Continued from page 150)

*And in them &c* [*there is the prevalence of darkness in their cause as may be inferred from seeing the excess of senselessness*] By using the word excess in the phrase *from seeing the excess of senselessness*, as conveying the sense of existence in the effects, the author implies that there is in all products some degree of intelligence The metaphysicians have therefore said, It is, it appears, It is agreeable, It is a form, It is a name, are the five degrees of entity the first three are identical with supreme spirit, the other two are the universe Vaśishṭa, moreover, has said: That which is, that which appears, is spirit; and what appears as other therefrom, is naught else. Natural consciousness alone appears, subject and object are only erroneously discriminated The author next shows how the three qualities are conformable to the product to be described, in the ether and the rest, at the time of production

*Then &c* [*goodness, passion, and darkness are produced in these products, ether &c in the degree in which they exist in the cause*] The meaning is that the qualities, goodness, &c which belong to the undeveloped cause, are produced together with the products in the products, as originating in their respective proportions such qualities in proportion to the products. It may be said The five proper natures are produced in their order from the undeveloped material cause, for this is a matter of notoriety in revelation, sacred history, and the legendaries, how then is the production of ether &c recorded at this stage? The author furnishes the reply.

*It is these* [*five, that are called the subtile elements, the proper natures, and the not yet made into the five gross elements*] These same, ether and the rest, the subtile elements, cannot become objects of practical apprehension, have only sound &c for their sole nature, and are called by the great sages in the scriptures &c. the not yet made five, and the not completely integrated. Having thus discussed in its order the erroneous imputation of the elements, the author now posits the erroneous imputation of that which is composed of the elements.

*From these* [*subtile elements are produced the subtile bodies,*] *and the gross elements* The author unfolds a part of the promised statement

*The subtile bodies*, that is the evidentiary bodies, so called because they are bodies by which the real existence of self-conscious soul is evidenced or made known, and which are bodies because they reside in the body, that is, determine the existence of the body by means of merit and demerit Accordingly the inference The organs and the vital airs in question, have as the antecedent of their activities superintendence of intelligence other than themselves but residing in themselves, because they are unintelligent, like a chariot. So also the Vedic text: Who have known the vital air of vital air, the eye of the eye, the ear of the ear, the mind of the mind, He who knows that he smells it, he is soul, the organ of smell The author now anticipates the question What are the seventeen constituents of the evidentiary body?

*The constituents* [*are the five cognitive organs, the understanding and the internal sensory, the five active organs, and the five vital airs*] It may be asked how the evidentiary body is composed of seventeen constituents This is determined by Sureśvaráchárya in the scholia on the commentary treating of the quintuple combination of the subtile elements, who calls the subtile body the corporeal octave They have ascertained that the organs of sense are five, the organs of action five, and the internal sensory, the understanding, ego-

---

तेषु चेति । जाड्याधिक्यदर्शनादित्यत्राधिक्यशब्दं प्रयुञ्जानः सत्तास्फूर्त्ति प्रदत्वेन कार्य्येषु चैतन्यस्यापीषदनुवृ॑ सूचयति तथा चाहुस्तत्त्वदर्शिनः । अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकं । आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयमिति । वशिष्ठोऽप्याह यदस्ति यद्भाति तदात्मरूपं यच्चान्यतो भाति न चान्यदस्ति । स्वभावसंवित्प्रतिभाति केवला ग्राह्यं ग्रहीतेति मृषा विकल्प्यतइति । उत्पद्यमानेष्वाकाशादिषु वक्ष्यमाणकार्य्यानुरूपं गुणत्रयमुपलम्भयति ।

तदानीमिति । करणस्याव्याकृतस्य ये गुणाः सत्त्वादयस्तेषां प्रक्रमेण तान् गुणानारभ्य यथाकार्य्यक्रमं सत्त्वादिगुणाः सहैव कार्य्यैस्तेषूत्पद्यन्त इत्यर्थः । नन्वव्याकृतात् पञ्चतन्मात्राणि क्रमेण जायन्त इतिहि स्मृतीतिहासपुराणेषु प्रसिद्धिस्तत्कथमाकाशादेरिहोत्पत्तिराम्नायते इति तत्राह ॥

एतान्येवे.त । एतान्येवाकाशादीनि सूक्ष्मभूतानि व्यवहाराक्षमाणि शब्दादितावन्मात्रैकस्वभावानि । अपञ्चीकृतानि परमसंसृष्टानि चेति स्मृत्यादिषूच्यन्ते महर्षिभिरित्यर्थः । तदेवं भूताध्यारोपं श्रौतमनुक्रम्य इदानीं भौतिकाध्यारोपं प्रतिजानीते ॥

एतेभ्यइति । प्रतिज्ञातैकदेशं विवृणोति ॥

सूक्ष्मशरीराणीति । लिङ्ग्यते ज्ञायते प्रत्यगात्मसद्भावएभिरिति लिङ्गानि तानि च तानि शरीराणि च शरीरप्रतिष्ठितत्वात् शरीरसाधनत्वात् धर्म्मादिद्वारेणेति लिङ्गशरीराणीत्यर्थः । तथा च प्रयोगः विमतानि इन्द्रियाणि प्राणाश्च स्वातिरिक्तस्वान्तर्गतचैतन्याधिष्ठानपूर्व्वकप्रवृत्तयः अचेतनत्वात् रथादिवदिति । श्रुतिश्च भवति प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुरिति । यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमित्यादिका च । के पुनः सप्तदशावयवा इति तानाह ॥

अवयवास्त्विति । ननु कथं लिङ्गशरीरं सप्तदशावयवमिति निर्द्धार्य्यते । यावता पूर्य्यष्टकं लिङ्गमाचक्षते सुरेश्वराचार्य्याः पञ्चीकरणवार्त्तिके । ज्ञानेन्द्रियाणि पञ्चैव पञ्चकर्म्मेन्द्रियाणि च । मनोबुद्धिरहङ्कारश्चित्तञ्चेति चतुष्टयं । प्राणोऽपानस्तथाव्यानउदानाख्यस्तथैव च । समानश्चेति पञ्चैता कीर्त्तिताः प्राणवृत्तयः । खंवाय्वग्न्यब्धरित्र्यश्च भूतसूक्ष्माणिपञ्च च अविद्याकामकर्म्माणि लि ं पुर्य्यष्टकं विदुरिति । अन्यत्र पुनरन्यादृशं वर्णितं भूतसूक्ष्मपञ्चकं एकं कर्म्मज्ञानेन्द्रियपञ्चकं द्वयं चतुर्वृत्तिकमन्तःकरणं पञ्चवृत्तिकः प्राणश्चेति सप्तदशावयवाइति अतः कथं निर्णयइति । उच्यते न चैतेषां पक्षाणां विकल्पोऽभ्युपेयते वस्तुनि तदयोगाच्च समुच्चयः तत्र प्रमा-

tism, and recollection, are four; there are five modifications of the vital air, respiration, flatulence, circulation, pulsation of the throat and head, and assimilation, five subtile elements, ether, air, fire, water, and earth, which with illusion, mental retenta, and actions, are the evidentiary body or the corporeal octave In other places, again, the evidentiary body is differently described, viz that the five subtile elements, the five organs of cognition and action, the internal organ with its four functions, and the vital air with its five functions, are the seventeen constituents. How then can we decide which is right? It cannot be said that any of these alternatives is right, because those alternatives cannot exist in the thing itself. Nor can all three alternatives be right, for of this there is no proof But these seventeen elements described in the text, are variously sometimes given summarily and sometimes in detail Thus of the seventeen elements thus described in this place, the subtile elements are the material causes, and the material cause of these subtile elements is illusion There being, then, no difference between the material cause and its effects, illusion is not mentioned apart from the subtile elements. The subtile elements are not regarded as separate from the subtile bodies Mental retenta and actions, as being modifications of, and therefore dependent on, the internal organ, are identical with it, and therefore not separately enunciated There is, therefore, nothing to contradict the scholia on the corporeal octave So on another alternative the subtile element being separated from their products, and the internal organ and the vital airs being taken as the subject of a function and the function, the seventeen are accounted for. And thus according to the Vedic text. Prajâ-pati is seventeen, it being understood that Prajâ-pati or Hiranya-garbha is seventeen, the evidentary body is to be known to consist of seventeen constituents It has therefore been declared by competent authority: Properly the subtile body is declared to consist of seventeen constituents The organs which are instruments of cognition are the ear &c. Their definitions are respectively and successively, an organ percipient of sound, touch, colour, taste, and smell According to the Sânkhyas the organs are made of egotism To repudiate this view, the author declares them to be composed of the elements.

णाभावात् किन्तु इहोक्तस्य सप्तदशकस्यैव संक्षेपविस्तरभेदेन तथा तथा तत्र तत्र कथनं । तथाहि । इहोक्तानां हि सप्तदशावयवानां भूतसूक्ष्माण्युपादानानि तदुपादानञ्चाविद्या अतश्चोपादानोपादेययोरभेदान्नाविद्या भूतसूक्ष्मेभ्यः पृथग्विवक्ष्यते भूतसूक्ष्माणि च लिङ्गशरीरेभ्यो न पृथगभिप्रेयन्ते कामकर्म्मणोरप्यन्तःकरणवृत्तित्वेन तदाश्रितत्वेन च तदभेदान्नपार्थगर्थ्यविवक्षा । अतः पुर्य्यष्टकवार्त्तिकेन न विरोधः । तथा पक्षान्तरेऽपि भूतसूक्ष्माणि तत्कार्य्येभ्यः पृथक् कृत्यान्तःकरण प्राणयोश्च वृत्तिवृत्तिमतोरभेदं गृहीत्वा सप्तदशत्वं निरूपितं । तथा च सप्तदशप्रजापतिरिति श्रुतेः प्रजापतेर्हिरण्यगर्भस्य सप्तदशत्वावगमात् सप्तदशावयवमेव लिङ्गशरीरं मुख्यं ज्ञेयमिति । तदुक्तमभियुक्तैः । मुख्यन्तु सप्तदशकं प्रथितं हि लिङ्गमिति । ज्ञानसाधनानीन्द्रियाणि श्रोत्रादीनि तेषां शब्दस्पर्शरूपरसगन्धग्राहकेन्द्रियत्वानि प्रत्येकं यथाक्रमं लक्षणानि ॥ इन्द्रियाण्याहङ्कारिकाणीति सांख्यान्निराकुर्व्वंस्तेषां भौतिकत्वं कथयति ॥

*These [cognitive organs are produced from the separate pure particles of the ether &c, severally in their order]* The auditory and other organs are produced from particles of the elements possessing the three qualities produced by the qualities of their cause [viz. the three phases of illusion], such particles being appropriated to the phase purity, and from particles produced by by excess of that quality The author next defines the understanding and the common sensory

*Understanding [is the function of the internal organ which consists of assurance]* Assurance means ascertainment that this is so and so Determination is limitation of the object; a discrimination of the object in the form This is blue, that is yellow The contrary of discrimination is non-discrimination or uncertainty. It may be asked when the fourfold nature of the internal organ is a matter of notoriety, only two parts are treated of The author, therefore, says

A E G and G D

---

## PANDIT TÁRÁNÁTHA TARKAVÁCHASPATI'S EDITION OF THE SÁNKHYA-TATTVA-KAUMUDÍ.

By the following lines it is desired to call the attention especially of European students, to the merits of Pandit Táránátha Tarkavácháspati's Commentary on the Sánkhya-tattva-kaumudí The translator has found it useful in his own studies, and would recommend it as a simple and perspicuous exposition of one of the schools of Indian thought Want of leisure precludes a studied review, which perhaps would be less acceptable than the following specimens translated and allowed to speak for themselves

### THE ILLUSORY EVOLUTION OF THE UNIVERSE, AS TAUGHT BY CERTAIN VEDÁNTINS.

The illusory product of entity as susceptible of sublation in trinal time, absolute, unmodifiable, imagined by the illusion thereof, and terminable by the knowledge thereof, has modification for its distinctive character. Any existence other othan illusory is ascribed to

एतानीति । कारणगुणोत्पन्नत्रिगुणानां भूतानां सत्त्वगुणावच्छिन्नांशेभ्यो गुणोद्रेककृतभागेभ्यः श्रोत्रादीनि जातानीत्यर्थः । बुद्धिमनसी लक्षयति ॥

बुद्धिर्नामेति । निश्चयोऽध्यवसायः इदमित्थमेवेतिविषयपरिच्छेदः । सङ्कल्पः इदं नीलं इदं पीतमिति विषयविवेचनं । विकल्पस्तद्विपर्य्ययइति भेदः । नन्वन्तःकरणस्य चतुष्टयत्वप्रसिद्धेः कथमिह द्वयमेव गृहीतमित्यत आह ॥

such product only metaphorically. This illusory product, while it is the whole universe of product being in course of evolution, is not real, that is, is not substantially existent. It is accompanied not with true existence, but only with existence susceptible of practical assurance [that is, it exists only as the object of outward-passing activities.] To exemplify this. There is evinced by the consciousness of all men a cognition of silver and the like in nacre and the like, and this cognition is presentative, as is evinced by such deliverances of consciousness as I presentatively cognise silver. It is juxtaposition of the organ and the object of sense which constitutes the cause of presentation or perception, and therefore silver existing in another place, not being in juxtaposition to the visual organ, cannot be an object of presentation. Nor can it be maintained that there is an erroneous attribution to the nacre, of silver formerly cognised and resuscitated by cognition; for were we to acknowledge a cognition of an object thus reinstated by cognition, we should have to disallow the consciousness of the presentation. There is not, therefore, in this instance, a mere reminiscence of silver formerly experienced, for this is repugnant to the fact of consciousness. We are thus constrained to the hypothesis that there is produced in this nacre unreal silver, and that the cause of the production of such unreal silver is illusion, the object of which illusion is nacre and the like, while as subsidiary to this cause we must assume the mental retentum the object whereof is silver. Illusory attribution, then, is that whereof the presentative object is the unreal silver thereby produced in identity with the nacre.

As in the silver, though thus produced, there is not the least obstruction to the practical existence of the nacre; so in like manner there are produced in absolute, unmodifiable, spirit, enveloped in its own illusion, the illusorily attributed ether and other constituents of the world and the illusion thereof is the cause, and the mental retenta are co-operative to the cause. Thus it is that water-pots and similar gross objects, the matter under discussion, are illusorily surmised in entity, inasmuch as, while destructible by knowledge of pure being, they have the appearance of identity therewith, just as the silver is destructible by knowledge of the nacre, while it has the appearance of nacre. By this argument it is demonstrated how water-pots and the like are illusorily surmised in real being. It has been already stated that to be illusorily surmised is to be an object of presentative perception, and, as even an unreal thing unless produced could not be an object of presentation, we must in order to guard the position of illusory attribution, allow that such production takes place therein. The destructibility of such illusory products by knowledge is inferrible from their falsity, as the unreal silver is destructible by knowledge of the nacre. Dismissing further amplification, such is the doctrine of the Vedántins. (pp. 39, 40.)

And in the doctrine of illusory evolution while the indifference of effects and their causes is admitted, there is admitted by the Vedántins at the same time the falsity of objects, inasmuch as cognitions of water-pots, pieces of cloth, and similar gross objects are taught to be relative only to objects illusorily surmised. To illustrate this. The cognitions of water-pots &c., the matter under discussion are conversant about things illusorily surmised, as being cognitions of which the perdurable is not the object. It being evinced by this argument that cognitions of water-pots &c. have for their objects things illusorily surmised, and that which is illusorily surmised being, as destructible by knowledge, false and consequently non-entitative, we cannot adopt this view, as it is vitiated by the supposition of the identity of the existent

सतः—त्रैकालिकबाधरहितात् कूटस्थवदपरिणामिनः विवर्त्तः स्वाज्ञानकाल्पतः स्वज्ञाननिवर्त्त्यः परिणामविलक्षणः अन्यथाभावापत्तिः उपचारात् तया उत्पद्यमानं कार्यजातमपि विवर्तः न वस्तु सदिति वस्तुतः पारमार्थिकेन सत्त्वेनान्वितं न किन्तु व्यवहारयोग्यसत्तयान्वितम् । तथाहि शुक्तिकादौ रजतादिज्ञानं सर्वानुभवसिद्धं तच्च प्रत्यक्षमेव रजतं साक्षात् करोमीत्याद्यनुभवात् । प्रत्यक्षे च विषयेन्द्रियसंनिकर्षः कारणं तथाच देशान्तरस्थितरजतस्य चक्षुरसन्निकृष्टतया न प्रत्यक्षविषयता । न च पूर्वज्ञातस्य रजतस्य ज्ञानेन उपनीतस्य शुक्तिकाया भ्रम इतिवाच्यम् ज्ञानोपनीतस्य ज्ञानस्वीकारे साक्षात्कारानुभवापलापापत्तेः । अतएव न पूर्वानुभूतरजतस्मरणमात्रमनुभवविरोधात् । अतोऽगत्या तत्र शुक्तिकायामसद्रजतमुत्पद्यते इत्येव कल्पनीयम् । तदुत्पत्तौ च शुक्तिकादिविषयकमज्ञानं कारणं रजतविषयसंस्कारश्च तत्सहकारितया कल्पनीयः । तदेव अध्यस्तत्वम् यदुत्पन्नस्य तस्यासतोरजतस्य शुक्तिकातादात्म्येन तत्प्रत्यक्षविषयता । तत्रोत्पन्नेऽपि रजते शुक्तिकाया मनागपि व्यावहारिकसत्त्वस्य व्याघातो न भवतीति यथा एवं कूटस्थे अपरिणामिनि आत्मनि स्वाज्ञानेनावृते वियदादिकमध्यस्तमुत्पद्यते तत्र च तदज्ञानं हेतुः तत्संस्कारश्च सहकारीति तथाच विवादाध्यासिता घटादयः सन्ति अध्यस्तास्तज्ज्ञाननाश्यत्वे सति सत्तादात्म्येन प्रतीयमानत्वात् शुक्तितादात्म्येन प्रतीयमानशुक्तिज्ञाननाश्यरजतवदित्यनुमानात् अध्यस्तत्वं घटादीनां सिद्धम् । अध्यस्तत्वं च साक्षात्कारिप्रत्यक्षविषयत्वं प्रागुक्तं तच्च तस्यासतोऽप्यनुत्पत्तौ प्रत्यक्षविषयता न स्यादिति अध्यस्तत्वरक्षायै तस्मिन्नुत्पत्तिरप्यङ्गीकार्या । ज्ञाननाश्यत्वं च तेषां मिथ्यात्वात् शुक्तिज्ञाननाश्यासद्रजतवदित्यनुमातव्यमित्यास्तां विस्तरेण इति वेदान्तिमतम् ॥

विवर्त्तवादे च यद्यपि तदनन्यत्वमारम्भणशब्दादिभ्य इति २।२४ शा० सूत्रेण कार्यकारणयोरभिन्नत्वमेव स्वीकृतं तथापि घटपटादिज्ञानानामध्यस्तविषयकतया विषयाणां मिथ्यात्वं तैरङ्गीक्रियते तथाहि विवादाध्यासितानि घटादिज्ञानानि अध्यस्तविषयकाणि नित्यविषयकज्ञानत्वात् शुक्तिकायां रजतज्ञानवदित्यनुमानेन घटादिज्ञानानामध्यस्तविषयकत्वे सिद्धे अध्यस्तस्य च ज्ञाननाश्यतया मिथ्यात्वमिन्यसत्त्वमेव तथाच सदसदोस्तादात्म्योनुपपत्तिदोषेण नैतत्पक्षश्रयणम् । किञ्च मिथ्यात्वं ज्ञाननिवर्त्त्यत्वं तच्च नेदं रजतमिति बाधबुद्ध्या यथा रजतस्य मिथ्यात्वं प्रसिद्धमेवं घटादेर्मिथ्यात्वसाधकस्य बाधस्यादर्शनाच्च तस्य मिथ्यात्वमेवञ्च हेत्वसिद्धेः कथं घटादिज्ञानानामध्यस्तविषयकत्वसिद्धिः । एतदर्थमेव असति बाधक इत्युक्तम् । तथाच शुक्तिरजतबाधकवदत्र बाधकाभावाच्च मिथ्यात्वम् । न चाद्वैतश्रुतिरेव बाधिका तस्याः अन्यार्थपरतया द्वैताभावनिषेधपरत्वाभावात् अतएव नाद्वैतश्रुतिविरोधो जातिपरत्वादित्यनेन २ ५४ साङ्ख्यसूत्रेण श्रुतेः समानजातीयबहुजीवपरत्वं समर्थितम् ॥

and the non-existent [thus violating the law of non-contradiction] Moreover falsity is susceptibility of cessation upon knowledge, and since we experience no sublation exhibiting the falsity of water-pots &c, similar to the tollent intellection This is not silver, whereby the falsity of illusorily surmised silver is a matter of notoriety, we cannot admit the falsity thereof Since then you have not ascertained your argument, how can you shew that cognitions of water-pots &c are conversant about objects illusorily surmised? For this reason the words in the text *There being nothing tollent* There is, then, no falsity, there being nothing tollent in this case, as there is something tollent in the case of the silver erroneously surmised in the nacre, nor can it be argued that the text Without a second is alone sufficient to sublate these water-pots &c, for it is as relating to another matter, that this text does not purport a denial of the non-existence of a duality of principles, and hence it is that by the Sánkhya Aphorism (1-14) Nor the text of non-duality, there being no contradiction inasmuch as it refers to a class, it is confirmed that this text refers to a plurality of homogeneous individual souls (p 43)

BUDDHIST SENSATIONALISM.

Sensation, the form of which is pleasure, pain, and indifference, is the one predicament, and there is no different or external substratum thereto, to which the attributes pleasure &c, belong This doctrine of sensation is as follows As modifications of consciousness such as dreams, illusions, mirages, serpents illusorily surmised in ropes, cities of the Gandharvas [the baseless fabrics of reverie] arise, without any external object, in the form of sensation and sentient; so it is understood that the cognition of posts &c, the objects of waking consciousness should arise, there be no difference between the cognitions Though there be no external object a diversity of cognitions arises from a diversity of mental retenta, and transmigratory existence being without beginning, there is nothing to contradict a diversity of retenta, sensations and ideas standing in a reciprocal relation of cause and effect, like seeds and sprouts The difference is that whereas all admit a diversity of cognitions caused by a diversity of phantasmata in dreams &c, even without an object, the Buddhists suppose the case to be the same also in the waking state. The partiality of experiential cognition for its several objects, whereby it becomes cognition of a post, of a water-jar, of a piece of cloth, cannot be accounted for unless there be some form in the cognitions themselves, and therefore we must admit that the cognitions resemble their objects in form, and if this be allowed, all practical activity being accounted for by this alone, the hypothesis of the real existence of the bodies is useless The object of the sensation and the sensation are one and the same, for if the one of these be not presented to consciousness, the other is not presented. It is, therefore, possible to have such and such cognitions, even in the absence of external bodies The author proceeds to invalidate this doctrine in the words To these he says. The meaning is as follows. The object differs from the subject, because it is an object, like a water-pot &c., illumined by a lamp; or, the subject differs from the objects, because it is a subject, like a lamp which illumines water-jars &c. The difference of subject and object being evinced by this argument, we cannot infer their indifference Again, if the object be the same as the sensation, you must affirm that it is identical with the sensation which is a modification of the internal organ, and the modifications being differenced according to the individual souls, it will follow that the objects differ with each soul, and in this case how could a plurality of spectators simultaneously attend to a single contraction of the eyebrows of one dancing-girl, while that they do so attend is inferred from their conversing together about it afterwards? Though, therefore, the practical activity of the subject would be possible even under the form of the object, yet as it would differ in each individual soul, [each acting in relation to a different object identical with the modifications of its own internal organs], there cannot be a void of external bodies. (pp 58, 59)

A E. Gough.

हर्षविषादादिः आकारो यस्य तादृशं विज्ञानमेवैकः पदार्थः ततोऽन्यः भिन्नः बाह्यः तद्धर्म्मा तत् हर्षादि धर्म्मा यस्य तदाधारइत्यर्थः न नास्ति । स च विज्ञानवादश्चेत्थम् । यथा स्वप्नमायामरीच्युदकरज्जु पैगन्धर्वनगरादि प्रत्ययाः विनैव बाह्यार्थेन ग्राह्यग्राहकाकारा भवन्ति एवं जागरितविषयस्तम्भादिप्रत्यया अपि भवितुमर्हन्तीत्यवगम्यते प्रत्ययत्वाविशेषात् । असत्यपि बाह्यार्थे वासनावैचित्र्यात् प्रत्ययवैचित्र्यम् अनादौ च संसारे विज्ञानानां वासनानाञ्च बीजाङ्कुरवत् परस्परनिमित्तनैमित्तकभावेन भावना वैचित्र्यम् न विरुध्यते । स्वप्नादिषु बाह्यान्तरेणाप्यर्थं वासनानिमित्तस्य ज्ञानवैचित्र्यस्य सर्वैः स्वीकृतत्त्व त् जागरितेऽपि तथा बौद्धैः कल्प्यते इति विशेषः । अनुभवात्मकस्य ज्ञानस्य योऽयं प्रतिविषयं स्तम्भज्ञानं घटज्ञानं पटज्ञानमिति पक्षपातः नासौ ज्ञानगताकारं विनोपपद्यते इत्यवश्यं विषयाकारसारूप्यं ज्ञानस्याङ्गीकर्त्तव्यम् अङ्गीकृते च तस्मिन् तेनैव सर्वव्यवहारसम्भवात् निरर्थिकाऽर्थसद्भावकल्पना सहोपालम्भनियमादभेदो नीलतद्धियो रित्युक्तेः विषयविज्ञानयोरभेद एव नह्यनयोरेकस्यानुपलम्भेऽन्यस्योपलम्भो भवति । तस्मात् बाह्यार्थाभावेऽपि तत्तत्प्रत्ययसम्भवइति । तन्मतं दूषयितुमुत्थापयति तान् प्रत्याहेति । अयमाशयः । विषयो विषयितोभिद्यते विषयत्वात् प्रदीपप्रकाश्यघटवत् विषयी विषयेभ्यो भिद्यते विषयित्वात् घटादिप्रकाशकप्रदीपवद् वा इत्यनुमानेन विषयविषयिणोर्भेदसिद्धेर्नाभेदानुमानम् । किञ्चविषयस्य विज्ञानस्वरूपत्वे वृत्तिरूपविज्ञानस्वरूपत्वं वाच्यं वृत्तीनाञ्च प्रतिपुरुषं भिन्नतया विषयाणां प्रतिपुरुषं भेदापत्तिः तथा च एकस्मिन् नर्त्तकीभ्रूभङ्गे कथं बहूनां युगपत् प्रतिसन्धानं स्यात् तत्प्रसन्धानञ्च तदुत्तरं मिथस्तेषां तथाभिलापात् अनुमीयते तथाच विषयिणो विषयाकारेणैव व्यवहारोपपत्तावपि प्रतिपुरुष भेदापत्तेर्न बाह्यार्थविरहः इतिभावः ॥

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO. AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधि

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature

No. 80. Benares, January 1st, 1873. Vol. VII.

## ॥ चिन्तामणेः शब्दखण्डम् ॥

(१) अथ स्वर्गकामो यजेतेत्यादौ इष्टसाधनत्वं कार्यत्वं वा यद्विधिः स समभिव्याहृतक्रियान्वयी तदन्यान्वयी वा । तत्र गुरवः । ना(२)हत्य क्रिया कार्यतया लिङा बोधयितुं शक्यते । (३) स्वर्गकामनियोज्यान्वययोग्यताज्ञानविरहात् । (४) कामनाविशिष्टस्य हि ममेदं कार्य-

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

प्रसङ्गादाह । (१) अथेति । यद्यपि गुरुमते विधिः कार्यात्मा, स च समभिव्याहृतक्रियान्वय्येव तथापि कार्यत्वांशमुभयसिद्धं लिङर्थमादायैव विप्रतिपत्तिर्बोध्या । इष्टसाधनत्वं विधिरितिन्यायमतेनाभ्युपगमवादेन वा बोध्यम् । यद्यप्यौपादानिकसाधनत्वं परमते यागेस्त्येव तथापि प्राथमिकं शब्दोपस्थापितान्वयबोधमभिप्रेत्येदं बोध्यम् । (२) आहत्येति । इष्टसाधनताज्ञानात्प्रागित्यर्थः । (३) स्वर्गेति । स्वर्गकामस्य नियोज्यस्य नियोज्यत्वेन यो ऽन्वयबोधस्तत्र योग्यताज्ञानविरहादित्यर्थः । कुत एवमित्यत आह । (४) कामनेति । विशेष्यान्वय्यनन्वयिनो विशेषणत्वानुपपत्तेरित्यर्थः । न च कामनोपलक्षणमेवाकामव्यावृत्तोपलक्ष्याभावात् । विशेषणत्वे बाधकाभावाच्च । ननु कर्तृत्वेनाधिकारित्वेन वा तदन्वयसम्भवे किं नियोज्यत्वेनेति चेत्, न । कृतिसमवायित्वरूपस्य कर्तृत्वस्य स्वर्गरूपफलभागित्वलक्षणस्याधिकारित्वस्य च कामनांशे ऽनन्वयात् । न च कृतिजनकत्वेन कर्तृत्वेनैवान्वयोऽस्तु, तच्च विशेषणीभूतकामनायामपि, अन्यथा बोद्धृत्वान्वयोऽपि कथमिति वाच्यम् । नहि न्यायनय इव फलकामना गुरुनये साक्षात्प्रयत्नहेतुः । किं तु ममेदं कार्यमिति बोधद्वारेत्यस्यापि नियोज्यत्व एव विश्रमादिति वदन्ति ॥ अन्ये तु शुचिविहितकालजीवित्वे सति फलकामनावत्त्वमिष्टोपायताज्ञानवत्त्वं वाधिकारित्वं, तच्च कामिनो यागे न सम्भवति, तस्य क्षणिकत्वात् । न च फलस्वाम्यलक्षणेनाधिकारित्वेनान्वयोऽस्त्विति वाच्यम् । फलवत्त्वे ह्यधिकारिता, तथा च तस्य क्रियान्वये सति प्रवृत्तौ सत्यां फलवत्त्वमित्यन्योन्याश्रयात् । नापि कर्तृत्वेनान्वयः । तथाहि । स्वर्गकाम इत्यादिवाक्यं तावदिच्छाविषयत्वेन स्वर्गं बलवदिष्टप्रतिपादकम् । न चेदमन्यार्थं सम्भवति, नेष्टं परनिष्पत्तय इति न्यायात् । किं त्विष्टार्थतैवास्य, सर्वस्य कामना हि तावत् काम्यार्थैव । मा हि स्वर्गं भवन्तो तत्साधने इष्टोपायताधियं ततः कार्यताधियं तत्रोत्पाद्याधिकारिणं तत्र प्रवर्त्य स्वर्गमर्जयतीति । एवं यागोऽप्युपायतया स्वर्गार्थः । एवं स्वर्गहेतुभूतापूर्वनियोज्यतया पुरुषोऽपि स्वर्गार्थ एवेति न पुंसः कर्तृत्वेन क्रियायामन्वयः । व्युत्पादितस्वर्गप्राधान्यभङ्गापत्तेः, तदा हि स्वर्गकामकर्तृको याग इत्यन्वये स्वर्गस्य कर्तृकोटिप्रवेशादन्यार्थत्वप्राप्तिः । ननु यजेतेत्यनेनोक्ता भावना शुद्धेन प्रातिपदिकार्थेनान्वीयते उभयाकाङ्क्षाबलात्,तदनुयायिनी लिङुक्ता सङ्ख्यापि, एकप्रत्ययोपात्तत्वात् , एवं च एकैव संख्या सुप्तिङ्भ्यामभिधीयत इति शाब्दमपि सामानाधिकरण्यम् । तथा च भावनान्वयेन पुरुषः कर्ता भवन्नन्वीयते यागे । एवं चाधिकारित्वेनानन्वये ऽधिकारिणो ऽलाभे प्रवर्तकत्वायोगः तत् कथमेवमिति चेत्, न । पश्चात्कर्तृत्वादिनाप्यन्वयस्याभ्युपगमेन सर्वस्योपपत्तेः । अत

मिति (५) बोद्धृत्व नियोज्यत्वं कामनायास्तद्बोधोपयोगे सति भवति, (६) स च कामनानन्तरं काम्यसाधनताबोधात् कार्यताबोधे सति स्यात्। (७) एवं च स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यान्वय(८)योग्यता, न च कालान्तरभाविस्वर्गे क्रिया साक्षात्परम्परया वा साधनमिति शब्दो बोधयितुमर्हति। आशुविनाशित्वात्। परम्पराघटकानुपस्थितेश्च। तृतीयप्रकाराभावाच्च। अन्यथा तमादाय साधनत्वसंभवात् कल्यमप्यपूर्वं न स्यात्। इष्टसाधनताविधिपक्षे स्फुटैवानुपपत्तिः। कार्यताविधिपक्षे (९) ऽन्वयप्रकारतया साधनत्वं शाब्दमिति फलतो न कश्चिद् विशेषः। अतः क्रियातो ऽन्यत् (१०) स्वर्गसाधनतार्हं क्रियाकार्यतानिर्वाहकं लिङाद्यर्थः। (११) ननु सजातीये ऽन्वयदर्शनं योग्यता, दृष्टं च घृतपानस्याशुविनाशिनः कालान्तरे पुष्टिहेतुत्वमिति चेत्। न। यथाकथं चित्साजात्यस्यायोग्येपि सत्त्वेन योग्यताया अव्यावर्त्तकतापत्तेः, पदार्थतावच्छेदकेन साजात्यस्या(१२)द्य जातः पयः पिबतीत्यादौ (१३) प्रकृते चासंभवात्, तस्मादन्वयप्रयोजकरूपवत्त्वं साजात्यम्। अत एव द्रवद्रव्यत्वं सेककरणत्वे प्रयोजकमित्ययोग्यो वह्निः।

एव एकादशाद्ये तथैव सिद्धान्तितमिति वदन्ति। ननु निरुक्त नियोज्यत्वमनुपस्थित कथमन्वयप्रकार इति चेत्,न। योग्यतावच्छेदकप्रकारेणोपस्थितएवेतरान्वय इति छिद्रेतरत्ववत्त्वस्य योग्यताबलादेवोपस्थितेः। संसर्गरूपतयैव तद्भानमित्यप्याहुः। (५) बोद्धृत्वमिति। बोधजनकत्वमित्यर्थः। कामनायाः साक्षात्तद्बोधोपयोगे बाधात्तद्द्वारमाह। (६) स चेति। साक्षज्जनकत्वबाधे द्वारानुपस्थित्या कामनायां तद्बोधो ऽसंभवी, ततो द्वारोपस्थितिर्वाच्या। द्वारं चेष्टसाधनताज्ञानं तदसंभवे योग्यताज्ञानविरह इत्यर्थः। तदेवाह। (७) एवं चेति। (८) योग्यता। योग्यताज्ञानमित्यर्थः। (९) अन्वयेति। योग्यताबललब्धान्वयप्रतियोगितयेत्यर्थः। अन्वयरूपतयेत्यर्थ इत्यन्ये। यद्यपि तन्मते औपादानिकं तच्च शाब्दं तथाप्युपादानसहकृतशब्दजन्यतया शाब्दत्वाभ्युपगमादेतदुक्तम्। (१०) स्वर्गेति। साक्षात्स्वर्गसाधनतार्हमित्यर्थः। अन्यथा क्रियातौल्ये दोषतौल्यादित्यवधेयम्। एतच्च काम्यस्थले, नित्ये चेष्टसाधनताज्ञानं विनापि तन्मते कार्यताबुद्धेर्नियोज्यान्वयस्य भावादित्यवधेयम्। (११) नन्विति। तथा च न योग्यताज्ञानविरह इत्यर्थः। (१२) आद्येति। यथा चैतत्तथा व्याख्यातं योग्यतालक्षणे। (१३) प्रकृते चेति।

तदिहाशुविनाशिनः कालान्तरभाविफलजनकत्वे फलसमयपर्यन्तस्थायिव्यापारजनकत्वं प्रयोजकमतो ऽपूर्वं विना साजात्यमेव न गृह्यते, घृतपानस्य वैद्यकोपस्थितधातुसाम्यमादाय पुष्टिसाधनत्वयोग्यताज्ञानं विज्ञस्य। अथ बाधकप्रमाणाभावो योग्यता, न च साधनत्वमात्रे बाधकं, साक्षात्तद्बाधेपि परम्परासाधनतामादाय तद्भ्रान्तिसंभवात्। न च योग्यानुपलब्ध्या द्वारस्य बाधात् परम्परया साधनत्वमपि बाधितं, (१४) संस्कारस्येव तत्संभवात्। अन्यथा वाच्ये ऽप्यपूर्वे क्रिया कामिकार्या न स्यात्। काम्यासाधनत्वात्। नहि यदयोग्यं तत्पश्चाद् योग्यम्, (१५) अयोग्यत्वे च निष्फलः प्रयासः। (१६) न च कामिकार्यमपूर्वं तदर्थिकार्या च क्रियेति वाच्यम्। (१७) यागे रागादित्यनेन विरोधात्। तथापि द्वारानुपस्थित्या परम्परासाधनमिति ज्ञानं न भवेदिति चेत्। सत्यम्। किंतु स्वर्गसाधनं याग इति ज्ञानं साक्षात्परम्परोदासीनं (१८) वस्तुगत्या परम्परासाधनविषयकमुत्पद्यमानं नायोग्यत-

प्रथमं तज्ज्ञानस्यासंभवादिति भावः। (१४) संस्कारस्येवेति। अयोग्यस्य योग्यानुपलब्ध्या बाधो ऽशक्य इति भावः। (१५) अयोग्यत्वइति। यागादिक्रियाया अयोग्यत्वे तद्गोचरो यजमानस्य प्रयत्नो विफल इत्यर्थः। ईश्वरस्य तत्कार्यताबोधनाय प्रयासो व्यर्थ इत्यर्थ इत्यन्ये। (१६) न चेति। तथा च यागः स्वर्गसाधनमेव नेत्यर्थः। (१७) याग इति। रागः स्वर्गादिफलेच्छा तया तत्साधने यागे प्रवृत्तिरङ्गे वैधी विधिरपूर्वं तदर्थतयाङ्गे प्रवृत्तिरिति त्वदुक्तेन तवैव विरोधादित्यर्थः। स्वर्गसाधनताज्ञानजन्यचिकीर्षा राग इत्यन्ये। ननु न्यायनये यदि अपूर्वार्थितयैवाङ्गे प्रवृत्तिस्तदा प्रथमं तदनुपस्थितौ मूकत्वमङ्गबोधकविधेः स्यात्। स्वर्गार्थितया चेत्तदा यागेनाविशेषाद्विनिगमनाविरहात्तदङ्गत्व न स्यादिति चेत्, न। स्वर्गान्वयाविशेषेपि फलसमभिव्याहारेण यत्र विधिवाक्यं प्रवर्त्तते तत् प्रधानमिति निर्णायाद् इत्येके। प्रथमं साधनत्वेनेष्टसाधनत्वेन वाङ्गविधिप्रवृत्तावपूर्वकल्पनोत्तरमपूर्वरूपेष्टसाधनताज्ञानादङ्गे प्रवृत्तिरित्यन्ये। तदुत्तरमेवाङ्गविधिप्रवृत्तिरित्यप्याहुः। विशेषविनाकृतं सामान्यज्ञानं कथमित्यत आह। (१८) वस्तुगत्येति। विशेषभानमस्त्येव विशेषरूपेण भाननियमो ऽसिद्ध एव, अत एव घटत्वेन नीलघटादेर्विशेषस्य भानमितिभावः। ननु नीलघटत्वातिरिक्तघटत्ववत्त-

यो परिभवितुं शक्यम् । (१८) यदि च साक्षात्परम्परा-विशेषद्वयव्यतिरिक्तं सामान्यं नास्त्येव तदा ऽननुगमः । किं वा विशेषयसि साक्षात्परम्परया वेति । न च यावद्विशेषबाधे तद्बाधितं, परम्परासाधनत्वे ऽबाधादिति । मैवम् । योग्यता हि स्वबाधकप्रमाविरहो वा सकलबाधकप्रमाविरहो वा । आद्ये वह्निना सिञ्चतीत्यादौ स्वबाधकप्रमातद्विरहौ समयभेदेन स्त इति तदेव (२०)योग्यमयोग्यं चेति प्राप्तं, द्वितीये तु योग्यानुपलब्ध्या तन्निश्चयो (२१) ऽशक्यः, परप्रमाया अयोग्यत्वात् । न च वाच्यं सकलबाधकप्रमाविरहः स्वरूपसन्नेव प्रयोजक इति । अयोग्ये योग्यताभ्रमादन्वयबोधाभाव(२२)प्रसङ्गात् । अन्यस्य हि तत्र बाधकप्रमासत्त्वाद् अन्वयप्रयोजकरूपवत्त्वेन बाधकप्रमाविरहो निश्चीयतइति चेत् । तर्हि प्राथमिकत्वात्स्वैव योग्यता, न च सा प्रकृते संभवतीत्युक्तम् । (२३) किं चैकविशेषबाधे शाब्दसामान्यज्ञानं तदितरविशेषप्रकारतानियतं, छिद्रबाधे (२४) छिद्रेतरघटज्ञानवत्, न च द्वारानुपस्थित्या प्रकृते तथा घटते । (२५) एतेन यदुक्तं प्रशस्तरूपवांश्चैव इत्यत्र गौरश्यामविशेषानवगमेपि रूपवत्त्वमात्रमवगम्यते तद्वद् विशेषावगमेपि साधनत्वमात्रमिति तत्प्रत्युक्तम् । तत्रैकविशेषबाधाभावेनौदासीन्यसंभवात् । एतेन स्वर्गकामान्वयबलात् क्रियायाः फलसाधनत्वं तद्बला(२६)च्च पटोः संस्कारस्येव स्थायित्वं कल्प्यतां क्रिमपूर्वेण, संकल्पविशेषस्य यागस्यापि प्रत्यक्षानुपलब्धिरात्मविशेषगुणानां (२७) प्रथमक्षणएव स्वविषयकप्रत्यक्षजननस्वभावादस्तु, न चैवं क्रियान्तरमपि तथा, प्रमाणाभावात्, एवं (२८) लोकसिद्धक्रियाकार्यत्वव्युत्पत्तिरपि भग्ना न भवतीति परास्तम् । स्वर्गसाधनतायोग्यतया स्वर्गकामान्वयस्तदन्वये च स्थायित्वमित्यन्योन्याश्रयात् । लोके धर्मिग्राहकमानेन क्रियायाः क्षणिकत्वनिश्चयाच्च । (२९) ननु देवपूजार्थो यजिः, पूजा च आराधना, गौरवितप्रीतिहेतु क्रिया । अतो देवताप्रीतिद्वारा यागस्य स्वर्गसाधनत्वं, प्रीतेः क्षणिकत्वेपि प्रीत्यनुभवजनितसंस्कारद्वारा तत्संभवात् । अत एवाग्नेयादौ प्रीतिभागितयाग्न्यादेरुद्देश्यत्वमिति चेत् । न । यजदेवपूजायामिति हि शाब्दिकस्मृतिः

---

द्वुभयातिरिक्तं तत्साधनत्वं नास्त्येवेत्यत आह । (१९) यदि चेति । (२०) योग्यमयोग्यं चेति । न च विरहपदमत्यन्ताभावपरं, तन्निश्चयस्याशक्यत्वादिति भावः । (२१) अशक्य इति । न च नित्यनिर्दोषत्वेन वेदे तदनुमेयं, तस्यैव प्रथमं दुर्ज्ञेयत्वात् । वस्तुतः सर्वत्र तन्निश्चयासंभवाद् न सा योग्यतेति भावः । (२२) प्रसङ्गादिति । तन्मते ऽसंसर्गाग्रहस्य कारणत्वेपि न्यायनयमभ्युपेत्योक्तम् । ननु योग्यतासंशयः शाब्दधीहेतुः स्वरूपसती च योग्यता प्रमाहेतुरित्यस्वरसेनाह । (२३) किं चेति । सामान्यघटितविशेषद्वयमध्ये नियमोयं बोध्यः । (२४) छिद्रेतरेति । छिद्रेतरत्वप्रकारकघटज्ञानवदित्यर्थः । अत्रेदं चिन्त्यम् । यथा छिद्रबाधे छिद्रेतरत्वेन घटधीः, तथा साक्षात्साधनत्वबाधे तदितरकारणत्वेन द्वारानुपस्थितावपि तद्धीरस्तु, तस्यापिविशेषत्वात् । किं च परंपरासाधनत्वेनापि तद्धीरस्तु, तन्मते छिद्रेतरत्ववद्योग्यतावशादेव तदुपस्थितिसंभवात् । न च परम्पराघटकापूर्वस्य प्रागनुपस्थितिरितिवाच्यम् । नहि तन्मते ऽन्वयप्रतियोगिन एव उपस्थितिरन्वयबोधाङ्गमपूर्ववाच्यत्वेपि तदनन्वयप्रसङ्गात् । कार्यत्वेन घटादेरेव शक्तिग्रहविषयतया पदार्थस्मरणे तस्यैव विषयत्वात् । तथा च परम्परासाधनत्वप्रकारकोपस्थितिरपि वाच्या, समानप्रकारकत्वेन हेतुत्वात् । सा च न दुर्लभा । वाक्यार्थानुभवकाले च योग्यतावलात्परंपरात्वेनापूर्वमेव भासतां किमपूर्वशक्यतया । न च पदाजन्यतया सोपस्थितिर्नाङ्गं,छिद्रेतरत्वोपस्थितावपि तुल्यत्वादिति । भट्टमतं निरस्यति । (२५) एतेनेति । संस्कारस्यापि सर्वस्य न तथात्वमत आह । (२६) पटोरिति । (२७) प्रथमक्षणएवेति । उत्पत्त्यधिमक्षणएवेत्यर्थः । एतदपि निर्विकल्पकानपेक्षणपक्षे । के चित्तु प्रथमक्षणएवेत्यस्य द्वितीयतृतीयक्षणान्यतरक्षणएवेत्यर्थः । तेनानुमित्यनन्तरं परामर्शानुव्यवसायसंभव इत्याहुः । ननु नान्योन्याश्रयः । यथा स्वर्गकामान्वयानुपपत्त्या लिङः कार्ये शक्तिस्तथा तत एव धर्मिकल्पनात इति न्यायेन क्रियाया एव स्थायित्वं कल्प्यतामित्यस्वरसेनाह । (२८) लोक इति । क्रिया तावत्फलपर्यन्तो व्यापारः, फलं चावच्छेदकं, तच्च यजेः स्वत्वध्वंस इति तत्राश्रयोयं यज्यर्थः सिद्धः प्रसिद्धक्रियान्तरवदिति लोकसिद्धक्षणिकत्वायाः क्रियाया न स्थैर्यं कल्प्यते, धर्मिग्राहकमानबाधादित्यर्थ इत्याहुः । तथा च प्रमाणान्तरबाधेन धर्मिकल्पनापि ज्यायसी, अन्यथा प्रतीतध्वंसानामपि लोके तिरोभावमात्रकल्पने सांख्यमतप्रवेश इति भावः । एवमनुभवस्यापि स्थायित्वे संस्कारोपि न कल्प्येत, तथा च संस्कारस्येवेत्यप्ययुक्तं स्यादित्यपि बोध्यम् । तटस्थः शङ्कते । (२९) नन्विति । पितृभ्यो दद्यात्संध्यामुपासीतेत्यादावपि देवताप्रीतिरेवात्रावधृता द्वारमित्यभिमानः । ननु मानान्तरं तत्र स्यादित्या-

स्मृतित्वादेव न स्वतः प्रमाणम् । (३०) न च यागस्य देवताप्रीतिहेतुत्वे स्वर्गस्य देवताप्रीतिसाध्यत्वे वा मानान्तरमस्ति । वस्तुतस्तु चेतनदेहे मानमेव नास्ति । (३१) यच्च च विष्णुप्रीतिकामादिवादोऽस्ति तच्च विष्णोरेव प्रीतिर्न विष्णोः, षष्ठ्यर्थलक्षणा दोषात् । विष्णुशब्दस्य प्रीतिविशेषवाचकत्व वेदएव कल्प्यते । न च देवपूजार्थयज्यन्वयबलात्तथा, (३२) अन्योन्याश्रयात् । (३३) नन्वेवमाग्नेयादीनां षण्णां क्षणिकत्वाद्योग्यतानवगतौ परमापूर्वकारणत्वानवगमे कथमपूर्वकल्पनेति चेत् । न । (३४)

---

शङ्काह । (३०) न चेति । न चाविगीतत्वादिविशेषितस्मृतित्वाद्वेदो ऽनुमेय इति वाच्यम् । अनुकूलतर्काभावादिति भावः । (३१) यत्र चेति । न च यत्र विष्णोरित्यस्ति तत्र का गतिस्तत्र मानाभावादित्याहुः । न च वरुणप्रीतिरित्यादौ कागतिः, तस्यापि प्रीतिविशेषवाचकत्वकल्पनात् । वस्तुतः पूर्णे यागे देवताप्रीतिरित्यन्तरादृष्टं विना कथं तन्निर्वाहः, तदनुभवजनितसंस्कारस्य च स्वजन्यस्मृत्यादिना नाशे फलाभावप्रसङ्ग इति बोध्यम् । (३२) अन्योन्याश्रयादिति । पूजार्थकयज्यन्वये सति देवतावैजात्यसिद्धिः, तत्सिद्धौ च पूजार्थकयज्यन्वय इत्यन्योन्याश्रयादित्यर्थः । तुल्यन्यायतया शङ्कते । (३३) नन्विति । आग्नेयोऽष्टाकपालो भवत्यमावास्यायामैन्द्रं दधि भवत्यमावास्यायामित्यादयः षडुत्पत्तिविधयः दर्शपूर्णमासाभ्यां यजेतेति विधिवाक्यार्थीभूतं प्रधानापूर्वं प्रति दधिहोमादीनां साधनत्वं बोधयन्ति । प्रतीते च तेषां तत्साधनत्वे तन्निर्वाहाय षडुत्पत्त्यपूर्वाणि कल्प्यन्ते । एवं च सर्वप्रधानवाक्यार्थीभूतमपूर्वं वाच्यम् । उत्पत्त्यपूर्वाणि कल्प्यानि इति त्वत्सिद्धान्तः स न स्यात् । क्रमिकप्रधानापूर्वं प्रति क्षणिकादीनामाग्नेयादिकर्मणामयोग्यतया साधनत्वग्रहासंभवादित्यर्थः । (३४) काम्य इति । फलस्योत्कटरागगोचरतया तत्पूरणक्षमः फलशिरस्कापूर्वबोधकः काम्यप्रधानविधिरेव । तथा च प्रथमप्रवृत्तात्तस्मादपूर्वं प्रतीते अपूर्वद्वारैव स्वर्गं प्रति यागस्यैव नियोगं प्रत्याग्नेयादीनां कारणतास्त्विति प्रतीतावेवाग्नेयादीनां नियोगसाधनताधीरुदेति । तावत्पर्यन्तस्थायिव्यापारकत्वरूपाया योग्यताया ज्ञानात्, न तु प्रथममुत्पत्तिविधिप्रवृत्तिरिति भाव इत्याहुः । तच्चिन्त्यम् । नहि स्वं प्रति स्वं साधनं तथा च द्वारीभूतापूर्वानुपस्थितौ परमापूर्वकारणताबोधे कथं योग्यताज्ञानं कथं वा साक्षात्साधनताबाधे परम्परासाधनत्वप्रकारकधीः, न च तज्जातीयपरमापूर्वोपस्थितौ स्थायिव्यापारवत्त्वरूपयोग्यतानिश्चयसंभव इति वाच्यम् ।

काम्ये ऽपूर्ववाच्यत्वस्थितावाग्नेयादौ (३५) तद्द्वारा साधनत्वस्य योग्यत्वसंभवात् । (३६) ननु यो ब्राह्मणायावगुरेत्तं शतेन यातयादित्यत्र ब्राह्मणवधोद्यमस्य (३७) शतयातनाहेतुतावगमे यथा दुरितापूर्वकल्पनं तथेहापीति चेत् । अवगुरेत् यातयादित्यत्र हेतुहेतुमतोर्लिङित्यनुशासनाल्लिङावगोरणशतयातनयोः (३८) नियतं पौर्वापर्यं बोध्यते प्रत्यक्षेणानुभवस्मरणयोरिव, तच्च साधनत्वे साधनसाधनत्वे चोभयमपि मध्यवर्त्तिघटितमिति दुरितकल्पनं संस्का-

---

तज्जातीयसंस्काराद्युपस्थितावुक्तयोग्यतानिश्चयसंभवे प्रधानापूर्वस्यापि वाच्यतानापत्तेः । तत्र तज्जातीयमिति चेन्न, सर्वथा साजात्यस्य प्रकृतेप्यसंभवात् । गुणत्वादिना साजात्यस्य तत्रापि संभवात् । प्रकृते तच्च योग्यताघटकमिति तुल्यमिति । अत्राहुः । देहान्तरोपभोग्यस्वर्गे आशुविनाशिक्रियायाः साक्षात्साधनताबाधे युक्तस्तत्र योग्यताज्ञानविरहः । प्रकृते च परमापूर्वं प्रति साक्षादपि षण्णां हेतुत्वसंभवे योग्यताज्ञानसंभवः । न च यौगपद्याभावान्न तथात्वम् । ऋत्विग्भिरनेकैरेकदा क्रियमाणानां यौगपद्यस्यापि संभवात् । अपि च षण्णामेककर्तृत्वप्रतिसंधाने ऽग्रिमाग्रिमसमये प्रथमनाशाद् अनुपपत्त्या प्रथमगृहीतसाधनतानिर्वाहार्थमुत्पत्त्यपूर्वं कल्प्यतइति तदिदमुक्त, (३५) तद्द्वारेति । तत्प्रतीत्यर्थः । प्रतिबन्दीमाशङ्कते । (३६) नन्विति । (३७) शतयातना, नरकविशेषः । तथा चात्र तव या गतिः सा ममापीति भावः । (३८) नियतमिति । अन्यथा सिद्धिचतुष्टयरहितनियतपौर्वापर्यमित्यर्थः । तेन मध्यवर्त्तित्वकल्पनं निर्वहति । अन्यथा दण्डरूपादौ तत्कल्पनापत्तेरिति भावः । नन्वेतदप्याशुविनाशित्वेन मध्यवर्त्ति ज्ञानं विना ऽयोग्यतया दुर्ग्रहमन्यथा ऽन्यथासिद्धिपञ्चरहितनियतपौर्वापर्यापर्यवसन्नस्य कारणत्वस्यापि ग्रहे बाधकाभावाज्जितं नैयायिकैः । एतेनोक्तस्य मध्यवर्त्तिज्ञानं विना ग्रहसंभवेपीष्टसाधनता दुर्ग्रहा, सा हीष्टसहभावनिर्मिता तत्सहभावश्च क्षणिकस्य व्यापारनिर्मितशरीरमेव यागस्य स्वर्गसाधनत्वं तत्कथं व्यापाराप्रतीतौ प्रतीयतामेकदेशस्यापरिचयादिति परास्तम् । एवमप्यनन्यथासिद्धनियतपूर्वसत्त्वादिरूपकारणताबोधे बाधकानभिधानादिति । अत्राहुः । उक्तलिङा नियतपौर्वापर्यमात्रं बोध्यते तस्माद्वावगुरितव्यमिति निषेधकवेदभागेनावगोरणाभावविषयकापूर्वकार्यत्वे बोधिते तदन्यथानुपपत्त्या ऽवगोरणस्य शतयातनाहेतुत्वनिबन्धनं पूर्वत्वमित्यनुमीयते । नह्यवगोरणस्यानिष्टसाधनत्वं विना तदभावविषयकापूर्वकार्यत्वमुपपद्यते प्रत्युत रागप्राप्तमवगोरणमेव कुर्यात् तथा चोत्तरकालानुमितकारणत्वनिर्वा-

रवत्, (३९) इह तु विध्यनुशिष्टां लिङ् कार्यतामाह । (४०) किं च (४१) कामी (४२) काम्यादन्यत् (४३) काम्याव्यवहितसाधनतया ज्ञातमेव कर्त्तव्यतया ऽवैतीति नियमाद् न क्रियायां कामिनो ऽन्वयो योग्य: । न च तृप्तिकामस्य पाके प्रवृत्तेर्व्यभिचार: । ओदनकामस्य तत्र प्रवृत्ते: । तृप्तिकामना तु तत्कामनोपयोगिनी, न तु साक्षात् । अन्यथा साधनसाधने प्रवृत्तिर्न स्यात् । काम्यसाधनत्वं प्रवर्त्तकं लाघवादिति चेत् । भोजनकामस्य सिद्धौदनस्य पाके प्रवृत्तिप्रसङ्गात् । तस्यौदनद्वारा भोजनसाधनत्वाविशेषात् । विशेषणे तु (४४) यत्राव्यवहितसाधनं पाक: तन्न काम्यं (४५) यत् काम्यं न तत्राव्यवहितसाधनं पाक इति न प्रवृत्ति: । ननु पाकस्य सिद्धौदनद्वारा भोजनसाधनत्वं न संभवति, द्वारस्यासाध्यत्वात् । (४६) ओदनान्तरद्वारा च तथा प्रतिसंधाने ऽव्यवहितत्वविशेषणेपि कुतो न पाके प्रवर्त्तते, ओदनान्तरे द्वारे साक्षात्साधनत्वादिति चेत् । न । पाकस्य भोजनसाधनत्वे विशेषस्याप्रयोजकतयौदनमात्रस्य द्वारत्वात्तस्य च साध्यत्वाविवादात् । (४७) ओदनविशेषे च सिद्धे ओदनकामनाविरहान्न तुल्यत्वम् । (४८) नन्वोदने सिद्धे सिद्धत्वाद्यथा न कामना तत एव द्वारतापि न । अथौदनान्तरमसिद्धमादाय द्वारता तर्हि कामनापि स्यात्तस्यासिद्धत्वादिति चेत्, न । (४९)

---

हाय दुरितकल्पनं यागे तु नैवमिति न प्रतिबन्दिरिति दिक् ॥ (३९) इह त्विति । तत्र चोक्तो योग्यताज्ञानविरहादिदोष इति न तौल्यमित्यर्थ: । इतोपि क्रियायां न कार्यत्वान्वय इत्याह । (४०) किं चेति । नित्ये व्यभिचारादाह । (४१) कामीति । काम्ये व्यभिचारादाह । (४२) काम्यादन्यदिति । न च पाकत्वात् पाक: कार्य इत्यनुमितौ व्यभिचार:, तन्मते तत्रापि तदपेक्षाभ्युपगमादित्याहु: । न च तन्मते साध्यत्वसाधनत्वयोरेकदा भाने विरोध इति वाच्यम् । वादिभेदेनाविरोधादित्याहु: । अवच्छेदभेदमादायाविरोध इत्यन्ये । (४३) काम्येति । तथा च व्यापके व्यवहितपदवैयर्थ्यमिति भाव: । (४४) यत्रेति । ओदनइति शेष: । (४५) यदिति । भोजनमिति शेष: । (४६) ओदनान्तरेति । तथा चासिद्धत्वेन काम्यत्वमित्यभिमान: । (४७) ओदनविशेषे चेति । यत्किंचिद्विशेषसिद्धौ च सामान्येच्छाविच्छेदादिति भाव: । आशयमविद्वान् शङ्कते । (४८) नन्विति । आशयमुद्घाटयति । (४९) पाकस्येति । नन्वेवमपूर्वस्य कामिकर्त्तव्यता न बुद्ध्येत

पाकस्यैकविशेषद्वारताबाधो न विशेषान्तरद्वारताविरोधी, सकलविशेषस्यैकत्र द्वारत्वासंभवात् । एकविशेषसिद्धा तु तन्मात्रकामना विच्छिद्यते । नहि सकलविशेषसिद्धत्वेन सामान्यकामनाविच्छेद: । सकलविशेषसिद्धेरसंभवेन तदनुच्छेदप्रसङ्गात् । (५०) अथ वा काम्यादन्यत्साक्षादसाधनत्वेन ज्ञायमानं यत्कर्तव्यतया कामी बुध्यते तत्काम्याव्यवहितसाधनमन्तराकृत्वैव । (५१) यद्वा काम्यादन्यत्कामी प्रथमं काम्याव्यवहितसाधनं कर्तव्यतयावैति पश्चात्तद्द्वारा व्यवहितसाधनमिति प्रथमं यागे कामिकार्यताबोधो ऽयोग्यतापराहत एव ॥ उत्तानास्तु (५२) विवादविषयो लिङ् (५३) समभिव्याहृतक्रियान्वितकार्यताबोधिका, प्रमाणलिङ्त्वात्, लौकिकलिङ्वत् । यद्वा (५४) लिङुपस्थाप्य कार्यत्वं समभिव्याहृतक्रियान्वितं, लिङुपस्थापितकार्यत्वात्, पचेतेतिकार्यत्ववत् । यागो वा (५५) कार्यत्वान्वित:, (५६) लिङ्शबलधातुप्रतिपाद्यत्वात्, पाकवदित्यनुमानात् क्रियाकार्यत्वावगमेनापूर्वं कल्प्यमिति (५७) तत्र प्रथमे यागान्वितकार्यत्वबोधकत्वं लिङो बोध्यते न तु क्रियते, न च योग्यताज्ञानं विना

---

काम्याव्यवहितसाधनत्वेन प्रथमं तद्बोधकाभावादित्यरुचेराह । (५०) अथ वेति । (५१) यद्वेति । न च यत्र साक्षात्साधन एव कामिप्रवृत्तिस्तत्र व्यभिचार इति वाच्यम् । परम्परासाधननिष्ठप्रवृत्तिप्रयोजकेच्छावत: कामिपदेन विवक्षितत्वात् । न चैवमपि स्थिरत्वनिर्व्यापारत्वभ्रमवता कामिना यत्र याग: कर्त्तव्यतया बुध्यते तत्र व्यभिचार इति वाच्यम् । परम्परासाधने प्रवृत्तिविषये आशुतरविनाशित्वज्ञानवत्त्वेन कामिनो विशेषणात् । (५२) विवादविषयइति । एतच्च संप्रदायमते लौकिकलिङाऽशत: सिद्धसाधनतावारणाय, । अपूर्वस्यापि क्रियात्वेन सिद्धसाधनादाह । (५३) समभिव्याहृतेति । न चावगुरेदित्यत्र व्यभिचार:, लिङ्विशेषहेतुत्वे तात्पर्यात् । (५४) लिङुपस्थाप्यमिति । नन्वत्र सिद्धसाधनं, कार्यत्वस्यानुगतस्यैक्येन लिङुपस्थाप्यस्यैव तस्य कदा चित् क्रियान्वयात् । एवं च हेतौ व्यर्थविशेषणत्वं कार्यत्वमात्रस्यैवाव्यभिचारादिति चे,न्न । लिङ्जन्या कार्यत्वोपस्थिति:, तत्तत्क्रियान्वितकार्यत्वबोधिका, लिङ्जन्यकार्यत्वोपस्थितित्वा,दित्यत्र तात्पर्यात् । (५५) कार्यत्वान्वित इति । लिङ्जन्यकार्यत्वप्रकारकबोधविशेष्य इत्यर्थ: । (५६) लिङिति । लिङ्प्रकृतिधातुप्रतिपाद्यत्वादित्यर्थ: । लिङ्पदं च विधिलिङ्परम् । अतो नावगुरेदित्यत्र व्यभिचार: । दूषयति । (५७) तत्रेति । तथा च बाध इति

तत्संभवतीत्युक्तमेव । नहि योग्यतादिकं विनैवैतदनुमानप्रामाण्यप्रयोजनमात्रादन्वितमभिधीयते शब्देन, नान्त्यो, (५८) कुर्यादित्यादौ व्यभिचारात् (५९) वेदस्यानुवादकतापाताच्च । नन्वपूर्वे व्युत्पत्तिविरहः । तथाहि, (६०) प्रसिद्धार्थस्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्योपस्थिते शक्तिर्ग्रहीतव्या । न च शाब्दानुभवात्पूर्वं(६१)मपूर्वमुपस्थितम् । मानाभावादपूर्वत्वव्याघाताद(६२)वाच्यत्वापाताच्च । न च लिङादिना तदुपस्थिति,र्व्युत्पत्त्यनन्तरं तत्प्रवृत्तिरित्यन्योन्याश्रयात् । न च कार्यत्वेनोपलक्षिते तत्र शक्तिग्रहः । उपलक्षणं हि स्मरणमनुमापनं वा, अगृहीते संबन्धाग्रहादशक्यमिति । मैवम् । (६३) कार्ये धर्मिणि कार्यत्वेन शक्तिग्रहात् कार्यत्वविशिष्टं चोपस्थितमेव, ततोन्विताभिधानदशायां (६४) यागविषयकं कार्यमित्यनुभवः स्वर्गकामान्वयायोग्यतया घटादिकं तिरस्कृत्य क्रियाभिन्ने योग्यतावशाद्यागविषयकापूर्वे पर्यवस्यति, न त्वपूर्वत्वेन शक्तिग्रहः, न त्वपूर्वं कार्यमित्यनुभवः । भवति च सामान्यतः संबन्धवशाद्विशेषबुद्ध्युपायः । यथा तवैव कर्तृमात्रे संबन्धग्रहात्कर्तृविशेषसिद्धिः । ननु कार्यत्वेनापि किं घटादौ शक्तिग्रह, उतापूर्वे, उभयत्र वा, नाद्यः । अन्यप्रतिपत्तावन्यशक्तिग्रहानुपयोगात् । नान्त्यौ । प्रागनुपस्थितेरिति चेत् । न । येन हि रूपेण शब्देनानुभवो जन्यते तेन रूपेण शक्तिग्रहः पदार्थस्मरणं च शाब्दानुभवहेतुः । नहि प्रमेयत्वेन शक्तिग्रहः पदार्थस्मरणं च घटत्वेन शाब्दानुभवे हेतुः । एवं च घटादावेव कार्ये शक्ता लिङिति शक्तिग्रहः, ततः कार्यमिति स्मरणं, ततो योग्यतादिवशात्प्रचुरद्रव्यगुणकर्माणि कार्याणि विहाय यागविषयकं कार्यमित्यनुभवो भवन्नपूर्वमालम्बते, (६५) योग्यत्वाच्च तस्य स्थायित्वलाभः । अत एव वाक्यार्थानुभवमात्रविषयत्वात्तदपूर्वम् । (६६) न च स्मृतानामाकाङ्क्षादिवशादन्वयबोधः पदेन क्रियते, न चापूर्वं स्मृतिगोचर इति वाच्यम् । (६७) शक्तिग्रहपदार्थस्मरणशाब्दानुभवानां समानप्रकारतामात्रेण हेतुहेतुमद्भावावधारणात् लाघवादावश्यकत्वाच्च । न तु क्व चित्सहचारमात्रेणान्वयप्रतियोगिन एवोपस्थितिस्तथा, गौरवात् । (६८) गोपदादपूर्वगवानुभवप्रसङ्गाच्च । विशिष्टवैशिष्ट्यबोधे सर्वत्र तथैव । अन्यथा पर्वतीयवह्निर्व्यापकतया नावगत इति कथं तदन्वयो ऽनुमितौ । (६९) ननु सामान्यलक्षणया प्रत्यासत्त्या सर्वा एव व्यक्तयो व्याप्तिग्रहे शक्तिग्रहे च विषयीभवन्ति, कथमन्यथा पर्वतीयधूमव्याप्यग्रहे तस्मादनुमितिरिति चेत् । न । येन रूपेण व्याप्तिग्रहस्तेन रूपेण (७०) व्याप्यत्वेन वा पक्षधर्मताग्रहो ऽनुमितौ कारणमस्तु, किं तया । (७१) अपि च । सा यद्यस्ति, ममापि, नास्ति चे, त्तवापि, किं

---

भावः । (५८) कुर्यादिति । धातुप्रत्ययोपस्थाप्यकृत्योः परस्परमनन्वयादिति भावः । न चाभेदएवान्वयः, भिन्नप्रकारोपस्थितिं विना तदभावात् । अत्र बाधोपि बोध्यः । ननु तद्व्याप्तौ हेतुर्वाच्य इति न व्यभिचार इत्यत आह । (५९) वेदस्येति । प्रथमानुमाने वेदप्रतिपाद्यकार्यत्वादेर्बोध्यतावच्छेदकतया प्रागेव सिद्धेरुत्तरानुमानयोः स्वातन्त्र्येणैवेत्यर्थः । न च भिन्नप्रकारकत्वान्नानुवादकत्वमिति वाच्यम् । समानविषयत्वेन तथात्वमितिमतेनोक्तत्वात् । वस्तुतो नैषामनुवादकत्वमन्यथा तन्मतेप्यापत्तेः, कार्यत्वादेः कदा चिदनुमितस्यैव ततः प्रतीतेः । यदि च नियमतस्तथाभावान्नानुवादकत्वं तदा प्रकृतेपि तुल्यम् । तस्मात्प्रथमदूषणएव तात्पर्यम् । (६०) प्रसिद्धेति । वृद्धव्यवहारादेरभावादिति भावः । (६१) अपूर्वेति । शाब्दानुभवात्पूर्वं मानान्तराविषयत्वमेवापूर्वत्वं तद्व्याहन्यतइत्यर्थः । (६२) अवाच्यत्वेति । प्रकारान्तरेणैतल्लाभे तदेव द्वारमादाय यागे साधनत्वान्वयसंभवे क्रियाकार्यत्वमेव लिङ्वाच्यं स्यान्न त्वपूर्वमित्यर्थः । अनन्यलभ्यस्यैव शब्दार्थत्वादित्यर्थ इत्यन्ये । (६३) कार्यइति । नन्वेवमपि स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यान्वययोग्यताज्ञानं स्यात्, स च घटादौ अपूर्वे वा । नाद्यो, बाधात् । नान्त्यः । अनुपस्थितेः । अन्यथा क्रियायां तदन्वयेन किमपराद्धमिति चेन्न । नित्यस्थलइव यागविषयकं कार्यमित्यनुभवे जाते तदादाय स्वर्गकामान्वययोग्यताबुद्धौ महावाक्यार्थज्ञानसंभवादित्याहुः । (६४) यागविषयकमिति । विषयत्वं न प्रकारः, किं तु यागकार्ययोर्विषयविषयीभावः संसर्ग इति बोध्यम् । ननु स्थायित्वानुपस्थितौ नियोज्यान्वयानुपपत्तिस्तदवस्थैवेत्यत आह । (६५) योग्यत्वाच्चेति । समानप्रकारकत्वमात्रं न तन्त्रं, किं तु समानविषयकत्वमपि, अन्यत्र तथा दर्शनादित्याशङ्क्य निराकरोति । (६६) न चेति । (६७) शक्तिग्रहेति । यद्यपि शक्तिग्रहस्य शाब्दानुभवहेतुत्वे मानाभावस्तथापि पदार्थस्मरणं प्रति हेतुत्वं बोध्यम् । (६८) गोपदादिति । सामान्यलक्षणा नास्तीत्यभिमानः, एव मग्रेपि । तदेव द्रढयितुं शङ्कते । (६९) नन्विति । (७०) व्याप्यत्वेनेति । परनयेनोक्तम् । (७१) अपि चेति । नह्यभ्युपगमेनार्थाः

च तव दर्शने सास्ति, इति (७२) सुतरामपूर्ववाच्यता (७३)। कार्यत्वेन हि रूपेणापूर्वस्यापि शक्तिग्रहविषयत्वं पदार्थस्मृतिविषयत्वं च। न चैवमपूर्वत्वक्षतिः। (७४) यागविषयत्वादेर्विशेषस्य कार्ये लिङं विना ऽनुपस्थितेः। यथा पर्वतीयत्वभानं वह्नौ नानुमितिं विना। ननु यदि कार्ये क्रियासाधारणे लिङ्शक्तिः क्रिया चायोग्येति योग्यापूर्वलाभः, तदा नित्यनिषेधापूर्वयोरलाभः, नहि तत्रायोग्यतया क्रिया त्यक्तुं शक्यते, फलाश्रवणात्, फलकल्पनायां च बीजाभावात्। (७५) न चैकत्र निर्णीतः शास्त्रार्थो ऽन्यत्रापि तथैवेति न्यायात्तत्राप्यपूर्वमेव लिङर्थ इति युक्तम्। (७६) नह्यपूर्वत्वेन शक्तिग्रहः, किं तु कार्यत्वविशिष्टे धर्मिणि, क्रिया च तथा भवत्येव। न च कार्येण समं क्रियाया अन्वयानुपपत्त्या ऽपूर्वे पर्यवसानम्। अभेदस्याप्यन्वयत्वादिति। मैवम्। नहि लोके पचेतेत्यादौ कार्ये धर्मिणि शक्तिः कल्पिता, किं त्वनन्यलभ्ये (७७) कृतिसाध्यत्वरूपे कार्यत्वमात्रे, धर्मिणः पाकादेर्धातोरेवोपस्थितिसंभवात्। क्रियाकार्यत्वस्यान्विताभिधानलभ्यत्वात्। तथा च धर्मिणि (७८) वेदे शक्तिः कल्पनीया, सा च क्रियानिरासेनैव, नहि क्रियायाः कार्यत्वान्वययोग्यत्वे धर्मिणि शक्तिः कल्पयितुं शक्यते। तस्मादयोग्यतया क्रियानिरासानन्तरं तदतिरिक्ते शक्तिकल्पनम्। न च क्रियातिरिक्तकार्यमात्रं लघु, ततः क्रियापि शक्यैवेति वाच्यम्। यतो न ब्रूमः क्रियातिरिक्तकार्यत्वेन शक्तिः, किं त्वयोग्यतया क्रियायां निरस्तायां धर्मिणि शक्तिकल्पनसमये यत्क्रियातिरिक्तं तत्र शक्तिः। न तु शक्तिग्रहे क्रियाप्रवेशः। (७९) नहि यत्प्रयुक्तानुपपत्त्या यत्कल्पनं तदेव तस्य विषयः। एवं च कार्यत्वेनापि तदतिरिक्तकार्यएव शक्तिकल्पनान्नित्यनिषेधयोरपि तदेवोपासनाद्यन्वययोग्यं लिङाभिधीयते, न तु कार्यत्वमात्रं, धर्मिणि बाधकाभावात्। (८०) लक्षणाप्रसङ्गाच्च। (८१) घटादिस्तु लिङ्शक्तिग्रहे न तिरस्क्रियते न पुरस्क्रियते, उभयथापि गौरवात्। अन्विताभिधानदशायां त्वयोग्यतया तस्याप्रवेशः। विधिप्रत्ययस्य च तत्राप्रयोगः। केवलस्य तस्यासाधुत्वात्। धातुसमभिव्याहारे च तदर्थेनान्वयबोधजननियमेन घटाद्यप्रतिपादकत्वात्। अत एवाप्रयोगादेवाप्रयोगो ऽपूर्वत्वं वा प्रयोगोपाधिरिति वदन्ति ॥

---

क्रियन्ते अनभ्युपगमेन वा निवर्त्यन्तइति भावः। (७२) सुतरामिति। तत्रोक्तदोषाभावादिति भावः। तदेव विवृणोति। (७३) कार्यत्वेनेति। (७४) यागेति। तथा च विशिष्यपूर्वाप्रतीतित्वमपूर्वत्वमिति भावः। (७५) न चेति। तदुक्तं काम्ये क्लृप्तशक्तिर्लिङादिर्नित्यनिषेधे चापूर्वमाहेति भावः। (७६) नहीति। न च तात्पर्याच्चियमः, तथा तात्पर्ये मानाभावादन्यथा विवादाभावादित्याहुः। (७७) कृतिसाध्यत्वरूपइति। जन्यजनकभावश्च संसर्ग इति मतेनेदम्। वस्तुतः कार्यत्वएव तात्पर्यं चिकीर्षानुरोधेन तत्प्रकारकज्ञानस्यैव प्रवर्त्तकत्वादिति। (७८) वेदइति। विधिलिङ्इति शेषः। तेनावगुरेदित्यादौ न दोषः। न चामुकपापक्षयकामो गङ्गायां स्नायादित्यादौ विघ्नध्वंसकामस्य स्तवादिबोधने वा नापूर्वं द्वारं गौरवादिति न क्रियातिरिक्तान्वय इति वाच्यम्। तद्भिन्नलिङस्तथात्वादित्याहुः। ननु शक्तिग्रहे क्रियाप्रवेशाभावा,-द्यदि योग्यापि क्रिया नान्वेति तदा ऽपूर्वमपि तथा स्यात्। तस्यापि प्रागनुपस्थितत्वेन तदप्रवेशात्। यदि च समानप्रकारकत्वेन हेतुत्वात्तदप्रविष्टस्याप्यन्वये न विरोधस्तदा क्रियायामपि तुल्यमित्यत आह। (७९) नहि यदिति। तथा च क्रियाप्रयुक्तानुपपत्त्या तत्कल्पनादयं योग्यापि क्रिया नान्वेति उक्तनियमाभ्युपगमादृतएव छिद्रबाधे छिद्रेतरत्ववक्रियातिरिक्तकार्यत्वमेवान्वयबोधप्रकार इति वदन्ति। अपूर्वे तु नैवमनुपपत्तिरिति भावः। नन्वेवमपि निषेधापूर्वलाभो न स्यात्। क्रियातिरिक्तनिषेधे कार्यताबोधेनोपपत्तावपूर्वकार्यतावगमकल्पने मानाभावात्। न च प्रागभावरूपे निषेधे कार्यत्वस्य बाधाचैवमिति वाच्यम्। क्षेमसाधारणस्यैव तस्य प्रवर्त्तकत्वेन प्रागुक्तत्वात्। तस्य चाबाधादिति चिन्त्यम्। (८०) लक्षणेति। विशिष्टशक्तपदस्यैकदेशे लाक्षणिकत्वादित्यर्थः। ननु यदि घटादिकार्यत्वेन लिङः शक्तिग्रहस्तदा नापूर्वलाभः, घटाद्यतिरिक्तकार्यत्वेन चेत्तदा शक्तिग्रह एव न स्यात्तस्यानुपस्थितेरित्यत आह। (८१) घटादिस्त्विति। कार्यत्वमात्रं पुरस्कृत्य तत्र शक्तिग्रह इत्यभ्युपगमादन्यथोभयथा गौरवादित्यर्थः ॥

---

## ॥ अथ वेदान्तसूत्रसंबन्धिशैवभाष्यतृतीयाध्यायस्य ॥

॥ द्वितीयपादारम्भः ॥

॥ संध्ये सृष्टिराह हि ॥ १ ॥

पूर्वत्र जीवस्य गत्यागतिनिरूपणं कृतम्। इह तदवस्था विचार्यते। संध्ये स्वप्ने "न तत्र रथा न रथयोगा न पन्थानो

भवन्ति, अथ रथान् रथयोगान् पथः सृजत" इत्यादिना सृष्टिरभिधीयते । सैषा जीवकृता परमेश्वरकृता वेति संशयः ।

एवं सति जीवकृतेत्यवगम्यते ।

"अथ देशांस्तान् पुष्करिण्यः स्रवन्त्यः सृजते, स हि कर्ता" इति स्वप्नदृशं जीवमेव कर्तारमाह हि श्रुतिः ॥ १ ॥

॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति जीवमेव स्वप्ने कामानां निर्मातारमेके शाखिनोऽधीयते । ततः कामशब्दनिर्दिष्टाः काम्यमानाः पुत्रादयः, पूर्वत्र "सर्वान् कामान् छन्दतः प्रार्थयस्व," इत्युक्त्वा "शतायुषः पुत्रपौत्रान् वृणीष्व" इति विवृतत्वात् । ततश्च जीवकृतैव स्वप्नसृष्टिः ॥ २ ॥

इति प्राप्तेऽभिधीयते ॥

॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

स्वप्ने यद्रथादिसृष्टमर्थजातं, तदिदं मायामात्रमीश्वरकृतं, न जीवकृतं, स्वप्नदृशैकेनानुभाव्यं, तत्कालमात्रावसायित्वात् । आश्चर्यतया मायामात्रमित्युक्तम् । जीवस्य सत्यसंकल्पत्वादिकं तिरोहितमिति तस्य[1] रथादिसृष्टिसामर्थ्यं न संभवति । अतः "पुरुषो[2] निर्मिमाणः" इति न जीवविषयम् । किंतु,

"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" ॥

इति वाक्यशेषादीश्वरविषयम् । तदैकार्थ्यात् "स हि कर्ता" इत्यपि तद्विषयमेव । अतः[3] परमेश्वरकृता स्वप्नसृष्टिरिति ॥ ३ ॥

जीवस्वरूपानभिव्यक्तिहेतुमाह ॥

॥ पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ* ॥ ४ ॥

जीवस्यानाद्यपचारप्रवाहेण पराभिध्यानात् परमेश्वरसंकल्पात् तस्य सत्यसंकल्पत्वादिकं तिरोहितम् । तदपचारतदनुवृत्तिकृतात् तस्मादेव परमेश्वरसंकल्पादस्य बन्धमोक्षौ भवतः । तथाहि श्रुतिः । "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति, यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति" इति[1] ॥ ४ ॥

॥ देहयोगाद्वा सोऽपि ॥ ५ ॥

किंच, इहापि जीवस्य स्वरूपतिरोधानभावोऽपि देवमनुष्यादिदेहाकाराचिद्योगाद्भवति सृष्टिसमये । प्रलये पुनर्नामरूपविभागानर्हसूक्ष्माकाराचिद्योगादित्येवं तस्य तिरोहितसत्यसंकल्पत्वादिकस्य तात्कालिकविचित्रसृष्टिसामर्थ्यं स्वप्ने न संभवति ॥ ५ ॥

उपपत्त्यन्तरमाह ॥

॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥

अथ स्वप्नाः ।

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥

"पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" इत्यादिश्रुतेः । शुभाशुभसूचकश्च हि स्वप्नः । स्वप्नाध्यायविदश्च शुभाशुभसूचकान् स्वप्नविशेषानाचक्षते । अतो न जीवसृष्टाः स्वप्नार्थाः । जीवसृष्टत्वे तदशुभसूचकानां सृष्ट्यभावप्रसङ्गात् । तस्मात् परमेश्वरकृता स्वप्नसृष्टिरिति युक्तमेव ॥ ६ ॥

॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

स्वप्नाभावः सुषुप्तिः । "अथ यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवति" इति । "अथ यदा सुषुप्तो भवति न कंचन वेद हि, ता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभि प्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" इति । "यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति" । इति च श्रुतिभिर्जीवस्य सुषुप्तौ नाडीषु पुरीतति ब्रह्मणि च शयनमवगम्यते । तेष्वस्य विकल्पः समुच्चयो वेति संशयः । नाड्यादीनि स्थानानि विकल्पितानि भवितुमर्हन्ति । एकप्रयोजनत्वात् । यथा, "व्रीहिभिर्यजेत" "यवैर्यजेत" इत्यत्र पुरोडाशनिष्पादनप्रयोजनस्यैकत्वेन विकल्पः स्वीक्रियते । तथा सुषुप्तिप्रयोजनस्यैकत्वात् कदाचित् पुरीतति शेते, कदाचिन्नाडीषु, कदाचिद् ब्रह्मणीति विकल्प एवात्र समुचित इति पूर्वः पक्षः । समुच्चय इति सिद्धान्तः । कुतः । नैकप्रयोजनत्वात् । तथाहि, जीवस्य हृदयनिष्ठब्रह्मगमनमार्गतया नाडीनां साधनत्वं पुरीतति ब्रह्मणि च प्रासादपर्यङ्कवदविरोधः । अतो नाडीभिरुपसृप्य पुरीतति ब्रह्मणि जीवः शेत इत्युपकारभेदात् समुच्चय एव ॥ ७ ॥

[1]—तमेव वर्तते । ततस्तस्य इति पा० ।

[2] "स हि कर्ता पुरुषो इति पा० ।

[3] सर्वे इति च वचनादीश्वरपरमेव । अतः इति पा० ।

* शंकरमते 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' इति चतुर्थं, 'पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति पञ्चमं, देहयोगाद्वा सोऽपि' इति षष्ठमित्येवं सूत्रक्रमो वेदितव्यः ।

[1]—प्रवाहेण तत् तिरोहितम् । तदपचारानुवृत्त्या तस्य बन्धविपर्ययौ भवतः । तथाहि, "अथ तस्य भयं भवति, अथ सोऽभयं गतो भवति" इति श्रुतेः इत्येव पा० ।

॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥

"सत आगम्य न विदुः, सत आगच्छाम" इति ब्रह्मणः सकाशादस्य प्रबोधं श्रुतिराह । अतः समुच्चयः । विकल्पेऽङ्गीकृते ह्यष्टदोषप्रसङ्गः । यदा जीवो नाडीषु शेते तदा पुरीतद्ब्रह्मवाक्ययोः प्रामाण्यं प्राप्तं परित्यज्येत । अप्राप्तं चाप्रामाण्यं स्वीक्रियेत । यदा पुरि तद्ब्रह्मणोः शेते तदा पुरीतद्ब्रह्मवाक्ययोः पूर्वं त्यक्तं प्रामाण्यं स्वीक्रियेत । पूर्वं स्वीकृतं चाप्रामाण्यं परित्यज्येत । इति प्राप्तपरित्यागोऽप्राप्तस्वीकारः परित्यक्तस्वीकारः स्वीकृतपरित्यागश्चेति दोषचतुष्टयम् । पुरितद्ब्रह्मवाक्यकोटौ तथा नाडीवाक्यकोटौ च दोषचतुष्टये योजिते सत्यष्टौ दोषा भवन्ति । ततो न विकल्पः समुच्चयोपपत्ताविति समाधिः ॥ ८ ॥

॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

अत्र सता सोम्य तदा संपन्नो भवतीति विषयः । पूर्वत्र जीवस्य सुषुप्तावस्था निरूपिता । तत्र ब्रह्मणि सुप्त एव प्रतिबुध्यते, उतान्य, इति संशयः । इहान्य इति प्राप्तम् । ब्रह्म प्राप्तस्यावृत्तेरनुचितत्वात् । निरतिशयानन्दे ब्रह्मणि साम्यं प्राप्तस्य जीवस्य[1] पुनर्न दुःखमयसंसारावृत्तिरुपपद्यते, सता संपन्नः कथमुत्तिष्ठेत्, को वात्र विभाग, इति प्राप्ते ब्रूमः । सता संपन्नोऽपि सुप्त एव प्रतिबुद्ध उत्तिष्ठति । ज्ञानवैधुर्येण कृतस्य कर्मणस्तेनानुभाव्यत्वात् । पूर्वानुभूतप्रत्यभिज्ञानाच्च । "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद् यद्भवन्ति तत् तदा भवन्ति" इति तद्भावश्रुतेश्च । मोक्षोपायविधिवाक्यानर्थक्यप्रसङ्गाच्च । सत आगम्य न विदुरिति संपन्नस्य ब्रह्मानन्दज्ञानाभावोक्तेर्मुक्ताविव न तल्लयः[3] । अतः सुप्त एव पुनः समुत्तिष्ठतीति युक्तम् ॥ ९ ॥

॥ मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

मूर्च्छितः पुरुष इति व्यवहारान्मूर्च्छेति काचिदवस्थानुभूयते । सैषा सुषुप्त्यादिभ्यो भिन्ना न वेति संदेहः । तदेवं सति जागरस्वप्नसुषुप्तिभ्यो भिन्नाया अवस्थाया अप्रसिद्धत्वान्मूर्च्छा जागरादिष्वन्तर्भूतेति पूर्वपक्षे प्राप्त उच्यते[4] । मूर्च्छिते पुरुषे यावस्था सा मरणार्धसंपत्तिः । इति परिशेषाद् भिन्ना सुषुप्त्यादेः । प्रपञ्चप्रतीतेरभावाच्च जागरस्वप्नयोरन्तर्भावः । सुषुप्तेः प्रसन्नवदनादिलक्षणाया विकृतमुखादिलक्षणाया अस्याश्च विशेषात् ततोऽप्यन्यावस्था मूर्च्छेति सिद्धम् ॥ १० ॥

१—णि मग्नस्य इति पा० ।

२ दुःखरूपे संसारेऽनुवृत्ति—इति पा० ।

३—च्च सुप्त एव जीवः समुत्तिष्ठतीति । सत आगम्य न विदुरिति संपन्नस्य ब्रह्मानन्दज्ञानाभावाच्च तत्र श्रेयः इति पा० ।

४ उच्यते सिद्धान्तः इति पा० ।

॥ न स्थानतोऽपि परस्योभयं लिङ्गं सर्वत्र हि ॥ ११ ॥

पूर्वेष्वधिकरणेषु त्वंपदार्थस्य जीवस्य स्वरूपधर्मगत्यागत्यवस्थाविशेषनिरूपणं कृतम् । अतः परं तत्पदार्थस्य परमेश्वरस्य स्वरूपधर्मादिकं निरूप्यते । "सोऽन्तरादन्तरं प्राविशत्," दिशश्चान्तरं स प्राविशत्," "यः पृथिव्यां तिष्ठन्", इत्यादिषु परमेश्वरस्य सर्वात्मकतयानुप्रवेशः श्रूयते । तस्य सर्वान्तर्यामितयावस्थितौ तत्तद्दोषकलङ्कः प्रसज्यते[1] न वेति संशये प्रसज्यत इति पूर्वः पक्षः[2] । तथाहि, "अस्थूलमनण्वह्रस्वम्" ।

"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।

इत्यादिना च परमेश्वरस्य रूपादिकं निषिध्यते । तद्दोषस्पर्शभयादेव "सत्यं ज्ञानमनन्तं ब्रह्म" इति च तस्यापरिच्छिन्नसत्यज्ञानमात्ररूपत्वमुच्यते । यदि प्रकृतिविकारसंबन्धोऽप्यस्याभ्युपगम्येत । जीववदसावपि सकलविकारदोषास्पदं भवेदिति । नेति सिद्धान्तः । सर्वावस्थासु सर्वान्तर्यामितया स्थितेरपि परमेश्वरस्य न कश्चिद्दोषकलङ्कप्रसङ्गः । कुतः । सर्वत्र श्रुतिषु चास्य निरस्तदोषकलङ्कत्व निरतिशयमङ्गलाकरत्वं चेत्युभयलिङ्गं हि प्रसिद्धम् । "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पोऽस्ति कश्चिदपर्यन्तरमणीयगुणाश्रयः सर्वलोकविनिर्माता पशुपाशविलक्षणः" इत्यादिषु । अतः पृथिव्यादिष्वन्तर्यामितयावस्थानत्वेऽपि न दोषः[3] ॥ ११ ॥

॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

यथा जीवस्य स्वतोऽपहतपाप्मत्वादिगुणस्यापि देवादिशरीरसंबन्धित्वावस्थाभेदादुक्तदोषवत्त्वं, तथा परमेश्वरस्यापि "यस्य पृथिवी शरीरम्" इति शरीरसंबन्धित्वावस्थाभेदास्तद्दोषात् स्युः । इति चेन्न । प्रत्येकं प्रतिपर्यायमतद्वचनात् । दोषासम्बन्धित्ववचनात् । "यस्य पृथिवी शरीरम्," इत्यादिषु "एष त आत्मान्तर्याम्यमृत" इत्यन्तर्यामिणो हि निर्दोषत्वमुच्यते । जीवस्य तु पराभिध्यानात् तत्स्वरूपं तिरोहितमित्युक्तम्[4] ॥ १२ ॥

१—वस्थितस्यापि तद्दोषस्पर्शकलङ्को विद्यते इति पा० ।

२ विद्यत इति पूर्वः पक्षः प्राप्नोति इति पा० ।

३ प्रसिद्धम् । इत्यन्तमेव पा० ।

४ ईश्वरस्य श्रुतिसिद्धोभयलिङ्गस्य स्वाभाविकत्वेऽपि जीवस्य पराभिध्यानादित्यत्रोक्ततिरोधानावचनादवस्थाभेदानुवृत्त्या न निर्दोषत्वमिति चेन्न । यतः पृथिव्यादिष्वन्तर्यामितया स्थितेऽपि न दोषः । अत एव तस्य प्रत्येकं प्रतिपर्यायम्, "अन्तर्याम्यमृत" इति नित्यमुक्तत्वमभ्यस्यते इत्येव पा० ।

॥ अपि चैवमेके ॥ १३ ॥

अपिच[1], एकस्मिन् शरीरित्वेनावस्थितयोरपि जीवेश्वरयोर्दोषसंबन्धित्वे तद्विपरीतलक्षणो विशेषो यथा प्रसिध्यत्येवमेके[2] स्वशब्देनाधीयते। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति श्रुतेः। अतो न जीववदीश्वरे दोषप्रसङ्गः[3] ॥ १३ ॥

जीवेश्वरयोः शरीरस्थितिसाम्येऽपि शरीरस्थितिवैषम्यमाह ॥

॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

परमेश्वरो हि देवादिशरीरेषु शरीरितया स्थितावपि रूपरहितवस्तुवदेव वर्तते। कुतः। नामरूपनिर्वोढृत्वप्रतिपादनात्। तथाहि श्रुतिः। "आकाशो ह वै नामरूपयोर्निर्वहिता" "ते यदन्तरा तद्ब्रह्म" इति। नामरूपयोरन्तराले तत्कार्यस्पर्शरहित एव वर्तते। मध्य इति स्वातन्त्र्यमुक्तम्। कर्मफलभोगार्थं हि जीवस्य शरीरे स्थितिः। अत उभयोर्वैषम्यम् ॥ १४ ॥

॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यावैयर्थ्यात् स्वप्रकाशरूपतया ज्ञानरूपं ब्रह्म। तथा "निष्कलं निष्क्रियं शान्तम्", "अपहतपाप्मा", "सत्यात्मप्राणारामं मन आनन्दम्" "यः सर्वज्ञः सर्ववित् प्रधानक्षेत्रज्ञपतिर्गुणेशः परास्य शक्तिर्विविधैव श्रूयते" "अथ कस्मादुच्यते महादेवः, यः सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेव" इत्यादीना परःशतानां वाक्यानामवैयर्थ्यात्। निरवद्यं कल्याणगुणास्पदं च ब्रह्म, इत्युभयलिङ्गमेव ॥ १५ ॥

॥ आह च तन्मात्रम् ॥ १६ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतिरनवच्छिन्नज्ञानरूपतामात्रं ब्रह्मण आह। नान्यं निवारयति। विशेषाभावादविरोधाच्च। यथा स्वर्णरूपं किरीटमित्येतत् स्वरूपतामात्रकथनपरं, न तत्खचितरत्नादिनिषेधपरं, तद्वदिति। अत्र हि "सत्यं ज्ञानमनन्तम्" इति स्वत एव महाप्रकाशरूपतया परब्रह्मणः परज्ञानाकारमभिदधती श्रुतिरनन्तरमुच्यमानं ब्रह्मणो विपश्चित्त्वं निवारयितुं कथं क्षमते। विविधं वस्तुजातं पश्यन्ती विमृशन्ती चिद्यस्य स विपश्चित्। अतो न विरोधः ॥ १६ ॥

॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

हेयगुणराहित्येन कल्याणगुणसाहित्येन चोभयलिङ्गं ब्रह्म दर्शयति सर्वत्र श्रुतिरेव भगवती। 'आकाशशरीरं ब्रह्म", सत्यात्मप्राणारामं मन आनन्दं शान्तिसमृद्धममृतम्" "इति प्राचीनयोग्योपास्व" इति। आकाशत इत्याकाशः प्रकाशस्तद्रूपं, सत्यात्म सत्तारूपं[1], प्राणारामं प्राण आत्मन्येवारामो न बहिरस्येति, मनस्येवानन्दोऽस्य[2] न बाह्यकरणेष्विति मन आनन्दं, मन इति ज्ञानमन्तःकरणमुच्यते। येनानपेक्षितबाह्यकरणेनापरोक्षितसकलबाह्यवस्तुविलासेन नित्येन निष्कलङ्केन प्रमाविशेषेण सर्वज्ञ ब्रह्मोच्यते। तेनापरिमितस्वरूपानन्दमनुभवतीति मनआनन्दं, शान्ति[3]समृद्धं, रागद्वेषगुणाना[4]मत्यन्तराहित्यं शान्तिः, तत्समृद्धं, निरवलेपं निर्धूतनिखिलदोषकलङ्कम्, अमृतमनादिमुक्तमिति, सत्यज्ञानरूपं, सर्वज्ञं निरतिशयात्मानन्दशक्तिविलासं निरस्तसमस्तदोषं परं ब्रह्मेत्युभयलिङ्गमिति दर्शयति। तथा, "निष्कलं निष्क्रियं शान्तधर्मावहं पापनुदं भगेशम्। तमीश्वराणां परमं महेश्वरम्", इत्यादिश्रुतिश्चोभयलिङ्गं ब्रह्माह।

अनादिमलसंश्लेषप्रागभावाद्विशेषतः।
अत्यन्तपरिशुद्धात्मा शिव इत्युच्यते विभुः ॥
अनन्तानन्द[5]कल्याणगुणैकनिधिरीश्वर[6]ः।
शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥

इति स्मर्यते च शिवशब्दवाच्यं ब्रह्मोभयलिङ्गमिति। परमविशुद्धिमङ्गलगुणवाचकेन शिवशब्देन निरस्तनिखिलदोषकलङ्कं निरतिशयपुरुषार्थवेदिगुणपरिपूर्णं ब्रह्माभिधीयत इति। ब्रह्मणः शिवशब्दवाच्यतया चोभयलिङ्गसिद्धिः ॥ १७ ॥

॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यतः पृथिव्यादिषु सर्वत्र स्थितस्यापि परमेश्वरस्य[7] निर्दोषत्वं कल्याणगुणाकरत्वं च। अत एव शास्त्रेषु जलसूर्यादिवदित्यस्योपमा क्रियते[8]।

---

१ विकारसंबन्धे समानेऽपि जीवेश्वरयोः कुतो वा दोषव्यवस्थेत्यत आह इति पा०।

२ एकस्मिन् शरीरेऽवस्थितयोरपि जीवेश्वरयोर्योगविशेषः प्रसिद्धः। एवमेके इति पा०।

३–रस्य दोषस्पर्शः इति पा०।

---

१ प्रकाशः परमज्ञानाकारतया तत्स्वरूपं चिदम्बररूपं ब्रह्म महाप्रकाशमयमिति, सत्तास्वरूपं सत्यज्ञानाकारं ब्रह्मेति, तत् पुनः कीदृशगुणविशिष्टं इति पा०।

२ बहिर्यस्य तत् प्राणारामं, मन आनन्दं मनस्येवानन्दो यस्य इति पा०।

३ आनन्दम्, "आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा। अनन्तानन्दसंदोहमकरन्दमधुव्रतः" ॥ इति वायवीयसंहितायामीश्वरस्य स्वभावोक्तिः। शान्ति–इति पा०।

४–षादीनामत्यन्तहेयगुणाना–इति पा०।

५ अथवाशेष–इति पा०।

६–कघन ई–इति पा०।

७–दौ सर्वत्र जीवरूपेणान्तर्यामितयावस्थितस्यापि परमेश्वरस्य इति पा०।

८–दिभिरस्योपमा। इति पा।

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥

इति । अत्र वस्तुतः स्थितमाकाशं वस्तुतोऽनवस्थितं च सूर्यमुपमानमुपादत्ते । अनेनाभिप्रायेण । यथैकमेवाकाशं घटादिषु पृथक् पृथगेव वस्तुतः स्थितं, तथैक एव परमेश्वरः पृथिव्यादिषु पृथक् पृथगात्मतया वस्तुत एव तिष्ठतीति परमेश्वरस्यापि बहुषु वस्तुतः स्थितिरुपपद्यते । इत्याकाशोपमानम् । जलाधारेषु वस्तुतोऽनवस्थितस्य सूर्यस्य यथा न तद्विकारादिदोषस्पर्शः । तथा पृथिव्यादिषु वस्तुतः स्थितस्यापि परमेश्वरस्य न तद्विकारादिदोषस्पर्श इति सर्वान्तर्यामिणः परमेश्वरस्य सिद्धमुभयलिङ्गत्वम् ॥ १८ ॥

अत्राशङ्कते[1] ॥

॥ अम्बुवदग्रहणात् तु न तथात्वम् ॥ १९ ॥

अम्बुनि यथा सूर्योऽपरमार्थो गृह्यते, न तथा परमेश्वरः पृथिव्यादौ । किंतु परमार्थतस्तत्र स्थित एव गृह्यते । अतः कथमस्य निर्दोषत्वम् ॥ १९ ॥

इति शङ्कायाः परिहार उच्यते ॥

॥ वृद्धिह्रासभाक्त्वमन्तर्भावादु-
भयसामञ्जस्यादेवं दर्शनाच्च * ॥ २० ॥

नेत्यनुवर्तते[2] । वस्तुतः पृथिव्यादिष्वन्तर्भावादपि परमेश्वरस्य तद्गतवृद्धिह्रासभाक्त्वं न सम्भवति । पूर्वोक्तोभयदृष्टान्तग्रहणसामञ्जस्यादवगम्यते[3] । उक्तं हि, वस्तुतोऽनवस्थितस्य सूर्यस्य[4] स्थितस्य चाकाशस्योपमानत्वेन ग्रहणं सर्वत्रावस्थितस्यापि परमेश्वरस्यानवस्थितस्येव न तद्दोषस्पर्श इति ज्ञापयितुमिति[4] । तथाहि, दृश्यते विवक्षितधर्मसाम्यज्ञापनमात्रेण[5] चन्द्रवन्मुखमिति दृष्टान्तः । तस्मादुभयलिङ्गसिद्धिरीश्वरस्य सामर्थ्यात् पृथिव्यादिषु स्थितस्यापि । अथवा दर्शनाच्च, अथवा श्रुतावपि दृश्यते विवक्षितधर्मसाम्येन दृष्टान्तः । "अश्व इव रोमाणि विधूय पापम्" इत्यादौ । अतो विवक्षितधर्मसाम्येनोभयदृष्टान्तसामञ्जस्यादुभयलिङ्गमेव ब्रह्मेति सिद्धम् ॥ २० ॥

उभयलिङ्गाभावमाशङ्कयाह ॥

॥ प्रकृतैतावत्त्वं हि प्रतिषे-
धति ततो ब्रवीति च भूयः ॥ २१ ॥

पूर्वत्र ब्रह्मण उभयलिङ्गत्वं साधितम् । तद्बाधोऽस्ति नवेति सन्दिह्यते । "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च" इति पृथिव्यप्तेजोवाय्वाकाशात्मकं मूर्तामूर्तप्रपञ्चरूपत्वं ब्रह्मण उक्त्वा, "अथात आदेशो नेति नेति" इति श्रूयते । अत्रेतिशब्दस्य पूर्वप्रकृतपरामर्शित्वाद् ब्रह्मणः पूर्वप्रतिपादितं मूर्तामूर्तप्रपञ्चरूपत्वं निषिध्यते नेति नेति[1], इति प्राप्ते ब्रूमः । "नेति नेति" इति पूर्वसिद्धं ब्रह्मणः प्रपञ्चरूपत्व न निषिध्यते । अप्रज्ञातत्वेन विहितस्यास्य प्रतिषेधायोगात् । किंतु,प्रकृतैतावन्मात्रं ब्रह्म न भवतीति प्रकृतैयत्तामेव "नेति नेति" इति प्रतिषेधतीति युक्तम् । यतः पश्चात् पूर्वमनुक्तं भूयो गुणजातं ब्रवीति । "न ह्येतस्मादिति, नेत्यन्यत् परमस्ति, अथ नामधेयं सत्यस्य सत्यमिति, प्राणा वै सत्य, तेषामेष सत्यम्," इत्यादिना । अत्र[2] "न ह्येतस्मात्," इति वाक्येन "नेति नेति" इति निर्दिष्टाद् ब्रह्मणोऽन्यच्चास्त्युत्कृष्टमित्युच्यते[3], अथ नामधेयमुच्यते सत्यस्य सत्यम्" इति । तदर्थनिर्वचनं[4] तु प्राणा वै सत्यं तेषामेष सत्यमिति । प्राणा जीवात्मानः सत्यं वियदादिवदुत्पत्त्यभावात् । तेभ्यः सत्येभ्यो ह्येष सत्यम् । तद्ज्ञाने[5] संकोचाद्यभावात् । अतः प्रकृतधर्मैयत्ताप्रतिषेधपरत्वात्, "नेति नेति" इति वाक्यस्य ब्रह्मणः पूर्वसिद्धमुभयलिङ्गत्वं न हीयत एव[6] ॥ २१ ॥

ननु सन् घटः सन् पट इत्यादिष्वनुवृत्तं सद्रूपं तद् ब्रह्म सत्यम् । अन्यद् व्यावर्तमानं घटादिकं "नेति नेति" इति प्रतिषेधति श्रुतिरित्याह ॥

॥ तदव्यक्तमाह हि ॥ २२ ॥

ब्रह्मस्वरूपं प्रत्यक्षादिना प्रमाणान्तरेण नाभिव्यज्यते । "न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनं हृदा" इत्यादिना यतः श्रुतिराह । अतः प्रत्यक्षादिना सिद्धा सत्ता न[7] ब्रह्मेति ॥ २२ ॥

ब्रह्मस्वरूपग्रहणे हेतुमाह ॥

---

१ आशङ्क्य परिहरति इति पा० ।

* शंकरमते वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्. इत्येकं दर्शनाच्च इत्यपरमिति सूत्रद्वयम् ।

२ नेति वर्तते इति पा० ।

३—भयसा—इति पा० ।

४—मेव इति पा० ।

५—नाय इति पा० ।

१—तेऽनेन, इति पा० ।

२ अतः प्रकृतधर्मैयत्ताप्रतिषेधपरत्वाच्चेति नेतीति वाक्यस्य ब्रह्मणः सिद्धमुभयलिङ्गत्वं न हीयत एव । अत्र इति पा० ।

३—न्यच्चास्त्युत्कृष्टमस्ति इति पा० ।

४—यं सत्यस्य सत्यमिति, अर्थनिर्वचनं इति पा० ।

५—त्यमिति ज्ञाने इति पा० ।

६—प्रतिषेध एव इत्येव पा० ।

७ सिद्धघटादिष्वनुवृत्तं न सत्ता इति पा० ।

॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥

अपितु ध्यानरूपे ज्ञानेन सम्यगाराधने ब्रह्मस्वरूपं गृह्यते। ये ब्रह्मभाविता ब्रह्मोपासते, तेषां ब्रह्मस्वरूपं ग्रहणयोग्यं भवतीति श्रुतिस्मृतिभ्यामवगम्यते । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते, तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्" इति । "ततस्तु तं पश्यति निष्कलं ध्यायमान"इत्यादिका श्रुतिः । स्मृतिरपि ।

"नासौ प्रत्यक्षविषयः",

इत्यादिका ॥ २३ ॥

॥ प्रकाशादिवच्चावैशेष्यं
प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥

अविच्छिन्नानुध्यानसंराधनेन येषां ब्रह्म प्रकाशते, तेषां तेन ब्रह्मदर्शनेन विषयीकरणे तज्ज्ञानानन्दादेर्जगदैश्वर्यस्य च वैशेष्यं नास्ति । तथाहि दृश्यते । "अहं मनुरभवं सूर्यश्च, तं मामायुरमृतमुपास्व" इत्यादिषु ब्रह्मोपासकानां तेन भावेनैक्येन[1] तदसाधारणगुणप्राप्तिः ।

"दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्" ।

इत्यादिषु हि कृष्णादीना तदैक्यभावनया तदैश्वर्यप्रकाशनं दृश्यते। ब्रह्मभावनाभ्यासेन च विश्वामित्रागस्त्यादीनां स्वर्गान्तरकरणजलधिकवलनादिसामर्थ्यम् । लोके च मन्त्रिणां गरुडभावनया गरुडासाधारणधर्मप्राप्तिः[2] । तस्माद् ब्रह्माहंतायाः प्रौढभावे सति ब्रह्मासाधारणधर्मांशवैशिष्ट्यमुपासकानामनवद्यम् । अतो घटादिष्वनुवृत्तं सन्मात्रं प्रत्यक्षं ब्रह्मेति न विरुद्धमेव । तस्मात् साक्षात्कारहेतूनां निदिध्यासनादीनां वैयर्थ्यप्रसङ्गात्, अप्रत्यक्षेऽपि तादृशि तल्लिङ्गादर्शनाच्च । अतः सन्मात्रं प्रत्यक्षं ब्रह्म तदन्यत् सर्वं निषेधति नेति नेतीति युक्तमेव[3] ॥ २४ ॥

॥ अतोऽनन्तेन तथाहि लिङ्गम् ॥ २५ ॥

यतो ब्रह्मोपासकानामपि तदसाधारणज्ञानानन्दपरमैश्वर्यादिकं प्रकाशते । अतो "द्वे वाव[4] ब्रह्मणो रूपे" इत्यादिनाभिहितेनानन्तेन कल्याणगुणेन योगो ब्रह्मणः सिद्ध एव । तस्मादुभयलिङ्गं ब्रह्मेति ॥ २५ ॥

ननु "द्वे वाव ब्रह्मणो रूपे" इत्यादिनोक्तं प्रपञ्चस्य ब्रह्मरूपत्वं ब्रह्मप्रपञ्चयोराध्यासिकसंबन्धेनैव निर्वाह्यम् ।

१ भावनयैक्येन इति वरपा० ।

२—णामङ्गारादिभावनयाङ्गाराद्यसा—इति पा० ।

३-भावे ब्रह्मासाधारणधर्माणां वैशेष्यमुपासकानामिति सिद्धम् इत्येव पा० ।

४ एव इति पा० ।

विधान्तरेण तन्निर्वाहासंभवात् । ततश्च, "अथात आदेशो नेति नेति" अस्याध्यस्तप्रपञ्चपरत्वमेव युक्तम् । इत्याशङ्क्य विनाप्यध्याससंबन्धं स्वाभिमतेन प्रकारेण तन्निर्वाहं वक्ष्यन् प्रथमं पक्षान्तरमाह[1] ॥

॥ उभयव्यपदेशात् त्वहिकुण्डलवत् ॥ २६ ॥

"सर्वो वै रुद्रो" "द्यावापृथिवी जनयन् देव एक" इत्येकत्वबहुत्वव्यपदेशादहेः कुण्डलभावर्जुभाववत् परमेश्वरस्यैव "द्वे वाव ब्रह्मणो रूपे" इत्यादिनोक्तः पृथिव्यादिभावसंस्थानविशेषः[2] ॥ २६ ॥

॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

प्रकाशतदाश्रययोर्यथा स्वरूपभेदेऽपि तेजस्त्वयोगेनैक्यम् । एवमचिद्ब्रह्मणोरेकजातियोगेनेति वा तस्य पृथिव्यादिभावः[3] ॥ २७ ॥

॥ पूर्ववद्वा ॥ २८ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः[4] । यथा पूर्वत्र प्रकाशजातिगुणशरीरवद्विशेषणैकस्वभावतया विशिष्टैकदेशत्वेनांशत्वमुक्तं चिद्वस्तुनः । एवमचिद्वस्तुनोऽपि, "सर्वो वै रुद्र" इति चिदचिद्वस्तुनोरेकेन शब्देनाभिधानं हि शक्यम् । एकरूपभूतयोः पूर्वोक्तसंबन्धे सत्येव । इतरपक्षद्वये ब्रह्मणः सदोषत्वं दुर्वारम्[5] । "यस्य पृथिवी शरीरं यस्यात्मा शरीरम्" इत्यादिश्रुतेः ।

"विद्येति चेतनां प्राहुस्तथाविद्यामचेतनाम् ।
विद्याविद्यात्मकं सर्वं विश्वं विश्वगुरोर्विभोः ॥
रूपमेव न संदेहो विश्वं तस्य वशे यतः ।

इत्यादिपुराणवचनप्रामाण्याच्च, चिदचिद्वस्तुनोरष्टमूर्तेर्ब्रह्मणः शरीरता[6] च सिद्धा ॥ २८ ॥

॥ प्रतिषेधाच्च ॥ २९ ॥

"नास्य जरयैतज्जीर्यति", "अस्थूलमनण्वह्रस्वम्," इत्यादिषु चिदचिदात्मत्वेऽपि[7] ब्रह्मणस्तद्धर्मप्रतिषेधाच्च चिदचिद्विशिष्टमपि ब्रह्म निर्दोषं निखिलमङ्गलगुणास्पदं च । एतदुक्तं भवति । चिदचितोः कारणत्वेऽपि तद्विशिष्टत्वेऽपि ब्रह्मणः शिवस्य विकारज्ञत्वाद्यपुरुषार्थधर्मरहितत्वं सर्वज्ञत्वनित्यतृप्तत्वाना-

१ पक्षान्तरमाह इत्येव पा० ।

२—थात् परमेश्वरस्याहिकुण्डलादिवत् स्वरूपस्य "द्वे वाव ब्रह्मणो रूपे" इत्यादिनोक्तः पृथिव्यादिभावः इति पा० ।

३—तोययोगेनेति इत्येव पा० ।

४—त्रये इति पा० ।

५—नमेकस्वरूपमिति पूर्वोक्तमेव । इतरपक्षनये ब्रह्मणः सदोषत्वं दुर्वारं भवति इति पा० ।

६—रतत्स्वभावता इति पा० ।

७—चिदचितोरात्मत्वेऽपि इति पा० ।

दिबोधत्वं स्वतन्त्रत्वालुप्तशक्तित्वानन्तशक्तित्वादिपरमपुरुषार्थधर्मवत्त्वं च नित्यसिद्धमेवेति ॥ २९ ॥

तदिह सकलचिदचिदाकारपरमशक्तिविलासरसात्मनः सर्वदोषवासनाकलङ्करहितात् सर्वज्ञतादिसकलमङ्गलगुणरत्नाकरात् परब्रह्मणो विरूपाक्षाच्छिवादेतस्मात् परं किंचिदपि वस्त्वन्तरं नास्तीति वक्तुं प्रथममाशङ्कते ॥

॥ परमतः सेतून्मानसं-
बन्धभेदव्यपदेशेभ्यः ॥ ३० ॥

'जन्माद्यस्य यत' इत्यादिना, "प्रतिषेधाच्च" इत्यन्तेन, यः परमकारणतया प्रतिपादितः परमेश्वरः । इतः परमपि वस्त्वस्ति न वेति संशयेऽस्तीति पूर्वः पक्षः[1] । तथाहि, "अथ य आत्मा स सेतुर्विधृतिरेतं सेतुं तीर्त्वा, अन्धः सन्ननन्धो भवति" इति, "चतुष्पाद्ब्रह्म", "अमृतस्यैष सेतुः" इत्यादिभिरस्य परब्रह्मणः सेतुत्वतरितव्यत्वपरिमितत्वप्रापकत्वादीनि व्यपदिश्यन्ते । अतोऽस्मादपि परं किंचिद्वस्त्वस्तीति ॥ ३० ॥

उच्यते नैतदिति ॥

॥ सामान्यात् तु ॥ ३१ ॥

तुशब्दः पूर्वपक्षनिवर्तकः । अतस्तस्मात् सर्वोत्तराच्छिवात् परमस्तीति वादो न युक्तः । "अधिकं तु भेदनिर्देशात्", "विश्वाधिको रुद्रो महर्षिः", इत्यादिश्रुतिभिस्तस्य विश्वाधिकत्वसिद्धेः । अत्र च सेतुत्वादिव्यपदेशस्तत्साम्यादेव सर्वलोकासंकरकरत्वेन, "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय" इति श्रूयते । "सर्वं खल्विदं ब्रह्म" इति[2] प्रतिपादितजगन्निमित्तोपादानभावस्य ब्रह्मण एव "इतः प्रेत्याभिसंभवितास्मि", इति प्राप्यत्वमवगम्यते । अन्यत्र च,

"त्रिलोचनं नीलकण्ठं प्रशान्तम्" ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात् ॥

इति तमःपरस्य सकलकारणस्य सर्वज्ञस्य त्रिलोचनत्वादिलक्षणस्य ब्रह्मण एव सर्वोत्तरतः प्राप्यत्वमुच्यते । तस्मादत्र तरतिः परप्राप्तिवचनः । अन्यथा परमप्राप्याद्विश्वाधिकात् परमकारणादुपरि वस्तुसद्भावे त्वेतदुपर्यपि वस्तुसद्भावप्रसङ्गेनानवस्था वेदान्तवाक्यानां भवेत् । अतः सर्वातीतः[3] परमशिव इति सर्वोत्कृष्टत्वं ब्रह्मण एव ॥ ३१ ॥

यदुक्तं परिमितत्वमिति तत्राह ॥

॥ बुद्ध्यर्थः पादवत् ॥ ३२ ॥

चतुष्पादित्युन्मानव्यपदेशो वाक्पादश्चक्षुष्पाद इतिवदुपासनार्थः ॥ ३२ ॥

॥ स्थानविशेषात् प्रकाशादिवत् ॥ ३३ ॥

अपरिमित एव यद्यपि परमेश्वरः । तथाप्यस्य स्थानविशेषादवच्छिद्यानुसंधानं युज्यते[1] । यथा वातायनादिस्थानसंबन्धात् प्रकाशादेः । तथेति न विरोधः ॥ ३३ ॥

प्राप्यस्यापि प्रापकत्वं चास्तीत्याह ॥

॥ उपपत्तेश्च ॥ ३४ ॥

प्राप्यस्यैव परमेश्वरस्य प्रापकत्वं चोपपद्यते । यथाह, "यमेवैष वृणुते तेन लभ्य" इति । अतः परमेश्वरान्नास्ति परमिति सिद्धम् ॥ ३४ ॥

॥ तथान्यप्रतिषेधात् ॥ ३५ ॥

सर्वत्र विरूपाक्षात् परब्रह्मणः शिवान्नास्ति परमिति निरूपितम् । पुनरिह तत्सदृशोऽस्ति न वेति संशये पूर्वः पक्षः[2] ॥ परमेश्वरादुत्कृष्टवस्त्वभावेऽपि जगत्कारणत्वेनेश्वरत्वादिना तत्सदृशोऽस्त्येव । तथा हि श्रूयते । "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्", इत्यत्र कश्चित् पुरुषः, तस्य हि सहस्रशीर्षा पुरुष इत्यादिना बहुमुखपादादित्वं, "पादोऽस्य विश्वा भूतानि" इति जगदंशविशिष्टत्वं, "त्रिपादस्यामृतं दिवि" इति परमाकाशवर्तित्वं, "तस्माद्विराडजायत विराजो अधिपूरुष" इत्यव्यक्तहिरण्यगर्भोपादानत्वम्, "आदित्यवर्णं तमसस्तु पारे" इति तमःपरत्वं, "तमेवं विद्वानमृत इह भवति" इति मोक्षहेतुत्वं चावगम्यते । तस्य पुनः "सहस्रशीर्षं देवम्" इत्यारभ्य "पतिं विश्वस्य" इति विश्वपतित्वं, "नारायणपरं ब्रह्म" इति नारायणशब्दवाच्यत्वं परब्रह्मत्वं, "परमात्मा व्यवस्थित" इति दहराकाशोपास्यत्वं चावगम्यते । अतो नारायणोऽसौ परमेश्वरसमानधर्मा । एत एव हि परमेश्वरस्य धर्माः ।

"सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवांस्तस्मात् सर्वगतः शिवः" ॥

इति । मन्त्रोपनिषदि, "विश्वतश्चक्षुरुत विश्वतोमुख" इति महोपनिषदि,शिवसङ्कल्पे च, "सर्वतोमुख" इति, अथर्वशिरसि, बहुमुखपादादिमत्त्व परमेश्वरस्य श्रूयते ।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत् ॥

---

१—यः । विद्यतेऽस्मादपि परमिति पूर्वः पक्षः प्रवर्तते । इति पा० ।
२ इत्यारभ्य इति पा० ।
३—तस्तत्त्वातीतः इति पा० ।

१ विद्यत एव इति पा० ।
२—श्यः । तथा सत्यस्मात् इति पा० ।

इति जगदंशविशिष्टत्वं,

"हिरण्यगर्भं पश्यत,"

इत्यादिषु हिरण्यगर्भकारणत्वं,

"समस्तसाक्षिं तमसः परस्तात्,"

इत्यादिषु तमःपरत्वं "दहरं विपाप्मम्," इत्यादिषु दहरोपास्यत्वं,

"ज्ञात्वा शिवं शान्तिमत्यन्तमेति,"

इत्यादिषु मोक्षहेतुत्वं, "सर्वैश्वर्यसंपन्न", इत्यादिषु जगदीश्वरत्वं चावगम्यते । एवं विश्वरूपत्वादिधर्मसाम्यमनयोर्नारायणपरमेश्वरयोः स्मृत्यादिषु पूजाविधाने ।

"शिवं वा विष्णुमेव वा,"

इति समानतया विकल्पः श्रूयते । समानमेव च तयोर्लोके पूजास्थानादिकं तत्प्रतिपादकपुराणागमादिकं च । तस्मात्[1] परमेश्वरसदृशः पुरुषो नारायण इति प्राप्ते ब्रूमः । परमेश्वरादुत्कृष्टं नास्ति यथा, तथा सदृगपि[2] नास्त्येव । जगत्कारणत्वेश्वरत्वादौ तदन्यप्रतिषेधात् । तथाहि,

"एक एव रुद्रो न द्वितीया यतः स्युर्य इमाँल्लोकानीशत ईशिनीभिः । जननीभिः परमशक्तिभिः,"

"द्यावाभूमी जनयन् देव एकः", "य एको रुद्र उच्यते,"

"हरः क्षरात्मानावीशते देव एकः",

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।

तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

"शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य",

"यदा तमस्तन्न दिवा न रात्रिर्न सन् न चासंश्छिव एव केवलः"।

इत्यादिभिः परमेश्वरादन्यस्य जगत्कारणत्वादौ निषेधः क्रियते । अतः परमेश्वरेण सदृशः कश्चिन्नास्ति । परमशक्तिमत्त्वान्निमित्तभूतः परमेश्वर एव पुरुष उपादानमिति । "पुरुषो वै रुद्रः", "पुरुषस्य सहस्राक्षस्य महादेवस्य धीमहि" इति श्रवणात् पुरुषस्य हिरण्यगर्भकारणत्वम् । उपादानत्वात् । ईश्वरस्य निमित्तत्वादुच्यते । उभयोरपि जगत्कारणत्वमत एव प्रतीयते । "तस्माद्विराट्" इति हि पुरुषस्योपादानत्वं "हिरण्यगर्भं पश्यत जायमानं", "द्यावाभूमी जनयन् देव एक" इति परमेश्वरस्य निमित्तत्वं च प्रतिपाद्यते । सर्वज्ञात् सर्वशक्तिमतः परब्रह्मणः शिवाद्विश्वाधिकात् प्रथमं प्रकृतिभूता परा शक्तिः प्रादुर्भवति । सा प्रथमभोक्तृत्वदशायां पुरुष उच्यते । यः सहस्रशीर्षा पुरुष इति श्रूयते । तदात्मन एव शिवात् सकलचेतनाचेतनप्रपञ्चपरिणामः । अत एव "सर्वो वै रुद्र" इति परमेश्वरस्य सर्वात्मनाभिधानमुपक्रम्य पुरुषस्य नारायणस्य सर्वात्मत्वमुपादानत्वात्[1] । कथमस्य सर्वात्मत्वमित्याशङ्कायां "पुरुषो वै रुद्र" इति, "पुरुषस्य महादेवस्य धीमहि" इति, पुरुषस्य विद्महे," "सहस्राक्षस्य महादेवस्य धीमहि" इति च पुरुषोऽपि[2] परमेश्वरस्य महाविभूत्यात्मा जगदाकार इति निरूपितम् । सर्वज्ञं सर्वशक्तिकं नित्यतृप्तं स्वतन्त्रं विश्वाधिकं निमित्तभूतमेव परं ब्रह्म सर्गसमये बहु स्यामिति संकल्प्य स्वात्मनामुं पुरुषं विभजति । स्वविभक्तस्वांशभूतेनैव[3] सकलं जगद्व्यवर्तीति, "तत् सृष्ट्वा तदेवानुप्राविशत्," "तदनु प्रविश्य सच्च त्यच्चाभवत्" इत्यादिना,

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।

तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत् ॥

इत्यादिना च श्रुतिवाक्येनावगम्यते । निमित्तसंकल्पमूलत्वादुपादानभावस्य निमित्तस्योपादानस्य निमित्तसंक्रमाविभागान्निमित्तधर्माणामुपादाने श्रवणम्[4] । अतः परमेश्वरेण सदृशमुत्कृष्टं वा वस्तु नास्त्येव ॥ ३५ ॥

अतोऽपि परमेश्वरेण सदृशं तदुत्कृष्टं च किंचिदपि वस्तु नास्तीत्याह ॥

॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥

आयामो महाव्याप्तिः "सर्वाननशिरोग्रीव" इत्यादिभिर्मन्त्रोपनिषद्वाक्यैः, "विश्वतश्चक्षुरुत विश्वतोमुख" इत्यादिभिः, "अणोरणीयान्" इत्यारभ्य "सर्वो ह्येष रुद्र" इत्येतत्पर्यन्तैर्महोपनिषद्वाक्यैः, "यो वै रुद्रः स भगवान्" इत्यारभ्य "यश्च स वै नित्यम्," इत्यन्तैराथर्ववाक्यैश्च, सकलजगद्व्याप्तिप्रतिपादनपरैरनेन स्वधर्मांशभूतेनोपादानपुरुषेण[5] सर्वगतत्वमगवम्यते निमित्तस्य परब्रह्मणः । तस्मात् परमेश्वरस्य विभूतिमयं विश्वमिति तत्सदृशस्तदुत्कृष्टश्च नास्त्येव ॥ ३६ ॥

एवं सर्वेश्वरतया सर्वात्मकतया स[6] एव परमेश्वरः सर्वकर्मणां तत्तद्देवतारूपेण स्वरूपेण च फलदाता भवतीति निरूपयितुमाह ॥

॥ फलमत उपपत्तेः ॥ ३७ ॥

इह पूर्वत्र सर्वेश्वरतया प्रतिपादितस्य परब्रह्मण एव स-

१–तस्माज्जगत्कारणत्वादिना इति पा० ।

२ तत्सदृशोऽपि इति पा० ।

१–मः । "सर्वो वै रुद्र" इति परमेश्वरस्य सर्वात्मत्वाभिधानात् । पुरुषस्य नारायणस्य सर्वात्मत्वादुपादानत्वात् । इति पा० ।

२ रुद्र इति । पुरुषोऽपि इति पा० ।

३–ति । प्रविश्य तमनेन स्वांशभूतेन इति पा० ।

४–दुपादानस्य निमित्तस्योपादानादाधिक्यम् । उपादानस्य निमित्तस्वरूपत्वाविभागेन निमित्त–इति वरपा० ।

५–स्चेतनतत्तद्धर्मोपादानपुरुषेण इति पा० ।

६–रः सर्वात्मकः स इति पा० ।

वानुष्ठातॄणामनुष्ठानफलदातृत्वमुतान्यस्येति संशयः । अनुक्षणविनाशिनोऽपि कर्मणोऽपूर्वव्यवधानेन कालान्तरभाविफलदाने सामर्थ्यमस्त्येव । ततः कर्मणः फलदातृत्वे सिद्धे तदतिरिक्ताऽसिद्धपरमेश्वरकल्पने गौरवप्रसङ्गात् तस्य न फलदातृत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु परमेश्वरादेवाराधितात् सर्वेषां कर्मफलसिद्धिः । उपपत्तेः । सेवितराजादिवदुपासकानां फलसिद्ध्युपपत्तेः । अचेतनस्य* कर्मणोऽपूर्वस्य वा । तारतम्येन प्रतिनियतं फलं ज्ञातुं सामर्थ्यं नास्ति ।[1] सेवाक्रियायामचेतनायां तथा दर्शनात् । इह शास्त्रसिद्धस्य परमेश्वरस्याकल्प्यत्वाच्च कल्पनागौरवम्[2] । तथाहि, "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति, एष एवासाधु कर्म कारयति तमधो निनीषति" इति श्रुतिरीश्वरस्यैव धर्माधर्मफलदातृत्वं तत्कारयितृत्वं च वदति । प्रत्युत,अपूर्वस्यैवाश्रुतस्य कल्पने गौरवम् । तस्मात् कर्मभिराराधितः परमेश्वरः फलदाता न कर्मेति निर्णयः ॥ ३७ ॥

॥ श्रुतत्वाच्च ॥ ३८ ॥

श्रूयते हि सर्वकर्मणामधिपतिः परमेश्वरः। तदाराध्यत्वात्। तत्फलदातृत्वाच्च । "गाथपतिं मेधपतिं रुद्रं, आवो राजानमध्वरस्य रुद्रम्" इत्यादिषु । एतन्मूला[3] स्मृतिरपि परमेश्वरस्य सर्वयज्ञाधिपत्यं वदति ।

"सोमेनाराधयेद् देवं सोमं सोमविभूषणम्" ।

इति[4] ।

"नाश्वमेधात् परो यज्ञो रुद्रस्याराधनं प्रति" ।

इति च रामायणम् । चमकेषु "वाजश्च मे प्रसवश्च मे धाता च मे विष्णुश्च मे" इत्यादिषु च वाजादीनां वस्तूनां विष्णवादीनां देवताना देयत्वप्रतीतेः परिशेषादीश्वरस्य सर्वकर्मफलदातृत्वसि[द्धिः] । अतः परमेश्वर एव सर्वयज्ञाराध्यः सर्वफलदाता ॥ ३८ ॥

पक्षान्तरमाह ॥

॥ धर्मं जैमिनिरत एव ॥ ३९ ॥

धर्ममेवोपपत्तेः श्रुतत्वाच्च फलदायिनं जैमिनिर्मेने । उपपत्तिः कृष्यादेर्मर्दनादेश्च कर्मणः साक्षात् परंपरया वा फलसिद्धिनिदर्शनम्[5] । श्रुतं च कामिनः कर्तव्यतया कर्मविधानान्यथानुपपत्त्या कर्मैवापूर्वरूपेण तत्तत्फलसाधनमिति ॥ ३९ ॥

॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

पूर्वोक्तं परमेश्वरस्यैव कर्मफलदातृत्वं भगवान् बादरायणो मन्यते । "वायव्यं श्वेतमालभेत भूतिकामः, स एवैनं भूतिं गमयति" इत्यादिषु परमेश्वरात्मकतया वाय्वादीनां कर्मविधिष्वेव फलहेतुत्वव्यपदेशात् । तदभावे हि क्षणिकस्य कर्मणः फलसाधनत्वनिर्वाहार्थमपूर्वत्वं कल्प्येत । वाक्यशेषोपपादितविध्यपेक्षितफलसाधनत्वप्रकारसद्भावे तु स एव स्वीकर्तव्यः । यथा वाक्यशेषस्थं विध्यपेक्षितं "प्रतितिष्ठन्ति, ह वा एता रात्रीरुपयन्ति" इत्यादिषु फलं स्वीक्रियते । "यो वै रुद्रः स भगवान्," इत्यादिना वाय्वादिसर्वदेवतारूपत्वमीश्वरस्यावगम्यते । अथर्वशिरसि "तत्रैव परमेश्वरेण यो मां वेद स सर्वान् देवान् वेद" इति स्वज्ञानात् स्वात्मकसकलदेवताज्ञानमुपपादितम् । अतः सकलदेवतारूपः सर्वकर्माराध्यः सर्वफलदाता परमेश्वरः परं ब्रह्म शिवः साक्षादुमापतिरिति सिद्धम् ॥ ४० ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥ :: :: ॥

---

## ॥ श्रीमन्महानुभावमहादेवस्वामिजीवितवृत्तान्तः ॥

अभूदभूतपूर्वः कोऽपि सर्वराजन्यमान्यमानपादाङ्गुलिर्निजगौरवोपार्जितसमस्तज्ञातिकुलकृतप्रणामाञ्जलिः सकलशास्त्रपारदृश्वा सदेहोऽपि विरागप्रचुरप्रकृतितया विदेहो वयसा वृद्धोऽपि तपश्चर्यातरुणः कृपालुतासाञ्जनोऽपि पूर्वाश्रमे रामनिरञ्जनसंज्ञां भजमानो नैकदेशवर्तिपूज्यपादद्विवेददेवदत्तश्रीधरप्रभृतिप्रसिद्धविदुषामनेकेषां राज्ञा च मन्त्रोपदेष्टा विषयद्वेष्टा परमार्थपथगामी महादेवाश्रमस्वामी ॥

एष किल 'आजमगढ़' इति प्रसिद्धमण्डलान्तर्गतस्य 'नगरासिकंदरपुर' इत्याख्यप्रदेशस्यान्तः 'तुरकी' इतिनामग्रामे घृतकौशिकगोत्रभाजो यजुर्वेदिनो हरिनारायणदत्तमिश्रात् त्र्यग्निवसुचन्द्रमिते १८३३ वत्सरे समजनि । 'कांधिया' इतिनामग्रामे च महादेवमिश्रगृहे मन्त्रोपदेशं प्राप । नववर्षवयसोऽस्य पण्डितपुरे रामप्रसादस्य सुतयोपयमनं बभूव । ततः स्वर्गतायां तस्यां 'महुवारी' इत्यभिधाने ग्रामे अजायवशर्मत्रिपाठितनूजयोद्वाहोऽभवत् । अतश्चैका कन्योत्पद्य वर्षत्रयवयस्कैव दिवं जगाम ॥

षोडशवर्षवयःसमये स्वपितामहरामधनमिश्रादधीत्य पाण्डित्यमवाप्य पुनः काश्यामागत्य बालंभट्टसविधे प्राणनाथाचार्यपार्श्वे सविशेषपरिष्कारं व्याकरणमधीत्याद्योवलशास्त्रिसंनिधौ मीमांसां वेदान्तं सांख्ययोगादीन्यधिजगे । एतस्मै रामधनमिश्राय महाराजः 'फतेसाह' इतिनामा बारामुकुन्दनामानं रामचन्द्रपुरनामकं च ग्रामं दत्तवान् ॥

---

* न ह्यचेतनस्य इति पाठे, चरमे सामर्थ्यमस्तीति पाठो बोध्यः ।

१–स्ति । स्वोपासनक्रिया–इति पा० ।

२–वदोषप्रसङ्गः इति पा० ।

३–षु । अत एव हि निरूपितमीश्वरेण । 'यद्यज्ञवास्तौ हीयते मम तत्' इति । तदेतत्प्रत्यक्षश्रुतिमूला इति वरपा० ।

४ इत्यादि पुराणम् । इति पा० ।

५ उपपादितस्तु कृष्यादेः कर्मणः साक्षात् परंपरया वा फलसिद्धिदर्शनात् इति पा० ।

तदित्थं सर्वशास्त्रदक्षतामासाद्य छेकूमिश्रनामकं प्राचीनं महामहोपाध्यायं वादीन्द्रं निर्जित्य परमं गौरवमवाप ॥

अस्य बुद्धिविद्याप्रशंसामहोबलशास्त्रिभवदेवमिश्रदामोदरशास्त्रिकाशीनाथशास्त्रिप्रभृतयो दिगन्तविख्यातकीर्तयोऽप्यधिकं चक्रुः । अथ मिथिलां जिगमिषुः स्वजनन्याज्ञामनुरुन्धता 'हथुवा' इति प्रसिद्धराजधानीशेन छत्रधारिमहाराजेन 'भगवन् मामशरणमपहाय क्व यास्यसि, इहैव मामभिरक्षन् यथेप्सित शिष्यनिकराध्यापनं विधीयतां, सर्वेभ्यश्छात्रेभ्यो वेतनमहं वितरिष्यामीति' पुनः पुनः सादरमुपरुध्यमानो द्वादशवर्षपर्यन्तमुमादत्तत्रिपाठिसीतारामद्विवेदप्रमुखान् शतशः पण्डितविद्यार्थिनोऽध्यापयामास ॥

यदा 'बाबू अलरखसिंह' इतिनामा स्वपुत्रपरिणयनाय 'हथुवा' राजधानीमगमत्, तदा तेन सह गतैः सदाशिवभट्टप्रभृतिविद्वद्भिरहमहमिकया शास्त्रार्थं विधातुं कामयमानैः सार्धमायातं स्वगुरुं प्राणनाथमाचार्यं प्रणन्तुमागतस्तया घण्टाचतुष्टयं ब्राह्मणप्रशंसां देवगिरा विचित्रयोपपादितवान्, यथा तत्पाण्डित्यगौरवमालक्ष्य सर्वे एव तुतुषुः किमपि च नोचुः । 'मझौली' इति विदितराजधानीपतिना महाराजेनाजितमल्लसिंहेनास्मै 'सिसवा' 'कर्णपट्टी' इत्यभिधानौ ग्रामौ प्रदत्तावास्ताम् ॥

सोऽयं महाशयो महामहिमा पितरि दिवं गते वैराग्यमयचेताः पूर्वं गयायां पितृश्राद्धं विधाय तीर्थराजमागत्याशरीरस्थिति काषायवासा वाराणस्यामेव निवसानीति प्रार्थ्य सार्धद्विचत्वारिंशत्तमे वयसि शरशैलवसुशशिमिते १८७५ वैक्रमे हायने महामहिमश्रीपूर्णानन्दस्वामिनः सकाशात् तुरीयाश्रमदीक्षामभ्युपगम्याद्यावधि काशीमिमामलंचकार ॥

अथास्मिन् क्षेत्रे क्षणभङ्गुरमात्मविग्रहमञ्जसोत्सृज्य ग्रहद्विनवेन्दुमिते १९२९ वैक्रमेऽब्दे मार्गशीर्षे दर्शतिथौ शनौ बाणवतिवर्षमिते वयसि शाश्वतं पदं प्रविवेश ॥

महादेवाश्रमस्वामी दिनस्वामीव पूजितः ।
काश्यां प्रकाश्य सुखदैः स्वैस्तपोभिस्तिरोहितः ॥१॥

महामनसि काष्ठजिह्वस्वामिनि स्वगुरौ शरीरं जहति महाराजेन काशीनृपेण श्रीमदीश्वरीप्रसादनारायणसिंहदेवेनाकुलीभूयानुयुक्ते सति महादेवस्वामिनं सर्वसिद्धान्तवेत्तारं मदन्त मामेव मन्येथा इत्युपदिष्टेनाद्यावधि तदवलम्बतो दिनान्यनायिषतेत्यलं पल्लवितेनेति शिवम् ॥

पं· बेचनरामत्रिपाठी ॥
पं· शीतलप्रसादत्रिपाठी ॥



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO. AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# A I .

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 81. Benares, February 1st, 1873. Vol. VII.

## ॥ चिन्तामणेः शब्दखण्डम् ॥

अथाप्रतिपाद्यघटादिवृत्तितया न कार्यत्वं प्रवृत्तिनिमित्तं, प्रतिपाद्यमात्रवृत्तेरेव तथात्वात्,अन्यथा प्रमेयत्वमेव तथास्त्विति चेत्, न । (१) यत्प्रकारिका हि प्रतिपत्तिः पदजन्या तदेव तत्र प्रवृत्तिनिमित्तं, फलकल्प्यत्वाद् शक्तेः, न तु प्रतिपाद्यमात्रवृत्ति, (२) साक्षादौ व्यभिचारात् । न च प्रमेयत्वं तथा, तद्बोधस्याप्रवर्त्तकत्वात्, अत एव लोके लिङ् लाक्षणिकी (३) क्रियाभिन्ने धर्मिणि वेदे शक्तिकल्पनात् । (४) न च लौकिकानामपूर्वे तात्पर्यं संभवति, पूर्वं प्रमाणान्तरेणाप्रतीतेः । (५) क्रियासाधारणशक्तावपि लोके लक्षणैव, पचेतेत्यत्र हि पाककार्यता ऽवगम्यते । तत्र कार्यत्वे लिङस्तात्पर्यं लाघवात्, न धर्मिणि, (६) क्रियाया धातुलभ्यत्वात् । तदाहुः । तात्पर्याद्धि वृत्तिर्न तु वृत्तेस्तात्पर्यमिति । तृतीयायाः करणत्वैकत्ववन्न कार्यं कार्यत्वं च स्वतन्त्रं शक्यं किं तु विशिष्टं (७) विशिष्टान्न विशेषणमन्यदेवेति कार्यत्वे लक्षणा । न च कार्यन्वविशिष्टधर्म्युपस्थितावपि धर्म्यंशमपहाय क्रियायां कार्यत्वान्वयो ऽस्तु, किं लक्षणये-

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

(१) यत्प्रकारिका हीति । एकविशेषबाधकं विनेत्यर्थः । तेन छिद्रेतरत्वादौ न प्रसङ्गः । न च तीरत्वादौ प्रसङ्गः, शक्त्या यत्प्रकारिका प्रतीतिः पदजन्या तत्प्रवृत्तिनिमित्तमित्यर्थात् । आकृतिर्न प्रकार इति मतेनेदम् । (२) साक्षादाविति । यद्यपि प्रतिपाद्यमात्रवृत्त्येव प्रवृत्तिनिमित्तमित्याक्षेपो न यावत्प्रतिपाद्यमात्रवृत्ति तावत्तया तथा च व्यापकव्यभिचारोयमयुक्तस्तथापि तत्त्वं न प्रवृत्तिनिमित्तत्वप्रयोजक साक्षादौ तत्त्वेपि तथात्वाभावादिति तात्पर्यम् । अत एवेत्यतिदेश्यमाह । (३) क्रियाभिन्न इति । आदौ लोके लिङः कार्यत्वे शक्तिकल्पनेपि वेदे कार्ये शक्तिकल्पनसमये लाघवाल्लिङ्त्वावच्छेदेनैव क्रियाभिन्ने कार्ये शक्तिः कल्प्यते । तथा च क्रियायाः कार्यभेदानन्वये कार्यत्वमात्रोपस्थितये लौकिकी लिङ् लाक्षणिकीत्यर्थः । के चित्तूभयत्र शक्तिकल्पने गौरवाल्लोके लक्षणा । न च लोके कार्यत्वशक्ताया लिङो वेदएव कार्ये लक्षणास्तु विनिगमकाभावादिति वाच्यम् । अपूर्वाननुभवापत्तेरित्यत्र स्फुटमिति भावः । ननु लोकेपि न लक्षणा किं त्वपूर्वबोध एवास्त्वित्यत आह । (४) न चेति । (५) क्रियेति । एतच्चाभ्युपगमवादेन । अन्यथा नित्यस्थलेऽगतेरिति बोध्यम् । तत्रापूर्वानङ्गीकर्तृमते इदमित्यन्ये । (६) क्रियाया इति । अन्यलभ्यतया न तत्र तात्पर्यं, तदभावाच्च सत्यपि वृत्तिस्तत्राप्रयोजिकेति भावः । न चैव नीलो घटइत्यादौ नीलपदं नीलमात्रपरं स्यान्न तु धर्मिपरमन्यलभ्यत्वादिति वाच्यम् । तुल्यविभक्तिकप्रातिपदिकार्थयोरभेदान्वयस्यैव व्युत्पत्तिसिद्धत्वादित्याहुः । आकाङ्क्षानुपपत्तेस्तथात्वमित्यन्ये । ननु विशेषणस्य कार्यत्वस्य विशिष्टप्रविष्टतया न शक्यसंबन्धस्तस्य भेदाधिष्ठानत्वादित्यत आह । (७) विशिष्टाच्चेति । न च किं तु कार्यत्वमात्रइत्यग्रेतनेन विरोधः । तस्याभ्युपगमरीत्या क्रियानिरा-

ति वाच्यम् । नहीतरधर्म्मिगतत्वेनोपस्थितस्य धर्म्यन्तराकाङ्क्षा ऽस्ति । अतः स्वतन्त्रकार्यत्वोपस्थितये लक्षणा । (८) यथा "पुरोडाशकपालेन तुषानुपवपती"त्यत्र पुरोडाशार्थतया तदन्वितत्वेनोपस्थितस्य नोपवापाकाङ्क्षेति स्वतन्त्रकपालोपस्थितये ऽधिष्ठानलक्षणा । (९) न च व्युत्पत्तिविरोधः । नहि लोके क्रियाकार्यत्वे शक्तिरवधारिता येन विरोधो भवेत्, किं तु कार्यत्वमात्रे, क्रियाया धातुलभ्यत्वात् । (१०) न च धर्म्यन्तरे शक्तावपि तद्भङ्गः, (११) तस्मात्प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानां गृहीतं, प्रत्ययार्थश्चापूर्वमपीति न विरोधः । अस्तु वा लोके लिङः (१२) क्रियाकार्यत्वे शक्तिस्तथा ऽपि तद्भङ्गं विनैव नानार्थन्यायेन वेदे धर्म्यन्तरे शक्तिः, तां विना स्वर्गकामान्वयासंभवात् । अन्ये तु पचेत्यादौ धातुनैव पाकः कार्यो ऽभिधीयते (१३) लिङ् तत्र तात्पर्यग्राहिका न शक्ता, नियमतस्तादृश्येव तत्प्रयोगात् । (१४) सामान्यशब्दस्य विशेषपरत्वं च न शक्त्यन्तरनिर्वाह्यम्, (१५) अत एव वर्त्तमानत्वादौ न लडादिशक्तिरिति लोके शक्त्यग्रहाद् न व्युत्पत्तिविरोध इति । तदसत् । लिङः (१६) कार्यत्वे ऽशक्तौ पचपदात् कार्यत्वज्ञानानुपपत्तेः, । (१७) युगपद्वृत्तिद्वयविरोधात् । न चाजहत्स्वार्था, उभयसाधारणस्यानुपस्थितेरिति (१८) दिक् । (१९) यद्वा ज्ञाने पदानां शक्तिः, (२०) शक्यत्वात् । एवं च लिङ्पदमेकचोच्चारणे (२१) स्थायित्वस्वर्गजनकत्वकार्यत्वानां ज्ञाने शक्तमिति व्युत्पत्तिः, (२२) स्थायिज्ञानादिकं चोपस्थितमेव । ततो लिङ्पदेनैकचोच्चारणे योग्यतादिवशाद्यागविषयकं स्थायिस्वर्गजनकं कार्यमित्येकं ज्ञानमनुभवरूपं प्रचुरद्रव्यगुणकर्मविलक्षणविषयं क्रियते । न चैवं नानार्थवदे(२३)कैकज्ञाने शक्तिग्रहादेकैकविषयो ऽनुभवो भवेन्न समुदितविषय इति वाच्यम् । शक्तिग्रहकाले एकोच्चारणइति विशेषणमहिम्ना तत्संभवात् । नानार्थे तु (२४) प्रमाणाभावेन गौरवेण च शक्तिग्रहे तस्याप्रवेशात् । (२५) तथाप्यमीषां समूहालम्बन स्यान्न तु परस्परवैशिष्ट्यज्ञान-

---

सपरत्वादित्येके । मतान्तरेण तदित्यन्ये । (८) यथेति । ननु घटार्थेन दण्डेन गामभ्याजेत्यादावपि लक्षणा स्यात् । यदि च तत्र वाक्यैकवाक्यतया ऽन्वये न निराकाङ्क्षत्वं तदा प्रकृतेपि तुल्यमिति चेत् । अत्राहुः । वेदे न्यायलभ्यं तात्पर्यमिति लाघवादुभयप्रयोजनान्वये तात्पर्याभावादत्र लक्षणा । लोके च न्यायाविषयेपि तात्पर्यादुभयत्र तदविरोधादुभयान्वयबोधाच्च लक्षणेति दिक् । ननु लोके क्रियाकार्यत्व वेदे त्वपूर्वकार्यत्वं लिङर्थ इति व्युत्पत्तिविरोध इत्यत आह । (९) न चेति । नन्वेवमपि तत्र कार्यत्वे ऽत्र धर्मिणीति विरोध एवेत्यत आह । (१०) न चेति । तस्या एव शक्तेः क्रियातिरिक्तधर्मिविषयत्वमात्रं कल्प्यते न तु तद्भङ्ग इत्यर्थः । ननु प्रकृत्यर्थान्वितस्वार्थप्रतिपादकत्वं प्रत्ययाना व्युत्पन्न, न च यागान्वितकार्यत्वं लिङा बोध्यत इति व्युत्पत्तिविरोध एवेत्युपसंहरन्नेव निरस्यति । (११) तस्मादिति । (१२) क्रियेति । क्रियोपलक्षितकार्यत्वइत्यर्थः । न च पूर्वमपि प्रवृत्तिनिमित्तभेदान्नानाशक्तिरिति पूर्वाभेद इति वाच्यम् । तत्र कार्यत्वशक्तेरेवातिरिक्तधर्मिविषयत्वमात्रं कल्प्यते न तु शक्त्यन्तरमत्र तु शक्त्यन्तरमेवेत्याशयात् । यद्यप्येवं नानार्थतैव न तु तन्न्यायस्तथापि शक्ततावच्छेदकभेदात्तथात्व, लौकिकवैदिकविधिलिङ्त्वावच्छेदेन शक्तिभेदा,न्नानार्थं तु नैवमित्याहुः । के चित्तु नानार्थे परस्परासंकीर्णार्थद्वये शक्तिद्वयमत्र चैकशक्तिविषयकार्यत्वघटिते विशिष्टे ऽपरशक्तिरिति नानार्थन्यायाभिधानमित्याहुः । नन्वेवं पचतीत्यादावपि तद्धीः स्यादित्यत आह । (१३) लिङिति । शक्तिरेव कथं नेत्यत आह । (१४) सामान्येति । यथा घटपदेन नीलघटधीः शक्त्यन्तरं विनैवेति भावः । (१५) अत एवेति । धातुनैव वर्त्तमानत्वादिविशिष्टाभिधानं लडादिकं तु तात्पर्यग्राहकमिति भावः । (१६) कार्येति । कार्यत्वप्रकारकज्ञानानुपपत्तेरित्यर्थः । अत एव घटपदादपि नीलघटधीर्न नीलघटत्वप्रकारिकेति भावः । लक्षणया तत्स्यादत आह । (१७) युगपदिति । न च प्रकृष्टजयवत्कार्यत्वविशिष्टे पाके लक्षणास्तु केवलस्य विशिष्टान्यत्वादिति वाच्यम् । युगपद्वृत्तिद्वयाङ्गीकर्तृमतेन कथं चित्तस्योपपाद्यत्वात्तद्विरोधाभ्युपगन्तृमतेनात्र तदभावात् । एतदभिप्रायेणैवाह । (१८) दिगिति । योग्यताबलाच्च स्थायित्वादिलाभ इति मतेन कल्पान्तरमाह । (१९) यद्वेति । एतन्मते कार्यत्ववत्साधनत्वबोधेऽपि शाब्दो न विरुद्ध इत्यपि बोध्यम् । (२०) शक्यत्वादिति । ज्ञानस्येति शेषः । शक्यएव शक्तेरुचितत्वादिति भावः । अर्थस्य तु शक्यज्ञानविषयतया शक्योक्तिरिति ध्येयम् । (२१) स्थायित्वेति । स्थायित्वादिप्रकारके स्थाय्यादिज्ञाने शक्तमित्यर्थः । अत एवाह । (२२) स्थायीति । प्रत्येकमिति शेषः । (२३) एकैकेति । विशिष्टस्य प्रागनुपस्थितेरिति भावः । (२४) प्रमाणाभावेनेति । प्रकृते च स्वर्गकामान्वयानुपपत्तेरेव मानत्वा,दत एव न गौरवं दोषायेति भावः । प्रकृते नानार्थानुभवबलादेव तत्प्रवेश इत्यन्ये । (२५) तथापीति । शक्तिग्रहकालइव स्थाय्यादीनां वैशिष्ट्यज्ञानमभेद-

मिति चेत्, न । (२६) साकाङ्क्षधर्मधर्म्मिगोचरैकज्ञानस्यैव विशिष्टज्ञानत्वात् । न च समूहालम्बनसंभेदः । तस्य निराकाङ्क्षविषयत्वात् । अस्तु वोपस्थितेष्व(२७)गृहीतासंसर्गेषु स्थायित्वस्वर्गजनकत्वकार्यत्वेषु शक्तिः, (२८) अगृहीतासंसर्गस्यापि विशिष्टज्ञानसमानशीलत्वात् । अत उक्तन्यायेन तावद्विषयकमेकं ज्ञानं लिङ्पदेन जन्यते । (२९) एवमेवालौकिकार्थेषु स्वर्गादिपदेषु शक्तिग्रहः । (३०) ननु भवतूक्तप्रकारेण शक्तिग्रहस्तथापि लिङ्पदाद्यागविषयकार्यानुभवे सत्यपूर्वलाभात्स्वर्गकामान्वयः संभवतीत्युपपादकप्रतिसंधाने प्रसिद्धार्थस्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या लिङः कार्ये शक्तिकल्पनं, (३१) नहि प्रथममुपपादकप्रतिसंधानं विना ऽर्थापत्तिः संभवति । न च शक्तिकल्पनात् पूर्वमुपपादकशरीरनिविष्टमपूर्वं ज्ञातमिति चेत् । तत्किं य एव विशेष उपपादकः पक्षधर्म्मताबलात्सिद्ध्यति तत्प्रतिसंधानमर्थापत्तौ करणं, तथात्वे पूर्व्वगृहीतमात्रस्य कल्प्यत्वे कल्पनोच्छेदापत्तिः । तस्माद्यथा सामान्यतो भोजनस्य पीनत्वसंबन्धावगमाद् उपपादकतर्के सति कल्पनातो विशेषावगमो, यथा वा सामान्यशक्तव्यक्तिवाचकपदेन समभिव्याहारवशाद्विशेषाभिधानमेवमत्रापि कार्यमात्रवाचकत्वे विशेषलाभः संभवती(३२)ति तर्कितोपपादकप्रतिसंधानाद्भवत्यर्थापत्त्या शक्तिकल्पनं, (३३) यागविषयकं च कार्यं न घटादि, तस्य सविषयकत्वाभावात्, (३४) विषयत्वं च (३५) ज्ञानघटयोरिव स्वभावसंबन्धो वा (३६) तन्निरूपणाधीननिरूपणं (३७) तत्समानसंविद्वेद्यत्वं वा (३८) व्यावृत्तसाधनत्वं वेति । (३९) अस्ति हि यागदानहोमजन्यापूर्वाणां (४०) तुल्यरूपसाधनान्तरव्यवच्छेदेन प्रत्येकमात्रजन्यत्वम् । (४१) तदुक्तम् ॥

विशब्दो हि विशेषार्थः सिनोतिर्बन्ध उच्यते ।
(४२) विशेषेण सिनोतीति विषयो ऽतो नियामकः ॥

---

ज्ञानं न स्यादित्यर्थः । यद्वा स्थायित्वादीनामेकस्मिन् धर्मिणि सामानाधिकरण्यज्ञानं न स्यादित्यर्थः । यद्यपि प्रत्येकमप्युपस्थितानामाकाङ्क्षादिवशात्संसर्गबोधः संभवत्येव तथाप्यभ्युपेत्य स्वमतेन समाधत्ते । (२६) साकाङ्क्षेति । अगृहीतसंसर्गेत्यर्थः । संभेदो विशेषः । नन्वेवं नित्यस्थले का गतिस्तत्र स्वर्गजनककार्याभावात्, कथं वा ऽपूर्वलाभ इति चेन्न । अयोग्यतया स्वर्गजनकत्वांशमपहाय स्थायि कार्यमित्येवान्वयादित्येके । लक्षणया तथा बोध इत्यन्ये । न च वैश्वकलिङादौ का गतिस्तत्र धातुसाम्यद्वारा साधनत्वज्ञानात्क्रियायामेव कार्यत्वान्वयादिति वाच्यम् । तदतिरिक्तलिङ एवोक्तशक्तिग्रहादित्येके । लक्षणया तथा ऽन्वय इत्यन्ये । (२७) अगृहीतासंसर्गेष्विति । एकस्मिन्धर्मिण्यगृहीतासामानाधिकरण्येष्वित्यर्थः । एतच्च विशेषणं स्वरूपसत्त्व तु शक्तिप्रकार इति बोध्यम् । (२८) अगृहीतेति । तथा च विशिष्टशक्तिग्रहादिवाये ततोविशिष्टज्ञानाविरोध इति भावः । (२९) एवमिति । तन्मते यत्र दुःखेनेत्याद्यर्थवादस्याप्रमाणत्वेन ततः स्वत्वविशिष्टस्यानुपस्थितेरगृहीतासंसर्गपुरस्कारेणैव शक्तिग्रह इत्यर्थः । ननु लिङः कार्ये शक्तिकल्पने सत्यपूर्वोपस्थितिस्तदुपस्थितौ च शक्तिकल्पनमित्यन्योन्याश्रयमभिप्रेत्याह । (३०) नन्विति । कार्यइत्युपलक्षणं स्वर्गजनकइत्यादिकं बोध्यम् । कार्ये शक्तिरिति पूर्वमते शङ्केयमित्यप्याहुः । (३१) नहीति । तदुक्तं, यतो ऽन्यत्वं तत्सिद्धेरग्रे तदसिद्धेरिति । उपसंहरति । (३२) इति तर्कितेति । नन्वर्थापत्त्या शक्तिग्रहो भवन् कथं नापूर्वं विषयीकरोति सामग्रीसत्त्वात् । नहि तन्मते कल्प्यज्ञानमपि पूर्वं मृग्यत इति चिन्त्यम् । ननु शाब्दबोधे घटादिकार्यान्वय एव कथं नेत्यत आह । (३३) यागेति । नन्वपूर्वमपि घटवन्निर्विषयकमेवेति कथं तथेत्यत आह । (३४) विषयत्वं चेति । तद्विषयत्वं चेत्यर्थः । (३५) ज्ञानेति । घटज्ञानस्येवेत्यर्थः । ननु स्वभावसबन्धो विषयादिसाधारण इत्यत आह । (३६) तन्निरूपणेति । तन्निरूपणाधीननिरूपणमित्यर्थः । एतदपि यागज्ञानादावतिप्रसक्तमत आह । (३७) तत्समानेति । यदा कदा चित्समानवित्तिवेद्यत्वं घटादावपि, नियमेन प्रकृतेप्यसभवीत्यत आह । (३८) व्यावृत्तेति । व्यावृत्तसाधनत्वं यागस्य विषयत्वं तत्साध्यत्वमपूर्वे सविषयकत्वमित्यर्थः । एतच्च प्रागनुपस्थितमपि संसर्गमर्यादया भासतइति स्मर्तव्यम् । व्यावृत्तत्वमुपपादयति । (३९) अस्ति हीति । अनभिसंहितपरस्वत्वापत्तिफलकस्त्यागो यागः, अभिसंहितपरस्वत्वापत्तिफलकस्त्यागो दानं, देशविशेषगतद्रव्यप्रक्षेपोपाधिकस्त्यागो होम इत्याहुः । (४०) तुल्येति । यागापूर्वस्य दानादिव्यावृत्तो यागः कारणमेवमन्यत्रापीत्यर्थः । यद्यप्येतदपि तज्जन्यस्वर्गादावतिप्रसक्तं तथापि तद्व्यावृत्तं निर्वाच्यम् । एतदतिप्रसक्तिर्न दोषायेत्यप्याहुः । वस्तुतः स्वभावसंबन्धविशेष एवेतरव्यावृत्तस्तादिति बोध्यम् । अत्र वृद्धसम्मतिमाह । (४१) तदुक्तमिति । (४२) विशेषेणेति । अन्यतो व्यावृत्त्या ऽसाधारण्येनेत्यर्थः । सिनोति

इति । (४३) ननु येन रूपेण शक्तिग्रहस्तेन कार्यत्वशक्ताल्लिङ्पदाल्लक्षणया कार्योपस्थितौ योग्यतादिवशादपूर्वलाभोऽस्तु (४४) कार्यस्मरणं ह्यन्विताभिधानोपयोगि न त्वपूर्वस्मरणं, तच्च पदेन (४५) पदार्थेन वेति न कश्चिद्विशेषः । कार्यं च शक्यकार्यत्वसंबन्धितयाऽवगतमिति चेत्, न । लिङो लाक्षणिकत्वेनापूर्वाननुभावकत्वात् । न चेतरान्वितस्वार्थशक्तस्य यज्यादिपदस्येतरदपूर्वमादायानुभावकत्वमिति वाच्यम् । इतरोपलक्षितस्वार्थान्वयमात्रे हि पदानां शक्तिर्न त्वितरत्र, गौरवात् । पदान्तरलभ्यत्वाच्च । (४६) लक्षणायां च तीरोपलक्षितान्वयशालिस्वार्थानुभावकत्वमितरपदस्य तीरस्य तु संस्कारादुपस्थितिः, (४७) असन्निहितेनान्विताभिधानाभावात् । न चापूर्वं संस्कारविषयः । (४८) किं च यजिपदेन स्वर्गकामकार्यविषयो याग इत्यनुभवो भवेत्, (४९) लक्षणायामितरपदस्य लक्षणीयविशेषणस्वार्थविशेष्यकानुभवजनकत्वात् । (५०) न चैतादृशो बोध आकाङ्क्षितः । (५१) न च यागाविशेषितकार्यमात्रेण स्वर्गकामान्वयः प्रतीयते, किं तु यागविषयककार्यविशेषे । तथा च तथाविधबोधार्थं लिङः कार्ये शक्तिरेवेति । अत्रोच्यते । अन्वयप्रयोजकरूपवत्त्वं न योग्यता । अनाप्तोक्ते पयसा सिञ्चतीत्यत्र सत्यप्यन्वयप्रयोजकद्रवद्रव्यत्वे बाधकप्रमायामन्वयाबोधात् । अथ योग्यत्वेपि स्वबाधकप्रमाविरहः कारणं (५२) तर्हि सोऽवश्यमपेक्षणीय इति लाघवात्सैव योग्यता । एवं च तदेव योग्यमयोग्यं चेति स्यादिति चेत्, सत्यम् । यथा दशाविशेषे तदेव (५३) साकाङ्क्षमनाकाङ्क्षमासन्नमनासन्नं च, तथा (५४) स्वबाधकतत्प्रमाविरहदशायां तदेवान्वयबोधे योग्यमयोग्यं चाभिधीयते स्वबाधकप्रमायां तद्विरहे वा योग्यायोग्यताव्यवहारदर्शनात् । स्वबाधकप्रमाविरहदशायां योग्यतादिसत्त्वेऽपि वन्हिना सिञ्चतीत्यत्रान्वयबोधोऽप्रमा, दोषवत्पुरुषप्रणीतत्वात् (५५) सामान्यभानस्य किंचिद्विशेषभाननियतत्वाद्विशेषाभाने कथं तद्भासतइति चेत् । वस्तुगत्या परम्परासाधनं विशेषो भासतएव, परम्परासाधनत्वं तु प्रकारो न भासते, तत्प्रकारभाने परम्पराघटकज्ञानस्य हेतुत्वाद्, यथा घटेन जलमाहरेत्यत्र योग्यतया छिद्रेतरघटो घटत्वेन भासते । न तुच्छिद्रेतरत्वेन, (५६). तथा सति लक्षणायां युगपद्वृत्तिद्वयविरोधेन घटानन्वय-

---

संबध्नाति जनयतीति यावत् । ननु वेदेऽपि लिङः कार्यत्वमात्रएव शक्तिरस्तु धर्मिणोऽन्यलभ्यत्वादित्याशङ्कते । (४३) नन्विति । तथा च न व्युत्पत्तिविरोधोपीति भावः । येन रूपेण त्वन्मते शक्तिस्तेन रूपेण लक्षणया कार्योपस्थिताविति बोध्यम् । ननु लक्ष्यापूर्वस्मरणे कथं लक्षणेत्यत आह । (४४) कार्यस्मरणमिति । अन्यथा शक्तिपक्षेऽप्यप्रतीकार इति भावः । पूरस्यैव तीरस्मारकत्वमिति मतेनाह । (४५) पदार्थेति । न च कार्यत्वोपस्थितिः शक्त्यैवेति युगपद्वृत्तिद्वयविरोधः,विशिष्टस्य केवलानन्यतया प्रकृष्टजयवत्तद्भ्युपगमात् । तर्हि गङ्गायां घोष इत्यत्र का गतिरित्यत आह । (४६) लक्षणायामिति । (४७) असन्निहितेनेति । अनासन्नेनेत्यर्थः । पदजन्योपस्थितेरेवासत्तित्वादत्र च पदार्थस्यैवोपस्थापकत्वाभ्युपगमादिति भावः । ननु त्वन्मतेऽर्थाध्याहारवदासन्नत्वमितरपदेनानुभवश्च स्यात्,किं च तीरस्यशाब्दबोधविषयत्वमवश्य वाच्यम्, अन्यथा विभक्त्यर्थानन्वयापत्तेः,तथा च यथा तत्र शब्दत्वं तथा प्रकृतेपि कार्यस्मरणे सति समानप्रकारकत्वस्य नियामकत्वेन योग्यतया शाब्दानुभवोऽपूर्वमादाय पर्यवस्येदित्यरुचेराह । (४८) किं चेति । (४९) लक्षणायामिति । यद्यपि मञ्चाः क्रोशन्तीत्यादौ व्यभिचारस्तथापि व्यभिचारममुं यथा हि मञ्चा इत्यादिना ग्रन्थकार एवाग्रे विभावयिष्यतीति बोध्यम् । ततः किमित्यत आह । (५०) न चेति । कृतिसाध्यत्वाप्रकारकत्वादित्याहुः । तच्चिन्त्यम् । कार्यांशे कार्यत्वप्रकारकत्वस्याविरोधात् । तस्मात्स्वर्गकामञो-द्धृकं यागविषयकं कार्यमिति कार्यविशेष्यकज्ञानस्यैव प्रवर्त्तकत्वाभ्युपगमात्तदनाकाङ्क्षितत्वमिति मन्तव्यम् । ननु स्वर्गकामकार्यमित्येव ज्ञानं कार्यविशेष्यकतया प्रवर्त्तकमस्त्वित्यत आह । (५१) न चेति । आपाततोऽभ्युपगमवादेनाह (५२) तर्हीति । न चैवं स्वबाधकभ्रमदशायामन्वयबोधापत्तिः । प्रमापदस्य निश्चयपरत्वात् । (५३) साकाङ्क्षमिति । अन्वयबोधजननाजननदशायां साकाङ्क्षमनाकाङ्क्षं च । एवं स्मरणास्मरणदशायामासन्नमनासन्नं चेत्यर्थः । नन्वेवं शाब्दप्रमाप्रयोजकयोग्यतासत्त्वे कथं शाब्दभ्रम इत्यत आह । (५४) स्वेति । यद्यपि भ्रान्तप्रतारकवाक्यं करणापाटवजन्यं च वाक्यं दोषजन्यत्वेपि प्रमाजनकं, तथापि वक्तृयथार्थवाक्यार्थज्ञानं गुणः तदभावो दोष इति मते तात्पर्यम् । तथा च यागे स्वर्गसाधनत्वान्वयो नायोग्यतापराहत इति भावः । अत्र शङ्कते । (५५) सामान्येति । (५६) तथा सतीति । यद्यपि युगपद्वृत्तिद्वयाङ्गीकर्तृमते प्रकृष्टजयवत्तत्त्वेन भानं संभवति तथापि यत्र न तथा तात्पर्यं तत्र योग्यतादिज्ञानसत्त्वे शाब्दबोधोपपत्तौ लक्षणाक-

प्रसङ्गात् । उभयसाधारणरूपेणानुपस्थितेश्च नाजहत्स्वार्थी । अथ संस्कारात्तदुपस्थितिः । न च सुब्विभक्तीनां प्रकृत्यर्थगतस्वार्थान्वयबोधकत्वव्युत्पत्तेस्तत्र विभक्त्यर्थो नान्वीयेतेति वाच्यम् । प्रकृत्यर्थो हि प्रकृतिप्रतिपाद्यः, लक्षणीयान्वयानुरोधात्, (५७) स च संस्कारसहकारात्प्रकृतेपि, न च तस्यानियतोद्बोधान्न नियता तदुपस्थितिः । फलबलेन तथा कल्पनादिति चेत्, न । (५८) शब्दोपस्थापितेनैव शब्दस्यान्वयबोधकत्वात् । न चैवमाकाशपदाशक्यस्य संस्कारोपस्थितस्य शब्दाश्रयत्वस्य कथं शाब्दानुभवविषयत्वमिति वाच्यम् । नियमतो यद्धर्मवत्त्वेनोपस्थिते यत्र शक्तिग्रहः तत्स्मरणजनकसंस्कारस्य तद्धर्मविषयतानियमेन तदुद्बोधकादेव तदंशेपि उद्बोधनियमेनाकाशपदादशक्यस्यापि तस्य भानात् । (५९) अस्तु वा तदपि शक्यं, यदि (६०) नियमत उपस्थितिः, (६१) सहप्रयोगस्य वाच्यादिपरत्वेनाप्युपपत्तेः । (६२) वस्तुतस्तु नियतोपस्थितिरेव नास्ति । (६३) अस्तु वा पदादपि निर्व्विकल्पकं, तर्ह्यन्वयबोधदशायामितरान्वयानुपपत्त्यभावादग्रे ऽपि कल्पना न स्यादिति चेत्, तर्हि (६४) तवापि कार्यत्वबोधानन्तरमौपादानिकसाधनताबोधो न स्यात् । औपादानिके बोधे ऽनुपपत्तिबोधस्य हेतुत्वात्, कल्पनामात्रोच्छेदश्चैवं स्यात्, प्रतीतानुपपत्तिमूलकत्वात्कल्पनायाः । (६५) वस्तुतस्तु बाधकप्रमाविरहस्य योग्यतात्वे संशयसाधारणं ज्ञानमात्रमेव तस्याः प्रयोजकं तेन

---

ल्पने मानाभावाच्च तथात्वेन भानमित्यत्र तात्पर्यं, तन्मते गङ्गातीरत्वेन न यथा शाब्दबोध आकाङ्क्षाविरहात्तथा प्रकृतेपीत्यन्ये । (५७) स चेति । संस्कारसहकृतस्य घटपदस्यैव तदुपस्थापकत्वाभ्युपगमात्तस्यापि प्रकृत्यर्थतया छिद्रेतरत्वावच्छेदेन विभक्त्यर्थान्वय इत्यर्थः । न च वृत्त्या प्रकृतिप्रतिपाद्यत्वं प्रकृत्यर्थत्वं, गौरवादित्याशयः । (५८) शब्देति । वृत्त्येति शेषः । अन्यथोक्तन्यायेन तीरेपि सप्तम्यर्थान्वयसंभवे लक्षणोच्छेदः स्यात् । पदात्समवायसंबन्धेनाकाशोपस्थितौ तदन्वयबोधापत्तेश्चेति बोध्यम् । नन्वेतावता स्मरणे नियमसंभवे ऽप्यन्वयानुभवप्रवेशे न हेतुरुक्तः । न चोपस्थितपरित्यागे बीजाभावान्नियतोपस्थितं शब्दाश्रयत्वमादायैवानुभव इति वाच्यम् । छिद्रेतरत्वेपि तथात्वापत्तेः । यदि च तत्र नियतोपस्थितिकं तदा ऽष्टद्रव्यातिरिक्तद्रव्यत्वेन शक्तिग्रहे शब्दाश्रयत्वस्यापि तथात्वाभावात्तुल्यं, वृत्त्यनुपस्थापितस्याप्यन्वये प्रागुक्तदोषश्च, वृत्त्युपस्थापितत्ववन्नियमत इत्यादेरपि तत्प्रयोजकत्वकल्पने गौरवम् । किं चैवं गोत्वादिकमपि शब्दाश्रयत्ववन्न शक्य स्यादित्यस्वरसादाह । (५९) अस्तु वेति । तथा च वृत्त्युपस्थापितमादायैवान्वयबोधः । छिद्रेतरत्वं तु न तथेति भावः । (६०) नियमत इति । नन्वष्टद्रव्यातिरिक्तद्रव्यत्वेनाप्युपस्थितेर्न नियतोपस्थितिरत एवानुपदं तथैव तं वक्ष्यति, तथा च कथं तत्र शक्तिरिति चेत् । अत्राहुः । नियमतो ऽनुपस्थितावपि शब्दाश्रयत्वं प्रवृत्तिनिमित्तं विनिगमकाभावादन्नादिपदवन्नानार्थत्वे ऽप्युपपत्तेः । न चैकस्यां व्यक्तौ नानेकं प्रवृत्तिनिमित्तमिति वाच्यम् । अप्रयोजकत्वात् । किं च त्वतलोर्मुख्यार्थत्वेनोपपत्तावुपचरितार्थत्वे मानाभावादिति । वस्तुतस्तु लाघवाच्छब्दाश्रयत्वमेव प्रवृत्तिनिमित्तं न त्वष्टद्रव्यातिरिक्तद्रव्यत्वादिकमपि, गौरवात् । क्व चित्तथात्वेन शक्तिभ्रमात्तदुपस्थितेः, अन्यथा कम्बुग्रीवत्वादिनापि शक्तिग्रहात्तदुपस्थितौ तदपि शक्यं स्यात् । यदि च लाघवाद्घटत्वमेव तथेति तत्र शक्तिग्रहो भ्रमस्तदा प्रकृतेपि तुल्यमिति न नानार्थत्वमिति । नन्वेवं घटः कुम्भ इतिवदाकाशः शब्दाश्रय इति सह प्रयोगो न स्यादत आह । (६१) सहेति । आकाशपदवाच्य इति तदर्थ इत्यर्थः । (६२) वस्तुतस्त्विति । तथा च नियमतो ऽनुपस्थितस्यापि शक्यत्वं विनिगमकाभावे नानार्थत्वमन्यथा न तथेत्यन्यदेतदिति भावः । शक्त्यभावपक्षे संस्कारस्य कदाचिदनुद्बोधमभ्युपेत्याह । (६३) अस्तु वेति । अत्राकाशपदान्निष्प्रकारकमेवाकाशस्मरणं । स्मृतेर्विशिष्टज्ञानत्वनियमो ऽसिद्ध एवेति भावः । न चाकाशो द्रव्यमित्यादौ भिन्नप्रकारोपस्थितिं विना कथमभेदान्वय इति वाच्यम् । विभक्त्युपनीतसंख्यामादाय तथात्वादित्याहुः । (६४) तवापीति । न चान्वयप्रकारतया साधनत्वं शाब्दमिति काम्याव्यवहितसाधनतया ज्ञातमेवेति च परेण प्रागभिधानात्तद्विरोधः । मतान्तरेणास्योक्तत्वादित्येके । विशेषरूपेणाग्रिमबोधमभिप्रेत्येदमित्यन्ये । न चौपादानिकस्वर्गसाधनत्वपक्षे कथं योग्यताग्रहः, यागविषयकं कार्यमित्यनुभवानन्तरमनुपपत्तिप्रभवेष्टसाधनताज्ञाने सति स्वर्गकामबोद्धृकं यागविषयकं कार्यमित्यनुभवादित्याहुः ॥ कार्यत्वमात्रं नित्यस्थलवन्नानुपपन्नं स्वर्गकामकार्यत्वं तदा ऽप्रतीतमेवेति कथमनुपपत्तिप्रभवं तज्ज्ञानमिति चिन्त्यम् । ननु दोषस्याप्रामाण्यप्रयोजकत्वमुक्तयोग्यतापक्षे प्रागुक्तं तच्च भ्रान्तप्रतारकवाक्ये तदभावादयुक्तम् । आवश्यकयोग्यताप्रमात्वाप्रमात्वाभ्यामेवोपपत्तौ वक्तुर्यथार्थवाक्यार्थज्ञानतदभावयोर्गुणदोषतया हेतुत्वकल्पने गौरवात् । किं च परबाधकप्रमानिश्चये स्वबाधकप्रमाविरहतन्निश्चयदशायामपि न शाब्दधीरिति तद्विरहोपि योग्यतान्तर्भूत इत्यस्वरसादाह । (६५)

यत्र बाधकप्रमानिश्चयस्तत्रैवान्वयबोधाभावो ऽन्यत्र तु तद्धीमात्राच्छाब्दबोध इति यागेपि योग्यतासंशयेनान्वयबोधाप्रतिबन्धः, बाधसंशयस्याप्रतिबन्धकत्वात्, ( ६६ ) अन्यथा ऽनुमानाद्युच्छेदप्रसङ्गाद् (६७) अपूर्व्ववाच्यत्वेप्यपूर्व्वे स्वर्गसाधनतासंशयादयोग्यतासंशय एव प्रथममपूर्वे स्वर्गसाधनत्वानिश्चयाद् उपादानस्यान्विताभिधानोत्तरकालीनत्वात् साधकबाधकप्रमाणाभावेन द्वारसंभावनया साधनत्वसंभावनात: स्वर्गकामान्वय इति तुल्यम् । (६८) अपि च यथा न क्रिया स्थिरेत्ययोग्या तथा कार्यमपूर्वमपि (६९) विशिष्टं न स्थिरं कृतेर्विनष्टत्वात् । न चाधिष्ठाने ऽपूर्वमात्रे साधनत्वं, (७०) तस्य पदार्थैकदेशत्वेनान्वयाप्रतियोगित्वात् । ( ७१ ) अन्ये त्वन्वयविरोधिरूपविरहो योग्यता । अत एव वह्निना सिञ्चतीत्यत्र तद्भ्रमे ऽन्वयभ्रमः । यागे चान्वयविरोधिरूपविरहो ( ७२ ) योग्यानुपलब्ध्या सुगम एव । न च यागे आशुविनाशित्वं कालान्तरभाविफलजनकत्वविरोधीति वाच्यम् । अनुभवे क्वाथपाने चाशुविनाशिनि कालान्तरभाविफलजनकत्वाद् यागेप्य( ७३ )न्ततस्तत्सत्त्वात्, अन्यथा ऽपूर्व्ववैफल्यात् । अस्मादन्वयप्रयोजकरूपवत्त्वं लघ्विति चेत्,न । तत्सत्त्वेप्यनाप्तोक्ते ( ७४ ) व्यभिचाराद्, ( ७५ ) अन्वयविरोधित्वेन यत्किंचित्प्रतिसंधानं तत्रास्त्येव, अन्ततो बाधकप्रमाविषयत्वस्यैव विरोधिनो ज्ञानादिति । ( ७६ ) काम्यसाधनत्वज्ञानमेव प्रवर्तकं लाघवात् । सिद्धौदनस्तृप्तिकामो लघूपाये प्रवर्त्तते भोजने, न पाके, गुरूपायत्वात् । जलाद्यर्थी च संनिहिते । अत एव ज्योतिष्टोमादौ श्रुतस्वर्गफलत्वेपि गुरूपायत्वेनाननुष्ठानलक्षणाप्रामाण्यापत्त्या फल( ७७ )भूमा कल्प्यते । ( ७८ ) इष्टोत्पत्त्यनान्तरीयकश्रमजनकत्वं वा प्रतिबन्धकम् । अपि च काम्याव्यवहितसाधनतया ज्ञातमेव यदि कामी कर्तव्यतया ऽवैतीति नियमस्तदा तवापूर्व्वमपि कार्यतया नावगम्येत, अन्विताभिधानात् पूर्व्वं काम्यसाधनता ( ७९ ) बोधकाभावाद् । उपादानस्यान्विताभिधानोत्तरकालीनत्वात् । ( ८० ) अत एव काम्यादन्यदित्यादिप्रकारद्वयं निरस्तम् । कर्तव्यताबुद्धौ प्रवृत्तौ वा काम्यसाधनत्वस्यैव हेतुत्वात् । ( ८१ ) न च कार्ये घटादौ लिङ्शक्तिग्रहः, यथा हि लिङ्शक्तिग्रहकाले स्वर्गकामान्वयायोग्यत्वात् क्रियानिरासस्तथा यागान्वयानुप-

---

वस्तुतस्त्विति । (६६) अन्यथेति । विशेषदर्शनेपि संशयो वर्तते ऽनुमित्या नाश्यते इति मतेनेदमित्येके । संदेहोत्तरक्षणे यत्र स्मरणात्मकपरामर्शस्तदभिप्रायेणेदमित्यन्ये । (६७) अपूर्वेति । न च यागविषयकं कार्यमित्यनुभवानन्तरमौपादानिकस्वर्गसाधनताबोधे सति स्वर्गकामान्वय इति वाच्यम् । स्वर्गकामकार्यस्यैवानुपपन्नतया तदुपपादकत्वेनैव तत्कल्पनात्,अन्यथा नित्येपि कार्यत्वमात्रानुपपत्त्या तत्कल्प्येतेति । (६८) अपि चेति । यद्यपि घटमानयेत्यादौ घटत्वमिवावच्छेदकतया वासस्वी देवदत्तपदवाच्य इत्यत्र वासद्वोपलक्षणतया ऽन्वयो योग्य एव, तथापि विशेषणतयान्वये ऽयोग्यत्वं बोध्यम् । अत एवाह । (६९) विशिष्टमिति । वस्तुतस्तु पूर्वदोषएव तात्पर्यम् । (७०) तस्येति । यद्यपि शङ्खः पाण्डुर एवेत्यादावयोगव्यवच्छेदादौ पदार्थैकदेशपाण्डुरत्वाद्यन्वयो दृष्टस्तथाप्यनन्यगत्या तत्र तथात्व,मत्र तु न तथेत्याशयः । नन्वेकविशेषबाधे सामान्यज्ञानमपरप्रकारनियतमवश्यं वाच्यमन्यथैकप्रकारबाधे सामान्यनिश्चये ऽपरप्रकारसंशयः कदाचित्स्यात् । न चैवं, तथा चापूर्ववाच्यतेति । मैवम् । तादृशसामान्यस्यापरप्रकारव्याप्यतया तन्निश्चयस्यैव विशेषदर्शनत्वादित्याहुः । (७१) अन्ये त्विति । अन्वयविरोधित्वमन्वयाभावव्याप्यत्वं यदि, तदा केवलान्वयिन्यव्याप्तेरिति ग्रन्थकृदुक्तयोग्यतापरत्वे ऽस्य पूर्वाविशेष इत्यनभिमतिबीजमत्रेत्याहुः । (७२) योग्येति । यद्यपि बाधकप्रमाविषयत्वादेरतीन्द्रियस्याप्यन्वयविरोधित्वात्तदभावो ऽशक्यनिश्चय एव, तथापि योग्यतामात्राभिप्रायेणेदम् । अथमपि वा ऽस्वरसो ऽत्र बोध्यः । (७३) अन्तत इति । वस्तुतस्तादृशफलजनकत्वसत्त्वादित्यर्थः । (७४) व्यभिचारादिति । तज्ज्ञानेप्यन्वयबोधाभावादित्यर्थः । प्रकृते तु नायं दोष इत्याह (७५) अन्वयेति । कामी काम्यादन्यदित्यादि दूषयति । (७६) काम्येति । (७७) भूमेति । बाहुल्यमुत्कर्षरूपवैजात्यं चेत्यर्थः । वस्तुनस्तु विशिष्य कल्पकाभावाद्दैलक्षण्यत्वेन सामान्यतः कल्पनमबाधितं विषयीकरोतीति बोध्यम् । गुरुत्वमननुगतमतः प्रतिबन्धकान्तरमाह । (७८) इष्टेति । बलवद्द्वेषविषयदुःखजनकत्वज्ञानमित्यर्थः । (७९) बोधकाभावादिति । न च ज्ञानपदं ज्ञायमानपरं शाब्दबोधदशायां च तत्संभवत्येवेति वाच्यम् । तदा व्याप्तेरप्रयोजकत्वात् । तदौपादानिकत्वपक्षे दोषतादवस्थ्याच्च । यद्वा ऽव्यवहितत्वांशबोधकाभावाच्च तथात्वमिति भावः । (८०) अत एवेति । वक्ष्यमाणादेवेत्यर्थः । अप्रयोजकत्वे तात्पर्यं व्युत्पत्तिविरहमाह । (८१

पत्त्या घटादिनिरासोपि भवेत् । (८२) नहि यागविषयको घटादिः संभवति । अन्यथान्विताभिधानदशायामपि तन्निरासोपि न स्यात् ॥ स्यादेतत् ॥ स्वर्गकामान्वयानुपपत्त्या तदन्वययोग्ये लिङ्शक्तिग्रहः स्थायिकार्ये च तथा, अतः शक्तिग्रहकाले क्रियानिरासो युज्यते न घटादेः । यजिपदमन्तर्भाव्यस्वर्गकामपदलिङ्पदाभ्यामन्विताभिधानदशायां घटादिनिरासो यागान्वयायोग्यत्वादिति तत्किं शक्तिग्रहकाले यागान्वयानुपपत्तिर्हस्तापिहिता येन घटादिनिरासिका सा न प्रतिसंधीयेत । प्रत्युत प्रत्ययस्यान्तरङ्गप्रकृत्यर्थान्वयं बोधयत एवेतरान्वयबोधकत्वमिति तदन्वयानुपपत्तिप्रतिसंधानमेव प्राथमिकं पुरुषदोषा(८३)दप्रतिसंधाने शक्तिग्रहो भ्रम एव, घटादेरशक्यत्वात् । (८४) पुरुषविशेषं प्रत्यवाच्यत्वापत्तेश्च । घटादीनामनन्तत्वेन यदि तन्निरासो न शक्यः तदा ऽन्विताभिधानदशायामपि न स्यात्, पाकादीनां क्रियात्वेनेव पृथिवीत्वादिना निरासासंभवाच्च । (८५) एवं च प्रचुरद्रव्यगुणकर्मसु निरस्तेषु क्व कार्ये धर्मिणि शक्तिग्रहः । न च विशेषे निरस्तेपि कार्यसामान्यं न निरस्तमिति वाच्यम् । (८६) नहि विशेषाविषयं सामान्यज्ञानं संभवति । (८७) एतेनापूर्व्वसाधारणकार्यत्वेन घटादौ शक्तिग्रह इति परास्तम् । (८८) अगृहीतासंसर्गेषु स्थायित्वकार्यत्वस्वर्गजनकत्वेषु (८९) तज्ज्ञानेषु वा शक्तिग्रह इति परास्तम् । घटादीनां निरासाद् धर्ममात्रे च शक्तिग्रहस्य प्रकृते (९०) ऽनुपयोगात् । किं च तेषु (९१) समुदितेषु शक्तिग्रहः प्रत्येकं वा । नाद्यः । (९२) प्रथमं समुदायस्यैकज्ञानाविषयत्वाद्, (९३) विषयत्वे वा पूर्व्वमेव विशिष्टस्य (९४) सत्त्वे ऽपूर्व्वत्वव्याघातः । (९५) एकज्ञानविषयसाकाङ्क्षधर्म्मधर्मिणोरेव विशिष्टत्वात् । न द्वितीयः । एवं हि लिङ्पदात्स्मरणत्रयं यजिपदाच्च यागस्मरणं, न चतुर्णां तेषां यौगपद्यमस्ति । न च प्रत्येकं शक्तिग्रहेपि समुदितविषयमेकमेव स्मरणं लिङ्पदादिति युक्तम् । समुदायस्य पूर्व्वमननुभवात् । (९६) स्मरणं च यदि साकाङ्क्षधर्म्मधर्म्मिविषयमेकं तदाऽपूर्व्वत्वक्षतिः, एकज्ञानारूढयोः साकाङ्क्षधर्म्मधर्म्मिणोरेव विशिष्टत्वात् । (९७) तन्नियतत्वाद्वा । (९८) एतेन स्वर्गादिपदेष्वगृहीतासंसर्गधर्मधर्मिषु शक्तिग्रह इति व्युदस्तं, प्रत्येकसमुदायविषयस्मरणविक-

---

न चेति । (८२) नहीति । प्रागुक्तं विषयत्वमसंभवीति भावः । (८३) अप्रतिसंधाने, घटाद्यन्वयानुपपत्तेरप्रतिसंधाने । नन्वप्रतिपाद्यघटादिवृत्त्यपि कार्यत्वं प्रवृत्तिनिमित्तमित्युक्तं तदाश्रयतयैव घटादेरपि शक्यत्वं स्यादित्यत आह । (८४) पुरुषेति । तथा च यत्रानुपपत्तिप्रतिसंधानं तत्र शाब्दबोधो न स्यात् । न चेष्टापत्तिरनुभवविरोधात् । तदप्रतिसंधाने क्रियायामपि कार्यत्वान्वयस्य सुवचत्वमित्यपि बोध्यम् । (८५) एवं चेति । ननु सामान्यलक्षणाभ्युपगमपक्षे कार्यत्वेनोपस्थिते ऽपूर्वे शक्तिग्रहोस्तु, यथा च नापूर्वत्वक्षतिस्तथा प्रागुक्त मिति चेत्, तन्मते पूर्वदोष एव तात्पर्यात् । (८६) नहीति । ननु विशेषरूपेण बाधिते ऽपि सामान्यतः कार्यत्वेन तत्रैव शक्तिग्रहोऽस्तु, अन्यथा निर्वह्निपर्वते पर्वतेतरवृत्तिर्वह्निरत्र नास्तीति ज्ञाने ऽनुमितेर्निर्विषयत्वापत्तिरिति चेत्, न । विशेषबाधकस्यापि दोषत्वात् । यथा चैतत्तथानुमानप्रकाशे विपञ्चितम् । (८७) एतेनेति । यद्यपि प्रागपि तदेव निरस्तं तथापि पूर्वं घटत्वादिनोपस्थिते कार्यत्वेन शक्तिग्रह इत्यपास्तम् इदानीं कार्यत्वेनोपस्थिते घटादौ शक्तिग्रह इति निरस्तमिति भावः । यद्वेत्यादिमतद्वय निरस्यति । (८८) अगृहीतेति । (८९) तज्ज्ञानेष्विति । यद्यपि तेषामेकमेव ज्ञानं प्रागुक्तं तथापि व्यक्त्यभिप्रायकं बहुवचनम् । (९०) अनुपयोगादिति । अपूर्वभानापत्तेरित्यर्थः । (९१) समुदितेष्विति । एकाधिकरणवृत्तित्वं समुदायः । (९२) प्रथममिति । त्वयान्यथाख्यातेरनभ्युपगमादिति भावः । एकपदं संपातायातम् । अत एवाग्रे पूर्वमननुभवादित्येव वक्ष्यतीति ध्येयम् । नन्वपूर्वमादाय तथा बोधः स्यादित्यत आह । (९३) विषयत्वे वेति । ननु तावद्धर्मविशिष्टशरीरादेस्तथात्वमस्तु तथा चापूर्वस्य तदविषयत्वात्कथमपूर्वत्वव्याघातः । न च क्रियानन्तरभावित्वमपि विवक्षितम् । परेणापूर्वत्वनियतएव शक्तिग्रहाभ्युपगमादिति वाच्यम् । स्वर्गिशरीरादौ तथा ऽप्यतिप्रसक्तेरिति चेत्,न । अव्यवहितानन्तर्यस्य विवक्षितत्वादिति दिक् ॥ (९४) सत्त्वे । उपस्थितत्वे । तन्मतेनैवाह । (९५) एकेति । ननु समुदायमतिरिक्तं न ब्रूमः किं तु स्थायित्वादिकमेव तथा च तत्तदुद्बोधकसमाजात्तद्बोधकात्समूहालम्बनमेकमेव स्मरणं तदेव समुदितविषयमित्यत आह । (९६) स्मरणं चेति । अन्यतरमात्रविषयत्वे निराकाङ्क्षविषयत्वे वा प्रकृतानुपयोग एव दोष इति रहस्यम् । (९७) तन्नियतत्वाद्वेति । साकाङ्क्षधर्मधर्मिगोचरैकज्ञानारूढत्वस्य विशिष्टत्वनियतत्वाद्वेत्यर्थः । एतेन तन्मते ज्ञानाभावकालेपि विशिष्टसत्त्वमुपपादितमिति ध्येयम् । (९८) एतेनेति । स्वर्गस्य वाक्यार्थधीमात्रगोचरत्ववादिनस्तव मते

ल्पग्रासात्। (९९) अस्तु वा लिङः कार्ये लक्षणा, (१००) यथा हि मञ्चाः क्रोशन्तीत्यत्र पुरुषविशेषः (१०१) प्रागननुभूतो ऽप्यनुभूयते इतरपदाल्लाक्षणिकस्यानुभावकत्वाद्वा तथा ऽपूर्वमपि, (१०२) अस्तु वा स्वर्गकामकार्यविषयो याग इत्यनुभवे स्वर्गकामयागयो (१०३) रन्वयप्रकारतया ऽपूर्वलाभः ॥

---

स्वर्गपदेप्येवं शक्तिग्रहो निरस्त इत्यर्थः । त्वन्मतेप्यपूर्वशक्तिकल्पनमत्यन्तासंगतमित्याह । (९९) अस्तु वेति । नन्वेवमपूर्वं नानुभूयेतैव लाक्षणिकस्याननुभावकत्वादित्यत आह । (१००) यथा हीति । एतेन लक्षणायामितरपदस्येत्यादिप्रागुक्तव्याप्तौ व्यभिचाराप्रयोजकत्वे अपि सूचिते इति मन्तव्यम् । ननु पुरुषः संस्कारादुपतिष्ठते न त्वनुभूयते इत्यत आह । (१०१) प्रागिति । एतच्च परमताभ्युपगमेनैव । न च तत्रापि कथमनुपस्थितस्यानुभवः, पुरुषत्वादिसामान्यप्रकारकस्मरणे सति योग्यताबलाद्विशेषानुभवात् । समानप्रकारकत्वेनैव तस्य हेतुत्वाभ्युपगमात् । यद्यपि स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा, न चेह कार्यत्वादन्येन रूपेण तदुपस्थितिः तथाप्युक्तनियमो ऽप्रयोजको ऽत एव नीलो घट इत्यादौ तथैव लक्षणेति पराभ्युपगमानुसारेणेदमुक्तमिति ध्येयम् । ननु विधौ न लक्षणा, तदुक्तं 'न विधौ परः शब्दार्थ' इति चेत्, न । तस्य मतान्तरत्वात्, अत एव परस्य लौकिकी लिङ् लाक्षणिकीति । यजिपदेन स्वार्थविशेष्यकं ज्ञानं स्यादित्यत्रेष्टापत्तिमाह । (१०२) अस्तु वेति । यथातथा बोधो ऽस्त्वपूर्वलाभः परं मृग्यतइति भावः । (१०३) अन्वयप्रकारतया । अन्वयघटकतया ॥

---

## ॥ अथ वेदान्तसूत्रसंबन्धितृतीयाध्यायस्य ॥

॥ तृतीयपादारम्भः ॥

पूर्वत्र निरूपितो नित्यत्वादिगुणकस्त्वंपदार्थः पशुरुपासकः । सर्वज्ञतादिगुणकस्तत्पदार्थ उमापतिरुपास्यः शिवश्च । तदिह कथमुपासनमित्याकाङ्क्षायां तन्निरूपणमुत्तरत्राभिवर्तते ॥

॥ सर्ववेदान्तप्रत्ययं
चोदनाद्यविशेषात् ॥ १ ॥

सर्वेषु वेदान्तेषु दहराद्युपासनं श्रूयते । तदेकम् । उत शाखाभेदादिना भिन्नमेव । इति संदेहः । शाखाभेदेन प्रकरणभेदात् प्रतिशाखमुपासनं भिद्यते । तथा छान्दोग्ये तैत्तिरीयके च दहरोपासनमाम्नायते । एकत्र "य आत्मापहतपाप्मा विजरो विमृत्युः" इत्यारभ्य, अपहतपाप्मत्वादयो गुणा आम्नाताः । अन्यत्र "ऋतं सत्यम्," इत्यारभ्य कृष्णपिङ्गलत्वादयो गुणाः । तत्र गुणभेदेनोपासनं[1] भिद्यते । छान्दोग्ये पञ्चाग्निविद्यायां कौथुमकमिति नाम, बृहदारण्यके वाजसनेयमिति नाम । तत्र नामभेदादुपासनं भिद्यते । मुण्डकशाखायां शिरोव्रताख्यो धर्मः श्रूयते । "तेषामेवैतां ब्रह्मविद्यां वदेच्छिरोव्रतं विधिवद्यैस्तु चीर्णम्," इति । शिरोव्रतं नाम वेदव्रतविशेषः । आथर्वणिकान् प्रति हितो नेतरान् प्रति । अतो धर्मभेदादुपासनाभेदः । ततः शाखादिभेदादुपासनाभेद इति पूर्वः पक्षः ।

सिद्धान्तस्तु सर्ववेदान्तप्रत्ययं दहराद्युपासनमेकमेव । "संध्यामुपासीत" इति । कर्मविधिष्विव चोदनाफलसंयोगरूपाख्यानामविशेषात् । "विद्यात्" "उपासीत" इति चोदना तावत् शाखाभेदेऽप्यविशिष्टा । फलसंयोगो ब्रह्मप्राप्तिरूपोऽविशिष्टः । वेद्यमपि वैश्वानरादिरूपं ब्रह्माविशिष्टम् । आख्यापि वैश्वानरविद्येत्येवमादिरविशिष्टैव । इत्येकमेवोपासनम् । विध्यभेदे ह्युपासनं न भिद्यते । "तस्मिन् यदन्तस्तदन्वेष्टव्यम्," इति छान्दोग्ये दहरविद्याविधिः । "तस्मिन् यदन्तस्तदुपासितव्यम्" इति तैत्तिरीयके च । तत्र स्थानाद्यभेदादुपास्यस्य ब्रह्मणोऽप्यभेदात्, उभयत्रोक्ताना धर्माणाविरोधाद्विद्यैक्यमेव । छान्दोग्यबृहदारण्यकशाखयोर्द्युपर्जन्यपृथिवीपुरुषयोषिदाख्यस्याग्निपञ्चकस्य वेद्यतया यत् स्वरूपमाम्नातं तदुभयत्रापि समानम् । अतो न विद्याविधिभेदः ॥ १ ॥

॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

धर्मविशेषे पुनः श्रुतिः प्रकरणान्तरसहिता भेदापादिका । अतो न विद्यैक्यमिति चेत् । विद्यैक्येऽपि शाखान्तरे प्रतिपत्तृभेदादुपपन्ना सा न भेदावहा[2] ॥ २ ॥

॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

अथर्ववेदोक्तं "तेषामेवैतां ब्रह्मविद्यां वदेत्" इति शिरोव्रतवतां नियमः । शिरोव्रतस्य च स्वाध्यायाङ्गत्वेन नैतदचीर्णव्रतोऽधीत इति तस्याध्ययनसंबन्धावगमात् समाचारग्रन्थ इदमपि वेदव्रतेन व्याख्यातमिति वेदव्रतत्वप्रतिपादनाच्च[3] । "ब्रह्मविद्याम्" इत्यत्र ब्रह्मशब्दो वेदविषयः । तस्माद्यथा सवो होमस्तेषामेव । तथा शिरोव्रतमपि । अतस्तच्च विद्याभेदे लिङ्गम् ॥ ३ ॥

---

१—यः । गु—इति पा० ।
२ विद्यैक्ये शाखान्तरप्रतिपत्तृमात्रभेदो न भेदावहः इति पा० ।
३—त्वावगमाच्च इति पा० ।

॥ दर्शयति च ॥ ४ ॥

श्रुतिरेव विद्यैक्यं दर्शयति । महोपनिषत्कैवल्योपनिषदोर्दहरविद्यायाम् ।

"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षम्,
"उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम्" ।

इत्यादिना निर्दिष्टमीश्वरस्य रूपमपेत्य रूपवत्त्वात् पाप्मजरामरणादिप्रसक्तौ छान्दोग्ये"अथ यदिदमस्मिन्" इत्यारभ्य तस्य गुणाष्टकविशिष्टत्व केवलमुच्यते। तत्र तत्र धर्मविशेषापादिका पुनः श्रुतिर्विद्याभेदिकेति शङ्काया अपि नावकाशः[2]। ततश्चोदनाद्यविशेषात् सकलवेदान्तप्रत्ययमेकमेवोपासनम् । तद्भेदकशब्दान्तराद्यदर्शनात् । इति सिद्धम् ॥ ४ ॥

सर्ववेदान्तचोदितानां विद्यानामैक्यप्रतिपादनफलमाह ॥

॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

इह विद्यैक्ये सत्यपि शाखान्तर उपसंहारो न कर्तव्यः कर्तव्यो वेति संशये न कर्तव्य इति पूर्वः पक्षः[3]। तथाहि, छान्दोग्ये दहरविद्यायामपहतपाप्मत्वादयो गुणा आम्नाताः । न तैत्तिरीये[4]। तत्र तेषामुपसंहारः कर्तव्यः[5]। तत्रानुक्तत्वात् । विद्योपकारस्तत्रोक्तैरेव कृष्णपिङ्गलत्वादिगुणैर्भविष्यति । किमुपसंहारेणाचोदितेन। इति प्राप्तेऽभिधीयते। सर्वत्र विद्यैक्ये छान्दोग्यादिषूक्तानां दहराद्युपासनधर्माणामपहतपाप्मत्वादीनामन्यत्र तैत्तिरीयकदहरादिषूपसंहारः कार्यः । विद्योपकाररूपस्यार्थस्यैकत्वात् । यथैकविधिशेषतया विहितानामङ्गानामग्निहोत्रादिषु[6], तथैव चोदनादिभिः समाने[7] दहराद्युपासने गुणानां प्राप्तिरिति गुणोपसंहारो युक्त एव ॥ ५ ॥

॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

वाजिनां छन्दोगानां चोद्गीथे प्राणदृष्ट्योपासन शत्रुपरिभवफलं विधीयते । तत्र विद्यैक्यमस्ति न वेति संदेहे चोदनाद्यविशेषाद्विद्यैक्यमस्तीति पूर्वः पक्षः ।

१–मीश्वरस्वरूपोपासनं छा–इति पा० ।
२–णोपाधिका पुनः श्रुतिरिति न विद्याभेदः इति पा० ।
३–रः कर्तव्यो न वेति संशयः। तथा सति नोपसंहार इति पूर्वं प्राप्नोति इति पा० ।
४–यकदहरविद्यायां इति पा० ।
५ प्राप्तः इति पा० ।
६–त्राद्यनुष्ठानेषु इति पा० ।
७–नाभिस्तत्समाने इति पा० ।

ननु वाजिनां प्राणदृष्ट्योपासनमुद्गानकर्तृविषयमिति । "अथ[1] हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य" एष प्राणशब्दात् प्रतीयते[2] । छन्दोगानां तु तदुद्गानकर्मविषयमिति, "य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिर इति शब्दात् प्रतीयते, तस्मादन्यथात्वं विद्ययोर्नैक्यमिति चेन्न । उपक्रमाविशेषात्[3] । "द्वया ह प्राजापत्या ह देवाश्चासुराश्च ततः कानीयसा एव देवाः, ज्यायसा असुरास्त एषु लोकेषु अस्पर्धन्त, ते ह देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इत्येकत्र, "देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्[5] देवा उद्गीथमाजह्रुरनेनैवासुरानभिभविष्याम" इत्यन्यत्र । तस्मादुपक्रमाविशेषा[6]दुभयत्र विद्यैक्यमिति ॥ ६ ॥

सिद्धान्तमाह ॥

॥ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

नोभयत्र विद्यैक्यम् । प्रकरणभेदात् । तथाहि, "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथावयवभूतप्रणवविषयं प्रकरणं छन्दोगानाम् । वाजिनां तु[7] कृत्स्नोद्गीथविषयमिति प्रक्रमभेदेन रूपभेदाद्विद्याभेदः[8] । यथैकस्यामपि शाखायामुद्गीथोपासनेषु हिरण्मयदृष्टेः[9] परोवरीयस्त्वादिदृष्टिर्भिद्यते, तथात्रापीति ॥ ७ ॥

आशङ्क्य परिहरति ॥

॥ संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

उद्गीथविद्येति संज्ञैक्यादुभयत्राभेद[10] इति न वाच्यम् । अस्ति हि विधेयभेदेऽपि संज्ञैक्यम् । यथा नैयमिकाग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च नामैक्येऽपि[11] कर्मभेदः । तद्वदत्रापि न विरोधः ॥ ८ ॥

१–र्वपक्षयति । यथा वाजिनां प्राणदृष्ट्योपासनमुद्गीथे । इतरत्र कर्मविषयमिति शब्दादेव प्रतीयते 'अथ इति पा० ।
२–येति स तथेति तेभ्य उदगायत्" इत्यादिना, इति पा० ।
३–योरतो नैक्यमिति वक्तव्यम् । तन्नेत्याह–
४–त् । छन्दो–इति पा० ।
५–त्र, तद्ध इति पा०
६ एवमुपक्रमे फलैक्येन विशेषाभावा–इति पा० ।
७–गानाम् । "हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इति वाजिनां इति पा० ।
८–द एव इति पा० ।
९–षु राजादिदृष्टेः इति पा० ।
१०–ति संज्ञाभेदाभावादुभयत्र न भेद इति पा० ।
११–त्रे कश्यपानामयनाग्निहोत्रे च दृष्टो नामैक्येऽपि हि इति पा० ।

॥ व्याप्तेश्च समञ्जसम् ॥ ६ ॥

छन्दोग्ये "ओमित्येतदक्षरमुद्गीथमुपासीत" इति श्रूयते । इह प्रणवोद्गीथयोस्तन्त्रमुपासनमुतैकविषयमिति संशये पूर्वः पक्षः । यद्यपि[1] प्रणवोद्गीथयोरिह सामानाधिकरण्यमवगम्यते । तच्च विशेषणविशेष्यतया संभवति । तथाप्युद्गीथेन प्रणवो विशेष्यते प्रणवेन चोद्गीथ[2] इत्यत्र नियामकाभावात् तन्त्रमुपासनमित्येवं प्राप्ते ब्रूमः । न तन्त्रमुद्गीथप्रणवयोरुपासनम् । छान्दोग्ये[3] प्रथमप्रपाठके, "ओमित्येतदक्षरमुद्गीथमुपासीत" ओमित्युद्गायति, तस्योपक्रमवदुत्तरत्रापि खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवतीति प्रणवस्योपास्यत्वव्याप्तेरुद्गीथेन प्रणवो विशेष्यत इति प्रणवविषयत्वमेव समञ्जसम् । अतः प्रणव एवोपास्यः[4] ॥ ९ ॥

॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥

"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च भवति, प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" इति छन्दोगा वाजिनश्च प्राणविद्यायां ज्येष्ठत्वादिकमधीयते । कौषीतकिनश्च त्रिभिरपि वागादिकरणग्रामश्रुतेस्तत्कार्यस्य प्राणतुल्यत्वेनैकरूपेण प्राणस्य ज्यैष्ठ्यमुपपादितम् । वागादिगतवसिष्ठत्वादिसबन्धित्वं प्राणस्योभयेषामुक्तम् । "अथ हैनं वागुवाच, यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीति" "अथ हैनं चक्षुरुवाच, यदहं प्रतिष्ठास्मि त्वं तत् प्रतिष्ठासीति" "अथ हैनं श्रोत्रमुवाच, यदहं सपदस्मि त्वं तत् सपदसीति" "अथ हैनं मन उवाच, यदहमायतनमस्मि त्वं तदायतनमसीति" । कौषीतकिनां तु मयि वसिष्ठत्वादिकमुपसंहार्यं न वेति संशय एवं विद्वानित्येवंशब्देन[5] तच्छाखोक्तगुणानामेवावधारणान्नोपसंहार्यमिति प्राप्ते ब्रूमः । अनुक्तमपि वशिष्ठत्वादिकमुपसंहार्यमेव । एवंशब्देनानुक्तगुणानामप्युक्तगुणवत् परामर्शात् । प्राणस्य गुणिन एकत्वेन[6] गुणानामपि बुद्धिस्थत्वात् । यथा देवदत्तो मथुरायामध्यापयन् दृष्टः पुनर्माहिष्मत्यामध्यापकत्वेन[7] प्रत्यभिज्ञायते । तथा छान्दोग्यादिषु वसिष्ठत्वादिनोक्तः पुनरन्यत्र केवल उच्यमानेऽपि[1] तद्गुणविशिष्टतया बुद्धिस्थो भवति । तत एवंशब्देन परामर्शाद्वसिष्ठत्वादिकमुपसंहार्यमिति ॥ १० ॥

॥ आनन्दादयः प्रधानस्य ॥ ११ ॥

अभेदादिति शेषः । "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्म",

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्" ।

"आकाशशरीरं ब्रह्म" "प्राणारामं मनआनन्दं शान्तिसमृद्धम्" इत्यादिष्वानन्दादयो गुणाः परविद्यासु प्रधानस्य ब्रह्मणः श्रूयन्ते । ते सर्वासु परविद्यासूपसंहार्या न वेति संशये नोपसंहार्याः । ब्रह्मण एकस्यानन्दाद्यनेकगुणविशिष्टत्वेऽनेकत्वप्रसङ्गात्[2] । विशेषणानां विशेष्यभेदकत्वात् । अथवा तत्र तत्रोक्तगुणमात्रेणापि तदुपासनसंभवात् । इत्येवं प्राप्तेऽभिधीयते । गुणिनो ब्रह्मण एकत्वात् सर्वासु परविद्यासूपसंहार्या आनन्दादयः । नीलो धवलो रक्तः खण्डः[3] पूर्णशृङ्ग इत्यादीनां विरुद्धधर्माणामेव विशिष्टधर्मिभेदावहत्वम् । नतु नीलं सुगन्धि महदुत्पलमित्यत्र नीलिमादीनाम् । अतो ब्रह्मणो गुणानामविरोधान्न भेदावहत्वम् । तस्माद्गुणिनो ब्रह्मणः सर्वत्राभेदादुपसंहार्या आनन्दादय इति ॥ ११ ॥

॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

"तस्य प्रियमेव शिर" इत्यादौ प्रियशिरस्त्वादयो ब्रह्मधर्मत्वेन श्रूयन्ते । तेऽप्यानन्दादय इव परविद्यासूपसहार्या न वेति संशये तेषामपि[4] सत्यसंकल्पादिवदुपसंहारे को विरोध इति प्राप्ते ब्रूमः । नास्ति प्रियशिरस्त्वादीनामुपसंहारः परविद्यायाः । सत्यसंकल्पादिवत् तेषां ब्रह्मगुणत्वाभावात्[5] । उपसंहारे तेषां ब्रह्मणः सावयवत्वेनोपचयापचयप्रसक्तिः । भेदो हि प्रियशिरस्त्वादिकल्पने ब्रह्मणो भवति । अतस्तेषां नोपसंहारः ॥ १२ ॥

आनन्दादीनामिव सर्वज्ञतादीनां[6] ब्रह्मस्वरूपान्तर्भूतगुणत्वादविरोध इत्याह ॥

॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे सर्वज्ञत्वनित्यतृप्तत्वादयो ब्रह्मस्वरूपान्तर्गततयार्थसामान्यात् सर्वत्रोपसंहार्याः । प्रियशिरस्त्वादीनामनन्तर्भावान्नोपसंहार इति ॥ १३ ॥

---

१—ये तन्त्रमिति पूर्वमुच्यते । तथाहि, इति पा० ।

२—ते, किंवा प्रणवेनो—इति पा० ।

३ पूर्वत्र इति पा० ।

४—के उपक्रमवत् सर्वत्रोत्तरत्र च प्रणवस्यैवोपास्यत्वव्याप्तेरुद्गीथेन प्रणव एव विशेष्यते । ततः प्रणवविषयत्वमेवोद्गीथस्य समञ्जसमिति प्रणवस्यैवोपास्यत्वमिति सिद्धम् इति पा० ।

५—पपादितम् । वागादिगतवशिष्ठत्वादिसंबन्धित्वमपि प्राणस्यैवोभयत्रोक्तम् । कौपीतकिनां च नोक्तम् । अनुक्तं वशिष्ठत्वादिकमुपसंहार्यं न वेति संशये य एवं वेदेत्येवंशब्देन इति पा० ।

६—र्थः क्रियते । कुतः । प्राणस्य गुणिन एकत्वात् । इति पा० ।

७—त्यामनध्यापयन्नप्यध्यापकत्वेनैव इति पा० ।

१—षु वशिष्ठत्वादिकमुक्तं तत्रोपलभ्यते । पुनस्तत्रापि नैकफलोऽपि इति पा० ।

२—यः । तथा सति नोपसंहार्या इति प्राप्नोति । ब्रह्मण एकस्यानन्दा भिद्यन्ते । गुणविशिष्टत्वेऽनेकत्वप्रसङ्गः इति पा० ।

३—क्तो मुण्डः इति पा० ।

४—यः । तथा सति प्रियशिरस्त्वादीनामपि इति पा० ।

५— वदेतेषां ब्रह्मणो गुणत्वायोगात् इति पा० ।

६ सत्यज्ञानादीनां इति पा० ।

॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

इह पूर्वोक्तानन्दमयात्मानुसंधानवदन्नमयादीनामप्यनुसंधानं नियतमस्ति न वेति संशयः। अन्नमयादिसर्वान्तरस्यानन्दमयस्यान्नमयाद्यनुसंधानक्रममन्तरेण तदन्तरत्वेनानुसंधानायोगात् तेषामनुसंधानं नियतमिति प्राप्ते[1]ऽभिधीयते[2]। अन्नमयादीनामनुसंधानं न नियतम्[3]। प्रयोजनाभावात्। तस्यानन्दमयब्रह्मात्मसिद्धिः प्रयोजनम्। अतस्तत्सिद्धिपर्यन्तमेवान्नमयादीनामनुसंधानमिति तेषा[4]मनियतमनुसंधानम् ॥१४॥

॥ आत्मशब्दाच्च ॥ १५ ॥

"एतमन्नमयात्मानमुपसंक्रम्य" इत्यादिषु प्रत्येकमात्मशब्दादन्नमयादीनामन्नाद्यधिष्ठातृचेतनत्व[5]मवगम्यते। ब्रह्मव्यतिरिक्तानां चेतनानां मुमुक्षुध्येयत्वनिषेधाद्ध्यानकाले तेषां नानुसंधानम्[6]। तथाथर्वशिखायाम्। "शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य" इति शिवव्यतिरिक्तानां मुमुक्षुध्येयत्वं निषिध्यते। ततोऽन्नमयादीनामनुसंधानानियमः ॥ १५ ॥

॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

इह "अन्योऽन्तर आत्मानन्दमय" इत्यात्मगृहीतिः परमात्मविषया, न प्रत्यगात्मविषया। "आत्मन आकाशः संभूत" इत्यत्रात्मशब्दवत्। तदिदमुत्तरात् "आनन्दमयमात्मानमुपसंक्रम्य" इत्येतस्मादवगम्यते। तस्मादानन्दमुख्यं ब्रह्मानुसंधानमिति[7] ॥ १६ ॥

॥ अन्वयादिति चेत् स्यादवधारणात् । १७ ॥

अन्नमयादीनामप्यात्मशब्दान्वयात् परमात्मत्वेन तेषामुपासनमविरुद्ध[8]मिति चेत्। "अन्योऽन्तर आत्मानन्दमय" इत्यानन्दमयस्य परमात्मनः शिवस्यान्नमयादिभ्यो भिन्नत्वावगमात् "शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य" इति सकलेतरपरित्यागपूर्वकं शिवस्यैकस्यैव ध्येयत्वावधारणात्। अत्र हि निरस्तसमस्तकलङ्कतया निखिलमङ्गलभाजनतया च शिवशब्देन परं ब्रह्मोच्यते। यद्विरूपाक्षं कृष्णपिङ्गलं तदनुसंधाननैरन्तर्याद्धि तत्स्वरूपापत्तिर्मुक्तिः। अतो यथोपासनं फलमिति तद्व्यतिरिक्तानां शिवताशून्यानामनुसंधानं न शिवत्वापादकम्। यतो मुक्तिरुपपद्यते, अत आनन्दमयः शिव एक एवानुसंधेय इति ॥ १७ ॥

१—यः। किमुच्यते। अत्रान्न—इति पा०।
२—ति। अत्रा—इति पा०।
३—यतमिति कथम्। इति पा०।
४—ध.नम्। अन्यथा प्रयोजनाभावः। अतस्तेषा—इति पा०।
५—दिनान्नमयानां प्रत्येकमात्मशब्दाच्चेतनाधिष्ठातृत्व—इति पा०।
६—धात् तेषामनुसंधाने प्रयोजनाभावः। इति पा०।
७—न्दमयात्मानुसंधानं ब्रह्मानुसंधानमेव मुख्यमिति इति पा०।
८—याच्चेतनवाचकत्वेनानुसंधानमवि—इति पा०।

॥ कार्याख्यानादपूर्वम् ॥ १८ ॥

"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद" इत्यारभ्य किं मे वास इति वागादीन् प्रति प्राणप्रश्नस्योत्तरम्। अपां प्राणवासस्त्वमुक्त्वा "तस्मादेवंविदशिष्य नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते" इति श्रूयते। अत्राचमनं प्राणवासस्त्वं चेत्युभयं विधीयते। उत प्राणवासस्त्वमेव। इति संशये विशेषाभावादुभयमपीति प्राप्ते आचमनस्य स्मृत्याचारेण प्राप्तत्वादप्राप्तं प्राणवासस्त्वमेवापूर्वं विधीयते[1]। अप्राप्तस्यैव विधेयत्वाख्यानादनुवादस्वरूपे विधिकल्पना। तस्मादपूर्वं प्राणवासस्त्वानुसंधानमेव विधेयमिति युक्तम् ॥ १८ ॥

॥ समान एवं चाभेदात् ॥ १९ ॥

अग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्याम्नायते। एकत्र "आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसंकल्पमाकाशात्मानम्,[2]" इति। इतरत्र "मनोमयोऽयं पुरुषो भासत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एव सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति" इति। उभयत्र विद्या भिन्ना न वेति संशयः। एकत्राकाशात्मकत्वेन महत्त्वम्, इतरत्र यवसादृश्येनाल्पत्वम्, एकत्र सत्यसंकल्पत्वम्, इतरत्र वशित्वादिकम्। इति धर्मभेदाद्भिन्नेति प्राप्ते ब्रूमः। सर्वत्र मनोमयत्वादिके समान आकाशात्मेत्यस्याकाशवत् स्वच्छतापरत्वेन माहात्म्यपरतया स्तावकत्वेन वोपपत्तेः। वशित्वादेः सत्यसंकल्पत्वविशेषरूपत्वेन तदभेदाच्च विद्यै[3]क्यम् ॥ १९ ॥

॥ संबन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके "य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिणि" इत्युपक्रम्य सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनादित्यमण्डलेऽक्षिणि चोपास्यत्वमुक्त्वा "तस्योपनिषदहरित्यधिदैवतं" "तस्योपनिषदहमध्यात्ममिति द्वे नामनी आम्नायेते। उभयत्रोपसंहार्ये न वेति संशये सत्युपास्यैक्याद्विद्यैक्यम्। अत उभयत्रापि द्वे नामनी इति पूर्वः पक्षः ॥ २० ॥

सिद्धान्त उच्यते ॥

॥ न वा विशेषात् ॥ २१ ॥

नात्र विद्यैक्यम्। आदित्याक्षिस्थानविशेषसंबन्धित्वेनोपास्यभेदात्। अतस्तत्र नियते नामनी[4] ॥ २१ ॥

१—प्ते ब्रूमः। आचमनस्य प्राप्तत्वात् स्मृत्याचारेणापां प्राणवासस्त्वमपूर्वमेव विधीयते। तथाहि इति पा०।
२—सत्यं सत्यसंकल्पमीशानम् इति पा०।
३—माने शिवत्वादेः सत्यसंकल्पत्वादिरूपेणाभेदाद्धि—इति पा०।
४—स्थानसंबन्धविशेषभेदादुपास्यस्यापि भेदः। अतस्तत्र नियते नामनी नोभयत्रैव इति पा०।

॥ दर्शयति च ॥ २२ ॥

छान्दोग्ये तैत्तिरीये च मण्डलविद्याम्नाता । सैका भिन्ना न वेति संशये पूर्वः पक्षः । एकत्र "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रनखात् सर्व एव सुवर्णः" इत्यादि श्रूयते। अन्यत्र "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इति त्रयीमयमण्डलान्तर्वर्तिपुरुषान्तर्वर्तितया हिरण्मयं पुरुषं प्रस्तुत्य तस्योपसंहारे "सर्वो वै रुद्र" इत्यारभ्य "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नम" इत्यन्तेन सर्वात्मत्वं हिरण्यबाहुत्वं हिरण्यपतित्वमुमापतित्व चाम्नायते । तत्रैकत्र सर्वाङ्गसुवर्णत्वमन्यत्र बाहुमात्रसुवर्णत्वमिति[1] रूपभेदः । एकत्र "सर्वो वै रुद्र" इति सर्वात्मत्वम्, अन्यत्र सर्वेषां लोकानामीष्ट" इति सर्वाधिपत्यम्। अतो धर्मभेदः । तस्मान्न विद्यैक्यमिति[2] प्राप्ते ब्रूमः । न भिन्ना विद्या । अन्तरादित्य इति स्थानैक्यमेव विद्यैक्यं दर्शयति । तैत्तिरीये "हिरण्मयः पुरुष" इत्युपक्रमेण बाहुग्रहणस्योपलक्षणत्वादुपसंहारेऽपि सर्वाङ्गसुवर्णत्वमेव विवक्षितम् । जगदीश्वरस्यापि तदनुप्रवेशात् तदात्मत्वं युक्तमिति निरूपितम् । तस्मादुभयत्रैकस्य प्रतिपाद्यत्वादुभयत्राप्युमापतित्वादिकमुपसंहार्यम्[3] ॥ २२ ॥

॥ संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

राणायनीयानां खिलेषु श्रूयते। "ब्रह्मज्येष्ठा वीर्यासंभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्मा भूतानां प्रथमो जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" इति[4] । यानि लोके त्रिपुरदहनकालकूटकवलनादीनि, तानि निरतिशयानि ज्येष्ठान्यनन्यसुकराणि श्रीकण्ठमूर्त्यादिभिः संभृतानि परं ब्रह्म आततान संपादितवत्, ज्येष्ठं हरिहिरण्यगर्भादिभ्योऽप्युत्कृष्टं ब्रह्मेति, अग्रे तेषामपि सृष्टेः प्राग्दिवं परमाकाशपदमाततान, व्याप्याध्यास्तेति तेषां महतां वीर्याणां संभृतिर्द्युव्याप्तिश्च सर्वासु परविद्यासूपसंहार्या न वेति संशये ब्रह्मगुणत्वाविशेषादनारभ्याधीतत्वाच्च सर्वासु परविद्यासूपसंहार्येति प्राप्तेऽभिधीयते । न सर्वासूपसंहार्या व्याप्तिः । सामर्थ्यादल्पस्थानव्यतिरिक्तेषूपसंहार्या । "देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन्, को भवानिति", निरतिशयसुखास्पदतया स्वर्गशब्दवाच्यं ब्रह्मादिपदेभ्योऽपि महत्तरं महास्थानं हि श्रूयते। ततः स्वल्पस्थानव्यतिरिक्तेषु वैश्वानराद्युपासनेषु द्युव्याप्तिरुपसंहार्येति । तत्सहचारान्महावीर्यसंभृतिस्तत्रैवोपसंहार्या[1] ॥ २३ ॥

॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

छान्दोग्यतैत्तिरीयकयोः पुरुषविद्याम्नाता । "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातःसवनम्" इत्यादिरेकत्र, "तस्यैवं[2] विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिः"; अन्यत्र सोभयत्राभिन्ना भिन्ना वेति संशयः । उभयत्र पुरुषविद्येति नामाभेदाद्यज्ञावयवकल्पनासाम्याच्च भिन्नेति प्राप्तेऽभिधीयते । तैत्तिरीये समाम्नातानां[3] यजमानपत्न्यादीनां यज्ञावयवानां सवनत्रयादीनां च छान्दोग्येऽनाम्नानात् तत्रान्यथैव सवनत्रयादिकल्पनाच्च भिन्नैवोभयत्र पुरुषविद्या। तैत्तिरीयके हि "यत् सायं प्रातर्मध्यं दिनं च तानि सवनानि" इति सवनत्रयकल्पनम् । छान्दोग्ये पुरुषायुषं त्रेधा विभज्य सवनत्रयकल्पम् । न तैत्तिरीये[4] । फलश्रवणात्। "ब्रह्मणे त्वा-महं स ओम्" इत्यात्मानं युञ्जीत" इति ब्रह्मविद्यामभिधाय "ब्रह्मणो महिमानमाप्नोति" इति तत्फलं चाभिधाय "तस्यैवं विदुष" इत्यादिनाम्नाता पुरुषविद्या प्रस्तुतब्रह्मविद्याङ्गमिति । तत्फलं ब्रह्मप्राप्तिरेव[5] छान्दोग्ये प्राह "षोडशं वर्षशतं जीवति" इति फलं श्रुतम् । ततः फलभेदादवयवभेदाच्च न विद्यैक्यमिति ॥ २४ ॥

॥ वेधाद्यर्थभेदात् ॥ २५ ॥

तैत्तिरीयाणामुपनिषदुपक्रमे श्रुतौ "शं नो मित्रः शं वरुणः सह नाववतु इति मन्त्रौ[6] विद्याङ्गभूतौ न वेति संशये विद्यासंनिधिवशाद्विद्याङ्गभूताविति प्राप्ते,

उच्यते ।

यथा, आथर्वणिकानामुपनिषदारम्भे पठितः "शुक्रं प्रविध्य हृदयं प्रविध्य" इत्यादिमन्त्रो हृदयवेधादिप्रकाशनसामर्थ्यरूपाल्लिङ्गादभिचारशेषः । यथा वा, ऐतरेयिणां वाजसनेयिनां चोपनिषदारम्भे पठितं महाव्रतप्रवर्ग्यरूपं च कर्म श्रुत्योर्विनियोगात् क्रतुशेषः । तथेमावपि मन्त्रौ "ऋतं वदिष्यामि, तेजस्वि नावधीतमस्तु" इत्यादिलिङ्गादध्ययनशेषभूतावेव ।

१–ते । "सर्व एव सुवर्णः" इत्येकत्र सर्वाङ्गसुवर्णत्वम्, अन्यत्र "हिरण्यबाहव" इति बाहु–इति पा० ।

२ तस्माद्भिन्ना विद्येति इति पा० ।

३–पितमेव तस्योभयत्र प्रतिपाद्यत्वादविरोधः । तस्मादुभयत्राप्युमापतित्वादिलिङ्गं सिद्धमेव इति पा० ।

४ इत्यस्य विषयः । इति पा० ।

१ स्वल्पेतरस्थानवर्ति ब्रह्म महावीर्यादिसंभृतमुपास्यमिति पा० ।

२–विद्या श्रुता । तत्र संज्ञैक्याद्विद्यैक्ये प्राप्त उच्यते । तस्यैवं इति पा० ।

३–रीरम्" इत्यादिनाम्नातानां इति पा० ।

४–दीनां चान्यत्राम्नानादनाम्नानाच्च भिन्नैव । तैत्तिरीये इति पा० ।

५–फलश्रवणात् । ब्रह्मप्राप्तिरेव प्रस्तुतविद्याङ्गं भवति इति पा० ।

६ "शं नो मित्रः शं वरुणः सह नाववतु" इति मन्त्रौ तैत्तिरीयके श्रूयेते । तदेतौ वि–इत्येव पा० ।

न विद्याङ्गभूतौ । प्रयोजनभेदात् । श्रुतिलिङ्गवाक्येभ्यः संनिधेर्दुर्बलत्वात्[1] ॥ २५ ॥

॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ॥ २६ ॥

विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचनमेकस्यां शाखायामाम्नातम्[2] । विमुक्तयोः पुण्यस्य प्रवेशस्थानं सुहृदः, पापस्य प्रवेशस्थानं शत्रव, इति एकस्या शाखायामाम्नातम् । अन्यस्यां विमोचनं प्रवेशस्थानं चेत्युभयमाम्नातम् । सर्वं चिन्तनार्थमेव । इह विमोचनं प्रवेशस्थानं चेत्यनयोः समुच्चयेन सर्वत्र चिन्तनम्, उत विकल्पेनेति संशयः । किं तावत् प्राप्तम् । "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति शाट्यायनके श्रूयते । ताण्डिशाखायाम्, "अश्व इव रोमाणि विधूय पापं, चन्द्र इव राहोर्मुखात् प्रमुच्य" इति श्रूयते । "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति चाथर्वणे । अत्र विदुषः पापपरित्यागप्रतिपादकश्रुतौ परित्यक्तयोः पुण्यपापयोः प्रवेशस्थानं नोपसंहार्यम् । परित्यागश्रुतावश्रुतत्वात् । इति प्राप्ते ब्रूमः । हानिर्विमोचनमुपायनं प्रवेशः । केवलहानावाम्नातायां केवलोपायने चाम्नात इतरेतरसमुच्चय एव न्याय्यो न विकल्पः । उपायनशब्दस्य हानिवाक्यशेषत्वात् तच्छेषत्वम् । त्यक्तयोः प्रवेशस्थानवाचित्वेन तदपेक्षत्वात् । प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तरवाक्यं कथं शेषभूतमिति चेत् । यथा "वानस्पत्याः कुशा" इत्येतद्वाक्यशेषभूतम्, "औदुम्बर्याः कुशा" इत्येतत्, तद्विशेषकं प्रदेशान्तरस्थम् । यथा "देवासुराणां छन्दोभिः", इत्येतच्छेषभूतं "देवच्छन्दांसि पूर्वम्", इति प्रदेशान्तरस्थम् । यथा षोडशिनः स्तोत्रमुपाकरोति", इत्येतच्छेषभूतं "समयाध्युषिते सूर्ये षोडशिनः स्तोत्रम्" इति । यथा "ऋत्विज उपगायन्ति" इत्येतच्छेषभूतं "नाध्वर्युरुपगायेत्" इति । पर्युदासवाक्यस्य हानिवाक्यशेषतया संभवन्त्यां गतौ न विकल्पो न्याय्यः । तदुक्तं प्रमथतन्त्रे, "अपितु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य" इति स्तुत्यर्थं प्रकर्षार्थं वेति[3] । नन्वर्थवादः कथं देशान्तरस्यार्थवादसापेक्ष इति चेत् । न । सामोपास्तिस्तावकत्वेन श्रुतस्य "एकविंशो वा इतोऽसावादित्य" इत्यर्थवादस्यैकविंशत्वनिर्णयाय तैत्तिरीयकगतसत्रप्रकरणस्यार्थवादापेक्षत्वदर्शनाद्, "द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश" इति हि तत्र संख्यानिर्वाह उक्तः । ततोऽर्थवादत्वेऽप्युपायनमुपसंहार्यम् । हानोपायनयोरेकत्राप्यवगतिरस्ति कौषीतकिश्रुतौ । "तत् सुकृतदुष्कृते विधूनुते, तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति, अप्रिया दुष्कृतम्", इति । अतस्तयोः समुच्चयः ॥ २६ ॥

॥ सांपराये तर्तव्याभावात् तथाह्यन्ये ॥ २७ ॥

पूर्वोक्तं पुण्यपापविमोचनं देहवियोगकाल एव चिन्तनीयम्, उत मार्गे वेति संदिह्य पूर्वपक्षं प्रवर्तयति । तथाहि, "अश्व इव रोमाणि विधूय पापम्" "धूत्वा शरीरम्" इति कुत्रचिद्देहवियोगकाल एव श्रुता सुकृतदुष्कृतहानिः । कुत्रचित् "स आगच्छति विरजां नदीं तां मनसात्येति", "तत् सुकृतदुष्कृते विधूनुत" इत्यध्वनि श्रुता । एवमुभयश्रुतिसद्भावेऽपि सांपराये देहवियोगकाल एव चिन्तनीया । तदूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेण प्राप्तस्य कर्मासाध्यस्य सुखदुःखभोगस्याभावात् । तथाह्यधीयतेऽन्ये । "तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्य" इति देहवियोगादूर्ध्वं ब्रह्म प्राप्त,-मेव ॥ २७ ॥

॥ छन्दत उभयाविरोधात् ॥ २८ ॥

देहवियोगकाले पुण्यपापविमोचनश्रुतेस्तदूर्ध्वं ब्रह्मप्राप्तिश्रुत्यविरोधाद्धेतोः[1], "तत् सुकृतदुष्कृते विधूनुत" इति श्रुतिखण्डश्छन्दतो नेतव्यः । "एतं देवयानं पन्थानमापद्य" इति वाक्यखण्डात् प्रागुपनेतव्यः[2] ॥ २८ ॥

॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ २९ ॥

देहवियोगकाले सर्वकर्मक्षयेऽपि गतिविधिरुपपन्न एव ब्रह्मोपासकानाम् । तत्र विहाररूपार्थोपलब्धेः । "स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति दृश्यते । लोकवत् । यथा लोके राजाश्रितानां पुरुषाणामनितरपुरुषसाधारण[3]सर्वार्थसिद्धिः । अतो मार्गश्रुतिरपि न बाध्यते । देहवियोगकाले सकलकर्मक्षयेऽपि विद्यामाहात्म्याल्लिङ्गशरीरावस्थानेन मार्गगतिस्तत्तद्देशविहारचन्द्रसंवादादिसर्वार्थसिद्धिसंभवादिति ॥ २९ ॥

एवं प्राप्ते सिद्धान्त उच्यते ॥

॥ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३० ॥

देहवियोगकाले विरजानद्यतिक्रमणकाले चेत्युभयथा कर्मक्षये सत्येव देवयानगतेः प्रयोजनवत्त्वम् । अन्यथा देहवियोग-

---

१—र्त्तं, तत उच्यते । "शुक्रं प्रविध्य" इत्यादिमन्त्रवन्महाव्रतादिवद्धिमावपि सामर्थ्येन प्रयोजनभेदावगमादध्ययनशेषभूतावेव न विद्याङ्गभूतौ । लिङ्गसंनिधी वाक्यं दुर्बलमेव । ततो न विरोध इति पा० ।

२—यां तच्चिन्तनार्थमधीतम् इति पा० ।

३—त्यस्येत्यादिना इति पा० ।

१—श्रुतिरित्युभयाविरो—इति पा० ।

२—व्यः । एवमेव हि प्रपद्यत इति वाक्यशेषात् इत्येव पा० ।

३—णामितरपुरुषासाधारण—इति पा० ।

काल एव सर्वकर्मक्षये तदनन्तरमेवासौ मुक्त इति देवयानगतेर्निष्प्रयोजनत्वात् । "देवयानगतिमुपपद्य स्वेन रूपेणाभिनिष्पद्यत" इति देवयानेन ब्रह्मप्राप्त्यनन्तरमेव धीविकाशादिरूपस्वरूपाविर्भावश्रवणस्य च विरोधः स्यात् । एवं च यद्यपि विद्यासामर्थ्याद्देवयानेन गतिस्तत्तद्देशविहारचन्द्रसंवादादिकमणिमविहारादिवदुपपद्यते । तथापि यावद् ब्रह्मप्राप्तिधीसंकोचरूपसंसारानुवृत्तिर्विद्यासामर्थ्यान्नोपपद्यत इति तन्मूलभूतकर्मलेशानुवृत्तिरवश्यमेष्टव्या । नच परमेश्वरसंकल्पविशेषादेव तदनुवृत्तिः स्यादिति वाच्यम् । तस्यैवास्माभिः कर्ममूलतयोच्यमानत्वात् । न ह्यस्मन्मते विहितनिषिद्धाचरणप्रयुक्तः परमेश्वरसंकल्पः कश्चिदस्ति । तत्संकल्पानपेक्षे वा पुण्यपापे स्तः ।

ननु ब्रह्मप्राप्त्यनन्तरं धीविकाशादिस्वरूपाविर्भावश्च, तावत्पर्यन्त धीसंकोचहेतुकर्मानुवृत्त्या भाव्यम् । कथं विरजानद्यतिक्रमणानन्तरमेव कर्मक्षयः ।

उच्यते । प्राकृतप्रपञ्चसीमावध्यतिक्रमणमेव परमाकाशरूपपरमशिवपदप्राप्तिरिति सैव "परं ज्योतिरुपसंपद्य" इत्यनेन ब्रह्मप्राप्तिर्विवक्षिता । विष्णुपदसंबन्धिनी विरजा नदी प्राकृतप्रपञ्चसीमावधिः । तदनुप्रवेशतः प्रक्षीणसर्वकर्मलेपा योगिनो विष्णुपदादूर्ध्वमप्राकृतशिवपदं परमानन्दमयमनुविशन्ति । तथा हि श्रूयते । "सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्," इति । अतो न विरोधः[1] ॥ ३० ॥

॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥

पूर्वत्राभिहितम्[2]उपासकानां पुण्यपापविमोचनं, ब्रह्मप्राप्तिश्च । तदिहाधिकारिकाणामधिकारं भोगमन्तरेण मुक्तिरस्ति न वेति संशयः । किं तावत् प्राप्तम् । वसिष्ठादीनामधिकारिणां तत्र तत्र पुराणादिषु जन्मान्तरश्रवणात् तेषां मुक्तिर्नास्त्येव । अतस्तत्त्वविदां पाक्षिकी मोक्षप्राप्तिरिति । अत्रोच्यते । अधिकारिपुरुषाणां देहपातादूर्ध्वमपि फलान्तरानुभव एव । आ प्रारब्धाधिकारहेतुकर्मविनाशात् । एवंच यावदधिकारसमाप्तिस्तावत् तद्धेतुकर्मानुभवाय तत्रैव तेषामवस्थितिर्नार्चिरादिप्राप्तिः । ज्ञानिनामपि प्रारब्धं कर्मानुभवादेव नश्यति । अतोऽधिकारिणामधिकारनिवृत्तेरनन्तरं मुक्तिर्न पाक्षिकी मोक्षप्राप्तिरिति ॥ ३१ ॥

॥ अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्* ॥ ३२ ॥

उपकोशलाद्युपासनेष्वर्चिरादिगतिराम्नायते । सा किं तन्निष्ठानामेव, उत सर्वोपासकानामिति संशयः । छान्दोग्ये पञ्चाग्निविद्यायामुपकोशलविद्यायां चार्चिरादिगतिः पठिता । पाशुपतविद्यायामथर्वशिरसि सूचिता । शाण्डिल्यविद्यादिषु न पठिता । प्रकरणवशाद् यासु श्रुता तास्वेव नियता नापरास्विति पूर्वपक्षे प्राप्ते ब्रूमः । यासु श्रुता तास्वेवेति न नियमः । अपितु सर्वासूपासनासु भवति[1] । तथा सत्येव श्रुतिस्मृतिभ्यामविरोधः । पञ्चाग्निविद्यायां "ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्ति" इत्यविशेषेण श्रुतिः । स्मृतिरपि, "अग्निर्ज्योतिरहः शुक्ल" इत्यविशेषिका । ततः सर्वेषामुपासकानामर्चिरादिगतिर्नियतैव । केचिदाहुः । अनियमः सर्वेषामुपासकानामर्चिरादिगतौ, नियमाभावः । तथासति श्रुतिस्मृतिभ्यामविरोध इति तत्रापि न दोषः । निरन्वयोपासकानां तदपेक्षाभावादिति ॥ ३२ ॥

॥ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३३ ॥

गार्ग्यब्राह्मणे "अस्थूलमनण्वह्रस्वम्" इत्यादौ ब्रह्मबोधाय केचन निषेधाः श्रुताः । कठवल्लीषु "अशब्दमस्पर्शमरूपम्" इत्यादौ, आथर्वणे च "यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णम्" इत्यादौ श्रुताः । तेषामानन्दादिवदुपसंहारोऽस्ति न वेति सशयः । किं प्राप्नोति । तेषां निषेधानामानन्दादिगुणत्वाभावान्न सर्वासु परविद्यासूपसंहार इति प्राप्ते ब्रूमः[2] । अक्षरसंबन्धिनीनां निषेधधियां सर्वासु परविद्यासूपसंहारो युक्तः । गुणिनो ब्रह्मणः सर्वत्रैकत्वात् । एतैर्हि गुणैः सकलेतरव्यावृत्तेर्ब्रह्मानुसंधानोपपत्तिर्नान्यथा हेयगुणासंबन्धानर्हा आनन्दादयो हि प्रत्यगात्मनः सकाशाद् ब्रह्मणो व्यावर्तकाः । प्र-

१—॥ २८ ॥ अत्र शङ्कते ॥ गतेरर्थवत्त्वमुभयथान्यथाहि विरोधः ॥ २९ ॥ देवयानगतिश्रुतेरर्थवत्त्वं देहवियोगकालेऽध्वनि वेत्युभयथा कर्मक्षये सत्येव । अन्यथा देहवियोगकाल एव सर्वकर्मक्षये सति सूक्ष्मशरीरस्याप्यारम्भकनाशे शरीरनाशाद्गतिश्रुतिर्विरुध्यते । अतश्चरमश्रुतोऽपि कर्मक्षयः कथं प्रागुपनेतव्य इति ॥ २९ ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥ देहवियोगकाले सर्वकर्मक्षयेऽपि गतिरुपपन्नैव ब्रह्मोपासकानाम् । अत्र विहारेऽर्थे फलोपलब्धेः स स्वराड्भवति सर्वेषु लोकेषु तस्य कामचार इति हि दृश्यते । यथा लोके राजाश्रितानां पुरुषाणामितरपुरुषासाधारणसर्वार्थसिद्धिः । अतो मार्गश्रुतिरपि न बाध्यते । तेषु सर्वसिद्धिसंभवात् । विष्णुसंबन्धिनी विरजा नदी प्राकृतप्रपञ्चसीमावधिः । तदनुप्रवेशतः प्रक्षीणसकलकर्मलेपयोगिनो विष्णुपदादूर्ध्वमप्राकृतं शिवपदं परमानन्दाश्रयमनुप्रविशन्ति । तथेति । सोऽध्वनः परमाप्नोति परमं पदमिति तत्राविरोधः ॥ ३० ॥ इति पा० । शंकरसंमतसूत्रक्रमानुगतं च ॥

२—त्र निरूपितमु—इति पा० ।

* शंकरभाष्ये "अनियमः सर्वासामविरोधः । शब्दानुमानाभ्याम्" इति रूपेण प्रथमं "यावदधिकार"—इत्यादि पश्चाद् व्याख्यातम् ।

१ अपितु सर्वोपासकानाम् । इति पा० ।

२—ताः । तदेतेषामानन्दसमन्वयवत् समन्वयो युक्तो न वेति संशयः । न युक्त इति पूर्वः पक्षः । कुतः । अब्रह्मरूपत्वात् । अनन्तत्वात् । अन्यथा सिद्धेश्च । इति प्राप्त उच्यते इति पा० ।

धानानुवृत्तित्वं गुणस्य स्वभावः । यथा जामदग्न्यचतूरात्रपुरोडाश्युपसद्गुणभूतस्य "अग्नेर्वै होत्रं वेरध्वरम्" इत्यादिमन्त्रस्य सामवेदपठितत्वेन सामवेदस्वरस्योच्चैस्त्वस्य प्राप्तावपि यजुर्वेदिकप्रधानोपसदनुवृत्तित्वादुपांशुगुणत्वम्[1] । तदुक्तं प्रथमे काण्डे गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग इति ॥ ३३ ॥

नैतावता सर्वेषामुपसंहार्यत्वप्रसक्तिरित्याह ॥

॥ इयदामननात् ॥ ३४ ॥

आमननमाभिमुख्येनामननम् । इयदेव गुणजातं सर्वत्रोपसंहार्यम् । येन गुणजातेन सकलेतरव्यावृत्तब्रह्ममननं भवति । अतोऽक्षरब्रह्मसंबन्धिनीनां स्थूलत्वादिनिषेधधियामेव सकलेतरव्यावर्तकधर्मरूपत्वादुपसंहारः परविद्यासु । ननु "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस" इत्यादीनामपीति ॥ ३४ ॥

॥ अन्तरा भूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्* ॥ ३५ ॥

बृहदारण्यके "यत् साक्षादपरोक्षाद् ब्रह्म", "य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व" इत्युषस्तिप्रश्ने प्रतिवचनमेवमाम्नायते । "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तर इत्येतदतोऽन्यदार्तम्" । इत्यन्तम् । तदनन्तरं "यदेव साक्षाद् ब्रह्म" "य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व" इति कहोलप्रश्ने तु प्रतिवचनमेवमाम्नायते । "योऽशनायापिपासे शोकं मोहं जरां मृत्युं मत्येतीत्येतं वैतमात्मानं विदित्वेत्यतोऽन्यदार्तम्" इत्यन्तम् । इहोभयत्र[2] विद्यैक्यं न वेति संशयः । तथा सति य आत्मेत्युषस्तिप्रश्नो भूतग्रामवत् प्रत्यगात्मविषयः । अन्यथा "यः प्राणेन प्राणिति स त आत्मा" इति तत्प्रतिवचनविषयस्य कहोलप्रश्नप्रतिवचनविषयस्याशनायाद्यतीतत्वादेश्च भेदानुपपत्तिरिति चेत्, इति पूर्वपक्षशङ्कायां सिद्धान्तयति नोपदेशान्तरवदिति । "य आत्मा सर्वान्तर" इत्युभयत्र प्रश्नैकरूप्यात् परमेश्वर एवोभयत्र प्रश्नविषयः प्रतिवचनगतं निरुपाधिकं प्राणनादिहेतुत्वमशनायाद्यतीतत्वं च तत्रैव समुपपद्यते । तद्विद्योपदेशवत् प्रश्नप्रतिवचनावृत्तिरेकविषया । प्रष्टृभेदो रूपभेदश्च न विद्याभेदावहः ॥ ३५ ॥

तथाह्याह ॥

॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

अर्थैक्ये निश्चिते सति प्रष्टोर्बुद्धिव्यतिहारः कर्तव्यः । उषस्तिनाप्यशनायाद्यतीतत्वधीः कहोलेनापि प्राणनादिहेतुत्वधीः कार्या । उभयप्रकरणगतानि हि वाक्यानि परमेश्वरं विशिंषन्ति । यथेतरत्र सद्विद्यायाम् । तस्मादेकस्यैव प्रश्नप्रतिवचनगतत्वाच्च[1] विद्याभेदः । पुनरुक्तिस्तु शङ्कानिरासाय । तत् त्वमसीतिवत्[2] ॥ ३६ ॥

॥ सैव हि सत्यादयः ॥ ३७ ॥

यद्दृष्टान्तेन पूर्वाधिकरणनिर्णयः । तत्रापि सद्विद्यायां संशयः । भिन्नेयमभिन्ना वेति । प्रश्नावृत्तिदर्शनात् प्रतिवचनभेददर्शनाच्च प्रत्यावृत्ति भिन्ना, इति प्राप्ते ब्रूमः । न भिन्नेयं सद्विद्या । "सेयं देवता" इति प्रस्तुताया एव महादेवतायाः प्रश्नप्रतिवचनेष्वनुवृत्तेः । यतः । "तत् सत्यं स आत्मा" "तत् त्वमसि" इति पुनः पुनः सत्यादीनामावृत्तिर्गम्यते । अतो वस्त्वैक्यादभिन्नेयं विद्येति सिद्धान्तः ॥ ३७ ॥

॥ कामादयस्तत्र[3] तत्र चायतनादिभ्यः ॥ ३८ ॥

छान्दोग्ये तैत्तिरीयके वाजिशाखायां कैवल्योपनिषदि च दहरविद्या श्रुता । सेयमभिन्ना भिन्ना वेति संशये पूर्वः पक्षः । "यदिदमस्मिन् पुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश" इत्यारभ्य दहराकाशशब्दोक्तस्य दहरपुण्डरीकवर्तिनोऽपहतपाप्मत्वादिगुणाष्टकं मुख्यमाम्नातम् । तैत्तिरीयके "दहरं विपाप्मम्" इत्यारभ्य दहरपुण्डरीकवर्तिनः प्रणवप्रकृत्यात्मवाच्यत्वं महेश्वरशब्दवाच्यत्वकृष्णपिङ्गलत्वविरूपाक्षत्वादयो धर्माः प्रदर्शिताः । वाजिशाखायां "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति" इति वशित्वादयः । कैवल्योपनिषदि "हृत् पुण्डरीकं विरजम् इत्यारभ्य",

"विभुं चिदानन्दमरूपमद्भुतम् ।
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्" ।

इत्यन्तेन हृदयपुण्डरीकवर्तिनः परस्य त्रिलोचनत्वनीलकण्ठत्वचिदानन्दरूपत्वोमासहायत्वादयो धर्माः । तत्र नीलकण्ठत्वादीनां शरीरधर्मत्वेन सत्यत्वादीनामात्मधर्मत्वेन विरोधादुपसंहारो न न्याय्यः । तस्माद्विद्या भिन्नेति । एवं प्राप्त उच्यते[4] । तत्र तत्र हृदयपुण्डरीकायतनादिभ्यो विद्यैक्यमेव । अतः सत्यकामादयः सर्वत्रोपसंहार्याः । छान्दोग्यगता अपहतपाप्मत्वादयो वाजिशाखागता वशित्वादयस्तैत्तिरीय-

---

१–मन्त्रस्य प्रथमोपसद–इति पा० ।

* अन्तरा भूतग्रामवत् स्वात्मनः इति अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् इति च सूत्रद्वयत्वेन शंकरभाष्ये व्याख्यातम् ।

२ ॥ ३५ ॥ इह कहोडकोषस्तिप्रश्नप्रतिवचने इति पा० ।

१ द्वि–इति पा० ।

२–भवतीति निश्चयः इति पा० ।

३ कामादीतरत्र इति शंकरमतपाठः ।

४ तस्मादभिन्नैव विद्या भवतीति प्राप्तम् । तत उच्यते इति पा० ।

गताः प्रणववाच्यत्वादयः कैवल्यगताश्चिदानन्दरूपत्वादयश्च सर्वे एते गुणा दहरविद्यायां ब्रह्मणोऽनुसंधेयाः । कैवल्योपनिषद्गतमुमासहायत्वं त्रिलोचनत्वमन्यत्र कृष्णपिङ्गलत्वं विरूपाक्षत्वं चैकार्थम् । आवृत्तिरादरार्था । सर्वत्र गुणानामावृत्तौ तथा द्रष्टव्यम् । अत्र गुणित्वेन[१] ब्रह्मण एकस्यैवोपास्यत्वादपहतपाप्मत्वादियोगि[२] सर्वेश्वरमोङ्कारवाच्यमुमासहायं त्रिलोचनं नीलकण्ठं चिदानन्दरूपमनन्तममृतमद्भुतं परं ब्रह्म दहरपुण्डरीकमध्येऽनुसंधेयमिति परविद्यास्वियमेव प्रधानभूता । छान्दोग्ये कैवल्योपनिषदि चैतद्विद्यानिष्ठस्य "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" ।

ध्यात्वामुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात् ।

इति साक्षात् तस्यैवोपास्यस्य परब्रह्मणः प्रकृतिमण्डलातीतस्य प्राप्तिर्हि फलमवगम्यते । अत एव नीलकण्ठत्वादिधर्मस्यापहतपाप्मत्वादिगुणानां च ब्रह्मणि नित्यत्वादन्योन्यसापेक्षत्वाच्चोपसंहारे न विरोधः । अप्रसक्तस्य प्रतिषेधायोगात् । त्रिलोचनत्वादिलक्षणशरीरविशिष्टे परब्रह्मणि प्रसक्तानां शरीरधर्माणां पापजरामरणक्षुत्तृडसत्यकामासत्यसंकल्पानां निषेधाय ह्यपहतपाप्मत्वादयः प्रतिपादिता[३]:[४] । त्रिलोचनत्वादिलक्षणशरीरकमपि परं ब्रह्मापहतपाप्मकं जरारहितमशोकमविजिघत्समपिपासं सत्यकामं सत्यसंकल्पं चिदानन्दरूपं[५] भवतीति न विरोधः ॥ ३८ ॥

ननु प्रियशिरस्त्वादीनामिव नीलकण्ठत्वादीनामवयवानां ब्रह्मस्वरूपान्तर्भावे तस्योपचयापचयप्रसक्तिरित्यतो[६] नीलकण्ठत्वं लुप्यत इत्यत आह ॥

॥ आदरादलोपः ॥ ३९ ॥

पूर्वत्र नीलकण्ठत्वादिविशिष्टं रूपमुमाभिधानपरमशक्तिसाहित्यं सत्यसंकल्पत्वादिगुणजातं च निरूपितम् । इह तेषां परब्रह्मणि लोपोऽस्ति कदाचित्, अथवा कदाचिदपि न लोप, इति संशयः । किं तावत् प्राप्तम् । उपासनार्थं परब्रह्मणि कल्पितत्वात् तेषां कदाचिल्लोप इति प्राप्ते ब्रूमः । परब्रह्मण उमासहितत्वादीनां सर्वत्र श्रुतिष्वभ्यासादादरादलोप एव । अत एवालुप्तशक्तिकमुच्यते परं ब्रह्म । कुत्रादरादभ्यास इति चेत् । सर्वत्रैव । कृष्णपिङ्गलं विरूपाक्षम् इति शक्तिसाहित्ये सिद्धेऽपि त्रिलोचनत्वेन च पुनरादरार्थं ह्युमासहायं परमेश्वरं प्रभुं त्रिलोचनमित्यभ्यस्तम् । सवितृमण्डलविद्यायां च "नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतय" इति ह्यादरार्थमुमापतित्वमभ्यस्तम् । अन्यत्र "नीलग्रीवो विलोहितः", "नीलग्रीवाय च शितिकण्ठाय च" इत्यादिषु नीलग्रीवत्वमीश्वरस्यादरादभ्यस्तम् । सत्यसंकल्पत्वादीनामिकत्र सिद्धानामन्यत्र पुनर्वचनमादरार्थमेव । तस्मादुमापतित्वादीनामभ्यासादादरादलोप एव परब्रह्मण इति । धर्मब्रह्मणोः प्रमाणान्तरागम्ययोर्यादृशं स्वरूपमभिधत्ते भगवती श्रुतिस्तादृशमेवाभ्युपेयं श्रुतिप्रामाण्यावलम्बिनाम् । अन्यथा तद्विरुद्धतर्कावलम्बने जगदुपादानत्वादिकं न सिध्येत् । अतः श्रुतिरेव च "सत्यंज्ञानमनन्तं ब्रह्म" इति सत्यज्ञानाकारमपरिच्छिन्नं ब्रह्मेत्युक्त्वा,

"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षम्",

इत्यादिना तस्यैव त्रिलोचनत्वपरमशक्त्युमाशबलितत्वरूपं विशिष्टमभिधत्ते । पुनश्च तस्य[१] "स एको ब्रह्मण आनन्द" इति निरतिशयानन्दवत्त्वमाह । तस्यैव च "आकाशशरीरं ब्रह्मसत्यात्मप्राणारामं मनआनन्दं शान्तिसमृद्धममृतम्" इत्यादिना चित्प्रकाशरूपत्वमात्मारामत्वं बाह्यकरणनिरपेक्षान्तःकरणैकानुभूयमानपरमानन्दविलासत्वमुपशान्तसकलोपद्रवकलङ्कत्वमनादिमुक्तत्वं च प्रकाशयति । अस्य हि विरूपाक्षत्वादिलक्षणशरीरसंबन्धेन जीववत् प्रसक्तान् दोषांश्च[२] "अपहतपाप्मा" इत्यादिना निराकरोति । "यः सर्वज्ञः सर्ववित्", "परास्य शक्तिः", "पशूनां पतय" इत्यादिभिरस्य सर्वज्ञत्वसर्वशक्तित्वस्वतन्त्रत्वादिकं च निरूपयति । एवं श्रुतिरेव सकलप्रमाणशेखरस्थानीया सत्यज्ञानानन्दमपरिच्छिन्नस्वरूपं सर्वज्ञं नित्यतृप्तं स्वतन्त्रमनादिप्रकाशमनन्तालुप्तशक्तिकमात्मारामनन्तरनुभवैकविषयपरमानन्दमुपशान्तममृतं नीलकण्ठं विरूपाक्षमुमासहितं परं ब्रह्म सर्वात्मकं मुक्तिसाधकमिति सर्वत्र घोषयन्ती केन निवार्यते । ततः परब्रह्मण उक्तस्वरूपधर्माणामलोप एव ॥ ३९ ॥

॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

इह पूर्वाधिकरणोक्तं ब्रह्मस्वरूपमेव मुक्तप्राप्यमुतान्यदिति[३] संशयः । किं तावत् प्राप्तम् ।

१–णिनो इति पा० ।
२–दिभिः इति पा० ।
३–त्वादवि–इति पा० ।
४ प्रसञ्जिताः इति पा० ।
५–न्दघनं इति पा० ।
६–क्तिर्भवति । ततो इति पा० ।

१–ना पूर्वं सामान्यसिद्धस्य तस्य विशेषेण विरूपाक्षशब्देन त्रिलोचनत्वविशिष्टं कृष्णपिङ्गलशब्देन परमशक्त्युमाशबल्यविशिष्टं रूपं विधत्ते । पुनरस्य इति पा० ।
२–वत् शरीरित्वप्रयुक्तसंसारधर्मप्रसक्तौ शरीरिधर्मान् इति पा० ।
३–व मोक्षफलम्–इति पा० ।

"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" ।

इत्यादिषु ब्रह्म निर्विशेषमेव श्रूयते । "ब्रह्म वेद ब्रह्मैव भवति" । इति मुक्तस्य तत्स्वरूपापत्तिरेव मुक्तिः । अतो निर्विशेषमेव ब्रह्म मुक्तप्राप्यं[1] नान्यत् । इति प्राप्ते ब्रूमः । पूर्वोक्तं सविशेषमेव ब्रह्मस्वरूपं मुक्तप्राप्यं[2] दहरकमलान्तर्भावनीयतया प्रतिपादिते विरूपाक्षे परब्रह्मणि "परं ज्योतिरुपसंपद्य" इति मुक्तेन प्राप्ते "स्वेन रूपेणाभिनिष्पद्यत" इति स्वरूपाभिनिष्पत्तेरेव हेतोः, "जक्षत् क्रीडन् रममाणः स्त्रीभिर्यानैर्वा ज्ञातिभिर्वा" इत्यादिना स्वच्छन्दतो ज्ञात्यादिप्राप्त्यभिधानात् । "परमं साम्यमुपैति" इति श्रुत्या,

"मुक्तः शिवसमो भवेत्"

इति स्मृत्या च मुक्तस्य परब्रह्मसादृश्यप्राप्त्यभिधानाच्च[3] । अतः साक्षान्मुक्तप्राप्यमेव[4] । पूर्वोक्तं नीलकण्ठत्वादिलक्षणं परब्रह्मस्वरूपं न सांसारिकम् । तस्य "अपहतपाप्मा" इत्यादिना सांसारिकधर्मनिषेधात् । सगुणैवातः परविद्या । "निष्कलं निष्क्रियम्" इत्यादिषु हेयगुणनिषेधः क्रियते, न कल्याणगुणनिषेधः । तथाहि, "निष्कलं निष्क्रियम्" इत्यादिना "प्रधानक्षेत्रज्ञपतिर्गुणेश" इत्यादिना च निर्गुणत्वे सगुणत्वे सामान्येन प्राप्ते "अपहतपाप्मा" "यः सर्वज्ञः सर्ववित्" इत्यादिभिर्विशेषश्रुतिभिर्निर्गुणश्रुतेर्हेयगुणराहित्यमर्थः । सगुणश्रुतेः कल्याणगुणसाहित्यम्, इति विज्ञायते ।

किंच[5], वचनमेव सगुणं मोक्षफलं प्रकाशयति । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । "विपश्चिता सर्वज्ञेन ब्रह्मणा सर्वानपि कामान् मुक्तः सह प्राप्नोति" इति । सहशब्दो ब्रह्मणानन्दभोगस्य[6] चयौगपद्याभिप्रायः । अतः सगुणमेव ब्रह्मस्वरूपं मुक्तप्राप्यं फल[8]मिति ॥ ४० ॥

॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥

उद्गीथादिविद्याः कर्माङ्गावबद्धा उपास्तयः कर्मसु नियता उतानियता इति संशयः । किं तावत् प्राप्नोति । कर्मानुष्ठाने कर्माङ्गत्वावश्यकमि[10]मेनानुष्ठेयाः । कर्मप्रकरणमनारभ्याधीतत्वेऽपि वाक्यादेव क्रतुसम्बन्धोपपत्तेः । यथा "यस्य पर्णमयी जुहूर्भवति" इत्यनारभ्याधीतस्य पर्णमयत्वस्याव्यभिचरितक्रतुसंबन्धिजुहूद्वारा वाक्यतः क्रतुसंबन्धः । तथा "य एवं विद्वानुद्गायति" "य एवं विद्वान् साम गायति" इत्यव्यभिचरितक्रतुसंबन्धिसामोद्गीथादिद्वारा तदुपासनानां क्रतुसंबन्धः । अतः कर्मसु नियता उद्गीथाद्युपास्तय इत्येवं प्राप्ते ब्रूमः । गोदोहनादिवदनियता उपास्तयः । यथा "चमसेनापः प्रणयेद् गोदोहनेन पशुकामस्य" इत्यपां[1] प्रणयनमाश्रित्य विधीयमानं गोदोहनमङ्गत्वर्थत्वादेच्छिकमेव । नतु प्रणयनादिवन्नियतम् । तथा कर्माण्याश्रित्य विधीयमाना उपास्तयः क्रत्वर्था न भवन्ति । "तेनोभौ कुरुतो, यश्चैवं वेद यश्च न वेद" इत्युद्गीथाद्युपासनरहितस्यापि क्रत्वनुष्ठानदर्शनात् । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति वर्तमाननिर्देशेऽपि क्रतुवीर्यवत्तरत्वसाधनतयोपासनाविधिः कल्प्यते । वीर्यवत्तरत्व नाम प्रबलकर्मान्तराप्रतिबन्धेनाविलम्बितफलत्वमेव । तथा कामवृष्ट्यादिपृथक्फलश्रवणाच्च न नियता उपास्तयः[2] ॥ ४१ ॥

॥ प्रदानवदेव तदुक्तम् ॥ ४२ ॥

एकस्यैव शिवस्य परब्रह्मणः परविद्यासु सर्वासु तत्तद्गुणविशिष्टतया पृथक् चिन्तनीयत्वमुक्तम् । तदिह संभवति न वेति संशयः । किं तावत् प्राप्तम् । गुणभेदेऽपि गुणिनो ब्रह्मण एकत्वादुपासनं न भिद्यते । यथैकस्य राज्ञस्तत्तद्भूषणादिविशिष्टभेदेन युक्तस्यापि कार्यदर्शनव्यायामभोजनासनमृगयासमरादिव्यापारेषु सिंहासनादिस्थानभेदेऽपि भेदो न दृश्यते । तथा दहरादिस्थानभेदेऽपि तत्तद्गुणभेदविशिष्टस्यापि ब्रह्मण एकत्वात् तदनुसंधानमेकमेव । इत्येवं प्राप्ते ब्रूमः । एकस्यैव परब्रह्मणः शिवस्य स्वरूपाभेदेऽपि तत्तद्गुणविशिष्टस्वरूपतया गुणविशेषणभेदेन भेदाद्विशिष्टगुणयावृत्त्या पृथक् तदुपासनप्रयोगः । इन्द्रप्रदानवत् । यथा, "इन्द्राय राज्ञे पुरोडाशमिन्द्रायाधिराजायेन्द्राय स्वाराज्ञे" इति गुणभेदात् पृथक् पुरोडाशप्रदानं नानादेवतापृथक्त्वादिति, सङ्कर्षे तथोक्तत्वात् । तथैकस्यापि परब्रह्मणो गुणभेदादुपासनपृथक्त्वमिति । यदुक्तमेकस्य राज्ञ इति । तत्रापि राजस्वरूपाभेदेऽपि स्थानगुणादिभेदादुपासनप्रकारो भिन्न एव सेवकानामिति[4] ॥ ४२ ॥

१ मुक्तिफलं इति पा० ।
२ मुक्तिफलं इति पा० ।
३—त्या परब्रह्मणस्तस्य सदृशरूपत्वं मुक्तस्य सिध्यति इति पा० ।
४—न्मोक्षफलत्वमेव इति पा० ।
५—गुणविशेषनि—इति पा० ।
६—गुणविशेषनि—इति पा० ।
७—ते । ततः सगुणैव ब्रह्मविद्या । इति पा० ।
८ ब्रह्मभावस्य इति पा० ।
९ मुक्तिफल—इति पा० ।
१०—क्वचि—इति पा० ।

१—ति तत्रा—इति पा० ।
२ च्च कर्मस्वनियता उपास्तयः पृथक्फला इति पा० ।
३—सु गुणविशेषवि—इति पा० ।
४ न भिद्यते । यथैकस्यैव ब्रह्मणः सत्यसंकल्पादिगुणविशेषभेदात् तदावृत्त्या न पृथगुपासनम् । इति प्राप्ते ब्रूमः । एकस्यैव परब्रह्मणः शिवस्य स्वरूपाभेदेऽपि तत्तद्गुणविशिष्टस्वरूपतया गुणविशेषणभेदेन भेदाद्विशिष्टगुणयावृत्त्या पृथक् तदुपासनप्रयोगः । राजादिगुणभेदविशिष्टेन्द्रपुरोडाशप्रदानभेदवदिह प्रधानाया देवताया गुणभेदेन पृथक्त्वादिति इदमेव पा० ।

॥ लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ४३ ॥

पूर्वं सर्वासु परविद्यासु ब्रह्मोपास्यमिति स्थितम्। तस्योपास्यस्य ब्रह्मणो विशिष्य निर्धारणार्थमिदमधिकरणम्। तैत्तिरीये "सर्वो वै रुद्रस्तस्मै रुद्राय नमोऽस्तु" "पुरुषो वै रुद्रः सन्महो नमो नमः" "विश्वं भुवनं चित्रं बहुधा जातं जायमानं" च "यत् सर्वो वै रुद्रस्तस्मै रुद्राय नमोऽस्तु" "कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे वोचेम शन्तमं हृदे" "सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमोऽस्तु" "नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नम" इति। अत्र[1] सर्वात्मत्वादिभिरुमापतित्वेन च श्रूयमाणं परं ब्रह्म प्रकृते सवितृमण्डलविद्यामात्र उपास्यमुत सर्वासु परविद्यास्विति संशयः। किं तावत् प्राप्तम्। प्रकरणबाधायोगात् प्रकृतसवितृमण्डलविद्यायामेवोपास्यमिति प्राप्ते ब्रूमः। इदं सर्वात्मकमुमासहितं परं ब्रह्म सर्वास्वपि परविद्यासूपास्यम्। तत्तल्लिङ्गसंबन्धिवाक्यभूयस्त्वात्। तथाहि, "सर्वो वै रुद्र" इत्यादिवाक्ये "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इतिशाण्डिल्यविद्योपास्यलिङ्गम्। "पुरुषो वै रुद्र" इति वाक्ये पुरुषसूक्तोपकोशलविद्याद्युपास्यलिङ्गं[2] सदित्यत्र "सदेव सोम्येदमग्र आसीत्" इति सद्विद्योपास्यलिङ्गम्। "मह" इत्यत्र "महदिति तद् ब्रह्म स आत्मा अङ्गान्यन्या देवता" इति व्याहृतिविद्योपास्यलिङ्गम्। "शन्तमं हृदे" इति हृदयाकाशद्योतनाद् दहरविद्योपास्यलिङ्गम्। "हिरण्यबाहव" इति हिरण्यरूपत्वं सवितृमण्डलोपास्यलिङ्गम्। "उमापतय" इति सर्वपरविद्योपास्यलिङ्गम्। संसाररुग्द्रावकत्वाद् रुद्र इत्युच्यते परमात्मा शिवः। एवमुमापतेः परब्रह्मणः शिवस्य सर्वपरविद्योपास्यत्वं वाक्यैरवसीयते। वाक्यं हि प्रकरणाद्बलीयः। तदप्युक्तम्। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति। तस्मादुमासहितं संसाररुग्द्रावकं परवस्तु सकलपरविद्योपास्यमिति सिद्धम् ॥ ४३ ॥

॥ पूर्वविकल्पः प्रकरणात्
स्यात् क्रियामानसवत् ॥ ४४ ॥

अग्निरहस्यब्राह्मणे श्रूयते "षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन्, अर्कान्मनोमयान्मनश्चित" इति, तथा "वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित", इति पुरुषस्य शतसंवत्सरमित आयुषि षट्त्रिंशत्सहस्राणि दिनानि। तत्रैकैकस्मिन् दिने यावती मनोवृत्तिः, तस्या एकैकाग्नित्वे सत्यग्नयः षट्त्रिंशत्सहस्राणि संपद्यन्ते। ते च प्रत्यगात्मस्वरूपेण ध्यातव्याः। एवं वाञ्छितादयोऽपि ते विद्यामयक्रत्वङ्गभूता उत क्रियामयक्रत्वङ्गभूता इति संशये[1] पूर्वपक्षः प्रवर्तते। "मनश्चितो वाक्चित" इत्यादीनां सांपादिकाग्नीनाम्, "असद्वा इदमग्र आसीत्" इत्यादिना पूर्वप्रकृतेष्टकचिताग्निशेषभूतक्रियामयक्रत्वनुप्रवेशः स्यात्। ततश्च तेषामग्नीनाम्, इष्टकचिताग्निना विकल्पः। द्वादशाहाङ्गभूतमानसवत्। यथा द्वादशाहे दशमेऽहन्यविवाक्ये पृथिवीपात्रस्य प्रजापतिदेवताकस्य समुद्रद्रव्यस्य मानसग्रहस्य मनःसंपाद्यग्रहणासादनस्तोत्रशस्त्रस्तवनप्रत्याहरणभक्षणत्वेन मानसस्यापि क्रियामयक्रत्वङ्गत्वम्। एवमेषां मानसानामपि क्रियामयक्रत्वङ्गत्वम् ॥ ४४ ॥

॥ अतिदेशाच्च ॥ ४५ ॥

"तेषामेकैक एव तावान् यावानसौ पूर्व" इति तेष्विष्टकचिताग्निकार्यातिदेशाच्च तदङ्गत्वमिति ॥ ४५ ॥

एवं प्राप्ते सिद्धान्त उच्यते ॥

॥ विद्यैव तु निर्धारणाद्दर्शनाच्च* ॥ ४६ ॥

विद्यैव विद्यामयक्रत्वङ्गभूता इत्यर्थः[2]। सांपादिकाग्नित्वेनैषां विद्यामयत्वे सिद्धेऽपि "ते हैते विद्याचित एव" इति निर्धारणा हि विद्यामयक्रत्वङ्गत्वख्यापनाय। दृश्यते च विद्यामयक्रतुः। अत्रैव "ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैव ग्रहा अगृह्यन्त, मनसास्तुवन्, मनसाशंसन् यत् किंचिद् यज्ञे कर्म क्रियते, यत् किंचिद् यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत" इति। अतस्तेषां विद्यामयक्रत्वङ्गत्वमेव ॥ ४६ ॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

"ते हैते विद्याचित एव विद्यया हैवैत एवं विदश्चितो भवन्ति तान् हैतानेवं विदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वमत" इति श्रुत्या वाक्येन लिङ्गेन चावगतस्य विद्यामयक्रत्वन्वयस्य दुर्बलेन प्रकरणेन न बाधः ॥ ४७ ॥

ननु "मनसैव ग्रहा अगृह्यन्त" इत्यादिषु विधिप्रत्ययाश्रवणात् क्रियामयात् क्रतोरन्यो विद्यामयः क्रतुर्नास्तीत्यत आह ॥

अनुबन्धादिभ्यः प्रज्ञान्तर-
पृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ४८ ॥

१ पूर्वत्र सर्वविद्यासु ब्रह्मोपास्यं तत्तल्लिङ्गेनेत्युक्तम्। तदिह विचार्यते। श्रूयते "सर्वो वै रुद्र" "उमापतये नम" इति। अत्र इति पा०।

२—सीत "इत्युपकोशलविद्योपास्यलिङ्गम्। पुरुषो वै रुद्र." "योऽयं पुरुषो भाः सत्यम्" इति शाण्डिल्यविद्योपास्यलिङ्गम्। इति पा०।

१—यकलहे इति पा०

* शंकरमते विद्यैवतु निर्धारणात् इत्येकं दर्शनाच्च इत्यपरमिति सूत्रद्वयम्।

२ विद्यैव ते विद्यामयक्रत्वङ्गभूता इति इति पा०।

"यहा अग्न्यत्त" इत्यादिक्रत्वनुबन्धैः, ते हैते विद्याचित एव" इति श्रुत्यादिभिश्च, विद्यामयक्रतुविधिः कल्पनीयः। दहरविद्यादीनां क्रियामयानां पृथक्त्ववदस्यापि विद्यामयक्रतोः सानुबन्धैः श्रुत्यादिभिः पृथक्त्वमवगम्यते। दृष्टश्चानुवादस्वरूपे विधिः "यदेव विद्यया करोति" इत्यादौ। तदुक्तम्। "वचनानि त्वपूर्वत्वात्" इति। अतो विद्यामयक्रत्वङ्गत्वमेव युक्तम् ॥ ४८ ॥

आशङ्क्य परिहरति ॥

॥ न सामान्यादप्युपलब्धे-
र्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥

"तेषामेकैक एव तावान् यावानसौ पूर्वं" इतीष्टकचितानिफलसामान्येनातिदेशः। इष्टकचिताग्नेः स्वक्रतुद्वारेण यत् फलं तदेषां विद्यामयक्रतुप्रवेशेन फलमिति। न पुनरिष्टकचिताग्नितुल्यदेशत्वमेषामिति[2]। केनापि सामान्येनातिदेशोपलब्धेः। "स वा एष एव मृत्युर्य एतस्मिन् मण्डले पुरुष" इति संहर्तृत्वमात्रेण नहि तत्र मण्डलपुरुषस्य मृत्युतुल्यदेशत्वम्[3]। अतः केनचित् सामान्येनातिदेशेन न विरोधः ॥ ४९ ॥

हेत्वन्तरमाह ॥

॥ परेण च शब्दस्य ताद्वि-
ध्यं भूयस्त्वात् त्वनुबन्धः ॥ ५० ॥

परेण च ब्राह्मणेनास्य मनश्चिदादिवाचिनः शब्दस्य विद्यामयत्वप्रतिपादकत्वमवगम्यते। तथाहि, "अयं वाव लोक एषोऽग्निचितस्तस्याप" इत्यादिना पृथक्फला विद्या विधीयते। क्रियाप्रकरणे मनश्चिदादीनामनुबन्धस्तु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात् त्वितेषां[4] विद्यामयक्रत्वङ्गत्वम् ॥ ५० ॥

॥ एक आत्मनः शरीरे भावात् ॥ ५१ ॥

इह पूर्वोक्तब्रह्मस्वरूपानुसंधानं सर्वासु परविद्यासु युज्यते न वेति संशयः। तत्रैके मन्यन्ते। शरीरे वर्तमानत्वादुपासितुः कर्तृत्वभोक्तृत्वरूपापचत्वात् तथावस्थितस्यात्मतया परविद्यासु परमेश्वरस्य त्रिलोचनत्वादिलक्षणस्वरूपानुसंधानं न युज्यत इति ॥ ५१ ॥

सिद्धान्त उच्यते ॥

॥ व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥ ५२ ॥

नैवं यत्कर्तृत्वभोक्तृत्वादिरूपापचस्योपासितुरात्मतया परमात्मानुसंधेय इति। अपितु सांसारिकस्वभावान्मुक्ते यो[1] व्यतिरेक अपहतपाप्मत्वादिगुणरूपः सोऽनुसंधेयः। तथानुसंधानसद्भावभावित्वात् स्वरूपोपलब्धेः। यथावस्थितस्वरूपब्रह्मानुसधानभाविनी ब्रह्मोपलब्धिः। "तद्यथा क्रतुरस्मिंल्लोके पुरुष" इत्यादिश्रुतेः। अतः सांसारिकस्वभावनिर्मुक्तापहतपाप्मत्वादिस्वरूपतयोपासितुरन्तु, संधेयत्वात् तदात्मतयानुसधेयस्य परमेश्वरस्य त्रिलोचनत्वादिलक्षणस्वरूपानुसंधाने नास्ति विरोधः[2] ॥ ५२ ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

कासु चिच्छाखासु श्रूयमाणा उपासनाङ्गावबद्धाः सर्वासूपासनास्वङ्गत्वेनोपसंहार्या[3] न वेति संशयः। तथाहि,

"आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनादेव पाशं दहति पण्डितः" ॥

इति कैवल्योपनिषदि दहरोपासनायाः[4] प्रणवाभ्यासः श्रूयते। "अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्, तस्माद्व्रतमेतत् पाशुपतं पशुपाशविमोक्षाय" इति। अथर्वशिरसि पाशुपतविद्यायां भस्मोद्धूलनं श्रूयते[5]। अन्यत्र "तिस्रो रेखाः प्रकुर्वीत" इति त्रिपुण्ड्रधारणविधिः श्रूयते। तस्य शिवसायुज्यमिति फलश्रवणात् परविद्याङ्गत्वम्। तदेवं विद्याङ्गावबद्धा यासु शाखासु श्रुतास्तासु विहितेषूपासनेषूपासकैः कार्याः सन्निधानात्। न सर्वत्रेति प्राप्ते ब्रूमः। भस्मोद्धूलनादय उपासनाङ्गावबद्धा यासु शाखासु श्रुतास्तास्वेवेति न नियमः। किंतु प्रतिवेदं सर्वत्र सर्वासु शाखासु सर्वैरपि ब्रह्मोपासकैः कार्या एव। श्रुत्या संनिधेर्बाधः ॥ ५३ ॥

॥ मन्त्रादिवद्वाविरोधः ॥ ५४ ॥

वाशब्दोऽवधारणे। यथा क्रत्वङ्गभूतानां मन्त्राणामेकैकशाखागतानामपि सर्वशाखागतक्रत्वन्वयेऽपि न विरोधः। तथात्रापीति ॥ ५४ ॥

॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५५ ॥

इह वैश्वानरविद्यायामुपासनमंशेन[6] समस्तेन वेति संदिह्यते। तथाहि, तत्र[7] द्युलोकसूर्यवाय्वाकाशोदकपृथिव्यो वै-

१—यत्व—इति पा०।
२—म्यनुप्रवेशनातिदेशत्वात् तेषामिति इति पा०।
३—तुलोकातिदेशत्वम् इति पा०।
४ तु। तत एतेषां इति पा०।

१—न्मुक्तस्वभावस्य यो इति पा०।
२—वान्मुक्तस्वभावतया त्रिलोचनत्वादिलक्षणस्य ब्रह्मस्वरूपानुसंधाने विरोधाभाव इति पा०।
३ सर्वत्रोप—इति पा०।
४—नाङ्गतया इति पा०।
५—क्षाय" इति पाशुपतविद्याङ्गत्वेन भस्मोद्धूलनादिकमथर्वशिरसि श्रूयते इति पा०।
६—यां तद्वा—इति पा०।
७ वैश्वानरविद्यायां इति पा०।

श्वानरस्य मूर्धचक्षुःप्राणमध्यशरीरसूत्रस्थानपादरूपा ध्यातव्या इति निरूपितम् । तेषामङ्गानामपि प्रत्येकमुपासनम[1]भिहितम् । "अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवात्मानं वैश्वानरमुपास्ते" इति पृथक् पृथग्दिवादिपर्यायगतैर्वाक्यैः । एवं सत्युपास्तिशब्दस्य फलवचनस्य च प्रत्येकमुपलभ्यमानत्वादंशो[2]पासनमुचितमिति पूर्वः पक्षः । सि[7]द्धान्ते तु समस्तोपासनमेव मुख्यमित्युच्यते । तथाहि, तत्र त्रैलोक्यशरीरतयोपास्यस्य वैश्वानरात्मनः स्वर्लोकादिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वमभिधाय, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति ब्रह्मानुभवः फलं[3] चाभिहितम् । तत्र मूर्धाद्यवयवोपादानाद् भूम्नः समस्तोपासनस्य ज्यायस्त्वं प्रामाणिकमस्ति । तत्रैव ब्रह्मानुभवफलाभिधानात् । तत्रावयवोपासनं फलकीर्तनं च क्रतुवदविवक्षितम् । "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात" इत्युक्त्वा, "यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति" इत्यादिनोच्यमानमष्टाकपालादिकं तत्फलं च यथा न विवक्षितं तद्वत् । तथाहि, समस्तोपासनस्यैव[4] ज्यैष्ठ्यं दर्शयति श्रुतिः । तत्र "औपमन्यवकं त्वमात्मानमुपास्से प्राचीनशालयोग्यकं त्वमात्मानमुपास्स" इत्यादिप्रश्नानन्तरं "दिवमेव भगवो राजन्नादित्यमेव भगवो राजन्", इत्यादिप्रतिवचनैरवयवोपासनेऽभिहिते "अत्त्यन्नं पश्यति प्रियम्", इत्यादिना तत्र तत्र फलनिर्देशं कृत्वापि "मूर्धा त्वेष आत्मन इति होवाच, मूर्धा[5] ते व्यपतिष्यति, यन्मां नागमिष्यः", इत्यादिराजवचनैरनर्थं ब्रवीति । अतः समस्तोपासनमेव मुख्यम् ॥५५॥

॥ नाना शब्दादिभेदात् ॥ ५६ ॥

इह परविद्यायामेकीकरणेनोपासनमुत भेदेनेति संशये नानाशाखाश्रुतानामपि विद्यानां वेद्यस्य ब्रह्मण एकत्वादेकीकरणेनो[6]पासनमिति प्राप्त उच्यते । अनन्तश्रुतिबोध्यानामनन्तानां विद्यानामेकीकृत्यानुष्ठानायोगात् स्वरूपैक्येऽपि ब्रह्मणो गुणभेदाद् विद्याभेदः । यत्र गुणभेदो नास्ति, तत्र स्थानादिभेदाद्विद्याभेदः । राजादिगुणभेदादिन्द्रस्य पुरोडाशदानभेदवद् गार्हपत्यस्थानादिभेदादग्नेरुपचारभेदवच्च विद्याभेद उपपन्न इति निरूपितम् । अतो नानाप्रकारा विद्या । तत्तच्छब्दाद्यनुबन्धभेदात् । इति निर्णयः । पुनरधिकरणारम्भोऽयं ज्ञानस्याविधेयता[1]निरासार्थः ॥ ५६ ॥

॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

एवं नानाप्रकाराः परविद्या निरूपिताः । तासूपासकस्य विकल्पः समुच्चयो वेति संशयः । किं प्राप्नोति । दहरविद्यासद्विद्यादीनां समुच्चयेनानुष्ठानमुचितम् । कर्मभूयस्त्वेन फलभूयस्त्वसंभवात् । विकल्पे तु किंचिन्नियामकं नास्तीति प्राप्ते ब्रूमः । एकस्मिन्नुपासके सर्वासां परविद्यानां विकल्प एव । कुतः । निरतिशयब्रह्मानन्दानुभवस्य ब्रह्मसाक्षात्कारफलस्याविशिष्टत्वात् । प्रयोजनमेकेनोपासनेन यदि सिध्यति । किमन्यैरप्रयोजनैः ।

किंच, एकेनोपासनेन प्रमाणजन्यं ब्रह्मस्वरूपापरोक्षं निरतिशयभावनया सिध्यति । ध्येयतादात्म्याभिमानात् । तदेकं परित्यज्यान्यत्र गमने चित्तविक्षेपः स्यात् । अतो विकल्प एव ॥ ५७ ॥

॥ काम्यास्तु यथाकामं समुच्चीयेरन्, न वा पूर्वहेत्वभावात् ॥ ५८ ॥

इह ब्रह्मसाक्षात्कारव्यतिरिक्तफलानामपि विद्यानां पूर्वाधिकरणन्याय इति संदेहे प्राप्तेऽभिधीयते । न पूर्वाधिकरणन्याय इह संभवति । वैषम्यात् । "देवो भूत्वा देवानप्येति" इति जीवभावनाप्रकर्षवशाद्देवभावसाक्षात्कारप्राप्तिरवगम्यते । परविद्यास्वहंग्रहवतीषु न तथा नाम ब्रह्माद्युपासनासु काम्यासु साक्षात्कारफलत्वे किंचिन्मानमस्ति । तत्फलत्वाभावे च तत्र भोगभूयस्त्वापेक्षया समुच्चय एव युक्तः । ब्रह्मफलवदेकत्वाभावात् । तत एकं वा बहु वा समाश्रित्यानुष्ठेयमिति निर्णयः ॥ ५८ ॥

॥ अङ्गेषु यथाश्रयभावः ॥ ५९ ॥

इह पुनरुद्गीथाद्यङ्गावबद्धानां क्रत्वङ्गभावः स्वातन्त्र्यं वेति संशये पू[3]र्वपक्षन्यायः प्रवर्तते । "उद्गीथमुपासीत" इत्युद्गीथादिष्वङ्गेषु श्रुतानामुपासनानामुद्गीथादिवत्[4] क्रत्वङ्गभाव एव । गोदोहनादिवत् स्ववाक्ये फलाश्रवणात्[5] ॥ ५९ ॥

॥ शिष्टेश्च ॥ ६० ॥

"उद्गीथमुपासीत" इति विधेः, "यदेव विद्यया करोति", इत्यत्र विध्यभावाच्चाङ्गभाव एव ॥ ६० ॥

१ प्रत्यङ्ग—इति पा० ।
२—दङ्गो—इति पा०
३—मत्ति इत्यादिना ब्रह्मात्मत्वं भूयः फलं इति पा० ।
४ भवति" इत्यादौ समस्तो—इति पा० ।
५—भिहिते मूर्धा इति पा० ।
६—वेकोपा—इति पा० ।
७—सिद्धा—इति पा० ।

१—यतां वदतां नि—इति पा० ।
२—नात्मनः फल—इति पा० ।
३—यः, तथा सति पू—इति पा० ।
४ इत्युद्गीथाङ्गेषु श्रुतानामुद्गीथादीनां क्र—इति पा० ।
५—श्रवणादुद्गीथसंबन्धितया क्रत्वङ्गभाव एव इति पा० ।

॥ समाहारात् ॥ ६१ ॥

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरन्ति" इत्युपासनस्य समाहारे नियमो दृश्यते । अतोऽपि क्रत्वङ्गभावः । "दुरुद्गीथो वेद न हीन उद्गीथो वेद न आहानौ" अन्येन समाधानं ब्रुवद्वाक्यं हि तस्य नियमेनोपादानं दर्शयति । नियमाच्चाङ्गभावः[1] ॥ ६१ ॥

॥ गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

"तेनेयं त्रयी विद्या वर्तते, ओमित्याश्रावयति, ओमिति शंसति, ओमित्युद्गायति", इति सर्वतः संचरतः प्रणवस्य गुणत्वेनोपासनस्य सचारादप्युपासनोपादाननियमोऽवगम्यते । तेनेति हि प्रकृतपरामर्शशब्दः प्रकृतं सोपासनमेव प्रणवं परामृशति । अतः पूर्वोक्त उद्गीथाद्युपासनानामनियमो न संभवति[2] ॥ ६२ ॥

इति प्राप्ते सिद्धान्त उच्यते ॥

न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

अङ्गभावो हि सहभावः । तदश्रवणादेषां न तद्भावः । "यदेव विद्यया करोति तदेव वीर्यवत्तरम्," इति फलान्तरसाधनतयावगतानामुपासनानामङ्गत्वाभावात्[3] । "उद्गीथमुपासीत" इत्युद्गीथाश्रयतामात्रप्रतिपादनाच्च तेषामङ्गावबद्धानां[4] क्रत्वङ्गभावः ॥ ६३ ॥

॥ दर्शनाच्च ॥ ६४ ॥

"एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" इति ब्रह्मणो वेदनेन सर्वरक्षणं वदन्ती श्रुतिरुद्गातृप्रभृतीनां वेदनस्यानियमेनानङ्गतां दर्शयति । अतः पूर्वोक्त उपासनानामनियमो युक्त[5] एव ॥ ६४ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य तृतीयः पादः* ॥ ३ ॥ :: :: ॥

१ "उद्गीथमनुसमाहरन्ति" इति वेदमसमाधानं ब्रुवदस्याङ्गतां द्योतयति इत्येव पा० ।

२ प्रकृतस्योपासनस्यैव 'ओमिति श्रावयति, ओमिति शंसति, ओमित्युद्गायति," इति सर्वत्र संचरतः प्रणवस्य गुणत्वेनोपासनस्यापि संचारादुपासनोपादाननियमो गम्यते । अतः पूर्वोक्तोपासनानियमो न संभवति इत्येव पा० ।

३—तयावगतस्योपासनस्याङ्गत्वाभावात् इति पा० ।

४ तेषामुद्गीथानङ्गानां इति पा० ।

५—क्तोपादाननियमो न सिद्ध इति पा० ।

* अशीतितमे क श्रीविद्यासुधानिधिपत्रे स्यैवाध्यायस्य द्वितीयपादान्ते. महादेवस्वामिवृत्तान्ते बाणवसुचन्द्रमिते पृष्ठे वयस्केव इत्यत्र वयस्कैव इति रसवसुचन्द्रमिते पृष्ठे च मदन्त इत्यत्र मदन्ते इति बोध्यम् । मुद्रणसमये मुद्रकप्रमादात् तु तद्राहित्यं ज्ञेयम् । यथा तस्मिन्नेव पण्डितपत्रे प्रारम्भ एव काशीविद्यासुधानिधिशब्दादग्रे विसर्गापहारः । प्रशंसाशब्दे तालव्यशकारद्वयाद्दुर्निवेशस्त्वपाणिनीयत्वेऽपि महामहोपाध्यायश्रीयुतविल्सनसाहेबकृतबृहत्कोशानुरोधाद्विचिन्त्यार्थः । वस्तुतस्तत्र मूलं मृग्यम् ।

# THE VIDVAN-MANO-RANJINI

OR

## REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA SÁRA, BY RÁMA-TIRTHA.

(Continued from page 168.)

*In these two* [*in understanding, and the common sensory, recollection, and egotism are included.*] Recollection is a modification of the internal organ, identical with resuscitation. Egotism is a modification of the internal organ identical with self-assertion. Recollection is included in the understanding, both indifferently consisting of limitation of their object; and egoism is included in the common sensory, it also consisting indifferently of determination. Thus, though there is no essential distinction yet sometimes recollection and egotism are enunciated separately from understanding and the common sensory, in consequence of their difference of objects. For the object of understanding does not depend on an antecedent cognition, while the object of recollection must have been previously perceived. Thus all objects whether internal or external, each in its own manner, are objects of the common sensory; while the object of egotism is only spirit tinged by that which is not spirit. Therefore, there being a difference of objects without any essential difference, there is nothing to prevent the inclusion. The author states, as in the former case, that the four varieties also of the internal organ are composed of the elements.

*These again* [*from the mingled pure particles belonging to the ether &c.*] He next states the reason why the aforesaid cognitive organs, and the internal organ are the products of pure particles of the elements.

*Because they consist of enlightenment.* To this effect there being a traditional text: Purity, as being void of impurity, is illuminant, and unblemished. Enlightenment which is the product of purity, being observed in the sense-organs and the internal organ, infers that they

अनयोरेवेति । अनुसन्धानात्मिकान्तःकरणवृत्तिश्चित्तं अभिमानात्मिकान्तःकरणवृत्तिरहङ्कारः चित्तस्य बुद्धावन्तर्भावः विषयपरिच्छित्तिरूपत्वाविशेषात् । अहङ्कारस्य मनस्यन्तर्भावः तस्यापि सङ्कल्पात्मकत्वाविशेषात् । एवं स्वरूपाभेदेऽपि विषयभेदात् क्वचिच्चित्ताहङ्कारयोर्बुद्धिमनोभ्यां पृथङ्निर्देशः बुद्धेर्ह्यपूर्वो विषयः चित्तस्य पूर्वानुभूतः तथा मनसो बाह्याभ्यन्तरश्च सर्वो विषयः यथायोगम् । अहङ्कारस्य त्वनात्मोपरक्त आत्मैवेति अतो विषयभेदेऽपि स्वरूपाभेदाद्युक्तोऽन्तर्भाव इति भावः । पूर्ववदेषां चतुर्णामप्यन्तःकरणभेदानां भौतिकत्वमाह

एते पुनरिति । उक्तानां ज्ञानेन्द्रियाणामन्तःकरणानाञ्च भूतगतसात्त्विकांशकार्यत्वे हेतुमाह ॥

तेषां प्रकाशात्मकत्वादिति । तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयमिति स्मृतेः । सत्त्वकार्यभूतः प्रकाशः इन्द्रियान्तःकरणेषूपलभ्यमानस्तेषां सत्त्वकार्यतां गमयतीत्यर्थः । निरूपयन् [illegible] उक्तरचर्य[illegible] सिद्धमवान्तरभेदं कथयति ॥

are the effects of purity The author next states a subdivision established by the constituents declared as those of the evidentiary body under description

*This understanding [being associated with the cognitive organs, is the sensational sheath.]* By employing the word understanding the exclusion of the common sensory is implied. The author next enumerates a particular appellation of intelligence conditioned by the sensational sheath.

*This [passing through this and other worlds by reason of its self-assertion of agency and fruition, is called the conventional or practical individuated spirit]* The connection of the words in the text is · This intelligent spirit as conditioned by the sensational sheath, is called the individuated spirit. A difference of this from pure intelligence is stated.

*Practical* He explicates the convention or practical activity by another character

*Passing through this and other worlds* The reason of this is stated

*By reason of its self-assertion of agency and fruition* Accordingly the Vedic text Sensation spreads sacrifice, and spreads also actions The agency of intelligent spirit is not real, but only self-asserted, therefore the words by reason of its self-assertion are subjoined To this effect there is a Vedic text . He being equal goes through both worlds, and as it were meditates, and and keeps moving By the words as it were, the mere seemingness of practical activity is indicated. Accordingly the aphorisms An agent, because he knows the meaning of the system, And like a carpenter in both ways, establish the practical existence of agency and the real existence of non-agency. As before, he states a subdivision connected with the common sensory

*The common sensory [being associated with the organs of action, becomes the sensorial sheath]* The organs of action are the instruments effective of action

इयं बुद्धिरिति । बुद्धिग्रहणेनार्थान्मनोव्यावृत्तिरभिप्रेतातदुपहितचैतन्यस्य च व्यपदेशभेदमाह ॥

अयमिति । अयं विज्ञानमयकोशावच्छिन्नश्चिदात्माजीव इत्युच्यते इत्यन्वयः । तस्य प्रज्ञात्मनो विशेषमाह ॥

व्यावहारिक इति । व्यवहारमेव विशेषणान्तरेण व्यनक्ति ॥

इह लोकेति । तत्र हेतुमाह ॥

कर्तृत्वेति । तथा च श्रुतिः । विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेपि चेति । कर्तृत्वादिकं चैतन्यात्मनो न वास्तवं किन्त्वाभिमानिकमित्यभिमानित्वेनेत्युक्तं । तथा च श्रुतिः । स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवेत्याद्या । इवशब्देन व्यवहारस्याभासतां दर्शयति । तथा न्यायौ च कर्त्ता शास्त्रार्थवत्त्वादिति । यथा च तक्षोभयथेति च कर्तृत्वाकर्तृत्वयोर्व्यावहारिकपारमार्थिकत्वे व्यवस्थापयतः । पूर्व्ववन्मनःसम्बद्धमवान्तरभेदमाह ॥

मनस्त्विति । कर्म्मसाधनानीन्द्रियाणि कर्म्मेन्द्रियाणि । वचनादानगमनविसर्गानन्दसाधनेन्द्रियत्वं यथाक्रमं वागादीनां प्रत्येकं लक्षणं । एतेषामपि पूर्व्ववद्भौतिकत्वमाह ॥

The respective definitions, in their order, of the voice &c, are an organ efficient of speech, handling, walking, excretion, and delight As in the former instances, it is stated that these also are composed of the elements

*These [organs of action] again [are severally produced from the passionate particles of the ether &c separately]*

It may be asked · Why is it indicated that the organs are elementary, for they are revealed to have been produced from the first cause itself, which is the source of the elements, in the words : From this [supreme] springs vital air, the internal sense, and all the organs ? True, there is such a Vedic text : and in regard to it, adopting the order of the facts, we allow the genesis of the organs from this source of the elements when it has assumed the nature of the elements Accordingly the

एतानि पुनरिति । ननु कथमिन्द्रियाणां भौतिकत्वं निर्दिश्यते यतएषां भूतयोनेः परमकारणादेवोत्पत्तिः श्रूयते एतस्माज्जायते प्राणोमनः सर्व्वेन्द्रियाणि चेति सत्यं श्रूयते तत्रार्थक्रममेवाश्रित्य भूतभावमापन्नात्तस्माद्भूतयोनेरिन्द्रियोत्पत्तिराश्रिता । तथाच न्यायः । अन्तरा विज्ञानमनसीक्रमेण तल्लिङ्गादिति चेन्नाविशेषादिति । नचैतेषां भौतिकत्वे प्रमाणाभावः । अन्नमयं हि सोम्यमनआपोमयाः प्राणास्तेजोमयीवागिति श्रौतलिङ्गस्य प्रमाणत्वात् । नच वागादिष्विन्द्रियत्वमप्रसिद्धमिति वाच्यं प्रज्ञया वाचं समारुह्यवाचाहिसर्व्वाणि नामान्याप्नोतीति कौषीतक्यादौ चक्षरादिभिः सह वाचः समभिव्याहृतत्वात् अ.यर्व्वेणेच चक्षुश्च द्रष्टव्यञ्चत्यादिना सविषयाणीन्द्रियाण्युपक्रम्य हस्तावादातव्यं चोपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च ग.तव्यञ्चेति हस्तादीनामपि सविषयाणां समभिव्याहृतत्वात् । एतानि चेन्द्रियाण्येकादशैव भवन्ति न न्यूनानि नाधिकानि दशेमे पुरुषे प्राणाआत्मैकादशइति श्रुत्यन्तरबाधेन सिद्धान्तितत्वात् । अत्रात्मशब्दोमनोविषयः प्राणशब्दइतरेन्द्रियविषयइति भेदः । अतीन्द्रियत्वं सूक्ष्मत्वं इन्द्रियाग्राह्यत्वमिति यावत् । अणुत्वञ्चैषां परिच्छिन्नत्वे सति सूक्ष्मत्वलक्षणमभ्युपगन्तव्यं नतु परमाणुलक्षणं तथासति सर्व्वशरीरव्यापिकार्य्यानुपपत्तिप्रसङ्गात् अपरिच्छिन्नत्वे चोत्क्रान्तिगत्यागतिश्रुतिव्याकोपप्रसङ्गः । स्थूलत्वे चोत्क्रान्तिसमये बिलान्निर्गच्छन्तइव सर्पाः शरीरच्छिद्रेभ्यो निष्क्रममाणानीन्द्रियाणि प्रत्यक्षेणोपलभ्येरन् । नचोपलभ्यन्ते तस्मादुक्तप्रकारेणाणूनीन्द्रियाणि । नन्वग्निर्व्वाग्भूत्वा मुखं प्राविशदित्यादिश्रुतेरग्न्यादिदेवतानामेव मुखादिस्थानेषु वागादीन्द्रियात्मना प्रवेशश्रवणात् कथमेषां भौतिकत्वमुच्यते इति चेन्नैषदोषः देवतानामप्याधिदैविकप्राणात्मनां भौतिकदेहविशिष्टचेतनानामैश्वर्य्ययोगात् अध्यात्मवागादिरूपेण मुखादिष्ववस्थानस्येष्टत्वात् तथाच भौतिकान्यपीन्द्रियाणि देवताशरीराणि चेति न विरुध्यते । यद्वा इन्द्रियाण्युक्तलक्षणानि भौतिकान्येव देवतानां पुनस्तदधिष्ठातृत्वेन तच्छरीरतया तत्र प्रवेश एवाग्निर्वाग्भूत्वेत्यादावाम्नायतइति । तथाच न्यायोज्योतिराद्यधिष्ठानन्तु तदामननादिति । लिङ्गञ्च स एतास्तेजोमात्राः समभ्याददानोहृदयमेवानुक्रामतीति तेजोमात्राणामिन्द्रियाणामुत्क्रान्तिसमये हृदय प्रवेशमुक्त्वा स यत्रैषचाक्षुषः पुरुषः पराङ्पर्य्यावर्त्ततेतथाच रूपज्ञो भवतीत्यादित्यपुरुषस्य चक्षुषोपक्रमणं दर्शयति । ये पुनर्म्मुख्यप्राणस्य वृत्तिभेदावागादयइति वदन्ति तेप्यनयैव रीत्या निराकरणीयाः । ते हवाचमूचुस्त्वं न उद्गायेत्युपक्रम्यासुरपापविद्धत्वेन वागादीनुद्गातॄन्निर्धार्य्य समाप्य च वागादिप्रकरणमथाहेममासन्नं प्राणमूचुरिति पृथगेव मुख्यप्राणस्य निर्देशात् । तथा सुषुप्तावपि वागादीनामुपसंहारेमुख्यप्राणस्य सवृत्तिकस्यास्तिजागरणमिति वैषम्यलिङ्गाच्च प्राणादिन्द्रियाणां भेदः एवमादिन्यायकलापो द्वितीयेऽध्याये चतुर्थपादे विस्तृतः इह पुनर्वेदान्तसारत्वात् ग्रन्थस्य वेदान्तविहिता न्यायलेशतादर्शिता इति तस्माद्युक्तमिन्द्रियाणां भौतिकत्वादीति स्थितं । इदानीं वायुपञ्चक विभजते ॥

aphorism Excepting the sensations and the internal organ, the [organs] respectively result from that sign, if this be maintained, we deny it, there being no difference Nor is there any want of proof that the organs are composed of the elements, for the words of the Veda, The internal sense, fair sir, is made of earth, the vital airs of water, the voice of light, are proof of this It cannot be objected that the nature of an organ is not ascribed with universal consent to the voice [and other organs of action] for the voice is enumerated together with the eye and other organs in the Kaushîtakî and other Upanishads in the words, By wisdom attaining to speech, With the voice he acquires all names, and in the Âtharvana the hand and other active organs are mentioned together with their objects in the words beginning with The eye, therefore one may see, and thus specifying the organs and their functions, and proceeding The hands, therefore one may handle, the feet therefore one may walk

These organs are eleven in number, neither more nor less; a principle established by the evidence of another text Ten are these organs in a person, soul is the eleventh In this text the term soul stands for the internal organ, and the word organ for the other sensories Supersensibility means minuteness, that is inappreciability to sense Their infinitesimal size is to be understood as minuteness under limitation, not as atomic dimension For were the senses of atomic dimension, it would be impossible that an effect should be produced in them which is diffused over the whole body Again, were they unlimited, a contradiction to the texts affirming their ascension, going, and coming, would emerge Were they of perceptible dimension, the organs of sense when issuing forth from the outlets of the body, would be apprehended by perception like snakes issuing from their holes They are not thus apprehended, and are therefore minute in the aforesaid manner [that is, are of limited dimension, but not of atomic dimension as the Naiyâyikas maintain]

It may be urged. According to the text Fire became the voice and entered the mouth &c, it being revealed that it was the god Agni and the other deities that entered the mouth and other parts as the voice and other organs, why then are they said to be composed of the elements? This we do not allow to be any objection, for we admit that the gods also as identical with the divine senses, since only spirits possessed of an elementary body can possess the power of dominion, reside in the mouth and other parts in the form of divine or spiritual speech &c. There is nothing contradictory in the view that the organs are at once elementary and embodiments of the deities. Or else the organs, as characterised above, are only composed of the elements, and it is only revealed in the text Fire became the voice &c that the gods as the rulers thereof, and as embodied therein, entered those places Accordingly the aphorism Light &c is the ruler, this being revealed Another testimony is given in the words The spirit taking these particles of light ascends unto the heart After shewing that the organs composed of light at the time of their ascension enter the heart, the text proceeds to shew in the words Where this visive spirit turns back again, and thus comes to know colours, that the solar spirit issues forth from the eye

Those, again who maintain that the voice and other organs are special modifications of the principal organ, may be refuted in a similar manner, for the principal organ is separately pointed out in the texts beginning They [the tutelary deities of the senses] spake with the voice, Sing thou for us, and thus indicating that the voice and other organs as tainted with concupiscence, are incapable of hymning aright, in closing the treatment of the voice &c address the proximate organ. So also in dreamless sleep the voice and other organs are retracted, while the principal organ with its function remains awake, another indication of difference between the senses and the principal organ These and other aphorisms are treated in detail in the fourth quarter of the second book [of the Vedânta-sûtra] In this treatise, which gives but a summary of the Vedânta, only a few of the aphorisms laid down in that system are propounded It is determined, then, sufficiently that the organs of sense are composed of the elements &c

The author now proceeds to enumerate the five vital airs

*The vital airs [are respiration, flatulence, circulation, pulsation of the throat and head, and assimilation]* Forward motion means progress forwards Respiration is said to reside in the forepart of the nose, it being a matter of presentative consciousness that it

---

वायवइति प्राग्गमनमग्रतोनिःसरणं यद्यपि प्राणोहृदयइति श्रुतेः हृदि प्राणइत्यभिधानाच्च हृदयं स्थानं प्राणस्य तथापि नासाग्रे प्रत्यक्षमुपलभ्यमानत्वान्नासाग्रस्थानवर्त्तीत्युक्तं अधोनाभेरधस्तात् गमनवान् मलाद्यानयनव्यापारेण । पायुर्गुदं तत्स्थानवर्त्तीत्यर्थः । आदिशब्दादुपस्थपक्षः तत्रापि मूत्ररेतोविसर्गस्यापानकर्म्मत्वात् । विष्वक्परितः सर्व्वतोगमनं विद्यते यस्य स तथा । प्राणापानयोर्नियमनकर्त्ताऽरण्यामग्न्युत्पादनादिवीर्य्यवत् कर्म्महेतुत्वादखिलशरीरवर्त्ती व्यान इत्यर्थः । तथाच श्रुतिः अथ यः प्राणापानयोः सन्धिः सव्यानइत्युपक्रम्य यथा अग्नेर्मन्थनमाजेः सरणं दृढस्य धनुषआयमनमवत्रानपानांतानि करोतीति यद्यपि चक्षुषो वा मूर्द्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यइति श्रुतेरुत्क्रमणस्य चक्षुरादिद्वारेष्वनियमस्तथापि कण्ठसम्बन्धस्य प्रायेण नियतत्वात् कण्ठस्थानवर्त्ती उदानइत्युक्तं । अशितादेः समनयनात् समान इत्यर्थः । मतान्तरमुत्थापयति स्वमतपरिशुद्धये ॥

केचित्त्विति । तेषां लक्षणान्याह ।

त्यागस्तु फलाभिसंधानयुक्तस्येति विरोधाभावात् कर्मण एव विद्याङ्गत्वमिति विद्यायाः प्राधान्यमेव ॥ ९ ॥

"यदेव विद्यया" इति यदुक्तं तत्राह ॥

॥ असार्वत्रिकी ॥ १० ॥

"यदेव विद्यया करोति" इति न सार्वत्रिकी विद्योच्यते। यदेव विद्ययेति प्रसिद्धवन्निर्देशात्। प्रसिद्धिरप्युद्गीथविद्याया एव। "यदेव विद्यया करोति तदेव वीर्यवत्तरम्", इति प्रकृतोद्गीथविद्यायुक्तस्य कर्मणो वीर्यवत्तरत्वसाधनभावो विधीयत इति न विद्या कर्माङ्गम् ॥ १० ॥

यदुक्तं "तं विद्याकर्मणी" इति, तत्राह ॥

॥ विभागः शतवत् ॥ ११ ॥

"तं विद्याकर्मणी समन्वारभेते" इत्यत्र विद्याकर्मणोर्भिन्नफलत्वेन विद्या च स्वस्मै फलायान्वेति, कर्म च स्वस्मै फलायान्वेति, इति विभागः। यथा क्षेत्ररत्नविक्रयणेन शतद्वयमित्यत्र क्षेत्रार्थं शतं, रत्नार्थं शतमिति विभागः[1] ॥ ११ ॥

॥ अध्ययनमात्रवतः ॥ १२ ॥

वेदमधीत्येत्यध्ययनमात्रवत एव कर्मविधानान्न विद्या कर्माङ्गम्। अध्ययनविधिर्ह्यक्षरग्रहणमात्रे पर्यवस्यति। अर्थावबोधपर्यन्तत्वेऽप्यर्थज्ञानार्थान्तरभूता विद्योपासीतेति विहिता विद्या प्रत्ययावृत्तिरूपा। अतोऽस्याः क्वापि न विशेषभावः ॥ १२ ॥

॥ नाविशेषात् ॥ १३ ॥

"कुर्वन्नेवेह कर्माणि" इत्यत्र स्वतन्त्रे कर्मणि विदुदायुषो विनियोग इति विशेषहेतुर्न दृश्यते। "ईशावास्यमिदं सर्वम्" इति विद्याप्रकरणाच्च विद्याङ्गभूतमेतत् कर्मेति विज्ञायते। अतो न विद्यायाः कर्माङ्गत्वम् ॥ १३ ॥

॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥

विद्यामाहात्म्यात् सर्वदा कर्माणि कुर्वन्नपि तैर्न लिप्यते, इति हि वाक्यशेषः[3]। अतश्च विद्याया एव प्राधान्यम् ॥ १४ ॥

॥ कामकारेण चैके ॥ १५ ॥

'किं प्रजया करिष्याम' इत्यादिना कामकारेण विदुषो गार्हस्थ्यस्य त्यागमधीयत एके। अतोऽपि विद्या प्रधानभूता लक्ष्यते ॥ १५ ॥

॥ उपमर्दं च ॥ १६ ॥

विद्यया सर्वकर्मोपमर्दं चाधीयत एके। "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति[1]। अतो न कर्मप्राधान्यम् ॥ १६ ॥

॥ ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतःसु चाश्रमेषु विद्याया एव दर्शनात् तेष्वग्निहोत्राद्यसंभवाच्च न विद्या कर्माङ्गम्। तथाहि, त्रयो धर्मस्कन्धा इति वैदिके शब्दे दृश्यन्ते। त्रय एवाश्रमा धर्माश्रयाः। अतो विद्यैव प्रधानभूता पुरुषार्थहेतुः। तस्यास्त्वङ्गतया प्रधानफलाभिसंधिरहितस्य विहितकर्मणोऽनुवृत्तिरिति सिद्धम्[2] ॥ १७ ॥

॥ परामर्शं जैमिनिरचोदना-

च्चापवदति हि ॥ १८ ॥

पूर्वत्र 'त्रयो धर्मस्कन्धा' इति त्रयाणामेवाश्रमाणां धर्माधारत्वमुक्तम्[3]। अत एवात्र चतुर्थाश्रमधर्मसद्भावे सन्देहे सति पूर्वपक्षः। 'त्रयो धर्मस्कन्धा' इत्यादौ चतुर्थाश्रमाचोदनात्। "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादिचतुर्थाश्रमवचनमुपासनस्तुत्यर्थवादमेव जैमिनिर्मन्यते। अपवदति हि "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इति श्रुतिः। चतुर्थाश्रमेऽतोऽग्निहोत्रपरित्यागे महान् दोष इति नास्ति तत्परित्यागेनाश्रमान्तरमिति ॥ १८ ॥

अथ[4] सिद्धान्तः ॥

॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

गृहस्थाश्रमादिवदाश्रमान्तरं पर्यनुष्ठेयमिति भगवतो बादरायणस्य मतम्। तत्र "त्रयो धर्मस्कन्धा एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति सर्वाश्रमसाम्यश्रुतेरग्न्युद्वासनदोषो गृहस्थविषय एव। अतश्चतुर्थाश्रमधर्मसद्भावः[6] ॥ १९ ॥

॥ विधिर्वा धारणवत् ॥ २० ॥

"उपरि हि देवेभ्यो धारयति" इत्यत्राप्राप्तत्वेन यथा विधिः। तद्वदत्रापि विधिरेव। अथवा जाबालश्रुतौ प्रत्यक्षेण विधिरप्यस्ति। "ब्रह्मचर्यं समाप्य गृही भवेत्, गृही वा वनी भूत्वा प्रव्रजेत्" इति। नात्र क्रमे[7] नियमः। "उत्सन्नाग्निरन-

१–मिति। अतो न विरोधः इति पा०।

२–नं ह्यक्ष–इति पा०।

३ विद्यास्तुतये कर्मानुमतिर्वा विद्यामाहात्म्यम्। सदा कर्म कुर्वन्नपि न तैर्लिप्यत इति विद्या स्तुता स्यात्, 'न कर्मणा लिप्यते पापकेन नर' इति वाक्यशेषः इति पा०।

१ इत्यादिना इति पा०।

२–या फलाभिसंधिरहितस्य विवक्षितकर्मण एवानु–इति पा०।

*–ना चा–इति शंकरभाष्यसंमतः पाठः।

३–त्वं सूचितम् इति पा०।

४ संदेहः। एवं च सति मतान्तरेणाभिधीयत इति। अतोऽग्निहोत्रवतः परस्तादाश्रमान्तरं नास्तीति पूर्वः पक्षः ॥ १८ ॥ उच्यते इति पा०

५–रमप्यनुष्ठेय–इति पा०।

६–मे न धर्मासंभवः इति पा०।

७ इति। अतश्चतुर्थाश्रमधर्मसंपत्तिः। नात्र क्रम–इति पा०।

ग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति श्रुतेः । जन्मान्तरसुकृतपरिपाकेन विशुद्धान्तःकरणस्य ब्रह्मचर्यादेव पारिव्राज्यं भवति ।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु भजमानो व्रजत्यधः ॥

इत्यादिनिषेधस्त्वविरक्तविषयः[1] । "वीरहा वा एष देवानां योऽग्निमुद्वासयत" इत्यग्न्युद्वासननिषेधाद् ब्रह्मचर्यादेव पारिव्राज्यं न गार्हस्थ्यात् परमिति केचित् । तथा सति "वनी भूत्वा प्रव्रजेत्" "उत्सन्नाग्निरनग्निको वा" "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादिविधिवैयर्थ्यं स्यात् । अतो ब्रह्मचर्यादेव प्रव्रजेदिति वा वनी भूत्वा प्रव्रजेदिति वा न[2] निर्बन्धः कार्यः । ब्रह्मचर्यादेव प्रव्रजेदिति वदतामयमभिप्रायः । साग्निरनग्निकश्चेति द्वावेवाश्रमौ । तत्र ब्रह्मचारी परिव्राट् चानग्निर्गृहस्थो वानप्रस्थश्च[3] साग्निरग्निमाधायोद्वास्य पारिव्राज्याद् ब्रह्मचर्यात् पारिव्राज्यमेवातीव मुख्यमिति । अन्यथा श्रुतिविरोधापत्तेः । अतः सर्वाश्रमधर्मसिद्धिः ॥ २० ॥

॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युपक्रम्य "स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथ" इत्येवं जातीयक उदाहरणे उद्गीथादिषु[4] रसतमत्वादिदृष्टिर्विधीयते न वेति संशयः । किं तावत् प्राप्तम् । नोद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते । किंतु, इयमेव जुहूः स्वर्गो लोक आहवनीय इतिवत् कर्माङ्गभूतोद्गीथाद्युपादाय तस्य रसतमत्वादिवचनं स्तुतिमात्रमिति चेत्, इति पूर्वपक्षसमाप्तिः[5] । सिद्धान्त उच्यते । नापूर्वत्वादिति, न स्तुतिमात्रं, किंतूद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयत एव । अपूर्वत्वात् । नचैवं जुहूरित्यादिन्यायावतारः । जुह्वादिविधिवदुद्गीथादिविधेरत्रासंनिधानात् । अतो रसतमत्वादिदृष्टिविधिरेव[6] ॥ २१ ॥

॥ भावशब्दाच्च ॥ २२ ॥

"उद्गीथमुपासीत" इति विधिप्रत्ययश्चात्र श्रूयते । अतोऽपि रसतमत्वादिदृष्टिविधिरिति ॥ २२ ॥

१— त्वज्ञानिविषय एव इति सिद्धम् इति पा० ।

२— ।, वनी भूत्वैव प्रव्रजेदिति न इति पा० ।

३—नग्निर्गृहस्थो वनस्थश्च इति पा० ।

४ इहोद्गीथविद्याया इत्येव पा० ।

५—मात्रम् । अतो न सिद्धिरुद्गीथादिषु रसतमत्वादिदृष्टेरिति चेदिति पूर्वपक्ष—इति पा० ।

६ उच्यते । उद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयत एव । "ओमित्येतदक्षरमुपासीत" इति संनिहितेन विधिनैव जुह्वादिविधिवदुद्गीथसामादिविधिरेव । संनिधानाद्रसतमत्वादिदृष्टिविधिरेव । इति पा० ।

॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

वेदान्तेषु विद्यारम्भे 'प्रतर्दनो ह वै दैवोदासिः', इत्याद्याख्यायिका आम्नाताः । ताः पारिप्लवार्था उत विद्यास्तुत्यर्था इति संशयः । किं तावत् प्राप्तम् । पारिप्लवार्था इति । अश्वमेधयागे 'राजानं सकुटुम्बमुपवेश्य तत्पुरतो वैदिकान्याख्यानान्यध्वर्युणा वक्तव्यानि, तदिदं पारिप्लवमाचक्षीत" इति[1] वाक्येन विहितम् । तत्र "सर्वाण्याख्यानानि पारिप्लवे सन्ति" इति विनियोगादुपनिषदारम्भगता अप्याख्यायिकास्तदर्था इति चेदिति पूर्वः पक्षः । तत्रोत्तरम् । न विशेषितत्वादिति । न पारिप्लवार्थास्ताः । "प्रथमेऽहनि मनुर्वैवस्वतो राजा द्वितीयेऽहनि यमो वैवस्वतो राजा" इत्यादिना पारिप्लवार्थानामाख्यायिकानां विशेषितत्वात् ॥ २३ ॥

औपनिषदाख्यायिकाः संनिहितविद्याविधिभिरेकवाक्यत्वाद् विद्यार्था इत्यर्थ इत्याह[3] ॥

॥ तथाचैकवाक्यतोपबन्धात् ॥ २४ ॥

यथा 'सोऽरोदीद्'—इत्याद्याख्यानानां कर्मविधिभिरेकवाक्यता, तथा विद्याविधिभिरेकवाक्यतोपसंबन्धाच्च विद्यास्तुत्यर्था एवेति ॥ २४ ॥

॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

पूर्वत्रोपपादितोऽन्त्याश्रमसद्भावः । तस्य विद्यार्थमाधानाद्यपेक्षास्ति न वेति संशयः । किं तावत् प्राप्तम् । विद्याङ्गत्वेन कर्मणो विधानाद् विद्यावतामूर्ध्वरेतसां विद्याङ्गत्वेनाधानाद्यनुष्ठेयमिति प्राप्ते ब्रूमः । न तेषामाधानाद्यपेक्षा विद्या । "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादिश्रुतेस्तेषां कर्मत्यागेनैव विद्यावत्त्वावगमात् । किंतु स्वाश्रमधर्मापेक्षा सा । तेषामाधानाद्यनुपपत्तेरिति[4] ॥ २५ ॥

॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

पूर्वाधिकरणे निरूपितमन्त्याश्रमिणामनुपपत्तेराधानाद्यनपेक्षा विद्येति । तदिह गृहिणां विद्या तदपेक्षा न वेति संशयः । एवं सति गृहस्थानामपि विद्याग्नीन्धनादिकर्मानपेक्षिणीति ब्रूमः । तस्य व्यभिचारेण विद्याङ्गत्वानुपपत्तेः[5] । यत्तु विमता विद्या स्वाङ्गभूतकर्मापेक्षा । अङ्गित्वात् । प्रयाजाद्यपेतदर्शपूर्णमासवत् । इत्यनुमानम् । तत्राधानादेव कीदृ-

१ पारिप्लवाख्यं कर्म पारिप्लवमाचक्षत इति इति पा० ।

२ विहितत्वात्, आख्यानानि सन्तीति तत्र तत्र विनियोगादुपनिषदारम्भपठिताख्यायिका अत—इति पा० ।

३—दानामाख्यायिकानां तच्छेषत्वं न संभवतीति संनिहितविधिनैकवाक्यत्वाद्विद्यार्था इति । अतश्चाह इति पा० ।

४—त्वात् । तेष्वाधानाद्यनपेक्षा विद्याख्याश्रमधर्मापेक्षा । तेषामाधानादेरनुपपन्नत्वादिति युक्तमेव इति पा० ।

५—मः । कर्मणो वि—इति पा० ।

शमङ्गत्वं साध्यम् । प्रयाजादिवत् फलोपकारित्वं वा, अवघातादिवत् स्वरूपोपकारित्वं वा । नाद्यः । तज्जन्यत्वे मुक्तेरनित्यत्वं स्यात् । द्वितीये साध्यविकलो दृष्टान्तः । अतो न विद्याङ्गत्वं कर्मणः ।

तस्माद् गृहिणामपि विद्या कर्मानपेक्षेति पूर्वः पक्षः । सिद्धान्तस्तु, कर्मवत्सु गृहस्थेषु विद्याग्निहोत्रादिसर्वकर्मापेक्षा । "यज्ञेन दानेन" इति श्रुतेः । यज्ञादीनां पारमेश्वरनियोगसिद्धत्वाच्च । यथाश्वो गमनसाधनभूतोऽपि स्वपरिकरबन्धापेक्षो गमने, तथा विद्यापीति कर्मणः फलाभिसंधिरहितत्वेन विद्यास्वरूपोपकार्यङ्गत्वाच्च तज्जन्यत्वं मोक्षफलस्य । किंतु साक्षाज्ज्ञानफलमेव मोक्षः । अतो गृहस्थानां यज्ञादिसापेक्षा विद्या सर्वेषामाश्रमविद्यायाः कर्मापेक्षत्वम्[1] ॥ २६ ॥

॥ शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

"शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्, श्रद्धाभक्तिध्यानयोगादवेहि" इत्यादिना विद्यायाः[2] शमादिसंपत्त्यपेक्षा श्रुतेति । सा शमादिसंपत्तिर्गृहिणां संभवति न[3]वेति संशयः । यज्ञादिमत्तया[4] बहुव्यापारव्याकुलानां तेषां तदुपरतिरूपा शमदमादिसंपत्तिर्न संभवतीति प्राप्त उच्यते । गृहस्थो विहितकर्मव्यापृतोऽपि निषिद्धकाम्यादिकर्मसु व्यापाररहितः शमाद्युपेतः स्यात् । 'शान्तो दान्त' इत्यादिना 'श्रद्धाभक्तिध्यानयोगादवेहि' इत्यादिना च शमादेर्विहितत्वाद् विद्यानिष्पत्तये तदङ्गत्वेन तेषामवश्यानुष्ठेयत्वात् । आन्तराणां रागद्वेषादिकषायाणामनाविर्भूतिः शमः । सर्वेषामिन्द्रियाणामविहितव्यापारेभ्यो निवर्तनं[5] दमः । निषिद्धकाम्यकर्मव्यापारोपरम उपरतिः ।

द्वन्द्वसहिष्णुत्वं तितिक्षा । विसृष्टकामादिव्याक्षेपस्य चित्तस्य परत्वाभिमुख्यं समाधानम् । अपुरुषार्थसकलेतरशास्त्रपराङ्मुखी परविद्यामयपरमात्मतन्त्रोपनिषद्गोष्ठीसमुत्कण्ठारूपा सत्त्वकला श्रद्धा । विनिर्मुक्तसकलेतरदेवतानुरागा त्रिविधकरणसंपाद्या विशिष्टाष्टाङ्गयोगिनी परमशिवपरिचर्यामयी वैदिकी क्रिया भक्तिः । परमानन्दावेशमय[7]महामोक्षलक्ष्मीदर्शनत्वरा मुमुक्षा । ऐहिकामुष्मिकसकलभोगपराङ्मुखत्वरूपेण वैराग्येण नित्यानित्यवस्तुनिर्धारणाकारेण विवेकेन च विशिष्टस्य शमादिसंपत्तिक्रमेण संभवति मुमुक्षा[1] । एते विवेकादयो मुमुक्षापर्यन्ताः परमा धर्माः सर्वेषामाश्रमिणां विद्यार्थमविशेषेणानुष्ठेया इति ॥ २७ ॥

॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

प्राणविद्यायां पठ्यते । "न ह वा एवंविदि किंचानान्नं भवति" इतीह प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः प्रतीयते । तदेषा युक्ता न वेति संशयः । किं तावत् प्राप्तम् । मानान्तरप्राप्तस्य भोजनस्याविधेयत्वादिह सर्वान्नानुमतिरप्राप्ता विधीयते । इति प्राप्ते समाधीयते । प्राण[2]विद्यानिष्ठस्यापि सर्वान्नानुमतिर्न सर्वदा, किं तु प्राणात्यय एव । अधिकशक्तेरुषस्तेर्ब्रह्मविदोऽपि हि प्राणात्यय एवोच्छिष्टभक्षणादौ श्रुतिर्दृश्यते । "मटचीहतेषु कुरुष्वाटक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे, स होवाच, नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच, तानस्मै प्रददौ, हन्तानुपानमित्युच्छिष्टं मे पीतं स्यादिति होवाच मस्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन् इति होवाच, कामो म उदपानम्" इत्यादिरूपा । अतः प्राणात्यय एव सर्वान्नानुमतिः परविद्यावतोऽपीति ॥ २८ ॥

॥ अबाधाच्च ॥ २९ ॥

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिप्रतिलम्भे सर्वग्रन्थीनां[3] विमोक्ष" इत्याहारशुद्धेरबाधाच्च प्राणसंशय एव सर्वान्नानुमतिः ॥ २९ ॥

॥ अपि च स्मर्यते ॥ ३० ॥

प्राणसंशय एव सर्वान्नानुमतिः स्मर्यतेऽपि ।

प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

इति[4] ॥ ३० ॥

॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥

तस्माद् "ब्राह्मणः सुरां न पिबेत्" इति कामकारनिवृत्तौ शब्दश्च भवति । अतश्च प्राणसंशय एव विदुषोऽपि सर्वान्नानुमतिः । अन्यथा निषिद्धाचरणेन परमेश्वराज्ञाद्रोहो स्यादिति भावः ॥ ३१ ॥

१—षामाश्रमिणां स्वविहितकर्मापेक्षा विद्येति युक्तमेव इति पा० ।
२ विद्यावतां इति पा० ।
३—क्तिः श्रूयते । तदेषां विद्यावत्त्वे सर्वाश्रमसाधारणी न इति पा० ।
४—यः । किं तावत् प्राप्यते । यज्ञादिरहितानामन्त्याश्रमिणामेव व्यापारोपशमरूपताशमादिसंपत्तिरुपपद्यते । विद्यावत्त्वेऽपि गृहिणां यज्ञादिमत्तया इति पा० ।
५ निग्रहो इति पा० ।
६ विलष्टतन्द्रीव्या—इति पा० ।
७—न्दलाभमय—इति पा० ।

१—क्तिः क्रमेण संभवति इति पा० ।
२ ब्रह्म—इति पा० ।
३—नां वि- इति पा० ।
४ अतश्चेति इति पा० ।

॥ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

विद्याहीनस्य विद्यावतोऽपि गृहस्थस्याश्रमकर्म यज्ञादिकं "यावज्जीवमग्निहोत्रं जुहोति" इति विहिततया च "यज्ञेन दानेन" इति श्रुतेर्विद्यासाधनतया चानुष्ठेयमवगम्यते ॥ ३२ ॥

॥ सहकारित्वेन च ॥ ३३ ॥

विद्यावतोऽपि "विद्यां चाविद्यां च"इतिश्रुतेर्विद्याङ्गतया[1] विहिततया चानुष्ठेयमवगम्यते ॥ ३३ ॥

तदिह विद्याहीनेन विद्यावता च यज्ञादिकं विद्यासाधनत्वेनाङ्गत्वेन च द्विरनुष्ठेयं सकृदनुष्ठेयं वेति संशये सत्युभयविधिबलाद् द्विरनुष्ठेयमिति प्राप्ते सिद्धान्त उच्यते ॥

॥ सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

उभयत्र विनियोगेनोभयाकारत्वेऽपि त एव यज्ञादयः सर्वत्र प्रत्यभिज्ञानात् । एवं च कर्मस्वरूपैक्ये[2] सति संयोगपृथक्त्वन्यायेन न विरोधः । सकृत् प्रयोगेऽपि वचनद्वयबलेन कर्मण एकस्याप्याकारद्वयोपपत्तेः । यथा "खादिरो यूपो भवति" "खादिरं वीर्यकामस्य यूपं कुर्वन्ति[3]" इत्यत्र वचनद्वयबलेन नित्यत्वं काम्यत्वं चैकस्य[4] खादिरत्वस्य तद्वत् । ततो विदुषोऽप्यविदुषोऽपि विद्याङ्गतया विद्याहेतुतया विहिततया च सकृदेवानुष्ठेयं यज्ञादिकमिति ॥ ३४ ॥

॥ अनभिभवं च दर्शयति ॥ ३५ ॥

"धर्मेण पापमपनुदति" इति श्रुतिर्विद्योत्पत्तिप्रतिबन्धकदुरितनिवर्तनेन विद्याया अनभिभवं कर्मानुष्ठानकार्यं च दर्शयति । अतो न पूर्वोक्तविरोधः ॥ ३५ ॥

॥ अन्तरा चापितु तद्दृष्टेः ॥ ३६ ॥

उक्तमाश्रमिणां विद्या संपद्यत इति ।

इहानाश्रमिणां विद्या संपद्यते न वेति नियामकाभावात् संदेहः । अनाश्रमिणः स्नातकविधुराश्च, तेषां ब्रह्मविद्या न संभवति । चित्तशुद्धिहेतुत्वेन विद्यायाः साधनभूतानामाश्रमधर्माणामभावादिति प्राप्ते वदामः । रैक्वादिषु विद्यादर्शनादनाश्रमिणामपि विद्या संभवत्येव ॥ ३६ ॥

यदुक्तं विद्यासाधनाश्रमधर्माभावादिति । तत्राह ॥

॥ अपि च स्मर्यते ॥ ३७ ॥

अनाश्रमिणामपि जपादिना विद्यानुग्रहः स्मर्यते ।

जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥

अतस्तस्यापि ज्ञानसंपत्तिः ॥ ३७ ॥

॥ विशेषानुग्रहश्च ॥ ३८ ॥

आश्रमनियतधर्मविशेषेणापि विद्यानुग्रहः श्रूयते । "तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विष्य" इति ॥ ३८ ॥

॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अनाश्रमित्वादितरदाश्रमित्वं ज्यायः । धर्मभूयस्त्वात् ।
"अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः" ।

इति स्मृतेश्च । एवमनाश्रमित्वादाश्रमित्वं वरमेव । तथाप्यापद्विषयेऽनाश्रमिणामपि जप्यादिसाधनेन विद्या संपद्यत एवेति ॥ ३९ ॥

॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥ ४० ॥

इहोर्ध्वरेतसां पूर्वाश्रमावरोहोऽस्ति न वेति संदेहः । "ब्रह्मचर्यं समाप्य गृही भवेद्, गृहाद्वा वनी भूत्वा प्रव्रजेत्", इत्याश्रमारोहो यथा स्वेच्छाधीनस्तथावरोहोऽपीति प्राप्ते सिद्धान्तयामः । नैष्ठिकादिभूतस्यातद्भावः । ततः प्रच्युतिर्न संभवति । कुतः । नियमात् तद्रूपाभावेभ्यः । नियच्छन्ति ह्यत्यन्तमात्मानमाचार्यकुलेऽवसादयन्ति, इति । "अरण्यमियात्, ततो न पुनरेयात्", इति "संन्यस्याग्नीन् न पुनरावर्तयेत्", इति च शास्त्राणि नियच्छन्ति । नचारोहरूपशास्त्रवदवरोहरूपशास्त्राणि सन्ति । अतस्तेषामप्रच्युतिनियमश्रुतेः प्रच्युतौ श्रुत्याद्यभावाच्च न तेषां विद्याधिकारः । जैमिनेरप्येवमेव मतम्[1] ॥ ४० ॥

आरूढपतितस्य प्रायश्चित्तादिना विद्याधिकारो नास्तीत्याह ॥

॥ नचाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ४१ ॥

यदवकीर्णिनो गर्दभपश्वालम्भनम् । अवकीर्णिपशुश्च । तद्वदित्यधिकारिलक्षणोक्तं प्रायश्चित्तं, तदप्यारूढपतितस्य न संभवति ।

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते नरः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" ॥

---

१ विद्यावतामपि "तमेतं वेदानुवचनेन" इत्यादिना विद्याङ्गतया इति पा० ।

२—नात्लिङ्गात् कर्मस्व—इति पा० ।

३ कुर्यात्' इति पा० ।

४—कस्य कर्मणस्तदुभयविधानाद् यज्ञादिकर्मणः सकृत् प्रयोगात् इति पा० ।

१ उक्ता ह्याश्रमभेदाः । इहान्त्याश्रमस्य पूर्वाश्रमावरोहोऽस्ति न वेति संदेहः । किमुच्यते । 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्, इत्याश्रमारोहवदवरोहोऽप्यस्तीति प्राप्त उच्यते । 'न पुनरेयात्' इति 'संन्यस्य न च पुनरावर्तयेत्' इति । अतस्तेषां प्रत्यावृत्त्य स्थित्यभावाच्च विद्याधिकारः । जैमिनेरप्येवमेव मतम् । तस्मादारोहवन्नावरोहोऽन्त्याश्रमिण इति ॥ ४० ॥ इत्येव पा० ।

इति तस्य प्रायश्चित्तानधिकारस्मृतेस्तदसंभवात्[1] ॥ ४१ ॥

॥ उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ ४२ ॥

उपपातकत्वात् प्रायश्चित्तमप्येके मन्यन्ते । मध्वशनप्रायश्चित्तवत् । तदुक्तम् । "उत्तरेषां चैतदविरोधि" इति । उपकुर्वाणस्य यदुक्तं तत् स्वाश्रमाविरोध्यन्येषामप्याश्रमिणां भवतीत्यर्थः ॥ ४२ ॥

॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

उपपातकत्वे महापातकत्वेऽपि कर्माधिकारादिबहिष्कृता एते ।

"प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" ।

इति स्मृतेः । शिष्टबहिष्काराच्च । अतः सर्वथैवारूढपतितानां न[2] विद्याधिकारः ॥ ४३ ॥

॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

उक्तमुद्गीथाद्युपासनं, तदनुष्ठानं यजमानस्य, उत ऋत्विजामिति संशयः । किं प्राप्तम् । उद्गीथाद्युपासनं यजमानस्यैवानुष्ठेयम् । तस्यैव वीर्यवत्तरत्वफलश्रवणात् । नर्त्विजामित्यात्रेयमतम् ॥ ४४ ॥

सिद्धान्त उच्यते ॥

॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

"एवंविदुद्गाता ब्रूयात्[3]" इति वाक्यशेषादुद्गातुरुपासकत्वं स्फुटं श्रूयते । आर्त्विज्यमेव तदनुष्ठानमित्यौडुलोमिमतम् । कथमन्यकर्तृकमन्यगामिफलं स्यादिति चेत् । ऋत्विजां कर्मस्वरूपवदशेषाङ्गानुष्ठानाय यजमानेन क्रीतत्वात् । साङ्गकर्मानुष्ठानाय हि ऋत्विजो यजमानेन परिक्रीयन्ते । तस्मादृत्विक्कृतं यजमानकृतमेवेति । फलं च तस्य स्वामिन एवेति न विरोधः ॥ ४५ ॥

॥ सहकार्यान्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्* ॥ ४६ ॥

कहोलब्राह्मणे श्रूयते । "तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः", इति बहूपनिषत्तात्पर्यनिर्णयरूपं पाण्डित्यं निःशेषेण संपाद्य बाल्येन रागद्वेषादिरहितत्वात् बाल्यसदृशेनावस्थान्तरेणावतिष्ठेत । ततः "पाण्डित्यं बाल्ये निःशेषं संपाद्याथ मुनिः", इति । अत्र पाण्डित्यबाल्यवन्मौनमपि विधीयते न वेति संशये मुनिरित्यत्र भवेदित्यादिविधिप्रयोगाभावान्न विधीयत इति प्राप्तेऽभिधीयते । विद्यावतो यज्ञादिवत् पाण्डित्यबाल्ययोस्तृतीयं सहकार्यन्तरं मौनं विधीयत एव । प्रकृष्टमननशीले मुनिशब्दस्य प्रसिद्धेः विद्यानिष्पत्त्यर्थमुपास्यविषयाभ्यां सरूपमिदं प्रकृष्टमननं तिष्ठासेदिति पदानुवृत्त्या विधिरप्युपपद्यते । ततो मौनविधिः संभवति विद्यावत इति ॥ ४६ ॥

॥ कृत्स्नभावात् तु गृहिणोपसंहारः ॥ ४७ ॥

इह सर्वेषामाश्रमाणां विद्या साधारणी, उत विशेषोऽस्तीति संशयः । ब्रह्मचारिणो वेदाभ्यास आचार्यपरवशत्वाद् गृहस्थस्य कुटुम्बभरणायासितत्वाद् वनस्थस्य वैखानसधर्मव्यापृतत्वाच्च तेषां ज्ञानध्याने संभवतः[1] ।

"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः" ।

इति वेदान्तार्थज्ञानवतां संन्यासयोगश्रवणात्, "अन्त्याश्रमस्य इति ध्यानविधौ दर्शनाच्चान्त्याश्रमिणामेव ज्ञानध्याने । नापरेषामिति पूर्वः पक्षः । सर्वेष्वाश्रमेषु विद्या संभवत्येव । छान्दोग्ये "कुटुम्बे शुचौ देशे स्वाध्यायमधीयान" इत्यारभ्य "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते, नच पुनरावर्तते" इति कृत्स्नाश्रमेषु विद्यासद्भावप्रदर्शनात् । तत्र गृहिणोपसंहारः सर्वेषां प्रदर्शनार्थः । एवमन्त्याश्रमवचनमपि सर्वेषामाश्रमाणां प्रदर्शनार्थम् । अतः सर्वेषामाश्रमिणां विद्यास्त्येव[2] । फलत्यागः सन्यासः[3] । यतित्वं जितेन्द्रियत्वम् । सर्वमिदं सर्वेषां संभवत्येव[4] ॥ ४७ ॥

मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

अथर्वशिरसि श्रूयते ।

"तृष्णां छित्त्वा हेतुजालस्य मूलम् ।
बुद्ध्या संचिन्त्य स्थापयित्वा च रुद्रे" ॥

"रुद्र एकत्वमाहुः" । "रुद्रं शाश्वतं वै पुराणमिषमूर्जं तपसा नियच्छत व्रतमेतत् पाशुपतम्", इति । तत् पाशुपतव्रतमथर्वशिरसि श्रुतम् । पुराणेषु च प्रसिद्धमेव । तन्निष्ठाना विद्याप्राप्तिर्मुक्तिश्च संभवति न वेति संशयः । किं प्राप्तम् । आश्रमेष्वनन्तर्भावात्, अवसान[5]दर्शनात् पुत्राद्यर्थं ऋणादि-

१ आधिकारिकमधिकारिलक्षणोक्तं प्रायश्चित्तमपि तस्य न संभवति । तस्य प्रायश्चित्तानधिकारस्मृतेस्तदसंभवात् । 'आरूढो नैष्ठिकम्' इत्यारभ्य 'प्रायश्चित्तं न पश्यामि' इति स्मृतेस्तदसंभवः ॥ ४१ ॥ इति पा० ।

२—यान्त्याश्रमिणोऽवरोहो न नवा तस्य इति पा० ।

३ उद्गायेत्, इति पा० ।

* अतः पूर्वं मुद्रितशंकरभाष्ये श्रुतेश्च इत्येतत् सूत्रमस्ति, तदेतन्मते नास्त्येव ।

१—यासितत्वाच्च तयोर्निवृत्तिरूपं ज्ञानं संभवति इति पा० ।

२—मिति प्राप्त उच्यते । यतः सर्वेषामाश्रमिणां विद्यास्त्येव । इति पा०

३ संन्यासः । "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः" इति स्मृतेः । इति पा० ।

४—समानमेव इति पा० ।

५ अवस्था—इति पा० ।

भिरनुष्ठितत्वात्, अवान्तरफलसिद्धिमन्तरेण तेषां न मोक्षसिद्धिरस्तीति प्राप्ते ब्रूमः । तेषामत्यन्तव्रतधारिणां मुक्तिरेव फलं संभवति । विद्यासंपत्तिश्च परब्रह्मणो रुद्रस्यानुसंधानरूपा । मुनिधर्मवदितरेषामपि भिक्षाचर्यशमदमादीनां परधर्माणां पाशुपताख्ये व्रतेऽप्युपदेशात् । तन्निष्ठानामपि "रुद्र एकत्वमाहुः" । "रुद्रं शाश्वतं वै पुराणमिषमूर्जं तपसा नियच्छत, व्रतमेतत् पाशुपतम्" । "अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् तस्माद्व्रतमेतत् पाशुपतं पशुपाशविमोक्षाय" इति रुद्राध्यायस्य पाशविच्छेदरूपस्य मोक्षफलस्य संबन्धावगमाच्च[1] । अतो यावदायुषं पाशुपतव्रतधारिणां मुक्तिरेव फलम् ॥ ४८ ॥

यदुक्तमाश्रमेष्वनन्तर्भाव इति तत्राह ॥

॥ अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

आश्रमान्तररूपेणात्मानमनाविष्कुर्वन्नव्यक्तीभवन्नपि पाशुपताश्रमो विद्यासाधनब्रह्मचर्यादियतिधर्मसमन्वयाश्रमसंज्ञकोऽयमाश्रमभेदः स्वतन्त्रः परमशिवप्राप्तिहेतुः । "यावच्छरीरपातं द्वादशाब्दमथापि वा" इत्युक्तेरात्यन्तिकसावधित्वेन पाशुपतव्रतस्य विकल्पः । तत्रात्यन्तिकमन्त्याश्रमसंज्ञकमपवर्गहेतुः । तदन्यद्भोगहेतुरिति व्यवस्था । एवं भुक्तिमुक्तिहेतुतयोभयात्मकमिदं व्रतं शिवप्रसादकरं श्रुतिरेव विदधाति । यथा नाप्रामाण्यपातोऽस्या भवति तथा योजनीयम् ॥ ४९ ॥

॥ ऐहिकमप्रस्तुत[2]प्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

उक्तक्रमोपासननिष्ठानामैहिकं मुक्तिफलम्, उत जन्मान्तरे वा भवतीति संशये विचार्यते । इहैव मे जन्मनि मुक्तिर्जायतामित्यभि[3]संधाय पुरुष उपासने प्रवर्तते, नतु जन्मान्तर इति कः प्रयोजनस्य विलम्बनमीहते । तस्मादैहिकमेव मुक्तिफलं भवति । न चेत् कदाचिदपि न भवति । इति प्राप्ते वदामः । प्रबलकर्मान्तरप्रतिबन्धाभावे परोपासनफलमिह जन्मनि भवति । तत्सद्भावे तु जन्मान्तरे । यथाभ्युदयफलं स्वसाधनभूतपुण्यं कर्मानन्तरमेव संपद्यत इति न नियमः । किंतु प्रतिबन्धकसद्भावे जन्मान्तरे भवति, तद्वद् । वामदेवादिषु जन्मान्तरश्रवणादिबलेन तत्फलदर्शनात् । ततो नैहिकत्वे मुक्तिफलस्य नियम इति ॥ ५० ॥

॥ एवं मुक्तिफलानियमस्तदवस्थावधृते-

स्तदवस्थावधृतेः ॥ ५१ ॥

केवलकर्मफलाभ्युदयवन्मुक्तिफलमपि प्रबलकर्मान्तरप्रतिबन्धाभावे भवतीति निरूपितम् । तन्न्यायेन[1] कर्मफलवज्ज्ञा[2]नफलस्यापि सातिशयत्वा[3]नियमोऽस्ति, न वेति, संशयः । किं तावत् प्राप्तम् । कर्मफलवन्मुक्तिफलमपि सातिशयम्[4] । "ज्योतिष्टोमेन स्वर्गकामो यजेत", "वाजपेयेन स्वाराज्यकामो यजेत", इत्यादिभिः कर्मफलस्य सातिशयत्वमवगम्यते । तद्वदुपासनज्ञानफलस्यापि । इति प्राप्तेऽभिधीयते । कर्मफलस्य न सातिशयत्वनियमः[5] । ब्रह्मस्वरूपावस्थाया एव फलत्वावधृतेः[6] । सर्वेषामपि विद्यावतां ब्रह्मस्वरूपस्यैकत्वाच्च वैषम्यकथात्र संभवति । नचोपासनतारतम्यान्मुक्तिरूपस्य तत्फलस्य तारतम्यं स्यादिति वाच्यम्[7] । उपासनकर्मणां मुक्तिफलव्यतिरेकेण फलान्तराभावात् । ब्रह्मणा एकत्वेन तद्रूपस्य मुक्तिफलस्याप्येकत्वात्[8] । अतो न मोक्षफलवैषम्यमिति ॥ ५१ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्च तृतीयोऽध्यायः ॥ :: :: ॥

१—स्यात्र संबन्धोऽवगम्यते इति पा० ।

२ मुद्रितशंकरभाष्यसंवलितपुस्तके ऐहिकमप्यप्रस्तुत—इति पा० ।

३—मिति मनस्यभि—इति पा० ।

१ एवं न्यायेन इति पा० ।

२—वन्मुक्ति—इति पा० ।

३—त्वादिनि—इति पा० ।

४ सातिशयवत्, इति पा० ।

५—ते । न कर्मफलस्येव ज्ञानोपासनस्य सातिशयत्वादिनियमः इति पा० ।

६ एव प्राप्यतयावगतेः इति पा० ।

७—कथा । तत्रापि चोपासनकर्मतारतम्यान्मुक्तिरूपस्य फलस्य तारतम्यमिति न वाच्यम् इति पा० ।

८—स्य चैकत्वमेव । इति पा० ।

## ॥ अथ वेदान्तसूत्रभाष्यसंबन्धिचतुर्थाध्यायस्य ॥

॥ चतुर्थपादारम्भ. ॥

॥ आवृत्तिरसकृदुपदेशात् ॥ १ ॥

विचारिताः खलूपासकोपास्योपासनभेदाश्रमधर्मादयस्तृतीयाध्याये[1] । इह पुनश्चतुर्थाध्याये प्रथमे पाद उपासनाप्रकारः । द्वितीये जीवस्योपासकस्योत्क्रान्तिदशा । तृतीयेऽर्चिरादिगतिः । चतुर्थे ब्रह्म प्राप्तस्यावस्था च निरूप्यते । प्रथमाधिकरणेऽत्र "ब्रह्मविदाप्नोति परम्" । "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इत्यादिषु मोक्षसाधनतया विहितं वेदनं सकृदनुष्ठेयम्[2] । उतावर्तनीयम् । इति संशयः । किं तावत् प्राप्तम् । सकृदनुष्ठेयम् । 'सकृत् कृते कृतः शास्त्रार्थ' इति न्या-

१—तः खलूपासकोपास्यजीवैश्वर्योपासनभेदाश्रमादिव्यवस्थापकस्तृतीयोऽध्यायः । इति पा० ।

२—तमुपासनज्ञानं सकृदनुसंधेयम् इति पा० ।

यात् । प्रयाजादिवत् । सकृदनुष्ठानेऽपि वेदनज्ञानशब्दार्थसिद्धेः[1]। इति प्राप्ते ब्रूमः । "ब्रह्मविदाप्नोति परम्" इत्यादिषु मोक्षसाधनतया विहितं वेदनमसकृदावर्तनीयम् । "मनो ब्रह्मेत्युपासीत", "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद स मयैतदुक्तं," "अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से," इत्यादिश्रुतिषूपक्रमोपसंहारयोर्विद्योपास्त्योर्व्यतिकरोपदेशेन च मोक्षसाधनरूपस्य वेदनस्योपासनारूपत्वावगमात् । उपासनशब्दस्य च स्मृतिसंतानवाचित्वात्[2]। यदुक्तं, प्रयाजादिवदिति । तस्यादृष्टफलत्वाद्युक्तं सकृदनुष्ठानम् । वेदनफलस्य साक्षात्कारस्य[3] दृष्टत्वात् तस्याफलोदयमावृत्तिः । अवघातादिवदिति ॥ १ ॥

॥ लिङ्गाच्च ॥ २ ॥

अस्मिन् विषये लिङ्गं चास्ति ।

"क्षेत्रज्ञस्येश्वर[4]ज्ञानाद्विशुद्धिः परमा मता ।
महापातकयुक्तो वा युक्तो वाप्युपपातकैः ॥
प्रविश्य रजनीपादं ब्रह्मध्यानं समभ्यसेत् ।
आध्यात्मिकान् योगाननुतिष्ठेत् ।
रुक्माभं[5] स्वप्नधीगम्यं विद्यात् तु पुरुषं परम्" ॥

इत्यादि । अतश्च ब्रह्मवेदनस्यावृत्तिरिति ॥ २ ॥

॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

पूर्वत्र ब्रह्मण उपासनमावृत्तिमदभिहितम् । तदात्मनस्तद्भावेनोपासनमुत तदर्थान्तरत्वेनेति विचारः । एवं सति "विश्वाधिको रुद्रो महर्षिः," "अधिकं तु भेदनिर्देशात्" इत्यादिश्रुतिसूत्रेषु प्रत्यगात्मनः पशोर्जीवात् पत्युः परब्रह्मणोऽर्थान्तरत्वेन निरूपितत्वात् सर्वज्ञत्वादिना जीवस्य ब्रह्मभावाघटनाच्च ब्रह्मोपासनं जीवस्य स्वभिन्नत्वेनैव युज्यत इति पूर्वः पक्षः ।

सिद्धान्तस्तु[6],

यद्यपि जीवादधिकमेव शिवाख्यं परं ब्रह्म, तथाप्युपासिताहं ब्रह्मास्मीति तदुपासीत । यतः पूर्वेऽप्युपासितारस्त्वं वाहमस्मि भगवो देवते, अहं वै त्वमसीत्यात्मन्येवावगच्छन्ति । उपासितुरर्थान्तरत्वेऽपि तानुपासितॄननुगृह्णाति स्वस्वरूपतया परं ब्रह्म । ते च पुनः स्वात्मतया ग्राहयन्ति परानपि शिष्यांस्तत्त्वमसीत्यादिना । निरतिशयदुःखात्मकनिखिलपाशसंबन्धोच्छेदो निरवधिकपरमानन्दमयनिष्कलङ्कशिवत्वप्राप्तिर्हि मुक्तिः । शिवत्वप्राप्तिरात्मनः[1] पशुत्वनिवृत्तिमन्तरेण न संभवति । पशुत्वनिवृत्तिश्च न तद्भावनां विना । अतो निरन्तरं शिवोऽहमिति भावनाप्रवाहेन शिथिलितपाशतयापगतपशुभाव उपासकः शिव एव भवति । निरस्तसमस्तदोषकलङ्कशङ्कं निरतिशयमङ्गलास्पदं हि शिवतत्त्वं, परं ब्रह्म च तादृगेव । तद्भावनयोपासकश्च तथैव भवति । अत एव तदन्यस्य मुमुक्षुध्येयत्वं निषिध्यते । "शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य" इत्यादिश्रुतिषु । निवृत्तब्राह्मणादिदेहाभिमानमयपशुभावस्य निरतियस्वरूपानन्दसाक्षिस्वप्रकाशशिवरूपपराहंभावापत्तिर्मुक्तिरिति सर्वश्रुतितात्पर्यात्[2] ॥ ३ ॥

ब्रह्मभावेनोपासनमुपासकस्य मुक्तिकरम्, अन्यथा संसारानिवृत्तिरिति विशेषमाह ॥

॥ न प्रतीके न हि सः ॥ ४ ॥

"मनो ब्रह्मेत्युपासीत" इत्यादिषु मनःप्रभृतिषु ब्रह्मोपासनमवगम्यते । तेष्वप्यात्मत्वेनो[3]पासनमुत भिन्नत्वेनेति संशये पूर्वपक्षः । "मनो[4] ब्रह्मेत्युपासीत" "आदित्यो ब्रह्मेत्युपासीत" इत्यादिना सिद्धेषु प्रतीकोपासनेषु ब्रह्मदृष्ट्या संस्तुतं मनःप्रभृतिकमुपास्यमवगम्यते । अतः प्रतीकमुपासकेन ब्रह्मात्मतया भावितमित्यात्मवदुपासने को विरोध इति प्राप्त उच्यते । नात्मग्रहणम् । प्रतीकेषु तेषु तेषु हि न परं ब्रह्मोपास्यम् । किंतु ब्रह्मदृष्ट्या मनःप्रभृतिकमुपास्यम्[5] । तत्र मनआदिविशिष्टस्य ब्रह्मण एवोपास्यत्वेऽपि मनआदेर्ब्रह्मगुणत्वाभावात् । विकारत्वेन तु तद्विविशिष्टे ब्रह्मणि नात्मग्रहणम् । किंतु सत्यसंकल्पत्वादिविशिष्टे । अन्यथा ह्यात्मनोऽपि विकारास्पदत्वं स्यात् । अतः प्रतीके नात्मग्रहणमुपासकानाम् । न तत्र परमेश्वरः साक्षादुपास्य इति ॥ ४ ॥

॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

प्रतीकोपासने मनआदित्यादिप्रतीके न कर्तव्या, उत ब्रह्मणि दृष्टिरिति संदेहे पूर्वः पक्षः[6] । "मनो ब्रह्मेत्युपासीत"

१ वेदनोपासनस्य सिद्धत्वम् । इति पा० ।

२ मोक्षसाधनमसकृदावृत्तम् । "विद्यादुपासीत" इति विद्योपास्त्योरुपक्रमोपसंहारयोर्व्यतिरेकेणोपदेशात् । इति पा० ।

३ ब्रह्मसाक्षात्काररूपत्वेन इति पा० ।

४ प्रत्यक्षेणेश्वर—इति पा० ।

५ मता । रुक्माभं इति पा० ।

६—दिना चाप्यत्वादिना च ब्रह्मभावो जीवस्य न संभवति । ततो ब्रह्मोपासनं जीवस्य तद्भिन्नत्वेन हि युज्यत इति पूर्वं प्राप्तम् । अथोच्यते सिद्धान्तः इति पा० ।

१ पशुत्वनिवृत्तिः शिवत्वप्राप्तिरिहोक्तं भवति । कथं, शिव—इति पा० ।

२—साक्षित्वप्रकाशः । शिवरूपपरमाहंभावापत्तिर्मुक्तिरिति तात्पर्याच्च इति पा० ।

३ तदिह पूर्वन्यायेन तेष्वपि तद्भावेनो—इति पा० ।

४—पासनमिति संशयः । किमुक्तं भवति । मनो इति पा० ।

५ तेषु न ब्रह्मदृष्ट्या मनःप्रभृतिकमुपास्यम् । इति पा० ।

६ उक्तं प्रतीकोपासनमभ्युदयफलम् । तदिह मनआदिके ब्रह्मदृष्टिरुपासकेन कर्तव्या, उत ब्रह्मणि तद्दृष्टिरिति संदिह्यते । तथा सति पूर्वमिदं प्राप्तं भवति । इति पा० ।

इत्यादिषु मनआदिदृष्टिं ब्रह्मणि कृत्वा ब्रह्मोपासनीयम् । तस्यैव फलदातृत्वात् । इत्येवं प्राप्त उच्यते । "विश्वाधिको रुद्र" इत्यादिषु ब्रह्मण उत्कृष्टत्वावगमात् तद्दृष्टिरेव निकृष्टेषु मनआदिषु कर्तव्या । लोके हि निकृष्टे भृत्यादौ राजदृष्टिं कृत्वा राजवत् तमुपासते, न तु भृत्यदृष्टिं कृत्वा राजानमुपासते केचिदपि । इदमेव च परमौचित्यम् । यदुत्कृष्टं वस्तु तदेव सर्वे नमन्ति । अतः[1] परं ब्रह्म सर्वोत्कृष्टतयैव सर्वनमस्कारविषयोऽवगम्यते । "ऋतं सत्यम्" इति मन्त्रेणोक्तं विशिष्टं यत् परं ब्रह्म[2], विश्वरूपाय तस्मा एव नमस्कारः । नान्यस्मै क्वचिदपीति । किंचास्य परब्रह्मण उत्कृष्टतयैव नमस्कारविषयत्वं लक्षणमुक्तम् । तथाहि, तैत्तिरीये श्रुतौ, "यस्मै नमस्तच्छिरोधर्मो मूर्धानं ब्रह्मोत्तरा हनुर्यज्ञोऽधरं विष्णुर्हृदयं संवत्सरः प्रजननम्" इत्यादिना शिशुमारात्मत्वनिरूपणे हृदयादिरूपेभ्यो विष्ण्वादिभ्यः पार्थक्येन सर्वोत्कृष्टत्वादेवास्य परब्रह्मणः शिवस्य प्रधानशिरोरूपत्वम् । 'यस्मै नमस्तच्छिर' इति नमस्कारविषयत्वेन लक्षणेनैवानूद्याभिहितम् । अवसाने च "त्वं भूतानामधिपतिरसि, त्वं भूतानां श्रेष्ठोऽसि" इत्यस्यैव सर्वभूतविषयमाधिपत्यं श्रेष्ठत्वं चोक्त्वा "नमस्ते नमः सर्वे ते नम" इति सकलभूतोत्कृष्टत्वात् सिद्धमखिलनमस्कारपर्यवसानभूमित्वमुक्तम् । सर्वत्र च "नमस्ते रुद्र मन्यव" इत्यादिषु सर्वोत्कृष्टतयैव पुनः पुनरस्मै नमः प्रयुज्यते । ऐश्वर्यादिना हि लोकेऽधिकं नमन्ति । ततः सर्वनमस्कारविषयतया सर्वोत्कृष्टमुमासहितं विरूपाक्षमीश्वरशब्दैकविषयभूतं परं ब्रह्म । अस्य सर्वोत्कृष्टस्य सर्वनमस्कार्यस्य व्याप्तिदृष्ट्या सर्वेषां मनआदित्यादीनां प्रतीकानामुपास्यत्वम् । अत एव "श्वभ्यः श्वपतिभ्यश्च वो नम" इत्यादिषु श्वादिष्वत्यन्तनिकृष्टेषु ब्रह्मव्याप्तिदृष्ट्या श्रुतिर्नमः प्रयुङ्क्ते । तस्मादुत्कृष्टसंबन्धान्निकृष्टेषूपचारदर्शनाद् विश्वाधिकब्रह्मदृष्ट्या मनःप्रभृतीनामुपास्यत्वं सिद्धम्[3] ॥ ५ ॥

॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

पूर्वत्र ब्रह्मण उत्कृष्टत्वादादित्यादिषु तद्दृष्टिरुपासनेऽभिहिता । "य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गोपासनेषूद्गीथादिदृष्टिरादित्यादिषु कार्या, उत विपर्ययेणैव । इति संशयः । किं तावत् प्राप्तम् । उद्गीथादीनामादित्यादीनां च कर्माङ्गत्वब्रह्मरूपत्वाविशेषादनियम इत्येवं प्राप्ते ब्रूमः ।

आदित्यादेः कर्माराध्यत्वेनोत्कृष्टत्वात् कर्माङ्ग उद्गीथादौ तद्दृष्टिः कार्या । तद्दृष्टिसंस्कृतस्योद्गीथादिकर्मणः फलातिशयसंभवात् । यत् खलु स्वतो वीर्यवत् क्रियमाणं च, तस्यैव विद्यया संस्कृतस्य वीर्यवत्तरत्वरूपफलातिशयो "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति वाक्यादवगम्यते । एवं च ब्रह्मात्मत्वादिसाम्येऽप्युद्गीथादिक्रियाचोदनादुद्गीथादेः क्रियमाणत्वेन फलसाधनत्वात् तद्विपरीतसिद्धस्वभावादित्यादेस्तथा फलसाधनत्वादादित्यादिदृष्टिरुद्गीथादिष्वङ्गेष्विति निर्णयः ॥ ६ ॥

॥ आसीनः संभवात् ॥ ७ ॥

उपपादितमुपासनाव्यवस्थापनम्[1] । तदिहोपासनस्यासननियमोऽस्ति नवेति संशयः । तथा सति "क्वचिदप्यासीन उपासीत" इति नियमाश्रवणान्मानस[2]व्यापाररूपस्योपासनस्य सर्वावस्थायामपि संभवान्नास्त्यासननियम उपासकस्येति[3] पूर्वः पक्षः । सिद्धान्तस्तु, आसीन एव ब्रह्मोपासीत । तस्यैवैकाग्र्यसंभवात् । अस्ति चासननियमश्रुतिरपि ।

"विविक्तदेशे तु सुखासनस्थः
शुचिः समग्रीवशिरःशरीरः ।
अन्त्याश्रमस्थः सकलेन्द्रियाणि
निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥
हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकम् ।
अनन्तमव्यक्तमचिन्त्यरूपं[4]
शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥
तथादिमध्यान्तविहीनमेकं
विभुं चिदानन्दमरूपमद्भुतम् ।
उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्" ।

इति कैवल्योपनिषदि । अत आसीन एव ब्रह्मोपासीतेति ॥ ७ ॥

॥ ध्यानाच्च ॥ ८ ॥

"ध्यात्वा मुनिर्गच्छति भूतयोनिम्", ।

---

१ तथाहि इति पा० ।

२ 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः" ॥ वाङ्मनसविपर्यासरहितं पुरि शयानं परशक्त्युमाधवलाकारतया कृष्णपिङ्गलं विरूपाक्षं त्रिलोचनमूर्ध्वज्वलनरेतसं परं ब्रह्म इति पा० ।

३ स्यादिति पा० ।

१—दित उपासनव्यवस्थामार्गः ।

२—वाच्चित्त—इति पा० ।

३—वादतीव विरोधाभावादनियम एवोपासकस्येति इति पा० ।

४ अचिन्त्यमव्यक्तमनन्तरूपं इति पा० ।

"कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये," "ध्याननिर्मथनादेव," इत्यादिश्रुतौ पाशविच्छेदकारणस्योपासनस्य ध्यानरूपत्वावगमात्। ध्यायतेश्च 'ध्यायति बको, 'ध्यायति प्रोषितं बन्धुः' इत्यादौ च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्रचित्तेषु व्यवहारात्। विजातीयप्रत्ययान्तराव्यवहिते तैलधारावदविच्छिन्नस्मृतिसंतानरूपध्याने चित्तैकाग्र्यावश्यंभावाच्च ध्यानसिद्धयेऽवश्यमासननियम आदर्तव्यः[१] ॥ ८ ॥

॥ अचलत्वं चापेक्ष्य ॥ ९ ॥

पृथिव्यादीनामचलत्वमपेक्ष्य 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षम्' इत्यादिप्रयोगाच्चासीन एवोपासीत। ध्यानसततिर्हि पृथिव्यादिवदचलत्वेनासीनस्यैव संभवति ॥ ९ ॥

॥ स्मरन्ति च ॥ १० ॥

"शुचौ देशे प्रतिष्ठाप्य स्थिरमानसमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये" ॥

इत्युपासकानामासननियमादिस्मरणाच्चासीन एव ब्रह्मोपासीतेति सिद्धम् ॥ १० ॥

॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

उक्त उपासकस्यासननियमः। तद्वद्धि देशकालनियमोऽस्ति न वेति संदेहे सत्यस्तीति युज्यते। यथा "चोदिते कर्मणि ब्रह्मयज्ञेन यक्ष्यमाणाः प्राच्यां दिशि" इति दिङ्नियमः। "प्राचीनप्रवणे वैश्वदेवेन यजेत" इति देशनियमः। "अपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति कालनियमः। तथात्रापि चोदितत्वाविशेषादुपासने दिगादिनियमो युक्त इति पूर्वः पक्षः[२]। सिद्धान्तस्तु, उपासने नास्ति दिगादिनियमः। ऐकाग्र्यं हि ध्यानस्य प्रधानसाधनम्। नहि तत्र दिगाद्यपेक्षा। यत्र रागद्वेषादिकालुष्यहेतुर्नास्ति, तत्र हि मनस ऐकाग्र्यं भवति, तावदेवापेक्षणीयम्। 'विविक्तदेशे[३] तु सुखासनस्थ" इति श्रवणात्। "अनन्तं शिवसंनिधौ" इत्यादिकं जपादिविषयम्[४]। तत्राप्यैकाग्र्यं यदि मुख्यतमं भवति। तस्मादैकाग्र्यमात्रसाधनकस्य ध्यानरूपोपासनस्य न दिग्देशकालनियमः ॥ ११ ॥

॥ आ प्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥

पूर्वत्र ब्रह्मोपासनायां दिगादिनियमाभाव उक्तः[१]। इह पुनस्तस्योपसंहारोऽस्ति न वेति विचारे यावदिच्छा, तावदुपासना कर्तव्या। अन्यथा तदुपसंहारः। इति पूर्वपक्षे प्राप्ते सिद्धान्तः। आ प्रायणादहरहरुपासना कार्या। न कदाचिदपि तदुपसंहारः। "अहरहर्वा एवंवित् स्वर्गं लोकमेति, स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यत" इत्यादावाप्रायणादुपासनश्रवणात्। स्वस्य ब्रह्मस्वरूपत्वापादिन्या ब्रह्मभावनाया मध्ये विच्छेदो न कार्यः[२]। स्वात्मतया नैरन्तर्येण ब्रह्मणि भाविते हि ब्रह्म तद्रूपमुपासकेषु प्रकाशते। अतः सर्वज्ञं नित्यतृप्तं स्वयंप्रकाशं स्वतन्त्रमलुप्तशक्तिकमनन्तशक्तिकं परं ब्रह्म नैरन्तर्येण भावनीयं तत्स्वरूपप्रकाशायेति। तथा श्रूयते। ब्रह्मस्वरूपमुपासकेषु प्रकाशत इति। "या ते रुद्र शिवा तनूरघोरापापकाशिनी तया नस्तन्वा शंतमया गिरिशंताभिचाकशीहि" इति। अनादिमलकर्मवासनारूढदेवादिशरीराभिमानप्रवाहसिद्धामध्यात्मिकादिभेदभिन्नामसह्यां संसाररुजं द्रावयत्युपासकानामिति रुद्र इत्युच्यते परं ब्रह्म शिवः। तस्यामन्त्रणं रुद्रेति। हे रुद्र परमेश्वर या ते तनूर्मूर्तिः शिवा नित्यसिद्धापहतपाप्मादित्वेन परमविशुद्धा परममङ्गलमयी परममङ्गलप्रदाघोरा, शिवत्वयोगेनैव सर्वहृदयंगमापापकाशिनी, पापग्रहणस्योपलक्षणत्वाज्ज्ञानाग्निदग्धनिखिलपुण्यपापा, इहापापा इत्युच्यते। मुक्तात्मनस्तेषु प्रकाशमानत्वादपापकाशिनी, ईदृशी या ते तनूः, तया शंतमया स एको ब्रह्मण आनन्द इत्यादिश्रुतिसिद्धनिरतिशयानन्दलक्षणया तन्वा नोऽस्माकमपि संसारनिमित्तं पुण्यपापसंचयमपनीय स्वरूपतया साक्षादतीव[४] प्रकाशस्वेति प्रार्थनेयमुपासकानाम्। अत उपासकानामात्मनि ब्रह्मस्वरूपस्य प्रकाशदर्शनात् तत्प्रकाशकारणभूता ब्रह्मभावना नैरन्तर्येण यावदायुषं कर्तव्या। न कदाचिदपि विच्छेद्येति ॥ १२ ॥

॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

पूर्वत्र प्रकर्षेणापापा[५]नामुपासकानामात्मनि ब्रह्मस्वरूपं प्रकाशत इति सोपपत्तिकमुपपादितम्। तदिहोपासकस्य पापक्षयोऽस्ति न वेति संशयः। किं तावत् प्राप्तम्। उपासकानामपि भोगमन्तरेण पापक्षयो न भवति। "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति वचनाद्, भोगाय शरीरापत्तौ

१—मध्ये" आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डित ॥ इत्यादिश्रुतेः पाशविच्छेदकारणस्योपासनस्य ध्यानरूपत्वाद् ध्यानसिद्धये चासननियमः ॥ ८ ॥ इत्येव पा०।

२—मः प्राप्त इति पूर्ववादः इति पा०।

३—तिसामान्येन विविक्तदेशे-इति पा०।

४ इत्यादिकस्य जपादि कर्म विषयो न ध्यानमात्रं विषयः इति पा०।

१ पूर्वत्र ब्रह्मोपासनस्य देशकालाद्यविशेषत्वमुक्तम् इति पा०।

२—र्वंविद् या—इति पा०।

३ न युक्त एव इति पा०।

४—त्वात्कल्याणीव इति पा० ॥

५ प्रक्षीणपा—इति पा०।

पुनरपि कर्मापत्तिरिति न मोक्षावसर, इत्येवं प्राप्ते ब्रूमः । क्षीयते पापं कर्मोपासकानामिति । कथम् । उपासने प्रारब्धे तत्सामर्थ्यादेव पूर्वकृताघनाशः । उत्तराघाश्लेषश्च भवति । तथाहि व्यपदिश्यते, 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयते । एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते । यथा पुष्करपलाश आपो न श्लिष्यन्ते । एवमेवंविदि पापं कर्म न श्लिष्यत' इति । तस्मादुपासकानां पूर्वोत्तराघयोरश्लेषविनाशौ भवत एव । यदुक्तम्[1] । "नाभुक्तं क्षीयत" इति । तस्याज्ञानिविषयत्वादविरोधः ॥ १३ ॥

॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

विदुषः पापलेपो न भवतीति निरूपितम् । इह तद्विरोधिपुण्यलेपोऽस्ति न वेति विचारः । किं प्राप्तम् । विद्याविरोधिनः पापस्य क्षयो युक्तः । नतु पुण्यस्य । तस्य विद्याङ्गत्वेनानुवृत्त्यौचित्यात् । इत्येवं प्राप्ते निरूप्यते । विदुषः पुण्यस्यापि मोक्षविरोधित्वेनानिष्टफलत्वसाम्यादश्लेषविनाशौ[2] । विद्यानुगुणस्यारोग्यादिफलस्य पुण्यस्य शरीरपाते लयः । विद्याङ्गकर्मणस्तु काम्यफलादिसंबन्धाभावाच्च[3] श्लेषः । अतो विदुषः पुण्यलेशोऽपि नास्तीति निर्णयः ॥ १४ ॥

॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वत्र विदुषः पुण्यपापयोरुत्तरपूर्वयोरश्लेषविनाशौ निरूपितौ । इह प्रारब्धकार्ययोस्तयोः स्थितिरस्ति न वेति संशयः । "सर्वे पाप्मानः प्रदूयन्त" इत्यविशेषेण श्रवणाद् विद्याधिकृतेः पूर्वत्वाविशेषेण तयोरपि विनाश इति प्राप्त उच्यते[4] । विद्याधिकृतेः पूर्वकृते पुण्यपापे फलदानायाप्रवृत्ते एव विनश्यतः । "तस्य तावदेव चिरं यावन्न विमोक्ष्य अथ संपत्स्य" इति शरीरपातावधिः श्रूयते । अतः प्रारब्धयोर्न विलयः[5] ॥ १५ ॥

॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

पूर्वत्र विदुषः पुण्यपापाश्लेषविनाशौ निरूपितौ । यावदायुषमुपासनावृत्तिरप्युपपादिता । तस्येह पुनरग्निहोत्राद्यनुष्ठानमपि यावच्छरीरपातमनुवर्तते, उत मध्ये विच्छिद्यत इति विचारः । किं प्राप्तम् । अग्निहोत्रादिकमाप्रायणं नानु[6]ष्ठेयम् । क्रियमाणेऽपि विनाशाभ्युपगमात् । अप्रयोजने कस्य मनः प्रवर्तते । इत्येवं[7] प्राप्ते ब्रूमः । अग्निहोत्रादिकमाप्रायणमनुष्ठेयं[1] विद्याकार्यायैव । तथा हि दृश्यते । "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसानाशकेन" इत्यादि । अत्र वेदानुवचनं वेदाभ्यासः । परमेश्वरप्राप्तिसाधनपरमज्ञानहेतूनामध्यात्मवादिनां वेदमन्त्राणां जपावृत्तिः । "तथा जाबालोपनिषदि । "अथ हैनं ब्रह्मचारिण ऊचुः, भगवन् किं जप्येनामृतत्वं ब्रूहि" इति "स होवाच याज्ञवल्क्यः शतरुद्रीयेण" इति "एतानि ह वा अमृतस्य नामधेयानि, एतैर्ह वा अमृतो भवति" इति कैवल्योपनिषदि । "यः शतरुद्रीयं ब्राह्मणो नित्यमधीते, सोऽग्निपूतो भवति, स वायुपूतो भवति, सुरापानात् पूतो भवति, ब्रह्महत्यायाः पूतो भवति, अत्याश्रमी, सर्वदा सकृद्वा जपेत्, परमं[2] ज्ञानमाप्नोति, संसारार्णवनाशनम्" इति । इह शतरुद्रीयसंज्ञानां ब्रह्मबोधकानां मन्त्राणामभ्यासात् संसारनाशनस्य परमज्ञानस्य प्राप्तिः, तद्विरोधिपापक्षयश्चावगम्यते । "एतानि ह वा अमृतस्य नामधेयानि" इत्यमृतस्यानादिमुक्तस्य शिवस्य नामधेयत्वाद्धेतोः शतरुद्रीयजपात् सकलपापक्षयादिप्रतिपादनात् परमेश्वरस्य शिवादिनामधेयानामभ्यासोऽपि विद्याविरोधिसकलपापक्षयहेतुरवगम्यते[3] । तथैव मुण्डकोपनिषदि श्रूयते । "अपिवा यश्चाण्डलः शिव इति वाचं वदेत्[4] तेन सह संवदेत्, तेन सह संवसेत्, तेन सह भुञ्जीत" इति । अत्र हि शिवशब्दस्य ब्रह्मबोधकस्य समुच्चारणमात्रेणात्यन्ताविशुद्धस्य[5] पातकिनः परमविशुद्धिप्राप्तिरवगम्यत इति । अन्यत्र च, "योऽथर्वशिरस[6] ब्राह्मणो नित्यमधीत" इत्यारभ्य तदभ्यासिनः सकलपापक्षयमुक्त्वा सकृज्जप्त्वा शुचिः पूतः कर्मण्यो[7] भवति, द्वितीयं जप्त्वा गाणपत्यमाप्नोति, तृतीयं जप्त्वा देवमेवानुप्रविशति" । इति मोक्षफलं प्रतिपाद्यते[8] ।

"आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्" ।

इत्यादिषु च प्रणवाद्यभ्यासस्य पाशविच्छेदहेतुत्वमुच्यते । एवमन्यत्रापि द्रष्टव्यम् । अतः परमेश्वरपराणां वेदमन्त्राणां पापक्षयद्वारा परमज्ञानहेतुत्वेन मोक्षसाधनत्वावगमात् तदभ्यासः कर्तव्यो विद्यावतापि यावज्जीवम् । एवमग्निहोत्रादी-

१ अतो ह्युपासकस्य पूर्वोत्तराघयोर्निःश्लेषविनाश एव भवति । तदुक्तम् इति पा० ।

२—दश्लेषविनाशः । इति पा० ।

३—णोऽपि फलाभिसंध्यभावाच्च इति पा० ।

४—यः । तथा सति विद्याधिकृतेः पूर्वारब्धयोरपि विनाश इति प्राप्त उच्यते सिद्धान्तः । इति पा० ।

५—धिश्रुतेः । अतोऽप्रारब्धयोर्विलय एव इति पा० ।

६—त्रादि यत् कर्म तदपि विदुषः प्राणान्तिकं ना—इति पा० ।

७ अतो नानुष्ठेयं नियमेनेति इति पा० ।

१—माप्राणान्तिकं विदुषानु—इति पा० ।

२ अनेन इति पा० ।

३—नात् सर्वार्थसाधनता प्रतीयते । अतः परमेश्वरस्य नामधेयानामभ्यासेऽपि सकलपापक्षयः । इति पा० ।

४ वदेत् सह वाचं वदेत्, इति पा०

५—णापि इति पा० ।

६—शिरो वा—इति पा० ।

७ कर्मणां इति पा० ।

८ इति देवानुप्रवेशरूपमोक्षप्राप्तिरवगम्यते । "त्रिसूपर्णं पठन्ति ते सोमं प्राप्नुवन्ति" इति सोमस्योमासहितस्य ब्रह्मणः प्राप्तिरवगम्यते इति पा० ।

नामपि यज्ञानां परमेश्वरसमर्पितफलानां तदाज्ञासिद्धत्वात् तदाराधनरूपत्वाच्चाभ्यासः कार्यः। एवं दानादीनामपि[1]। तस्माद्विदुषापि विद्यानिष्पत्तिकार्यायाग्निहोत्रादिकमनुष्ठेयमिति। कर्म तपोजपध्यानज्ञानरूपम्। ईश्वरोपासनं कर्माग्निहोत्रादिकम्। तपो नियमः, कायशोषणं वा। जपः पूर्वोक्तप्रणवाद्यभ्यासः। एतेषां पापशोषणद्वारा मोक्षहेतुत्वम्। ज्ञानध्यानयोस्तु साक्षाद् ब्रह्मस्वरूपापत्तिहेतुत्वम्। अतः सर्वेषामेषामनुष्ठानं कार्यम्[2] ॥ १६ ॥

ननु यद्यग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था। तदन्या च पूर्वकृतासाधुकृत्या विद्याप्रारम्भे सति विनष्टा। तर्हि सुहृदः "साधुकृत्याम्" इत्यस्य को विषय इत्याशङ्क्याह ॥

॥ अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

"तस्य सुहृदः साधुकृत्याम्, द्विषन्तः पापकृत्याम्", इत्येकेषां शाट्यायनशाखिनां वचनस्य विद्यानिष्पत्त्यर्थाग्निहोत्रादिसाधुकृत्याया अन्याप्यनादिकालप्रवृत्ता साधुकृत्या प्रबलकर्मान्तरप्रतिबद्धफला विद्यानुगुणा, आरोग्यचित्तशुद्ध्यादिजननयोग्यतया विद्यानुगुणफलत्वाद् विद्ययाप्यविनष्टपूर्वोत्तरयो[3]रुभयोरपि कर्मणोरप्यस्त्येव विषयः ॥ १७ ॥

॥ यदेव विद्ययेति हि ॥ १८ ॥

"यदेव विद्यया करोति" इत्यत्र कर्मफलाप्रतिबन्धस्योद्गीथविद्याफलत्वोक्त्या प्रबलकर्मान्तरेणाकर्मणां फलप्रतिबन्धसद्भावो[4]ऽवगम्यते। अतो विद्यानुगुणकर्मणां फलप्रतिबन्धोच्छेदायाप्यग्निहोत्रादिकमनुष्ठेयमिति भावः ॥ १८ ॥

॥ भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥

इह विद्यावतामधिकारपदे स्थितानां तद्व्यतिरेकेण मुक्तिफलमस्ति न वेति चिन्तायां[5] प्रारब्धभोगाय बहुजन्मस्वीकारे पूर्वविद्यायां लुप्तायां यत् कर्म क्रियते, तदपि फलभोगहेतुर्भवति। अतो जन्मपरंपरायाः संभवान्न तेषां[6] मुक्तिरिति प्राप्ते ब्रूमः। प्रारब्धकर्मणः स्वफलभोगायत्तत्वमात्रेण पूर्वार्जितविद्यालोपहेतुः। अतस्तेषां[7] मुक्तिरेव। न जन्मपरंपरा। कारणाभावात्। सुषुप्तिव्यवधानवज्जन्ममरणव्यधानं न तेषां विद्यालोपहेतुरिति ॥ १९ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥ :: :: ॥

१ शमादीनामपि दाना—इति पा० ।
२—ष्ठाने विरोधाभावः इति पा० ।
३ प्रतिबन्धबलात् तद्विद्याननुगुणबलप्रतिबद्धा चेति पूर्वा—इति पा० ।
४—त्यत्र फलप्रतिबन्धोऽस्तीत्य—इति पा० ।
५—यामिदं प्राप्तं भवति इति पा० ।
६—त् कथं तेषां इति पा० ।
७—हेतुत्वात् तत्फलस्य भोगावसाने तेषां इति वरपा० ।

# THE VIDVAN-MANO-RANJINI

OR

## REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD ÁNANDA'S VEDÁNTA-SÁRA, BY RÁMA TÍRTHA.

(Continued from page 212.)

*These two [the thread-soul and the luminous soul then by subtile modifications of the internal organ, experience the subtile objects]* Then means in the dreaming state These two experience the subtile objects which consist of plantasmata, the relics of waking presentations, somewhat indistinct, by means of those modifications which are produced by representations belonging to the internal organ, vitiated by sleep and other defects, and assisted by particular impressions resuscitated by requitative efficacy, which modifications have as their form the objects displayed by the power of illusion in the intelligence associated with such an internal organ Nor is dreaming a case of reminiscence, for it reveals that which has never been presented. Nor is it a presentation or perception, for there is neither authority nor evidence to this effect Nor is it dormant unconsciousness, for there is a distinct experience of objects. Nor is it identical with the waking consciousness, for the place, time, and requisites of such are impossible. And thus it is that the Veda declares in the text beginning As a hair split into a thousand parts, where it compares the arteries to the thousand parts of a hair, and in the text This comes through these, that to dream the internal organ must pass through such arteries. One then who beholds a dream in these subtile arteries, has no suitable place to enter rivers, seas, forests, or mountains, that he should behold in those arteries rivers and the like. But if it be argued that according to the Vedic text Walking immortal outside the body, the mind beholds the objects of its dreams externally; we reply that this is not so, for the word outside is employed to designate the mere experience of the connection with

अस्यैषेत्यादिना। स्थूलप्रपञ्चो विराद्विज्ञानमयादिकोशत्रयंलिङ्गशरीरं सूक्ष्मशरीरमिति सम्बन्धः मध्यप्रदीपन्यायेनोत्तरत्रापि जाग्रद्वासनेत्यत्र कोशत्रयपदं सम्बध्यते वासनामयत्वञ्चास्य श्रुतिराह तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासोयथापाण्डवाविकमित्यादिना सकृद्विद्युत्तमित्यन्तेन। स्वप्नत्वं चास्य अव्याकृतविराजोः सन्ध्यस्थानत्वादुपपन्नं सन्ध्यं तृतीयं स्वप्नस्थानमिति श्रुतेरविशेषात्। यतोवासनामयोऽतएवेति योजना। अस्य लोकस्य सर्व्वावयवतोमात्रामुपादाय स्वयं हि प्रकृत्येत्याद्या स्वप्नेन शरीरमभिप्रकृत्येत्याद्या च श्रुतिः स्थूलशरीरस्य स्वप्ने लयं दर्शयन्ती समष्टेर्महाप्रपञ्चस्यापिसन्धौ तं सूचयति। एवं समष्टिलिङ्गतदुपहितचैतन्ययोर्व्यपदेशानुक्त्वा व्यष्टिलिङ्गतदुपहितचैतन्ययोरपि तानाह ॥

एतदिति। तैजसव्यपदेशत्वे हेतुमाह ॥

तेजोमयेति। तेजोमयत्वं स्वयं निर्म्माय स्वेन भासेति श्रुतौ भाः शब्देन अन्तःकरणस्य वासनात्मनोव्याख्यातत्वात् अस्यापीति स्पष्टार्थः योवैप्राणः सवायुरिति श्रुतेः समष्टिव्यष्टिलिङ्गयोस्तदवस्थयोरपिसन्ध्ययोरभेदं सिद्धवत्कृत्य तत्र तैजससूत्रयोर्भोगविशेषं निर्दिशति ॥

the gross body; otherwise [if the soul when dreaming actually left the body] it could not regularly wake up in the same body. And thus it is that another text declares that the awakening takes place in the same body which was the locus of the dream, even when a man returns from another place seen in his dream, in the words. I as I slept in the country of the Kurus, wafted by sleep, visited in a dream the country of Panchâla, and there awoke. There cannot, then, be there the place appropriate to the waking state. Nor can there be appropriate time; for when dreaming one may experience in a short space of time hundreds of years. Nor is the appropriate requisite or occasion possible, for a house, for instance, may be seen to be built without carpenter, wood, earth, and the like. After showing that the things present in the waking state are absent in dreaming, the text shows, that new phantastic objects are created, in the words There there are no chariots, no chariot-horses, no roads, then he creates chariots, chariot-horses, and roads. It is to be understood, therefore, that dreams consists of illusion So the aphorism: It is merely illusion, the real nature being altogether unmanifested.

The author cites authority in the aforesaid matter

*The enjoyer of the subtile &c.* The words *et cætera* imply the addition of such texts as This becomes the more discriminate percipient. The meaning of the words Here also, is plain. The author here concludes the treatment of the world of subtile body.

---

एताविति । तदानीं स्वाप्नावस्थायां निद्रादिदोषदूषितस्यादृष्टादिसमुद्बोधितसंस्कारविशेषसचिवस्यान्तःकरणस्य याः संस्कारानुरूपाः वृत्तयः तादृगन्तःकरणसंसृष्टचैतन्यस्याविद्याशक्तिविजृम्भितविषयाकारास्ताभिःसूक्ष्मविषयान् जाग्रद्वासनामयानीषदस्फुटाननुभवतइत्यर्थः । नच स्वप्नः स्मृतिरपरोक्षावभासित्वात् । नापि प्रत्यक्षं प्रमाणसंप्रयोगाद्यभावात् नच सुषुप्तिः स्पष्टं विषयानुभवात् नापि जागरितं तदुचितदेशकालनिमित्तानामसम्भवात् । तथाहि यथा केशः सहस्रधाभिन्नइत्यादिना केशसहस्रांशैर्नाडीरूपमीय एताभिर्व्वा एतदास्रवतीति स्वप्नाय तादृशनाडीप्रवेशं दर्शयति श्रुतिः तथाच अतिसूक्ष्मासु नाडीषु स्वप्नं पश्यतो न नदीसमुद्रवनगिरिनिवेशोचितोदेशोऽस्ति येन तत्र स्थिताद्यादीन् पश्येत् । ननु बहिः कुलायादमृतश्चरित्वेति श्रुतेर्व्बहिरेव स्वप्नान् पश्यतीति चेन्न तत्र बहिःशब्देन स्थूलशरीरोपरागानुभवमात्रस्य विवक्षितत्वात् अन्यथा तस्मिन्नेव शरीरे नियमेन पुनर्जागरणानुपपत्तेः । तथाच श्रुत्यन्तरं कुरुष्वहमद्यशयानोनिद्राभिप्लुतः स्वप्ने पाञ्चालानधिगतश्चास्मिन् प्रतिबुद्धश्चेति स्वप्नदेशान्तरात् पुनरागमनरहितस्यापि स्वप्नदेशस्थशरीरे जागरणं दर्शयति अतो न तत्र जाग्रदुचितोदेशः । नापि कालः समुचितः सम्भवति मुहूर्त्तमात्रेऽपि सम्वत्सरशतानामनुभवात । नाप्युचितं निमित्तं तत्र सम्भवति तक्षदारुमृदाद्यभावेऽप्यकस्मादेवप्रासादादेर्निष्पत्तिदर्शनात् जाग्रदवस्थासम्पन्नानां वस्तूनां स्वप्नेऽभावं दर्शयित्वा नूतनानां वासनात्मकानां निर्म्माणं दर्शयति न तत्र रथा न रथ योगान पन्थानोभवन्त्यथरथान् रथयोगान् पथः सृजतइत्यादिना तस्मान्मायामयएव स्वप्नइतिद्रष्टव्यं तथाच न्यायः । मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति । उक्तेऽर्थे प्रमाणमाह ॥

प्रविविक्तभुगिति । आदिशब्दादेष प्रविविक्ताहारतरइव भवतीत्यादिश्रुत्यन्तरग्रहः । अत्रापीति स्पष्टार्थः सूक्ष्मशरीरप्रपञ्चमुपसंहरति ॥

*Thus [is the production of the subtile body.]* The author treats in detail of the gross elements mentioned above

*The gross elements [are quintupled.]* Quintuplication is the assumption of a gross nature by the aforementioned elements when compounded in various proportions dependent on efficient causes such as the proximity of God presupposing the merit and demerit of souls with merit, and on these elements. The author, therefore, proceeds to say.

*But quintuplication· [having divided each of the five elements, ether &c., into two equal parts; having next divided severally into four equal parts the first five portions of those ten portions; the uniting of those four portions after having abandoned the second portion of the bipartite division, with the other portions of the other elements,—this is what is called the making one to possess the various qualities of the five, i. e. quintuplication]* The author proceeds to anticipate the objection: Why is this quintuplication described in such proportions, there being no evidence thereof

*[The doubt is not to be entertained that there is no proof]* of this *[because the text declaratory of triplication indicates the quintuplication.]* The text declaratory of triplication is: This same deity desired, So I enter-

---

एवमिति । पूर्व्वत्र प्रतिज्ञातानि स्थूलभूतानि प्रपञ्चयति ॥

स्थूलेति । पूर्व्वोक्तानामेव भूतानां परस्परं व्यवहर्तृप्राणिनिकायव्यवहारनिर्व्वाहकतदीयधर्म्माधर्म्मापेक्षपरमेश्वरसान्निध्यादिनिमित्तापेक्षया विभागेन मिलितानां स्थूलतापत्तिः पञ्चीकरणमित्याह ॥

पञ्चीकरणन्त्विति । ननु कथमित्थं विभागेन पञ्चीकरणं निरूप्यते तत्र प्रमाणाभावादित्याशङ्क्याह ॥

अस्येति । सेयं देवतैक्षत हन्ताहमिमास्तिस्रोदेवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति इक्षित्वा सा सदाख्या परमात्मादेवता सृष्टानां तिसृणां देवतानां तेजोवन्नात्मिकानां मध्ये एकैकां देवतां त्रिवृतं त्रिरूपां त्रिरूपामकरोत् कृतवतीति त्रिवृत्करणश्रुतिः सा पञ्चीकरणमप्युपलक्षयति आक्षिपतीत्यर्थः त्रिवृत्करणं नाम तेजोवन्नानां त्रयाणां मध्ये एकैकं द्विधासमं विभज्य पुनरेकैकभागस्य द्विधा विभागं कृत्वा स्वंस्वंद्वितीयं स्थूलभागं परित्यज्यान्यदीयस्थूलभागयोरेकैकस्य भागस्य संयोजनं । अत्र केचित्प्रगल्भन्ते संप्रदायाध्वना पञ्चीकरणं यद्यपि स्थितं तथापि युक्तिबुद्धत्वाद्वाचस्पतिमतं शुभमित्यादिना तत्र युक्तिञ्चेत्थमाचक्षते । गगनपवनयोः किल पृथिव्याद्यात्मकत्वे रूपवत्त्वमहत्त्वाभ्यां चाक्षुषत्वं तयोः प्रसज्येतेति । तत्र त्रिवृत्करणपक्षेऽपि तेजसःपृथिव्याद्यात्मत्वे कठिनत्वद्रवत्वाभ्यां विशिष्टतयोपलम्भप्रसङ्गइति दोषसाम्ये शङ्किते । अर्द्धभूयस्त्वान्नदोषइति परिहारस्य पञ्चीकरणपक्षेऽपि समानत्वेन दूषणोद्धारस्य । व्यवहारमार्गप्राप्तपञ्चीकृतिर्मुधा पञ्चीकरणस्य कुत्राप्यश्रवणादिति । तत्रेदं वक्तव्यं किं पञ्चीकरणस्य व्यवहारमार्गसिद्धत्वादप्रामाण्यं किम्वाऽश्रुतत्वादाहोस्वित्त्रिवृत्करणश्रुतिविरोधाद्वेति । आद्ये अष्टकाकरणादीनां शिष्टव्यवहाराणामप्रामाणिकत्वापत्तिः । द्वितीयेऽपि किं साक्षात्श्रवणाभावोहेतु रुत श्रुतार्थापत्त्यभावोऽपि नाद्यः साक्षादश्रुतस्य प्रत्याख्याने परमापूर्व्वादीनामपि प्रत्याख्यानप्रसङ्गात् । न द्वितीयः ·श्रुतार्थापत्तेर्विद्यमानत्वात् तथाहि छान्दोग्ये तेजः प्रभृतीनां त्रयाणां सृष्टिश्रुतौ तावत् श्रुत्यन्तरप्रसिद्धाकाशवायुसृष्टेरप्युपसंहरणीयत्वं वियदधिकरणे तेजोधिकरणे च निर्द्धारितं एकविज्ञानेन सर्व्वविज्ञानप्रतिज्ञाहान्यादिभिर्हेतुभिः । तथाच श्रुत्यन्तरैकवाक्यतया पञ्चानां भूतानां

ing with this individuated soul these three deities, would fain manifest name and form; of those three deities fain would I make each threefold; desiring thus that deity, the supreme soul, styled entity, made each of these three create deities, light, water, earth, threefold This text indicates or implies quintuplication. Triplication means the division of each of the three, light, water, and earth, into two equal parts, the subdivision of one of each halves into two equal parts, the abandonment of each undivided half, and the combination of each quarter with the other kind of half. On this point some presume to say that though according to ancient custom quintuplication is posited, the doctrine of Vrihaspati is better, being confirmed by reasoning. This reasoning they give as follows·—Were ether and air partly composed of earth &c, it would follow that being coloured and extended they would be visible We reply that according to such an objection it will follow even in the doctrine of triplication that light being partly composed of earth and water, must be cognised as characterised by hardness and fluidity. Thus the objection would apply to triplication as well as to quintuplication. If our opponent rejoin that the predominance of the half obviates the objection, we reply that this obviation applies equally to the doctrine of quintuplication, as relieving both difficulties alike.

---

सृष्टिं प्रक्रम्य तेषां सूक्ष्मतया अव्यवहार्य्याणां व्यवहारसिद्धये त्रिवृत्करणं ब्रुवन्ती श्रुतिः पञ्चीकरणाभिप्राया चेत्स्यात्तदा वाय्वाकाशयोः सूक्ष्मत्वानिवृत्तेरव्यवहार्य्यतापत्तौ सृष्टानां भूतानां व्यवहाराय त्रिवृत्करणोपदेशानुपपत्तिः केन वार्य्यते । न च वाय्वाकाशयोर्व्यवहारएव नास्तीति वाच्यं महान्वायुर्महन्नभइति व्यवहारस्य सर्व्वजनीनत्वात् । ननु श्रुत्युक्तमित्येव त्रिवृत्करणं स्वीक्रियते न व्यवहारायेति चेन्न । त्रिवृत्करणवाक्ये स्वसम्बन्धिनः फलस्याभावात् फलवदात्मैक्यज्ञानार्थवादत्वे यथासृष्टिन्यायं त्रिवृत्करणं युक्तं अर्द्धजरतीयस्यान्याय्यत्वात । ननु शाखान्तरेभूतद्वयसृष्टेः श्रुतत्वात् तत्परित्यागानुपपत्तेः छान्दोग्यतैत्तिरीयादिश्रुत्योर्विरोधपरिहारोपसंहारः क्रियते न । तथा पञ्चीकरणं क्व श्रुतमस्ति येन तन्न्यायेऽनुसरणीयः स्यादिति चेत् सत्य तथापि न्यायानुसरणं युक्तं यथा त्रिसर्गश्रुतौ सृष्टानां भूतानां स्फुटतरव्यवहारनामरूपव्याकरणोपायतया त्रिवृत्करणं श्रुतं तद्वत् भूतपञ्चकसर्गश्रुतावपि तथा नामरूपव्याकरणार्थोपायः कश्चिदीश्वरस्योचितुर्युक्त सचोपायविशेषस्तस्यैवेश्वरस्य भूतयोनेः शाखान्तरे त्रिवृत्करणरूप. अतः तत्परित्यागेनान्यस्य कल्पनायां प्रमाणाभावात्तस्यैव भूतपञ्चकसर्गश्रुतावपि उपसंहारे प्राप्ते तस्य पञ्चीकरणार्थमन्तरेण पञ्चानां भूतानां स्फुटतरव्यवहारोपायतानुपपत्तेर्युक्तं त्रिवृत्करणवाक्यस्य पञ्चीकरणोपलक्षणत्वमिति । एतेन चरमः पक्षः प्रतिक्षिप्तः त्रिवृत्करणश्रुतेः पञ्चीकरणार्थनिरूपणेकृते तेन पञ्चीकरणस्य विरोधासम्भवात् । श्रुत्यभिप्रायश्चैवं वर्णितोविद्वत्तमैराचार्य्यैः आकाशस्य सर्व्वावकाशतया सर्व्वाव्यतिरेकाद्वायोश्च सर्व्वचेष्टाहेतुत्वेन सर्व्वाविना भूतत्वात्तयोस्तेजः प्रभृतिष्वन्तर्भावं सिद्धवत्कृत्य त्रिवृत्करणं प्रयोगसौकर्य्यार्थं श्रुतिर्व्वर्णयाम्बभूवेति तस्मा स्ति पञ्चीकरणं प्रामाणिकमित्यलमतिनिबन्धेन । ननु पृथिव्यादीनां भूतानां चेत्सर्व्वभूतात्मकत्वं तथावतिव्यवहारसाङ्कर्य्यप्रसङ्ग इत्याशङ्क्याह पञ्चानामिति वैशेष्यात्तुशेषभावात् भागाधिक्यात्तद्वादो नभः पवनस्तेजो जलं पृथिवीत्यादि व्यपदेशो भवतीति द्वितीयाध्यायसमाप्त्यधिकरणे न्यायेन निर्णयः कृतस्तेन न्यायेनाकाशादौ व्यवहारसाङ्कर्य्यं सिध्यतोऽभिप्रायः । इदानीं भूतानां पञ्चीकृतत्वे लिङ्गञ्चाह ॥

Again it may be objected that the quintuplication grounded on merely practical apprehension is null, such quintuplication being nowhere revealed. To this we may rejoin: Do you mean that quintuplication is unauthenticated, because it is evident by mere practical apprehension; or is it unauthenticated because it is nowhere revealed; or because it is repugnant to the revelation of triplication? On the first alternative, we continue, the observance of divine and obsequial rites and other practices of the righteous, will become unauthenticated On the second alternative, we ask again whether the want of direct revelation is your plea, or the want of a disjunctive inference from revelation. The former plea will not hold good, for if you reject what is not directly revealed, you will have to reject the supreme requitative efficacy; nor will the second, for there does exist a disjunctive inference from revelation, *e g* in the Chhândogya Upanishad it is determined in the text describing the creation of light, water, and earth, that the creation of ether and air well known from other texts, is implicated This is determined in the section on ether and in the section on light, on such grounds as that otherwise by the cognition of one there could be no examination of the cognition of all Moreover, if the text concerning the creation of the five elements, in conformity with the other text, and which declares the triplication in order to explain the practical apprehension of these which are in themselves too subtile to be practically apprehended,—if this text does not imply a quintuplication, then as air and ether will remain insusceptible of practical apprehension through their subtile nature, what is there to hinder the inutility of the text declaratory of triplication as an explanation of the practical apprehension of the created elements? Nor can you reply that there is no such practical apprehension of ether and air, for there is common among all mankind the notion and expression of extended air and extended ether. If again you reply; The triplication stated in the revelation we allow, but not as an explanation of practical apprehension;—we demur for the declaration of triplication could then have no appropriate end. If you rejoin that the text repeats the sense of the text declaring the fruitful knowledge of the unity of spirit, we reply that the triplication is proper only according to the order of nature, for such a half admission is incomplete.

It may be urged: The creation of the two elements ether and air being revealed in another treatise, and thus not to be disallowed, the avoidance of a contradiction between the texts of the Chhândogya and Taittirîya Upanishads, is briefly made, but not in your

manner [by invoking the order of nature], for where is quintuplication revealed that such order of nature should be followed? This we admit, yet it is proper to follow the order of creation; for as triplication is revealed in the text treating of threefold creation, as the means of the manifestation of the name and form and of the clear practical apprehension of the created elements, so in like manner in the text declaring the creation of the five elements, some means of manifesting the names and forms is required for the God willing to manifest. This kind of means employed by God, the source of the elements is declared in another treatise to consist of triplication by him. There being no authority for neglecting this and supposing the other means, and this means being indicated in the text describing the creation of the five elements, if this means, *viz*, triplication, is not sufficient as a means for the clearer practical apprehension unless we assume a quintuplication, it follows that the text declaratory of triplication implies also quintuplication. By this argument the latter alternative is repudiated, for if the text about triplication be explained to imply quintuplication, it cannot conflict with the doctrine of quintuplication.

The purport of the text has been explained by the most learned authorities as follows:—Ether or space as containing all things cannot be excluded from any, and air as the condition of all movement must be inseparable from all. The text presupposing them therefore, to be included in light, earth and water,, describes only a triplication for the greater facility of exposition.

Quintuplication, therefore, is authenticated, and we dismiss further prolixity. The author now proceeds to anticipate the objection that if earth and the other elements are composed each of all the elements, in this case, there will ensue a confusion in the practical apprehension of each.

[*Although*] *the five* [*gross elements are alike in respect that each is made up of all the five, yet the name of ether is appropriate to one, and of another to another, according to the aphorism from their diverse characteristic there is diversity of appellations*] Characteristic means the nature of diverse things, that is predominance of portions. The appellations ether, air, light, water, earth are the names. This is ascertained in the aphorism in the last section of second chapter of the Vedânta-sûtra. The author means that according to this aphorism it is proved that there is no confusion in the practical apprehension of ether and the rest. The author now proceeds to give a proof of the quintuple nature of the elements.

*Then* [*in the ether sound as its quality is manifested; in air sound and touch, in fire sound, touch, and colour, in water, sound, touch, colour, and taste, in earth, sound, touch, colour, taste, and smell*]

Then that is after the quintuplication, in ether sound is manifested. The word clearly is to be added in each clause. The meaning is this, that ether and the other elements being each the cause of the next in the series, and therefore each being more pervasive than its effect, though it is commingled with that part which is the educt, there is no manifestation of them as substrata of the qualities inhering in the educt, but they are manifested only as substrata of their several qualities. Moreover the educts being smaller than their causes, they are manifested as possessing the qualities of their causes, they being commingled with part of their causes. Thus the common experiences The wind with fierce sound is roaring, The flame dries up the stream, The stone as it is cleft cries out, or in other words the cognition of touch &c. in light &c is undisputed. Nor is such experience an error, for we observe no sublation thereof in the state of practical existence. Colour, therefore, and the other qualities, though restricted each to its proper substratum,—these being experienced in other elements also, infer the truth of the doctrine of quintuplication.

The author, having thus articulately expounded the illusory surmisal of the elements, proceeds to discuss the illusory attribution of elementary things. *From these* [*quintupled elements is the genesis of the higher and higher spheres, the heavens called Bhûr, Bhuvar, Svar, Mahar, Janar, Tapar, and Satya; and the lower and lower spheres, the hells called Atala, Vitala, Sutala, Rasâtala, Talâtala, Mahâtala, and Pâtâla; also that of the mundane egg, with the four kinds of gross bodies*

तदानीमिति । तदानीं पञ्चीकरणानन्तरं आकाशे शब्दोऽभिव्यज्यते स्फुटतयेति सर्व्वत्र योजनीयं । एतदुक्तं भवति आकाशादीनां पूर्व्वपूर्व्वस्य उत्तरोत्तरंप्रति कारणत्वेन स्वस्वकार्य्यापेक्षया व्यापकत्वात् कार्य्यांशसम्वलितत्वेऽपि न कार्य्यगतगुणाश्रयतयाप्यभिव्यक्तिः किन्तु स्वस्वगुणाश्रयतयैव तथाकार्य्याणां स्वकारणापेक्षया अल्पत्वात्तेषां कारणभागसंमिश्रितानां कारणगुणाश्रयतयापि भवत्यभिव्यक्तिरिति तथाच लोकेनुभवः प्रचण्डशब्दो वायुः प्रजल्पति ज्वालानदीं संशुष्यति । स्फुट्यमानः पाषाणः क्रोशतीत्यादिः स्पर्शादीनां तेजःप्रभृतिषु सम्वादोऽविवादएव । न चैवमनुभवोभ्रान्तिः व्यवहारदशायां बाधादर्शनात् । तथाच प्रतिनियताश्रया अपि शब्दादयोगुणाः यथायथं भूतान्तरेष्वप्युपलभ्यमाना भूतानां पञ्चीकृतत्वं गमयन्तीति । एवं भूतारोपं प्रपञ्च्यभौतिकारोपमाह ॥

एभ्यइति । भूरादयः प्राणिनां कर्म्मज्ञानफलभोगस्थानविशेषा यथापाठक्रममुपर्य्युपरिवर्त्तमानाः सप्त । अधोऽधः पाठक्रमेण वर्त्तमाना अतलादयः सप्तेत्येवं चतुर्द्दशलोकाः एतएव स्वावरणभूतलोकालोकपर्व्वततद्बाह्यपृथिवी तद्बाह्यसप्तसमुद्रैः सहिता ब्रह्माण्डमित्युच्यते । अस्यच परिमाणं श्रुतौ संकीर्त्तितं द्वात्रिंशतं वैदेवरथाह्नान्ययं लोकस्तं समन्तंपृथिवीद्विस्तावत्पर्य्येति । तां पृथिवीं द्विस्तावत् समुद्रः पर्य्येतीति । शरीराणां चातुर्विध्यं स्पष्टयति ॥

शरीराणीति । यथोद्देशक्रमं शरीराणि लक्षयति ॥

*contained in it, and their food and drink &c*] Bhûr and the other six are particular places for the enjoyment of the fruit of good works and knowledge by sentient creatures, seven in number, each being above the other according to the order of enumeration. Atala and the other hells, situated one below the other according to the order of enumeration, are seven in number. There are, therefore, fourteen such spheres in all. These together with the mountainous belt Lokâloka, the land beyond that, and the seven oceans, are called the mundane egg. The dimension of this mundane egg is recorded in the text. This world is traversed by the chariot of the Sun in two-and-thirty days, the earth around it is twice as great, the ocean around the earth again is twice as great. The author enumerates the four kinds of bodies or animated beings.

*Bodies* [*are those called viviparous, oviparous, equivocally generated and germinant*] He proceeds to characterise bodies in the order of enumeration.

*The vivaparous* [*are those which are born from the womb, such as men and the lower animals; oviparous are those produced from an egg, as birds, and snakes, the equivocally generated are those produced from sweat or hot moisture as lice and mosquitoes; the germinant are those which spring from the soil, as creepers and trees*] The Vaiśeshikas who teach that that which exists in both the perceptible and the imperceptible cannot be itself preceived, and that therefore the composition of bodies from the five elements is impossible, maintain that if bodies were originated by earth, water, and light, together with ether and air which are perceptible, it would follow that bodies themselves would be altogether imperceptible; and that consequently the body is not compounded of the five elements. If we be asked, How then from five elements can there be affirmed genesis of the four kinds of animated organisms? We reply that the effect of all the elements is observed in the body, inasmuch as contraction, expansion, digestion, moisture, and hardness are matters of universal experience. It is therefore laid down that all the five elements, as the causes of these properties, exist in the body. If these elements, then, only existed there, but were not the co-efficients of the body, the waste and repair of the organism could not result from their accession and recession; but waste and repair are observed to have these for their condition. We may fairly affirm, therefore, that there exists between the five elements and the body the relation of integrant parts and integrate whole, as between the threads and the cloth.

But were it asserted that the non-terrestrial elements barely exist in the terrene educt, the waste and repair of the organism could not be said to depend on their coming and going. For a piece of cloth, when wetted with water which is no co-efficient of cloth, receives no increase or diminution from the presence or absence of the water, inasmuch its breadth and length are seen under the same condition. Similarly there is observed no change in the size of water and earth consequent on the coming and going of fire and air. Again if the other elements barely existed in the organism made of earth, as air exists in the bellows, it would follow that the existence and non-existence of expansion and the like, would be equally applicable to the bellows and to the body; for in both instances we might equally suppose another cause, viz connection with soul possessing requitative efficacy, and volitions &c. generated thereby.

Nor can the doubt be raised that the body residing in the perceptible may be imperceptible; for it would follow that wholes residing in perceptible and imperceptible integrants would be imperceptible.

Nor can it be maintained that ether cannot be a constitutive cause, because it is void of touch, and without parts, an indivisible substance: for we do not admit the doctrine of constitutive causes, for milk which is a single whole is observed to produce curds. You may

---

जरायुजादीनीत्यादिना। ननु वैशेषिकाः प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वात् पञ्चात्मकत्वं न विद्यतइति वदन्तोऽप्रत्यक्षाभ्यांवाय्वाकाशाभ्यां सह पृथिव्यादिभिरारभ्यमाणानां शरीराणामत्यप्रत्यक्षत्वप्रसङ्गात् न पाञ्चभौतिकं शरीरमित्याहुः तत्कथं पञ्चभ्योभूतेभ्यश्चतुर्व्विधभूतग्रामस्योत्पत्तिरुच्यते इति चेऽत्राहुः। अस्ति हि शरीरे सर्व्वेषामपि भूतानां कार्य्यसंप्रतिपत्तिः अवकाशव्यूहनपचनक्लेदनकाठिन्यानां सर्व्वजनानुभवसिद्धत्वात् अतस्तत्कारणतया पञ्चापि भूतान्येकस्मिन देहे सन्तीति स्थिते यदि तेषां भूतानां देहावयवत्वाभावो वृत्तिलाभमात्रतैव स्यात् तदा तदपगमानपगमाभ्यां देहस्यापचयोपचयौनस्यातां। दृश्यते च तयोः सतोरुपचयापचयो। अतस्तन्तुपटयोरिवावयवावयवित्वमेव पञ्चभूतदेहयोर्युक्तं। पार्थिवे कार्य्येऽपार्थिवानां वृत्तिलाभमात्रत्वे तु तदुपगमापगमाभ्यां तस्योपचयापचयायोगात्। नहि वस्त्रस्यानारम्भकसलिलद्रव्यार्द्रीकृतस्य तदवस्थायामुपचयस्तदपगमेवापचयोऽस्ति तदायामविस्तारयोस्तदवस्थात्वदर्शनात् तथा जलमृदोरपि पावकपवनोपगमापगमाभ्यां परिमाणान्यथात्वं न दृश्यते तथाच यदि भस्त्रादाविव पार्थिवे देहे भूतान्तरस्य प्रवृत्तिमात्रं स्यात्तर्हि भस्त्रादिदेहयो रविशेषेण व्यूहनादीनां सत्त्वमसत्त्वम्वातुल्यवत्प्रसज्येत अदृष्टवदात्ममनः संयोगतज्जन्यप्रयत्नादिकारणान्तरस्याप्युभयत्र समानस्यापादयितुं शक्यत्वात्। नच प्रत्यक्षवृत्तेः शरीरस्याप्रत्यक्षत्वं शङ्कनीयं प्रत्यक्षाप्रत्यक्षावयववृत्तीनामवयविनामप्रत्यक्षत्वप्रसङ्गात्। नच स्पर्शशून्यत्वादेकद्रव्यत्वाच्चाकाशस्यारम्भकत्वानुपपत्तिरिति वाच्यं। आरम्भवादस्यानङ्गीकारात्। एकस्यापि दुग्धावयविनोदध्यारम्भकत्वदर्शनात्। नच तत्र दुग्धावयवैरेव दध्यारभ्यतइति वाच्यं। तथा सति दधिदुग्धयोर्गन्धरसादिवैषम्यं न स्यात् दुग्धस्यैव सतः परिणामोदधीत्यभ्युपगमे स्याद्गन्धादिवैषम्यं। स्पर्शशून्यमपि द्रव्यं यथागुणारम्भकं दृष्टं तथाद्रव्यारम्भकमप्यस्तु श्रुतिरपि शरीरस्य संकीर्णद्रव्यारब्धतां श्रावयति। अश्नमशितं त्रेधाविधीयत इत्यादौ याज्ञवल्क्योप्याह पञ्चधातून् स्वयं षष्ठआदत्ते युगपत्प्रभुरिति। वस्तुतस्तु पञ्चानां भूतानां पञ्चात्मकत्वस्य दर्शितत्वादारम्भवादस्य निराकृतत्वाच्च नात्रोदयनाद्युक्तदोषशङ्कावकाशोपीति गमयितव्यं। तस्मात् सिद्धं शरीरं पाञ्चभौतिकमिति अत्रापीति स्पष्टार्थः। स्थूलसमष्ट्युपहितचैतन्यस्य व्यपदेशमाह॥

not rejoin that it is by the portions of the milk that the curds are originated, for were this the case there could be no disparity between the smell, taste, and other qualities of the milk and the curds; whereas if it be admitted that the curds are only a modification of the milk still existing [under the form of curds], the disparity of smell and the other qualities would be accounted for.

Let intangible substance be productive of substance, in like manner as it has been observed to produce qualities. The Veda also proclaims that the body is produced by a plurality of substances, in the text The food which is eaten is parted into three, and in other passages Yâjnavalkya also says, The spirit being itself the sixth, assumes at once the five elements.

It must therefore, be understood that, the five elements having been shown to be each composed of the five, and the doctrine of constitutive casuality being repudiated, there is no room even for a suspicion of the objections urged by Udayanâchârya and others. It is evident, then, that the body has been shown to be composed of the five elements.

The author proceeds to enumerate the appellations of pure intelligence when associated with the gross aggregate

[*Intellect associated with*] *the collective aggregate thereof* [*is called the spirit of mankind, and the various ruler*]. By the particle *and* are indicated such titles as spirit. There is an ellipse of the following words· By such texts as But he who thinks himself a spirit existing within a span, esteems himself the spirit of mankind This same aggregate as the various ruler, the spirit, &c, this universe is spirit

The author gives the reasons of these titles.

*Because it conceits itself to be all men* [*and because it rules variously*] It is called the spirit of mankind because it conceits itself to be all men, and the various ruler because it governs variously. By the particle *and* we are to understand that it is called spirit *(purusha)*, because it is contained in or occupies the body *(pûrnatvât)*, After thus explaining the titles of spirit conditioned, the author gives those of that which conditions or illusorily determines it.

*This collective aggregate thereof* [*is the gross body of the spirit; and since it is a modification of food it is called the nutrimentitious sheath; and since it is the place of fruition of gross things, it is called the waking world*] It is a modification of food according to the text: Food is the various ruler. The fruition of gross things is exceedingly vivid experience. Having thus explained the nomenclature of the aggregate of gross things, and of pure intelligence as conditioned or illusorily determined thereby, the author proceeds to explain that of the distributive gross, and of intelligence thereby conditioned.

[*Intelligence conditioned*] *by the distribution hereof* [*is called the Pervader*] He assigns the reason why the intelligence conditioned by the distributive gross body is termed the Pervader

A. E G. & G D

---

एतत्समष्टीति । चकारात् पुरुष इतिशब्दग्रह उच्यते । यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते सैषा विराडन्नादीति । पुरुष एवेदं इत्यादिश्रुतिभिरिति शेषः । तत्र हेतूनाह ॥

सर्व्वनरेति । सर्व्वशब्दो विश्वपदपर्य्यायः । विश्वनराभिमानित्वाद्वैश्वानरः विविधं राजमानत्वाद्विराट् चकारात् पुरुष इति च द्रष्टव्यं । उपहितस्य व्यपदेशानुक्त्वा उपाधेरपि तानाह ॥

अस्येषेति । अन्नं वै विराडिति श्रुतेरन्नविकारत्वं स्थूलभोगोऽतिस्पष्टो भोगः । एवं समष्टिस्थूलतदुपहितचैतन्ययोर्व्यपदेशमिमं दर्शयित्वा व्यष्टिस्थूलतदुपहितयोरपि तमाह ॥



PRINTED AND PUBLISHED BY THE PROPRIETORS, E J LAZARUS AND CO. AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 83. Benares, April 1st, 1873. Vol. VII.


## ॥ चिन्तामणेः शब्दखण्डम् ॥

ननु यावन्नित्यपरिपालनस्य तत्फलं, न तु काम्यश्राद्धादेः, काम्यान्तर्भावे मानाभावात् (१) यावत्काम्यानुष्ठानाशक्तेश्च यावच्छक्त्यानुष्ठानस्यापि नान्तर्भावः । कामनाविरहादिनाप्यकरणात् (२) यावन्नित्यानुष्ठाने तत्फलाभावप्रसङ्गात्, नित्यस्यैवावश्यकत्वेनोपस्थित्या ऽन्वयाच्च । अपि च तैः कर्मभिः प्रत्येकमुत्पत्त्यपूर्वं तैश्च परमापूर्वं जन्यतइति न, (३) गौरवात् (४) मानाभावाच्च । किं त्वन्तिमक्रियया परिपालनरूपक्रियान्तरेण वेति न सर्वं कर्म ब्रह्मलोकावाप्तिफलकमिति । मैवम् । (५) भगवदुद्देशेन कृतस्य काम्यस्य नित्यस्य वा यस्य कस्यापि कर्मणः पालनाद्ब्रह्मलोकावाप्तिः फलं श्रूयतइति जातेष्टिपितृयज्ञयोरपि तथा कृतयोस्तदेव फलम् । तथा च भगवद्गीता ॥

(६) "यज्ञायाचरतः कर्म (७) कर्मग्रन्थिर्विलीयते ।
यज्ञार्थात्कर्म्मणोन्यत्र लोकोयं कर्म्मबन्धनः" ॥

इति । तच्च कर्म्म यज्ञार्थतया प्रत्येकमेव तत्फलसमर्थम् । संवलनं तु (८) मङ्गलवदुपयुज्यते । अन्यथैकैकप्रयोगस्य व्यवधानादसंभवः । (९) परिपालनं तु कर्तव्यमित्येव करणम् । तदुक्तम्

---

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

ननु सामस्त्यार्थकसम्यक्पदमेव मानमित्यत आह (१) यावत्काम्येति । तथा चानन्यगत्या संकोच इति भावः । एवं सत्ययं दोष इत्याह । (२) यावन्नित्येति । नित्यमावश्यकम् । तेन नैमित्तिकस्यापि संग्रहः । (३) गौरवादिति । अन्तिमक्रियामात्रात्तत्संभवे क्रियान्तरे हेतुत्वकल्पने गौरवादित्यर्थः । न चैवं पूर्वाशेषकर्मानुपयोगीति वाच्यम् । तदभावेन्तिमत्वासिद्धेः तेषामवच्छेदकत्वपर्यवसानात् । ननु प्रामाणिकं गौरवमपि न्याय्यमित्यत आह । (४) मानेति । यद्यपि संध्यावन्दनवत्सर्वकर्मणां तत्फलसंबन्धो युज्यते, तद्वदेवोत्पत्त्यपूर्वाणि परमापूर्वं च, तद्वदेव च व्यवधानेप्येकप्रयोगत्वं, तथापि काम्यान्तर्भावे मानाभाव इत्यादिदूषणएव तात्पर्यमित्याहुः । संध्यावन्दने ऽप्यन्तिमस्यैव ब्रह्मलोकफलकत्वमित्यन्ये । परिपालनं च भगवत्समर्पणरूपं कर्मान्तरमित्याशयः । (५) भवगदिति । तथा च भगवदुद्देशकृतत्वं सम्यक्त्वमिति भावः । (६) यज्ञायेति । इज्यतइति यज्ञो विष्णुः, तत्प्रीतये सर्वजगत्कर्त्रभिन्न इति न तत्र प्रीतिर्विरुद्धा । तत्समर्पणायेत्यन्ये । (७) कर्मग्रन्थिः, कर्मजनितो धर्मो ऽधर्मश्च ग्रन्थिः,बन्धहेतुत्वादित्यर्थः । (८) मङ्गलवदिति । तथा च यथा तत्रानेकविघ्नध्वंसस्तथात्राप्यनेकफलमित्याहुः । तच्चिन्त्यम् । मुक्तेर्नानात्वाभावात् । सारूप्यसालोक्यादिभेदात्तथात्वमित्येके । अन्ये तु एकस्य कर्मणः तत्फलकत्वे ऽप्यसाङ्गत्वशङ्कया मङ्गलवत्कर्मान्तराचरणमित्यर्थ इत्याहुः । ननु परिपालनरूपक्रियान्तरमेव तत्फलत्वेन श्रूयते, न जातेष्ट्यादीत्यत आह । (९) परिपालनं त्विति । एवकारः फलकामनाव्यवच्छेदार्थः । तदुक्तम् । असंकल्पितफलकाम्यकर्तारो हि हिरण्य-

"ददामि देयमित्येव यजे यष्टव्यमित्यहम्" ।

इति । यत्तु निषिद्धासंबन्धएव सम्यक्त्वं न तु विहितमात्रानुष्ठानमिति, तन्न । यत्किंचिन्निषिद्धासंबन्धस्याभावात्, सर्वनिषिद्धासंबन्धस्य सर्वत्र सुलभत्वादिति संप्रदायः । अत्र ब्रूमः, भगवदुद्देशेन कृतं किंचिदेव कर्म, सर्वं वा, काम्यं वा सर्वं, नित्यं वा सर्वं,मिति । नाद्यः, (१०) एकेनैव काम्येन नित्येन वा स्नानेन तथा कृतेन तत्फलसिद्धौ बहुवित्तादिसाध्ये श्राद्धादावप्रवृत्त्यापत्तेः । नापरौ, अशक्यत्वात् । न तुर्यः । जातेष्ट्यादेर्नित्यत्वाभावात् । तस्मात्सम्यग्गृहस्थाश्रमपालनस्य तत्फलम्, सम्यक्त्वं तु (११) सामस्त्यमेव, अतो न श्राद्धादेर्ब्रह्मलोकावाप्तिः फल(१२)मिति साधूक्तं "शास्त्रादेशितं फलमनुष्ठातरीत्युत्सर्ग" इति, तच्च फलं (१३) क्व चिद्विधिवाक्यश्रुतं (१४) क्व चिच्चार्थवादिकमिति ॥

इत्यपूर्ववादः ॥

(१५) नन्वर्थवादादीनां सिद्धार्थतया न प्रामाण्यं, कार्यान्वितएव पदानां शक्त्यवधारणात् । (१६) व्यवहारादेव सर्वेषामाद्या व्युत्पत्तिः (१७) उपायान्तरस्य शब्दव्युत्पत्त्यधीनत्वात् । तथाहि । प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यप्रवृत्तिमुपलभमानो बालः प्रेक्षावद्वाक्योच्चारणस्य प्रयोजनजिज्ञासायां तदन्वयव्यतिरेकानुविधायित्वादुपस्थितत्वाच्च प्रयोज्यप्रवृत्तिमेव प्रयोजनमवधारयति । (१८) न चाकिंचित्कुर्वतस्तादर्थ्यं संभवतीति तज्जन्यं प्रवृत्त्यनुकूलं कार्यताज्ञानमेव कल्पयति, स्वप्रवृत्तौ च तेन कार्यताज्ञानस्य हेतुत्वावधारणात् । नान्यत्, प्रवृत्तेः कार्यताज्ञानावरुद्धत्वात् । (१९) न चैवं शब्दस्य ज्ञानद्वारा प्रवृत्तिहेतुत्वम् । स्वप्रवृत्तौ बालेन (२०) शब्दाहितविशेषकार्यताज्ञानस्य हेतुत्वेनानवधारणात् । (२१) ज्ञाने च प्रत्यक्षादिनानोपायकत्वदर्शनात् शब्दोऽपि कार्यताज्ञानहेतुरित्यवधार्य तत्रैव शक्तिं कल्पयति, उपस्थितत्वात् । (२२) पश्चादावापोद्धारेण क्रियाकारकपदानां (२३) कार्यान्विततत्तदर्थेषु शक्तिं गृह्णाति, प्रथमगृहीतसामान्यशक्त्यनुरोधात् ॥

स्यादेतत् । यद्यपि वृद्धव्यवहारादादौ कार्यान्वितधीरनुमिता तथाऽप्यन्वितमात्रशक्त्यैव कार्यवाचकपदसमभिव्याहारादाकाङ्क्षादिमहिम्ना कार्यान्वितधीसंभवान्न कार्यांशेपि शक्तिः । (२४) परम्परयापि शब्दस्य कार्यान्वित-

---

गर्भपदवीमवाप्यापवृज्यन्त" इति । न च फलकामनां विना प्रवृत्तिरेव न स्यादिति वाच्यम् । उत्कटफलकामनानिषेधात् । (१०) एकेनैवेति । विशेषतः सालोक्यादिफलबोधकश्रुत्यादेरभावादेकेनैव तावत्सिध्यापत्तेः । तथापि चाल्पायाससाध्यद्विजादिकर्मणैवोपपत्तौ बह्वायाससाध्यबहुलकर्माकरणप्रसङ्गः । न चासाङ्गत्वशङ्कया तदिति वाच्यम् । सावधानं साङ्गेपि कृतेऽन्यकर्मकरणदर्शनात् । (११) सामस्त्यमेवेति । आवश्यककर्मणामिति शेषः । तथा च तेषामेव कर्तव्यमित्येव कृतानां ब्रह्मलोकावाप्तिः फलं, न तु जातेष्ट्यादेः । तत्र च विनिगमनाविरहेण संध्यावन्दनवत् सर्वकर्मणामेव तत्फलहेतुत्वमुत्पत्त्यपूर्वादिकल्पनमपि प्रामाणिकमित्युत्सर्ग एवेत्युपसंहरति । (१२) इति साधूक्तमिति । (१३) क्व चिदिति । "स्वाराज्यकामो राजसूयेन यजेते"त्यादौ । (१४) क्व चिच्चेति । "तरति मृत्यु"मित्यादौ ॥

आर्थवादिकमित्याक्षिपति । (१५) नन्विति । एतदेव कुत इत्यत आह । (१६) व्यवहारादिति । (१७) उपायान्तरस्येति । प्रसिद्धार्थपदसामानाधिकरण्यवाक्यशेषव्याकरणकोशाप्तोपदेशोपमानादेरित्यर्थः । तदुक्तम् ।

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यव्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इति । (१८) न चाकिंचिदिति । आशुविनाशित्वादिति भावः । तर्हि शब्दस्य ज्ञानद्वारा प्रवृत्तिहेतुत्वमस्त्वित्याशङ्क्य निराकरोति । (१९) न चेति । (२०) शब्देति । शब्दप्रयोज्यजातिमत इत्यर्थः । तथा च तत्र व्यभिचारादत्रापि ज्ञाने एवान्यथासिद्धः शब्दः । न च प्रवृत्तिविशेषे तथा हेतुत्वं, सामान्यसामग्रीत एवोपपत्तौ तथा हेतुत्वकल्पने गौरवान्मानाभावाच्चेति भावः । तर्हि व्यभिचारान्न ज्ञानेऽपि हेतुत्वं कल्पयेदित्याशङ्क्याह । (२१) ज्ञाने चेति । तथा चानन्यथासिद्धान्वयादिना शब्दस्य ज्ञानहेतुत्व वैजात्याच्च न व्यभिचार इति भावः । विशिष्य शक्तिग्रहार्थमाह । (२२) पश्चादिति । आवापः, संग्रहः, उद्धार,स्त्यागः । क्व चिदुद्धापेति पाठः । (२३) कार्यान्वितेति । नन्वेवं कार्यान्वितघटत्वादिकं शक्यतावच्छेदकमिति घटपदाद्देस्तत्प्रकारिकैव पदार्थस्मृतिः स्यादिति चेत्, न । इष्टापत्तेरित्येके । वस्तुतस्तु यथा पदानामन्वितज्ञानजननियमेऽप्यन्वयांशे स्वरूपसती शक्ति,स्तथाच कार्यान्वितत्वज्ञानजनननियमाभ्युपगमात्तत्र शक्तावपि तदंशे स्वरूपसती सा व्याप्रियतइति न तथात्वमिति ।

ननु कार्यांशे शक्तिं विना कार्यान्वितधीर्न स्यादित्यन्यथाऽनुपपत्त्या तदंशे शक्तिकल्पनमित्यत आह । (२४) परम्परयेति ।

ज्ञानानुकूलत्वादर्थापत्तावन्यथोपपत्तिरपि । अवश्यं चाकाङ्क्षादेः कारणत्वं, कार्यांशे शक्तावपि (२५) तद्व्यतिरेकादन्विताभिधानव्यतिरेकनियमात् । (२६) सति चाकाङ्क्षादौ कार्यस्य व्यतिरेकदर्शनादन्विताभिधानव्यतिरेको न क्वाप्यस्ति । (२७) अन्यथा गवादिपदानां व्यक्तावपि शक्तिः स्यात् । संस्कारादेव व्यक्तिलाभदर्शनान्न तथेति यदि तदा कार्यवाचकपदादेव कार्यान्वितलाभ इति किं शक्त्या । वृद्धव्यवहारे नियमतः कार्यान्वितज्ञानं दृष्टमिति तत्र शक्तिकल्पने वृद्धव्यवहारे शब्दोपस्थापितेनैवान्वयबोधदर्शनाच्छब्दसंनिधेरप्यन्वयहेतुत्वकल्पने द्वारमित्यादौ शब्द एवा(२८)ध्याह्रियेत । क्व चिदसंपूर्णवाक्ये वृद्धव्यवहारादाद्यव्युत्पत्तेः शब्दसंनिधिर्व्यभिचरतीति चेत्, तर्हि सिद्धेर्थेऽप्यन्वयप्रतीतिदर्शनात् कार्यत्वमपि व्यभिचारि । न च तत्र लक्षणा, बाधकाभावात् । (२९) शक्तिकल्पनभिया ह्यन्यत्र लक्षणा मता । इह तु लघीयस्योभयसाधारणपदार्थमात्रशक्त्या मुख्यत्वस्यैवोचितत्वात् । (३०) किं च कार्यवाचिलिङादीनामाकाङ्क्षाद्युपेतपदार्थान्वितस्वार्थबोधकत्वमवश्यं वाच्यम् । अतो विशेषात्पदान्तराणामपि तथात्वमस्तु लाघवादिति । मैवम् । व्यवहारहेतुतया ऽनुमिते हि कार्यान्वितज्ञाने ऽन्वयव्यतिरेकाभ्यां (३१) शब्दस्य साक्षात्कारणत्वमवधारयति न परम्परया । साक्षात्त्वस्यौत्सर्गिकत्वेन तत्संभवे परम्पराया अन्याय्यत्वाद् इति (३२) तत्रैव शक्तिं कल्पयति, नान्वितज्ञाने पदार्थज्ञाने वा, ऽप्रवर्तकतया प्रवृत्त्या स्वकारणत्वेन तयोरनुपस्थापनात् । न चान्वितज्ञानशक्तावपि परम्परया कार्यत्वधीः संभवतीत्यर्थापत्त्या सैव कल्प्यतां, लाघवात्, न तु विशिष्टज्ञाने शक्तिरन्यलभ्यत्वाद् इति वाच्यम् । अर्थापत्तेः साक्षादुपपादकमात्रविषयत्वेन न्यूनाधिकार्थाग्राहकत्वात् (३३) साक्षादुपपादककार्यान्वितज्ञाने शक्तिः कल्प्यते । लिङादीनां शक्तेरकल्पनादन्यलभ्यत्वतर्कस्याप्यभावात् । आद्यव्युत्पत्तेर्विचार्यत्वात् । किं च प्रवृत्तिकारणतयोपस्थितं कार्यान्वितज्ञानमपहायानुपस्थितान्वितज्ञानमात्रे शक्तिकल्पनमयुक्तम् । (३४) हेत्वभावात्, उपस्थित्यन्तरे गौरवाच्च । अथ कार्यान्वितज्ञानोपस्थितावप्यन्वितज्ञानमप्युपस्थितमिति लाघवात् कार्यांशमपहायान्विते शक्तिर्गृह्यतामिति चेत् । ज्ञाने हि पदानां शक्तिः शक्यत्वात्, नार्थे । अन्यच्च कार्यान्वितज्ञानमन्यदन्वितज्ञानं, विषयभेदेन ज्ञानभेदात् । तदुक्तमभाववादे । अन्यद्भूतलज्ञानमन्यच्च घटवद्भूतलज्ञानमिति । अन्वितज्ञानमुपस्थाप्य तत्र शक्तिग्रह इति गौरवमेव । लघुनि शक्ये संभवति अन्यलभ्य गुरु न तथेति चेत्, न । युगपदुपस्थितौ तथात्वात् । न च तस्याप्यनुपस्थितः । पुरुषविशेष(३५)दोषात्,

---

· यद्यपि पदार्थस्मरणद्वारा ऽऽकाङ्क्षासहकारेणोभयमते ऽपि कार्यान्वितधीरिति परस्यापि परम्परयैव तज्ज्ञानानुकूलत्वं, तथापि कार्यानन्वितावान्तरवाक्यार्थज्ञानद्वारा तद्वारिति परम्परा, तन्मते तु कार्यान्वितज्ञानएव पदे सामर्थ्यात्साक्षादेव कार्यान्विततज्ज्ञानमित्यवान्तरवाक्यार्थबोधो ऽपि कार्यान्वितविषयत्वनियत एवेति साक्षात्त्वम् । अत एव रूढिपूर्वकलक्षणास्थले ग्रन्थकार एव वक्ष्यति । यथा पङ्कजमानयेत्यत्र प्रथमं डार्थवाक्यार्थधीस्ततस्तदन्वितजन्मधीस्तदनु च तथाभूतजन्मनि पङ्कपदार्थान्वयधीः, कार्यान्वितव्युत्पत्त्यनुसारात्, न तु सिद्धपङ्कजन्मकर्तृत्वानां प्रथममन्वयधीरिति वयमालोचयामः । (२५) तद्व्यतिरेकादिति । स्वरूपसदाकाङ्क्षाहेतुत्वपक्षे । (२६) सति चेति । सिद्धार्थे ऽप्यन्वयबोधादित्याशयः । (२७) अन्यथेति । उपस्थितत्वमात्रादेव यदि शक्तिकल्पनं तदेत्यर्थः । अत्र त्वन्मतइति शेषः । (२८) अध्याह्रियेतेति । त्वन्मतेपीति शेषः । (२९) शक्तीति । शक्त्यन्तरेत्यर्थः । ननु प्रथमशक्तिग्रहस्योपजीव्यत्वात्तद्विरोध एव बाधक इति लक्षणा स्यादित्यत आह । (३०) किं चेति । कार्यवाचिनि कार्यान्विते शक्तिकल्पने ऽनन्वय एवेति व्यभिचारात्प्रथममेव कार्यान्विते शक्तिग्रहो भूतो बाधे त्याज्य इति भावः । (३१) शब्दस्येति । पदार्थस्मरणव्यापारादिविशिष्टस्येति शेषः । अन्यथा स्मरणद्वारे हेतुत्वे साक्षात्त्वानुपपत्तेः, उक्तरीत्या साक्षात्परम्परे बोध्ये । यत्तु कार्यवाचिपदसमभिव्याहारात्तल्लाभो न्यायमते परम्परेति । तन्न । परमते ऽपि तत्समभिव्याहारस्यापेक्षणात्, अन्यथा कार्यान्वितशक्तावपि सिद्धार्थे ऽन्वयबोधस्य दुर्वारत्वात् । व्यवहारोपपादकतावच्छेदककार्यान्वितज्ञानत्वावच्छेदेन कारणत्वमेव साक्षात्कारणत्वमिहेत्यन्ये । (३२) तत्रैवेति । प्रथमगृहीतसाक्षात्कारणतारतार्थमिति भावः । (३३) साक्षादिति । साक्षादुपपादिका कार्यान्वितज्ञानशक्तिः कल्प्यतइत्यर्थः । यद्वा व्यवहारस्य साक्षादुपपादके कार्यान्वितज्ञाने शक्तिः कल्प्यतइत्यर्थः । (३४) हेत्वभावादिति । उपस्थितिरूपहेत्वभावादित्यर्थः । (३५) दोषादिति । न चेति संबन्धः । अत्र हे-

(३६) सर्वैरेवाद्यप्रवृत्तौ तथानवगमात् । तथापि न कार्यान्विते शक्तिः, कार्यवाचिलिङादीनां व्यभिचारादिति चेद् । न । (३७) सर्वपदानां कार्यत्वविशिष्टधीजनकत्वात् । तच्च कार्यान्वितस्वार्थप्रतिपादकतयेतरान्वितस्वार्थकार्यप्रतिपादकतया वेति । एवं कार्यान्वितव्युत्पत्तौ सत्यामनाकाङ्क्षादौ व्यभिचारादाकाङ्क्षादे(३८)रुपाधित्वम् । तथा चोपजीव्यप्रथमभाविकार्यान्वितव्युत्पत्त्यनुरोधेन विध्यश्रुतावपि कार्याध्याहारः (३९) क्व चिल्लक्षणा क्व चिदसंसर्गाग्रह इति । सिद्धार्थे ऽन्वयप्रतीतिदर्शनादुत्तरकालमन्वितमात्रे शक्तिरेव कल्प्यतां, प्राचीनकार्यान्वितज्ञानं बाध्यतामित्यप्यत एव निरस्तम् । पूर्वकल्पनातः कल्पनान्तरप्रसङ्गाद् उत्तरकालभाविसिद्धार्थप्रयोगस्य लक्षणादिभिरप्युपपत्तेः, (४०) अनन्यथासिद्धत्वाभावेन प्राचीनज्ञानाबाधकत्वात् (४१) उपजीव्यव्याघाताच्च ॥ (४२) अथ सिद्धार्थेऽपि व्युत्पत्तिः संभवति । तथाहि, उपलब्धचैत्रपुत्रजन्मा बालस्तादृशेनैव वार्त्ताहरेण चैत्रसमीपं गतश्चैत्र पुत्रस्ते जात इति वार्त्ताहरवाक्यं शृण्वन् चैत्रस्य मुखप्रसादं पश्यन् श्रोतुर्हर्षमनुमिनोति । हर्षाच्च तत्कारणं पुत्रजन्मज्ञानं कल्पयति, । उपस्थितत्वात्, उपपादकविषयत्वाद्, अन्योपस्थितौ गौरवाच्च । तत्र वाक्यस्य कारणतां कल्पयति, लाघवादिति चेत्, न । हर्षहेतूनां बहूनां संभवात्, हर्षेण लिङ्गेन पुत्रजन्मज्ञानस्य बालेनानुमातुम(४३)शक्यत्वात् । (४४) प्रियान्तरज्ञानस्य (४५) परिशेषयितुमशक्यत्वात् । अथ पुत्रजन्मज्ञानाव्यभिचारिवृद्धिश्राद्धादिक्रियाविशेषदर्शनात्पुत्रजन्मज्ञानानुमानमिति चेत् । तर्हि पुत्रस्ते जात इति वाक्य तत्क्रियाकर्त्तव्यतापरमेवेति कार्यान्वितज्ञानजनकत्वमेव तस्य प्रथमतो गृह्यते । तदुत्तरकालं पुत्रजन्मज्ञानानुमानमिति न व्युत्पत्तिः कार्यं जहाति । (४६) यत्रापीह सहकारतरौ मधुरं पिको रौतीति प्रसिद्धार्थपदसामानाधिकरण्यादिभिर्व्युत्पत्ति(४७)स्तत्रापि व्यवहाराधीनव्युत्पत्तिपूर्विका कार्यान्वितएव युक्ता । पिकपदशक्तिः पूर्वं नावधृतेति चेत् । न । तत्रापि पिकमानयेत्यादौ (४८) कस्य चित् कार्यान्वितएव व्युत्पत्तेः । (४९) उपजीव्यजातीयतया च तस्या बलवत्त्वम् । किं चे(५०)दमपि पदं कार्यान्वितज्ञानशक्तं, पदत्वा,दिति सामान्यतो ऽवगतम्, स्वार्थविशेषः परं नाधिगतः, स इदानीं सुहृदुपदेशादिभिरवगम्यते । अतः सिद्धं प्रवृत्तिपराणां शब्दानां प्रवर्तकज्ञानजनकत्वं, तच्च क्वचित् साक्षात् क्वचित्परम्परया कार्यान्वयात् । अत एव विधिशेषीभूतार्थवादानां स्वर्गादिपदशक्तिग्राहकाणां च प्रवृत्तिपरत्वेन परम्परया कार्यान्वयात् कार्यान्वितस्वार्थबोधकत्वमिति । यत्र

---

तुमाह । (३६) सर्वैरिति । (३७) सर्वपदानामिति । नन्वेवं कार्यान्वितशक्तौ कार्यान्वितत्वेनैव पदार्थोपस्थितिरिति पक्षे सिद्धार्थेऽपि विशेषणीभूतकार्यमादाय कार्यत्वविशिष्टधीजनकत्वमस्तु । न च कार्यवाचिलिङादिपदाभावान्न तद्धीरिति वाच्यम् । कार्यत्वोपस्थित्यर्थं हि तदपेक्षा, सा च सिद्धार्थादेव जाता, तथा च तदपेक्षायां कार्यस्याध्याहारेण लक्षणया वोपस्थितौ तद्विशिष्टधीर्न स्यात् । स्वीकृतं चानुपदमेव तथा । किं च कार्याभाव इत्यादिशब्दोऽपि तन्मते प्रमाणं स्यात् । अत्राहुः । प्रवृत्तिहेतुज्ञानएव व्युत्पत्तिग्रहात्तादृशकार्यत्वोपस्थित्या तथा निर्वहति तादृशप्रयोजकत्व, प्रकृते तु न तथा । यद्वा ऽयमपि दोषस्तन्मते बोध्य इति । (३८) उपाधित्वमिति । प्रयोजकत्वमित्यर्थः । यत्र न तथा तात्पर्यग्रहस्तत्रासंसर्गाग्रह इत्याह । (३९) क्व चिदिति । ननु पूर्वमपि भ्रमज्ञानमनन्यथासिद्धत्वेनोत्तरेण बाध्यतएवेत्यत्रापि तथा स्यादित्यत आह । (४०) अनन्यथेति । (४१) उपजीव्येति । कार्यान्वितव्युत्पत्तिमुपजीव्य सिद्धार्थे ऽन्वयप्रतीतिरिति तन्मूलिकान्वितशक्तिकल्पना तां न बाधतइत्यर्थः । (४२) अथेति । तथा च कार्यान्वितशक्तेर्नोपजीव्यत्वमिति न तद्व्याघातो, न वा कल्पनान्तरप्रसङ्ग इति भावः । (४३) अशक्यत्वादिति । व्यभिचारादिति भावः । ननु परिशेषाद्बोध्यमत आह । (४४) प्रियान्तरेति । (४५) परिशेषयितुमिति । निरसितुमित्यर्थः । यद्वा प्रियान्तरज्ञानस्य संभवेन पुत्रजन्मज्ञानस्य परिशेषयितुमिति पूरयित्वा व्याख्येयम् । अन्यत्रापि सिद्धार्थे व्युत्पत्तिमाशङ्क्य निराकरोति । (४६) यत्रापीति । यद्यप्युपायान्तरस्येति प्रागुक्तं तथाप्यधिकवचनाय पुनराशङ्कितमिति ध्येयम् । यद्यपि पिकपदशक्त्यनवधारणेऽपि सहकारादिपदव्युत्पत्तिपूर्वकतयापि तथा युज्यते तथाप्यभ्युपगमरीत्या समाधत्ते । (४७) तत्रापीति । (४८) कस्य चिदिति । प्रयोक्तुरित्यर्थः । एवं चोपजीव्यकार्यान्वितव्युत्पत्तिजातीयतयेदानींतन्यपि पिकपदस्य कार्यान्वितशक्तिरेव बलवतीत्याह । (४९) उपजीव्येति । (५०) इदमिति । पिकपदमित्यर्थः ॥ प्रथमगृहीतसामान्यशक्त्यनुरोधादये न कार्यांशत्याग इति युक्तं, प्रथमं वाक्यसामान्यकार्यान्वितज्ञानसामान्ययोर्हेतुहेतुमद्भावग्रहे प्रथ-

पुराणभारतादिपाठे फलश्रुतिरस्ति तत्रार्थवादकल्पितविधिशेषीभूतत्वेन प्रवृत्तिपरत्वमेव तेषामिति परम्परया कार्यान्वयात् कार्यान्वितस्वार्थबोधकत्वं, स्वरूपाख्यानपराणां तु काव्यनाटकादीनां पदार्थासंसर्गग्रहेण संसर्गव्यवहारो न संसर्गग्रह इति ॥

अत्रोच्यते । (५१) घटमानयेतिवाक्यश्रवणानन्तरं प्रयोज्यस्य घटानयनगोचरप्रवृत्त्या घटानयनकार्यताज्ञानमनुमितं बालेन, न तु कार्यान्वितज्ञानम् । प्रवृत्तिविशेषे तस्याहेतुत्वात् । घटादिपदशक्तिग्रहे तस्यानुपयोगाच्च, तत्र च ज्ञानविशेषे घटमानयेतिवाक्यविशेषस्यानाकलितपदविभागस्य हेतुत्वमवधार्य घटपदद्वितीयाधातुविधिप्रत्ययानां प्रत्येकमावापोद्धारेण घटकर्मत्वानयनकार्यत्वज्ञानेषु प्रत्येकं कारणत्वमवगम्य शक्तिं कल्पयति, पश्चात्प्रवृत्तिसामान्येनानुमितकार्यान्वितज्ञाने वाक्यमात्रस्यान्यलभ्यत्वेन (५२) कार्यांशमपहायान्वितज्ञानमात्रे शक्तिं कल्पयति । न तु प्रथमं वाक्यमात्रस्य कार्यान्वितज्ञानमात्रहेतुत्वकल्पनम् ॥ अथ घटानयनक्रियायां प्रथमं (५३) क्रियात्वज्ञानात् प्रवृत्तिमात्रानुमानं, तेन च कार्यान्वितज्ञानमनुमाय तत्र वाक्यमात्रस्य हेतुत्वं कल्पयित्वा शक्तिं कल्पयति । तदुत्तरं विशेषयोः कार्यकारणभावधीरिति चेत् । न । प्रथमं प्रवृत्तिमात्रकार्यान्वितज्ञानमात्रयोरनुमानं बालस्य क्रमशो भवतीत्यत्र मानाभावात् । (५४) घटादिपदशक्तिग्रहस्य तेन विनापि संभवात् । न च तदनुमानसामग्री तदा वृत्तेति वाच्यम् । तदा व्याप्त्यादिस्मृतौ मानाभावात् । (५५) सामान्ययोः कार्यकारणभावग्रहो विशेषयोस्तथात्वग्रहे हेतुरिति चेत्, न । (५६) विशेषयोरन्वयव्यतिरेकाभ्यामेव तद्ग्रहात् । ननु (५७) यथा धूमवह्निविशेषयोः कार्यकारणभावग्रहे तत्सामान्ययोरपि हेतुहेतुमद्भावो भासते, (५८) अन्यथा न सकृद्दर्शनगम्या व्याप्तिः स्यात् । तथा ऽत्रापि विशेषयोः कार्यकारणभाववित्तिवेद्य एव सामान्ययोस्तथाभाव इति चेत्, न । प्रत्यक्षेण (५९) विशेषग्रहे योग्यत्वा(६०)त्सामान्यमपि भासते । प्रकृते च कार्यविशेषेण कारण(६१)विशेषो ऽनुमितो न सामान्यमिति न (६२) युगपदुपस्थितिः । अथ विशेषयोः कार्यकारणभावात्सामान्ययोरपि तथात्वमनुमापयतीति चेत्, तर्हि विशेषयोः कार्यकारणभावावगमः प्राथमिक इति तन्मूलकः प्रथमं पदविशेषशक्तिग्रह एव स्यात् । (६३) निष्प्रयोजनत्वेनान्तरानुमितौमानाभावात् । यच्चोक्तं प्रवृत्तिकारणतयोपस्थितं कार्यान्वितज्ञानमपहायान्वितज्ञानं कल्पयित्वा तत्र शक्तिकल्पनमयुक्तम्, उभयथापि गौरवादिति । तन्न । (६४) कार्यान्वितज्ञाने ऽन्वितज्ञानत्वस्य सत्त्वात् । तद्विशेषत्वात्तस्य, अतस्तत्रैव शक्तिग्रहो न कार्यत्वांशेपि । (६५) अत एव घटवद्भूतलज्ञाने भूतलज्ञानत्वमपीति तद्भिन्नं तज्ज्ञानमभावव्यवहारे कारणं त्वया स्वीकृतम् । अस्त्वेवं किं तु

मं सामान्यशक्तेरग्रहादित्याह । (५१) घटमिति । (५२) कार्यांशमिति । प्रथमं विधिप्रत्ययाना शक्तिग्रहादन्यलभ्यत्वप्रतिसंधानस्य सुकरत्वादन्यथा घटाद्यन्तर्भावेणापि सर्वत्र शक्तिग्रहः स्यादिति भावः । (५३) क्रियात्वेति । यद्यपि तन्मते क्रियात्वं प्रवृत्तिं प्रति व्यभिचरत्येव तथापि जन्यकृतिजन्यक्रियामात्रे विशेषोस्तीत्यभिमान इत्येके । व्यभिचाराप्रतिसंधानदशायामनुमानाविरोध इत्यन्ये । (५४) घटादीति । तथा च तदन्यथानुपपत्तिर्न तत्र मानमिति भावः । एतच्च परीत्या परस्मै दूषणम, स्वनये कार्यान्वितज्ञानोपस्थितावन्वितज्ञानत्ववद् घटानयनकार्यताज्ञानोपस्थितौ कार्यताज्ञानोपस्थितिध्रौव्यात् तदुपस्थितावपि सामान्यतो हेतुत्वाग्रहात्र सामान्यशक्तिग्रहमन्यत्र वा तात्पर्यम्, अत एव सामान्यहेतुत्वग्रहमेव शङ्कते । (५५) सामान्ययोरिति । विशेषहेतुत्वग्रह एव प्राथमिक इति वैपरीत्यमित्याह । (५६) विशेषयोरिति । शङ्कते । (५७) यथेति । स्वमतदार्ढ्येनाह । (५८) अन्यथेति । यद्यपि कार्यकारणभाव एव न व्याप्तिर्दण्डघटयोस्तत्सत्त्वेपि तदसत्त्वाद् उपाध्यभावस्य तन्मते व्याप्तित्वाच्च तथापि मतविशेषेण तदुक्तमित्याहुः । (५९) विशेषग्रहे, कार्यकारणभावग्रहे, । (६०) सामान्यमपि, सामान्यकार्यकारणभावोपीत्यर्थः । एतदपि क्वाचित्काभिप्रायं, (६१) विशेष इति । कारणत्वेनेति शेषः । (६२) युगपदुपस्थितिः । विशेषसामान्यकार्यकारणभावयोरिति शेषः । यद्वा प्रत्यक्षेण सामान्योपस्थितौ सामान्यकार्यकारणभावग्रहशङ्का, प्रकृते च तदनुपस्थितौ न तच्छङ्कापीति यथाश्रुतमेव योज्यम् । (६३) निष्प्रयोजनकत्वेनेति । व्याप्त्यादिस्मृतिविरहादिति भावः । प्रथमं सामान्यस्योपस्थितिमभ्युपेत्य कार्यत्वांशे गौरवाच्च शक्तिग्रह इत्याह । (६४) कार्यान्वितज्ञानइति । तदुक्तमभाववादइति । उपोद्बलके प्रत्युपोद्बलकमाह । (६५) अत एवेति ।

तदुपस्थितावप्यन्वितज्ञानत्वं न विषय इति तस्यवोपस्थित्यन्तरं कल्प्यमिति चेत् । न । कार्यान्वितज्ञाने ऽन्वितज्ञानत्वं विशेष्यमिति तदुपस्थितौ तस्यापि विषयत्वात् । (६६) विशिष्टज्ञानसामग्रीतो विशेष्यभानावश्यंभावात् । (६७) अन्यथा ऽन्यज्जातिज्ञानमन्यच्च जातिविशिष्टज्ञानमिति व्यक्तिज्ञानमपहाय जातिज्ञानं क्वापि नोपस्थितमिति न तव जातिरेव पदार्थः स्यात् । जातेः केवलोपस्थितौ च न व्यक्तिसमानसंवित्संवेद्यत्वम् । अथ जातिविशिष्टज्ञानोपस्थितेर्व्यक्तिज्ञानविषयत्वेपि गौरवात्, व्यक्तेरन्यलभ्यत्वाच्च जातिविशिष्टज्ञानत्वं न शक्यतावच्छेदकं, किं तु जातिज्ञानत्वं, लाघवादिति मतम् । तर्हि तुल्यम् । न च युगपदुपस्थितौ लाघवावतारो, (६८) न चात्र युगपदुपस्थितिरिति वाच्यम् । (६९) विशिष्टज्ञानस्य विशेष्यविषयत्वनियमात् । (७०) किं च ममेदं कार्यमितिज्ञानं साक्षादुपपादकं प्रवृत्त्या स्वकारणत्वेनानुमित,मतस्तत्र शक्तिं गृह्णीयात् । साक्षादुपपादकविषयत्वात्कल्पनायाः । न त्विदं कार्यमिति ज्ञाने तस्य साक्षादुपपादकोपपादकत्वात् । अथेदं कार्यमिति ज्ञानशक्त्यैव परम्परया(७१)नुमानद्वारा ममेदं कार्यमिति ज्ञानसंभवादन्यलभ्यत्वेन न तत्र शक्तिकल्पनमिति, तर्हीतरान्वितज्ञानशक्त्यैव कार्यवाचकसमभिव्याहारेणैव कार्यान्वितज्ञानसंभवादन्यलभ्यत्वेन च न तत्र शक्तिकल्पनमिति तुल्यम् । (७२) नन्विदं कार्यमिति ज्ञानं साक्षादेव प्रवर्तकं (७३) कर्तव्यताप्रयोजक(७४)यावदेकविशेषणस्य स्वगतत्वप्रतिसंधानं सहकारि । तेन नातिप्रसङ्गः । न च सहकारिविलम्बेन कार्यानुत्पादे साक्षात्साधनत्वं निवर्त्ततइति चेत् । न । लाघवेन (७५) ममेदं कार्यमिति ज्ञानादेव प्रवृत्तेः । (७६) यथा च भविष्यद्विषयकार्यतानुमितिस्तथोक्तमधस्तात् । अपि च यादृशस्य पुरुषस्याविगीतकृतिसाध्यमिदं तादृशोहमिति धीर्न प्रवृत्तिहेतुः । कृतक्रियमाणविषयकृतिसाध्यताज्ञानस्य सिद्धविषयस्यासिद्धविषयेच्छानुत्पादकत्वात् । (७७) इच्छायाः स्वप्रकारकधीसाध्यत्वेन कृत्या साधयामीतीच्छायाः स्वकृत्यनन्तरं भविष्यत्तारूपकृतिसाध्यताधीजन्यत्वाच्च । (७८) अपि चास्तु प्रथमं कार्यान्वितज्ञाने वाक्यस्य साक्षात्कारणत्वबोधात् तत्र शक्तिग्रहः । तथापि पश्चादावापोद्वारेण पदविशेषस्येतरान्वितस्वार्थज्ञाने शक्तिं कल्पयति लाघवात्, न तु कार्यत्वांशेपि, गौरवात्, (७९) अन्यलभ्यत्वाच्च । न चैवं प्रथमप्रवृत्तस्य साक्षात्कारणताबोधस्य (८०) तन्मूलककार्यान्वितशक्तिग्रहस्य च बाधा स्यादिति वाच्यम् । इष्टत्वात् । अन्यथासिद्धिमपश्यतो हि (८१) बालस्य (८२) स भूत इति तस्या बलवत्त्वात् । गौरवान्यलभ्यत्वतर्कसहकृतप्रमाणजन्यत्वेनो(८३)त्तरस्य बलवत्त्वात् । न चोपजीव्यबाधान्न तथा प्रत्येतीति वाच्यम् । उपजीव्यत्वे मानाभावात् ।

---

(६६) विशिष्टेति । अन्यथा विशेषणस्याप्यविषयत्वे विशिष्टबुद्धिर्निर्विषया स्याद्, विशिष्टस्यातिरिक्तस्यानभ्युपगमादिति भावः । अनिष्टान्तरमप्याह । (६७) अन्यथेति । अस्तु तदुपस्थितिस्तथापि न यौगपद्येनेति न लाघवावतार इत्याशङ्क्य निराकरोति । (६८) न चेति । (६९) विशिष्टेति । तथा च विशिष्टविशेष्ययोर्युगपदुपस्थितिरेवेत्यर्थः । यदि प्रवृत्तिसाक्षादुपपादकत्वेन तत्र शक्तिकल्पना तत्राह । (७०) किं चेति । तथा मदंशोपि शक्यः स्यादन्यलभ्यत्वं गौरवं च तुल्यमिति भावः । परम्परामेवाह । (७१) अनुमानद्वारेति । नवीनमतेनाशङ्कते । (७२) नन्विति । (७३) कर्त्तव्येति । तदुक्तं मोदनकामस्य तण्डुलाद्युपकरणवत् इत्यादि (७४) यावदेकेति । लोकोक्त्या सकलेत्यर्थस्तेन नैकपदानर्थक्यानन्वयावित्यर्थः । (७५) ममेदमिति । यद्यपीष्टसाधनत्वादिविषयकत्वमपि तत्र तथापि तदन्यस्य परोक्षस्य एवकारव्यवच्छेद्यत्वे तात्पर्यम् । नन्वेतद्दुर्ग्रहं, मदुक्तं तु परकृतपाकादौ सुग्रहमित्याशङ्क्य निराचष्टे । (७६) यथेति । स्वसमानप्रकारकत्वेनैव हेतुत्वं न तु समानविषयत्वमपि तन्त्रं, गौरवादित्यत आह । (७७) इच्छाया इति । इदानीं कृतिसाध्यताज्ञानं हेतुः सिद्धे च पाकादौ तद्बाधितमित्यपि दोषो बोध्यः । औत्सर्गिकत्वेन साक्षात्कारणत्वमवधारयतीत्यत्राह । (७८) अपि चेति । (७९) अन्यलभ्यत्वाच्चेति । एतच्च लिङादीनां शक्तिकल्पनोत्तरमिति मन्तव्यम् । (८०) तन्मूलकेति । यत्रैव कारणत्वस्यैव तत्रैव तदवच्छेदकतया कल्पना, शक्तिश्च तन्मते पदार्थान्तर,मस्मन्मते चेश्वरेच्छेत्यन्यदेतदिति भावः । अदर्शने हेतुमाह । (८१) बालस्येति । (८२) सः, कार्यान्वितशक्तिग्रहः । अनन्यलभ्यत्वं यद्यपि न तर्कस्तथापि यदि शक्यं स्यादन्यलभ्यं न स्यादित्यादितर्कप्रयोजकतया तर्कोक्तिरित्याहुः । तर्कपदेन तर्कान्तरमेवोक्तं, न तु तदुभयान्वितं तदित्यन्ये । तर्कपदं ज्ञानपरमित्यपरे । (८३) उत्तरस्य । अ-

देवाद्धि प्रथमं तद्गृत्तं न तु पदविशेषशक्तिग्रहे तस्य हेतुत्वं, (८४) तेन विनापि तत्संभवात् । न च प्राथमिकत्वेन बलवत्त्वम् । (८५) व्यभिचारात्, नापि (८६) सर्वैः प्रथमं प्रतीयमानत्वेन बलवत्त्वम् । सर्वेषां शरीराहंप्रत्यये चन्द्रतारकापरिमाणस्य सर्वैरल्पत्वग्रहे च व्यभिचारात् । अत एव पूर्वकल्पनातः कल्पनान्तरप्रसङ्गः स्यादिति निरस्तम् । (८७) यत्रानन्यथासिद्धतयोपजीव्यतया वा बलवत्त्वं पूर्वकल्पनायास्तत्र तथात्वात् । (८८) किं च प्रथमं कार्यान्वितज्ञाने वाक्यस्य साक्षात्परम्परोदासीनं कारणत्वमात्रं गृह्यते न तु विशेषोपि, (८९) उपायस्यान्वयव्यतिरेकादेरुभयविशेषसाधारणत्वेन तत्संशायकत्वात् । (९०) उत्सर्गोपि बाधकाभावनिश्चयसहकृतो निश्चायकः । न चान्यलभ्यत्वस्य बाधकस्याभावमापाततः स्वतो दर्शनमात्रेण बालो निश्चेतुमर्हति । अत एव प्रामाण्यस्यौत्सर्गिकत्वेपि बाधकाभावसहकृतनिश्चयादेव निश्चयः । (९१) अन्यथा प्रमा ऽप्रमा वा साक्षात्परम्परासाधनं चेति संशयः क्वापि न स्यात् । यत्तु हर्षहेतूनां बहूनां संभवादित्यादि । तन्न । स्वतो गृहीतहर्षहेतुस्तनपानादेर्बोधावतारादन्यस्य हर्षहेतोरग्रहात्, उपस्थितत्वात्, उपपादकत्वाच्च पुत्रजन्मज्ञानस्यैव हर्षहेतुत्वेन कल्पनात् । अन्यप्रियज्ञानं हर्षकारणं भविष्यतीतिशङ्कायां कथमेवमिति चेत् । (९२ एवं हि कार्यान्वितज्ञानेपि शक्तिर्न गृह्येत । प्रयोज्यज्ञानहेतूनां बहुत्वात् । अनन्यथासिद्धशब्दानुविधानस्य च तुल्यत्वा(९३)दन्यप्रियज्ञानस्याज्ञानाच्च । ज्ञानेपि वा तदा तदुपस्थिति(९४)नियमे मानाभावात् संदेहाभावोपपत्तेः । (९५) लिङ्गाभासजन्यकाकतालीयसंपन्नसंवादानुमितिवद्दूषणेन लिङ्गेन पुत्रजन्मज्ञानानुमानसंभवाच्च । न चाभासत्वेनानुमितेर्भ्रमत्वे तद्धेतुकशक्तिग्रहो भ्रमः । विषयस्य तथाभावेन (९६) तयोर्यथार्थत्वात् । (९७) यथा कश्चित् सूत्रसंचाराधिष्ठितं दारुपुत्रकं घटमानयेति नियुङ्क्ते, (९८) स च तमानयति । तदा चेतनव्यवहारादिवत् तद्दर्शी बालो व्युत्पद्यते, इयं क्रिया (९९) कृतिजन्या, सा ज्ञानजन्या, ज्ञानं तद्वाक्यजन्यमित्यनुमितिपरम्पराया भ्रमत्वेपि तद्धेतुकशक्तिग्रहस्तज्जन्यशाब्दबोधश्च यथार्थ एव विषयस्य यथाभावादिति सिद्धं

---

न्वितमात्रशक्तिग्रहस्य । (८४) तेन विनापीति । पूर्वोक्तन्यायेनेति शेषः । तथा च कार्यान्वितशक्तिग्रहस्य पदविशेषशक्तिग्रहे नोपजीव्यत्वमिति भावः । (८५) व्यभिचारादिति । भ्रमस्य प्राथमिकस्याप्यबलत्वादित्यर्थः । (८६) सर्वैरिति । सर्वस्य प्रत्ययत्वेनेत्यर्थः । तेन प्रत्यये व्यभिचारोपि न विरुध्यतइति बोध्यम् । एतच्चाभ्युपगमवादेनेति मन्तव्यम् । (८७) यत्रेति । अन्यथा ज्ञानं स्वविषये प्रवर्त्तकमिति प्रथमकल्पनाया अबाध्यत्वे तत्रान्यथाख्यात्यापत्तिरिति भावः । एतच्चाभ्युपेत्य समाहितं, वस्तुतस्तु साक्षात्कारणत्व गृह्यतएव नेत्याह । (८८) किं चेति । (८९) उपायस्येति । यद्यपि प्रत्यक्षे ऽन्वयव्यतिरेकादिरुपायस्तथा ऽप्यनुमाने लिङ्गघटकतया तथात्वे तात्पर्यं न तूत्सर्गसहकारात्साक्षात्वनिश्चयः स्यादित्यत आह । (९०) उत्सर्गोपीति । कदा चित्तन्निश्चये बाधे त्याग इति पूर्वोक्तएव तात्पर्यम् । ननु यदि बाधकाभावनिश्चयसहकृत एवोत्सर्गो निश्चायकस्तदा किमुत्सर्गेण, बाधकाभावनिश्चयादेव तन्निश्चयसंभवाद्, बाधकापोद्यनियमरूपतया बाधकनिश्चये परं नोत्सर्गावतार इति तन्निश्चयाभावः परमपेक्ष्यते न तु तदभावनिश्चयो ऽपि, तथा च बाधकसंदेहेपि तदवतार इत्युपेयमित्यत आह । (९१) अन्यथेति । एवं सति सर्वत्रौत्सर्गिकार्थनिश्चये तत्संशयो न स्याद्दित्यर्थः । न चोत्सर्गवैयर्थ्य,मन्वयव्यतिरेकाभ्यां तस्यापि लाघवादिवत् प्रमाणसहकारित्वाभ्युपगमादिति दिक् । (९२) एवं हीति । यदि च शङ्काया अनावश्यकत्वं शङ्कापिशाचीत्वेन वा ऽप्रतिबन्धकत्वं तदा तुल्यमिति भावः । कोटिज्ञानाभावादपि न शङ्केत्याह । (९३) अन्येति । (९४) नियम इति । यथा च यत्रैव तदनुपस्थितिस्तत्र सिद्धार्थशक्तिग्रहो ऽविकल एवेत्यर्थः । नन्वेवमन्यप्रियज्ञानाभावविशेषितो हर्षो न पुत्रजन्मज्ञानानुमाने लिङ्गं तदनुपस्थितेस्तदविशेषितं व्यभिचारीत्यत आह । (९५) लिङ्गाभासेति । तथा च व्यभिचारास्फुरणदशायां लिङ्गभ्रमात्तत्संभव इति भावः । (९६) तयोः । अनुमितिशक्तिग्रहयोः । अत्रानुरूपं दृष्टान्तमाह । (९७) यथेति । (९८) स चेति । दारुपुत्रक इत्यर्थः । (९९) कृतीति । आत्मकृतिजन्येत्यर्थः, तथा च पक्षधर्मताबलात्तदीयत्वं कृतौ भावमिति भ्रमत्वं, न चैवमत्र पक्षाप्रसिद्धिः, काञ्चनमयोद्रिरितिवत्तदीयत्वेन प्रसिद्धकृतेरेव पक्षत्वाद्, अत एव तद्वदेव तदंशएव भ्रमत्वं प्रसिद्धकृतौ ज्ञानजन्यत्वस्याबाधितत्वाद्, एवं तदीयत्वेन प्रसिद्धज्ञानं पक्षीकृत्य तद्वाक्यजत्वं साध्यं तत्र चोभयांशएव भ्रमत्वम् । यद्वा कृतिसाक्षाज्जन्येति साध्यं,न चेदमबाधितम्, । अत एवानुमितेर्भ्रमत्वाद् दारुपुत्रकक्रिया स्वकृतिजन्येति सा-

सिद्धार्थे शक्तिग्रह इति । (१००) अत एव

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इत्यर्थवादोपस्थिते सुखे (१०१) वेदादेव स्वर्गपदस्य शक्तिग्रहः ॥

---

मान्यव्याप्तिपुरस्कारेण साध्यमित्याहुः । (१००) अत एवेति । सिद्धार्थस्यापि व्युत्पन्नतया वाक्यार्थानुभावकत्वादेवेत्यर्थः । ननु दुःखासंभिन्नत्वमत्रासंभवि । आद्यन्तयोस्तन्नियमात्, यदि च तदसहवृत्तित्वं त,त्तदास्मदादिसुखेप्यस्ति, नचानन्तरमित्यनेनाविरललग्नप्रवाहो दुःखासंभिन्न इत्यर्थान्न दोष इति वाच्यम् । कतिपयकालावच्छेदेनास्मदादेरपि तथा संभवात् । न चाभिलाषोपनीतमित्यनेन तन्निरासः । चक्रवर्त्तिसुखे तस्यापि संभवाद्, अन्यथा तत एवातिप्रसङ्गनिरासे विशेषणान्तरवैयर्थ्यादिति । अत्र के चित्, एकजन्मावच्छेदेन दुःखासंभिन्नत्वादिकं नानैव प्रवृत्तिनिमित्त, मन्यथा विशेषणवैयर्थ्यात्, तदुपस्थितिस्तु तात्पर्यग्राहकाद्, एवं च न चक्रवर्तिसुखातिप्रसङ्ग इत्याहुः । तच्चिन्त्यम् । एवं हि नानार्थत्वपर्यवसाने गौरवात् तथा तात्पर्यग्राहकाभावाच्च यावति न वैयर्थ्यं तावदेकमेव प्रवृत्तिनिमित्तमभिमतमित्येके । अन्ये त्वधर्माजन्यशरीरजन्यसुखत्वोपलक्षकमिदं,न च योगिनस्तादृशं शरीरं तत्र दुःखोत्पत्तेरधर्मजन्यत्वात् सुखमात्रावच्छेदके तच्छरीरे मानाभावात् । न च स्वर्गिशरीरेपि मरणजन्यदुःखसंभवादधर्मजन्यत्वं मरणस्य दुःखव्याप्यत्वात् ते नराः सुखस्मृत्यव इति च दुःखाल्पत्वपरमिति वाच्यम् । विपक्षबाधकाभावेन व्याप्तेरसिद्धेः, सिद्धौ वा मरणादुःखजनकाधर्मान्याधर्माजन्यशरीरजन्यसुखत्वे तात्पर्यात् । न च स्वर्गहेतुपुण्यक्षयशङ्कया स्वर्गेपि दुःखोत्पत्तेर्दोषतादवस्थ्यं, तदुक्तं स्वर्गेपि पातभीतस्येत्यादीति वाच्यम् । तदन्यत्वेनाप्यधर्मविशेषणादित्येके । वस्तुतस्तु स्वर्गिशरीरं सुखमात्रावच्छेदकमिति यदि तत्र दुःखधीस्तदा भ्राता ऽत एव तद्धर्ममात्रजन्यमेव । के चित्तु अविरललग्नप्रवाहचिरस्थायीच्छामात्रयोर्निदुःखासंभिन्नसुखत्वं तथा, ऽत एव तत्प्रकारिकैव धीः चक्रवर्तिसुखे ऽवश्यमन्यतमविशेषणवैकल्यमित्याहुः । अयस्तत्त्वं चिरस्थायित्वं प्रवाहस्य बोध्यम् । (१०१) वेदादेवेति । स्वःपदास्पदमिति वेदादेवेत्यर्थः ॥

॥ अथ वेदान्तसूत्रीयशैवभाष्यसंबन्धिचतुर्थाध्यायस्य ॥

॥ द्वितीयपादारम्भः* ॥

॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

॥ अत एव च सर्वाण्यनु ॥ २ ॥

पूर्वमुपासकस्योपासनव्यवस्थानादिकमुक्तम् । इह पादेऽस्य शरीरादुत्क्रान्तिर्निरूप्यते । "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्", इति श्रुतौ प्रयतो[1] वागादीनां मनसि लयोऽवगम्यते । अयमुपपन्नो न वेति संशयः । किं प्राप्तम् । कार्यस्य ह्युपादाने लयः[2] । मृद्घटादौ व्याप्तिदर्शनात् । वागादीनां ब्रह्मोपादानं, न मनः । अतोऽस्मिन्नेव तेषां लयो युक्त इति प्राप्तेऽभिधीयते । "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यत" इति, "इन्द्रियैर्मनसि संपद्यमानैः", इति च वचनादुत्क्रान्तौ[3] मनसः प्रागेव वागादीनामुपरमदर्शनाच्च वाङ्मनसि प्रथमं सपद्यते तदुह[4] सर्वाणीन्द्रियाणि मनसि संपद्यन्ते । यदुक्तमुपादान एव लय इति । तन्न[5] । स्वरूपलयस्यैवोपादानापेक्षा । वागादीनां मनसि न स्वरूपलय उच्यते । किंतु वृत्तिलय एव । यथा जलमध्ये क्षिप्तस्याङ्गारस्य प्रकाशादिवृत्तिलयः । तथानुपादानेऽपि मनसि वागादीनां वृत्तिलयो युक्त एव । वृत्तिमतो वागादेर्लयश्रुत्या वृत्तिलयो लक्ष्यते । वृत्तिवृत्तिमतोरभेदोपचारात् । इति ॥ १ ॥ २ ॥

॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥

मनः प्राण इति वागादिसर्वेन्द्रिययुक्तस्य मनसः प्राणे लयः श्रूयमाणः कीदृश इति संशयः । वागादीनामनुपादाने[6] मनसि वृत्तिलयोऽस्तु । मनसस्तु प्राणे स्वरूपलय एव । मनसः प्राणोपादानकत्वात् । तथा "अन्नमयं हि सोम्य मनः", "आपोमयः प्राण" इति श्रुतेरन्नमयत्वेन पार्थिवस्य मनस आपोमयत्वेनोपादाने प्राणे स्वरूपलयस्याविरोधादिति[7] पूर्वपक्षः । सिद्धान्तस्तु पूर्ववन्मनसोऽपि प्राणे वृत्तिलय एव । 'मनः

---

* द्व्यशीतितमे ८२ पण्डितपत्रे रसयुग्मयुग्ममिते पृष्ठे २२६ चतुर्थपा-इत्यस्य स्थाने प्रथमपा—इति । तथा तत्रैवाग्नियुग्मद्विमिते पृष्ठे २२३ रसशशिमितपङ्क्तौ १६ 'यच्चयेम' इत्यस्य स्थाने 'यत् पचेम' इति । वसुशशिमितपङ्क्तौ १८ च 'मस्विदेते इत्यस्य स्थाने किं स्विदेते इति विज्ञेयम् ।

१—द्यत इत्यादिषु प्रयतो इति पा० ।

२—स्य च कारणे लयो दृश्यते इति पा० ।

३—त् । नैवं वाङ्मनसोरिति प्राप्तौ ब्रूमः । उत्क्रान्तौ इति पा० ।

४ ततः इति पा० ।

५ तदयुक्तमेव इति पा० ।

६ श्रूयते । स चायं पूर्ववदुपपद्यते न वेति संशयः । एवं सति वा—इति पा० ।

७—लयो न विरुद्ध इति इति पा० ।

प्राणे' इन्युत्तराद्वाक्यात् स्वरूपलयः। प्राणस्य मुख्योपादानत्वाभावान्मनसस्तत्रानुत्पत्तेः[1] । अतः प्राणे मनसो वृत्तिलय एव न्याय्यः ॥ ३ ॥

॥ सोऽध्यक्षेण तदुपगमादिभ्यः ॥ ४ ॥

पूर्वत्र सर्वेन्द्रिययुक्तस्य मनसः प्राणे लयः प्रतिपादितः । इह तस्य प्राणस्य कुत्र लय इति संशयः । किं तावत् प्राप्तम् । "प्राणस्तेजसि" इति श्रुतेः प्राणस्य तेजसि लय इति प्राप्ते ब्रूमः । स प्राणस्ततो जीवेनाध्यक्षेण संयुज्यते, न तस्य तेजसि लयः ॥ ४ ॥

"एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इत्यादिश्रुतिषु तस्य जीवोपगमनादि[2]श्रवणात् "प्राणस्तेजसि" इति श्रुतिक्रमविरोधं परिहरति ॥

॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥

"प्राणस्तेजसि" इति भूतान्तरसंसृष्टं तेजोऽभिधीयते। ततः प्राणो जीवेन सह भूतेषु सयुज्यत इति न विरोधः ॥ ५ ॥

॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥

न तेजोमात्रे प्राणलयः। त्रिवृत्करणश्रुतिर्हि भूतान्तरसंसृष्टिं दर्शयति । अतो भूतेषु जीवेन सह प्राणः संपद्यत इति न श्रुतिविरोधः ॥ ६ ॥

॥ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

इह निरूप्यमाणोत्क्रान्तिरर्चिरादिगत्यु[3]पक्रमात् प्राग्विद्वदविदुषोः समाना, उत भिन्नेति सशयः। किं तावत् प्राप्तम् । संसारफलस्य मोक्षस्य चातिवैषम्यादज्ञानिज्ञानिनोरपि सदृशैवोत्क्रान्तिरित्येवं प्राप्ते ब्रूमः। अर्चिरादिमार्गोपक्रमात् प्राग्विद्वदविदुषोः समानैवोत्क्रान्तिः। ज्ञानिनस्तु मूर्धन्यनाड्या निष्क्रान्तिरमृतत्व च, नेतरस्य, इति वैषम्यम्। "शतं चैका च हृदयस्य नाड्यस्तासा मूर्धानमभिनिःसृतैका, तयोर्ध्वनाड्याऽमृतत्वमेति विष्वक्, अन्या उत्क्रमणे भवन्ति" इति श्रुतेः। अतः प्रागु[4]त्क्रान्तिः समानैव ॥ ७ ॥

॥ तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

पूर्वमुपपादिता मूर्धन्यनाड्या विदुष उत्क्रान्तिः, ततोऽर्चिरादिगतिरिति। इह देहादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरुपपद्यते न वेति सदेहः ।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः" ।

१—स्तत्र तदसद्भावात् । इति पा० ।

२—षु जीवे तस्य लयश्च—इति पा० ।

३—दिमार्गो—इति पा० ।

४—म्यम् । अतस्तदु—इति पा० ।

"अथ मर्त्योऽमृतो भवति" इत्यत्र "ब्रह्म समश्नुत" इति देहपातानन्तरमेवामृतत्वं श्रूयते। "तेऽर्चिषमभिसंभवन्ति" इत्यर्चिरादिगतिश्च श्रूयते । एवमुभयश्रवणाल्लयसदेहः । तत्र ब्रह्मणि[1] लीनानां वागादीनां पुनरुत्पादासंभवान्मुक्तस्य[2] गत्यनुपपत्तेरर्चिरादिगतिर्न मुक्तात्मनामिति प्राप्ते सिद्धान्त उच्यते । अर्चिरादिना[3] ब्रह्मप्राप्तेः प्राक् शरीरसंबन्धव्यपदेशाच्च संसारापगमः। अमृतत्ववचनमासन्नामृ[4]तत्वाभिप्रायम् । अत उत्क्रान्तस्यार्चिरादिगतिरुपपन्ना ॥ ८ ॥

यदुक्तं वागादिविलयात् तस्य गत्यनुपपत्तिरिति तत्राह ॥

॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते । अन्यथा गत्यनुपपत्त्या चन्द्रसंवादाद्यनुपपत्तेः । श्रूयते हि पर्यङ्कविद्यायां देवयाने पथि विदुषश्चन्द्रमसा संवादः "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्युपक्रम्य "एतद्वै स्वर्गस्य द्वारं, यश्चन्द्रमाः, तं यः प्रत्याह, तमति सृजते, अथ य एतं न प्रत्याह, तमिह वृष्टिर्भूत्वा वर्षति, स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान् वा पुरुषो वान्यो वैतेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यं तमागतं पृच्छति कोऽसीति, तं प्रति ब्रूयात्," इत्यादि[5] । अतः शरीरादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरुपपन्ना ॥ ९ ॥

॥ नोपमर्दनातः ॥ १० ॥

अत उक्त[6]न्यायात्, "अथ मर्त्योऽमृतो भवति" इत्यमृतत्ववचनं न देहसंबन्धोपमर्दैन तदानीमेवामृतत्ववदिति[7] ॥१०॥

॥ अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

अस्य सूक्ष्मशरीरस्य क्वचिद्विद्यमानत्वोपपत्तेश्च न तदुपमर्दैन । उपलभ्यते ह्युत्क्रामतो विदुषोऽपि क्वचित् सूक्ष्मदेहगुण उष्मा, न स स्थूलदेहगुणः । अन्यत्रानुपलम्भात्[8] । अतश्च गत्युपपत्तिः ॥ ११ ॥

१—त्वमवगम्यते । तेऽर्चिषमभिसंभवन्ति" इति विदुषां ह्यर्चिरादिगतिश्च । कस्यहोपपत्तिरिति प्राप्ते ब्रह्मणि इति पा० ।

२—दाभावादस्य इति पा० ।

३—दिगमने इति पा० ।

४—नं वागाद्यम—इति पा० ।

५ अन्यथा गत्यनुपपत्तेः । तत्रानुपपत्त्या कल्प्यते शरीरम् । प्रमाणमत्र विद्यत एव । चन्द्रमसा संवादादिप्रमाणदर्शनात् तदुपलब्धेः । "तं ब्रूयात् इति इति पा० ।

६ अत एव इति पा० ।

७—न भवति ॥ १० ॥ इति पा० ।

८—र्दैन उष्मा उपपन्नः । अन्यत्रानुपलम्भात् । न सकलगुणः । इति पा० ।

॥ प्रतिषेधादिति चेन्न शरीरात् स्पष्टो ह्येकेषाम्[*] ॥ १२ ॥

बृहदारण्यके "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्योतनेनैष आत्मा निष्क्रामति, चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः, तमुत्क्रामन्तं प्राण उत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यादिवाक्यैरविदुषोऽप्युत्क्रान्त्यादि प्रकाममभिधाय, "इति तु कामयमान" इत्यविद्वद्विषयं परिसमाप्य, "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो, न तस्य प्राणा उत्क्रामन्ति", "ब्रह्मैव सन् ब्रह्माप्येति" इति विदुष उत्क्रान्तिप्रतिषेधादत्रैव साक्षाद् ब्रह्मप्राप्तिरिति चेत्। न। विदुष उत्क्रममाणस्यार्चिरादिगमनाय प्रस्थितस्य प्राणास्तस्माच विश्लिष्यन्त[1] इति ह्युच्यते न तस्य प्राणा उत्क्रामन्तीति। अयमर्थो माध्यंदिनाना शाखायां स्पष्टोऽभिधीयते। "योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात् प्राणा उत्क्रामन्ति" इति ॥ १२ ॥

विदुषो मूर्धन्यनाड्या गमनं स्मर्यते ॥

॥ स्मर्यते च ॥ १३ ॥

"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" ॥

इति। अतोऽर्चिरादिगतिरुपपद्यते विदुष उत्क्रान्तस्य जीवस्येति। केचिन्निरन्वयोपासकानामिह शरीरस्यान्त एव मुक्तिरित्यर्चिरादि[2]गतिमनियतामाहुः ॥ १३ ॥

॥ तानि परे तथाह्याह ॥ १४ ॥

पूर्वत्र प्राणसहितस्य जीवस्य तेजउपलक्षितेषु भूतेषु लय उपपादितः। "तेजःपरस्यां देवतायाम्" इति तस्य भूतान्तरसंसृष्टस्य जीवसंयुक्तस्य तेजसः परस्यां देवतायां लयेऽवगम्यते। स पर[3]ब्रह्मणि स्वरूपलय उच्यते, उताविभागापत्तिमात्रमिति संशयः। स्वरूपलय इति युक्तम्[4]। तथाहि देवतालयेति हृदयान्तर्वर्तिदेव एव देवतेत्युच्यते। परशब्दो महत्त्ववाची। अतः परो देवो हि महादेव इति सिद्धम्। "सेयं देवतैक्षत," "द्यावाभूमी जनयन् देव एक" इति स महादेव एव सकलभूतकारणं परब्रह्म श्रूयते। अतस्तस्मिन्नुपादाने सजीवानां भूतानां स्वरूपलय इत्येव युक्त इति पूर्वः पक्षः।

सिद्धान्तस्तु ब्रह्मण्युपादानेऽपि न स्वरूपलयो भूतानाम्। किंत्वविभागमात्रम्। 'वाङ्मनसि सपद्यत' इति वचनस्यैकस्यार्थान्तरपरत्वे प्रमाणाभावात्। अतो मनःप्रभृतिवदविभागमात्रपरत्वम्। अतो वृत्तिलय एवेति वदन्ति ॥ १४ ॥

। अविभागो वचनात् ॥ १५ ॥

संपत्तिवचनादविभागमात्रं ब्रह्मणि भूतानामिति युक्तमेव ॥ १५ ॥

॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारे विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥१६॥

पूर्वत्र विद्वदविदुषोरर्चिरादिगत्युपक्रमपर्यन्तमुत्क्रान्तिः समानेत्युक्तम्। निष्क्रमणवेलायामुभयोर्विशेषोऽस्ति, न वेति विचार्यते। तेजःपरस्यां देवतायामिति भूतैः सह परमकारणे परदेवे परे ब्रह्मणि परमाकाशरूपे विद्वानविद्वांश्च विलीयाविभागेन क्षणं विश्रम्य तिष्ठतीति सममभिहितम्। अतः समानैवोत्क्रान्तिः। तयोर्हृत्प्रद्योतनादेः समत्वश्रवणात्। "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते। तेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य" इति श्रूयते। अतः समानत्वादुत्क्रान्तेस्तयोरविशेष इति पूर्वपक्षे प्राप्ते विशेषोऽस्तीति सिद्धान्त उच्यते। तथाहि, हार्दस्य हृदयगतस्य परमेश्वरस्याराधनरूपविद्यासामर्थ्यात् तदङ्गगत्यनुसधानाच्च प्रीतेन तेन सर्वानुग्राहकेणानुगृहीतः स्वस्वरूपावरणमलध्वंसनविदग्धयानुग्रहदृष्ट्या निरीक्षितस्तदनुग्रहप्रकाशितद्वारो जीवः शताधिकया मूर्धन्यनाड्या विद्वानुत्क्रामति। न तथा परः। किंत्वितरनाडीभिरेव। तथा च श्रुतिः। "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका, तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्, अन्या उत्क्रमणे भवन्ति" इति। स एष विदुष उत्क्रमणे विशेषः। एतदुक्तं[1] भवति। "रुद्रो जनानां हृदये संनिविष्टः", "हृत्पुण्डरीकं विरजं विशुद्धम्", इत्यादिश्रुतिषु,

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति"।

इत्यादिस्मृतिषु च, सर्वजनहृदयगतो[2] हि परमेश्वरोऽवगम्यते। यत्र सुषुप्तौ जीवः स्वेन्द्रियवृत्तिभिः सह विलीय तदेकरसो भवति। यश्च "विश्वाधिको रुद्रो महर्षिः", "सर्वो वै रुद्र" इत्यादिश्रुतिषु निमित्तत्वाद्विश्वाधिकत्वेनोपादानाद्विश्वात्मकत्वेनोपादानत्वेन चावगम्यते। "एक एव रुद्रो न द्वितीया यतः स्युः," इत्यादिश्रुतिषु यस्य विश्वाधिपत्यं श्रूयते। "शिव एको ध्येयः," "यदा चर्मवदाकाशम्" इति, यम-

---

[*] शंकरमते स्पष्टो ह्येकेषाम् इति सूत्रान्तरम्।

१—य प्राणा अपि सह वर्तन्त इति पा०।

२ केचिदिह मुक्तिः शरीरपात इति। तेनापास्ततिमिराणां निरन्वयोपासकानामर्चिरादि—इति पा० ॥

३ तदेषामिह भूतानां पर—इति पा०।

४ "तेजःपरस्यां देवतायाम्" इत्यत्र तेजउपलक्षितानां भूतानां परस्यां देवतायां स्वरूपेण लयो युक्तः। इति पा०।

---

१ किमुक्तं इति पा०।

२—गतत्वेन

न्तरेण मुमुक्षूणां ध्येयं ज्ञेयं च वस्तु नास्तीति विज्ञायते । अस्य हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे, येनासावमृती भूत इति, यदुत्क्रान्तिसमये विदुषां स्वरूपप्रकाशकतारकब्रह्मोपदेष्टृत्वेनाम्नायते । "आवो राजानम्," इत्यादिषु यस्याराध्यत्वेन सर्वयज्ञाधिपत्यं वर्ण्यते । "उरुं नो वीरा अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि" इति यः संसाररोगस्य भिषक्तम इति निरूप्यते ।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" ।

इति सकलप्रपञ्चविचित्रकलिकानिकुरम्बावलम्बिनी[1] मायालक्षणा परमशक्तिर्यस्य रूपैकदेशस्वभावतया प्रतिपाद्यते । स खलु हृदयगतो हार्दः परं ब्रह्म परमेश्वरः परममङ्गलस्वरूप उमापतिः परमात्मा स्वाज्ञारूपश्रुतिचोदितेषु कर्मस्वग्निहोत्रादिषु नियतस्वाराधनरूपेषु नियतं निर्मुक्तमकलाविहितकर्मलवं[2] स्वार्पित[3]सकलकर्मफलं स्वायत्तचित्त स्वज्ञानामृतपरिपूर्णं निरस्तसमस्तकाम्यफलं स्वविवेकादिसंपच्चस्वभक्तिमात्रैकनिरतं स्वप्रसादाकाङ्क्षिणं विद्यावन्तं साधकमवलोक्य शरीरपरित्यागसमये तद्विषय[4]सप्रसादस्तस्मिन् संसारमलकलङ्कापकर्षिणीमनुग्रहदृष्टिं निदधाति । तदनुग्रहविशेषेणासौ विगलितसांसारिकमलः प्रकाशितात्मज्योतिर्मूर्धन्यनाड्या निर्गत्यार्चिरादिना तदीयं परं पदमप्राकृतं निरतियानन्दस्वभावं संप्राप्य तदाकारो भूत्वा नित्यनिरतिशयानन्दस्वरूपो भवति । तस्मादविदुषो विदुषश्च गतिवैषम्यमस्तीति युक्तमेव ॥ १६ ॥

॥ रश्म्यनुसारी ॥ १७ ॥

पूर्वत्र साधकस्य हृदयगतपरमेश्वरानुगृहीतस्य मूर्धन्यनाड्या निर्गम उक्तः । निर्गतस्य तदूर्ध्वगमनं निशि दिवा च संभवतीति संशयः । किं तावत् प्राप्तम् । "यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमुत्क्रामति" इति समुत्क्रान्तस्य रश्मिसंबन्धेनोर्ध्वदेशाक्रमणमवगम्यते । रश्मिसंबन्धस्तु[5] दिवैव संभवति । न तु रात्राविति प्राप्ते ब्रूमः । उत्क्रान्तो विद्वान्[6] रश्मिसंबन्धादेवोर्ध्वं गच्छतीति सत्यम् । स तु दिवा च रात्रौ च संभवतीति । दाह्येषूष्मदर्शनेन निश्यपि रश्मिसत्त्वात् । तस्माद्दिवा च रात्रौ च रश्म्यनुसारी गच्छत्यूर्ध्वमिति निर्णयः ॥ १७ ॥

आशङ्क्य परिहरति ॥

१—म्बभित्तिस्थानीया इति पा०

२—लविकर्मलयं इति पा० ।

३ समर्पित—इति पा० ।

४ तच्चियत—इति पा० ।

५—न्धोऽवगम्यते स तु इति पा० ।

६ स चायमुत्क्रान्तो इति पा० ।

७ भावेषु—इति पा० ।

॥ निशि नेति चेन्न संबन्धस्य
यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥

निशि मृतस्यापि रश्मिसंबन्धेन[1] ब्रह्मप्राप्तिरभिहिता । सा न संभवति ।

"दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" ॥

इति निशामरणनिन्दनात् । इति चेन्न । संसारबन्धस्य यावद्विद्याभावित्वात् । विद्ययानारब्धकार्येषु बन्धहेतुषु कर्मसु नाशितेषु वर्तमानस्य प्रारब्धस्यापि यावच्चरमदेहावसानभावित्वाच्चरमे देहावसाने प्रारब्धेऽपि नष्टे सति पुनर्ब्रह्मप्राप्तिवचने हेत्वभावात् । तथा दर्शयति श्रुतिः । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इति । निशानिन्दा त्वितरपुरुषविषया[2] । अतो निश्यपि मृतस्य ब्रह्मप्राप्तौ न विरोधः ॥ १८ ॥

॥ अतश्चायनेऽपि दक्षिणे ॥ १९ ॥

अत एव बन्धहेत्वभावादेव दक्षिणायनमृतस्यापि विदुषो ब्रह्मप्राप्तिरस्त्येव ॥ १९ ॥

॥ योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २० ॥

ननु विदुष एव मुमूर्षून् प्रति पुनरावृत्तिहेतुत्वेन कालविशेषः स्मर्यते ।

"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः" ॥

इति । तस्मादविद्वद्विषया निशादक्षिणायननिन्देत्ययुक्तमिति शङ्कोत्तरमिदं सूत्रम् । विदुषामर्चिरादिगतिः, तद्विपरीतान्येषामिति । योगिनो योगयुक्तादिना, नतु विदुषः प्रति मरणकालविशेषः स्मर्यते ।

"नैते पार्थ गती जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन" ॥

१ रश्म्यनुसारेण इति पा० ।

२—नित्यपुरुषार्थत्रि—इति पा० ।

इत्युपसंहारात्, "अग्निर्ज्योतिः", "धूमो रात्रिः" इति श्लोकयोर्देवयानपितृयानगतिप्रत्यभिज्ञानाच्च, "यत्र काले तु" इति कालशब्दस्त्वातिवाहिकगणस्य कालाभिमानिदेवताभूयस्त्वात् । अतः सर्वथा विदुषा[1] ब्रह्मप्राप्तौ निशादक्षिणायनकृष्णपक्षनिषेधो नास्त्येव । यदा देहापगमस्तदानीमेव तत्प्राप्तिरिति[2] ॥ २० ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥ :: :: ॥

## ॥ अथ वेदान्तसूत्रशैवभाष्यसंबन्धिचतुर्थाध्यायस्य ॥

॥ तृतीयपादारम्भः ॥

॥ अर्चिरादिना तत्प्रथितेः ॥ १ ॥

पूर्वत्रोपासकस्य हृदयगतपरमेश्वरानुग्रहेण प्रकाशितद्वारस्य मूर्धन्यनाड्या देहान्निष्क्रान्तिरभिहिता । एवंविधस्य ब्रह्मप्राप्तिरर्चिरादिना मार्गेण, उतान्यथापि संभवतीति, प्रथममिह विचार्यते । तथाह्येकत्र[3], "यत्रासौ केशान् नो विवर्तते, व्यपोह्य शीर्षकपाले, भूरित्यग्नौ प्रतितिष्ठति, भुव इति वायौ, स्वरित्यादित्ये, मह इति ब्रह्मणि, आप्नोति स्वाराज्यम्" इति[4] ब्रह्मप्राप्तेरर्चिरादिगतिमन्तरेणाप्युपपत्तिरवगम्यते । तस्माद् ब्रह्मप्राप्तौ नार्चिरादिनियम इति प्राप्तेऽभिधीयते । विद्वानर्चिरादिनैव ब्रह्म प्राप्नोति । पञ्चाग्निविद्यादिषु "तेऽर्चिषमभिसंभवन्ति" इत्यादिनार्चिरादेर्ब्रह्मप्रापकत्वेन प्रसिद्धत्वात् । भूरित्यादिषु न ब्रह्मप्राप्तिमार्ग उच्यते । किंतु तत्तद्विभूतिप्राप्तिरेव । ततः परप्राप्तिरर्चिरादिनैव निरन्वयोपासकानां, नार्चिरादिरिति[5] केचित् ॥ १ ॥

॥ वायुशब्दादविशेषविशेषाभ्याम् ॥ २ ॥

अत्र श्रुतस्यार्चिरादिक्रमस्य मध्ये श्रुत्यन्तरसिद्धक्रमोऽत्र निवेशनीयः । अथवायमेव क्रमः । इति संदिह्यते । "तेऽर्चिषम[6]भिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्ष आपूर्यमाणपक्षाद्यान्[7] षडुदङ्ङेति मासांस्तान्[8] मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्[1]पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्यर्चिरादिक्रमश्छान्दोग्यसिद्धः । बृहदारण्यके "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते, यथा रथचक्रस्य रवतोऽनस ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इति संवत्सरादित्ययोर्मध्ये वायुः श्रुतः । स निवेश्यो न वेति संशये न निवेश्योऽश्रवणात् । इति प्राप्ते ब्रूमः । गुणोपसंहारन्यायेन सवत्सरादूर्ध्वमादित्यात् पूर्वं वायुर्निवेश्यः । बृहदारण्यक एवान्यत्र "मासेभ्यो देवलोकं देवलोकादादित्यम्" इति पठितेऽर्चिरादिक्रमे छान्दोग्यश्रुतित उपसंहार्यान्मासाधिककालरूपत्वेन मासेभ्य उपरिनिवेशनीयात् संवत्सरादुपरि देवलोकः श्रुतः । सोऽपि वायुरेव । देवलोकशब्दो देवानां लोक इति व्युत्पत्तेरविशेषेण वायुवाचको, वायुशब्दस्तस्यैव विशेषेण वाचक इत्यविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायुरेक एवाभिहित इत्यब्दादूर्ध्वमादित्यात् पूर्वं वायुर्निवेश्यः । "वायुर्देवानामासनभूत" इति श्रूयते । "योऽयं पवत एष देवानां यह[2]" इति ॥ २ ॥

॥ तडितोऽधिवरुणः संबन्धात् ॥ ३ ॥

कौषीतकिनामुपनिषदि श्रूयते । "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं, स वरुणलोकं स ब्रह्मलोकम्" इति । तत्राग्निलोकशब्दोक्तस्यार्चिषः प्राथम्यमविरुद्धम् । वायोरादित्यस्य च श्रुत्यन्तरसिद्धश्रौतक्रमेणात्रत्यपाठक्रमबाधात् । संवत्सरादूर्ध्वं क्रमेण विनिवेशः । अत्र वरुणादयोऽपि श्रुताः[3] ।

तेऽर्चिरादिमार्गे निवेशयितुं शक्या उत न शक्या इति संशये नियामकाभावादशक्यसंनिवेशा इति प्राप्ते ब्रूमः । वरुणादीनामपि संनिवेशः कार्यः[4] । तत्र विद्युल्लोकस्योपरि वरुणलोकस्य संबन्धवशाद् व्यवस्था युक्ता । विद्युत्पूर्वकवृष्टिगतनीरस्य वरुणोऽधिपतिः प्रसिद्ध इति विद्युद्वरुणयोः

१ योगिनामर्चिरादिका, तद्विपरीतान्येषाम्, इति गती स्मर्यते । "नैते पार्थ गती जानन् योगी मुह्यति कश्चन । इत्यादौ । अतः सर्वथा योगिनां इत्येव पा० ।

२ तदानीमेवास्य तत्सिद्धिरिति इति पा० ।

३ तथाहि इति पा० ।

४ इत्यादिषु इति पा० ।

५—नेति । निरन्वयोपासकानामनियम इति इति पा० ।

६ अथार्चिष—इति पा० ।

७—पक्षान् इति पा० ।

८ मासान् इति पा० ।

१—तं च इति पा० ।

२—क्रमः । श्रुत्यन्तरे 'स वायुमागच्छति, स आदित्यमागच्छति' इति संवत्सरादित्ययोर्मध्ये वायुः श्रुतः । स तत्र निवेश्यो न वेति । तत्र निवेशयितुमयुक्त एव । तथाश्रवणात् । इति प्राप्ते ब्रूमः । गुणोपसंहारन्यायेन संवत्सरादित्ययोर्मध्ये वायुर्निवेश्यः । बृहदारण्यके संवत्सरादुपरि देवलोकः श्रुतः । सोऽपि वायुवाचक एव । देवानां लोक इत्यविशेषेण वायुशब्दश्च तत्रैव विशेषेण वाचक इत्यविशेषविशेषाभ्यां वायुरेक एवाभिहित इत्यब्दादूर्ध्वमादित्यात् पूर्वं वायुर्निवेश्य इति पा० ।

३ कौषीतकोपनिषदि 'स वरुणलोकं, स इन्द्रलोकं स प्रजापतिलोकम्' इति वरुणादयोऽपि श्रुता भवन्ति । इति इति पा० ।

४ अत्र वरुणादीनां मध्ये संनिवेश एव इति पा० ।

संबन्धः । तदनन्तरमिन्द्रप्रजापतिलोकौ परिशेषात् । इत्यविरोधः[1] ॥ ३ ॥

॥ आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

किमर्चिरादयो मार्गचिह्नभूताः स्थानभेदा उत विदुषां गमयितारो देवताविशेषा इति संदेहः[2] । किं तावत् प्राप्तम् । स्थानभेदाः । तल्लाञ्छनसत्त्वात् । लोके हि[3] ग्रामान्निर्गत्य नदीं गत्वा ततो घोषः प्राप्तव्य इति व्यवहरन्ति । तद्वदर्चिरादयोऽपीति प्राप्तेऽभिधीयते । अर्चिरादयो मार्गाभिमानिनो विदुषां गमयितारो देवताविशेषा एव । "तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति" इति विद्युत्पुरुषस्य गमयितृत्वलिङ्गेनार्चिरादीनामविशेषनिर्दिष्टानामपि गमयितृत्वमेव संबन्ध इति निश्चय उपपन्नः[4] ॥ ४ ॥

॥ उभयव्यामोहात् तत्सिद्धेः ॥ ५ ॥

उभयेषामर्चिरादिरादिमार्गस्य तद्गन्तॄणां च व्यामोहात्, मार्गाज्ञानात्, तत्सिद्धेः । तदभिमान्यातिवाहिकचेतनसिद्धेरित्यर्थः ॥ ५ ॥

विद्युत्पुरुषस्य ब्रह्मगमयितृत्वे वरुणादिभिः किं फलमित्यत आह ॥

॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

वैद्युतपुरुषात् परस्तात् स एव ब्रह्म गमयति । "तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति" इति श्रुतेः । वरुणादीनां तदनुग्राहकत्वेन गमयितृत्वमिति न विरोधः ॥ ६ ॥

॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

किममानवः पुरुष उपासकान् साक्षादेव ब्रह्म गमयति, उतान्यमिति संशये पूर्वपक्षः । कार्यं हिरण्यगर्भमेव गमयति, अस्य हि गतिरुपपद्यते, न व्यापिनः परब्रह्मणः[5] ॥ ७ ॥

पुनरुपपत्तिमाह ॥

॥ विशेषितत्वाच्च ॥ ८ ॥

ब्रह्म गमयतीत्यत्र ब्रह्मलोकं गमयतीति । "प्रजापतेः सभां वेश्म प्रपद्ये" इति विशेषितत्वात् । अतश्च हिरण्यगर्भपदमेव गमयति ॥ ८ ॥

॥ सामीप्यात् तु तद्व्यपदेशः ॥ ९ ॥

ब्रह्म गमयतीति ब्रह्मव्यपदेशस्तु हिरण्यगर्भस्य तत्सामीप्यात् । "हिरण्यगर्भं पश्यत जायमानम्" इति प्रथमकार्यत्वश्रवणादस्य सामीप्यम् ॥ ९ ॥

॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

प्रथमं हिरण्यगर्भपदप्राप्तावपि तदनावृत्तिश्रुतिर्न विरुध्यते । हिरण्यगर्भलोकात्यये तदध्यक्षेण सहातः परं कार्यब्रह्मलोकात् परं परमपदं[1] गच्छन्तीति । तथाभिधीयते ।

"ते ब्रह्मलोके तु परान्तकाले
परामृतात् परिमुच्यन्ति सर्वे" ।

इति श्रुत्या । अतो न विरोधः ॥ १० ॥

॥ स्मृतेश्च ॥ ११ ॥

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ॥

इति स्मृतेरप्येवमवगम्यते । अतो हिरण्यगर्भपदमर्चिरादिगणो नयति प्रथमम् । ततः प्रलये परब्रह्मण एवोपादानावस्थान्तरत्वेन तत्र ब्रह्मव्यपदेशस्य प्राप्यत्वं दृश्यते । अतश्च तमेव गमयतीति[3] ॥ ११ ॥

॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

ब्रह्म गमयतीति हिरण्यगर्भात् परमुत्कृष्टं नारायणमेव अर्चिरादिर्गमयति । परब्रह्मण एवोपादानावस्थान्तरत्वेन ब्रह्मव्यपदेशस्य मुख्यत्वादिति जैमिनिः ॥ १२ ॥

तत्रोपपत्तिमाह ॥

॥ दर्शनाच्च ॥ १३ ॥

"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" ।

इति तत्पदस्य प्राप्यत्वं दृश्यते । अतश्च तमर्चिरादिर्गमयतीति ॥ १३ ॥

॥ नच कार्ये प्रत्यभिसंधिः ॥ १४ ॥

---

१ युक्ता विद्युत्संबन्धो वृष्टौ तत्संबन्ध आधिपत्येन वरुणस्य, ततो विद्युद्वरुणयोः संबन्धात् । विद्युतोऽनन्तरं वरुणः, तदनन्तरमिन्द्रप्रजापतिलोकौ, तद्विशेषसंबन्धादेवाविरोधः ॥ इति पा० ।

२ इह श्रूयमाणा अर्चिरादयो देवताविशेषा उत स्थानभेदा इति संदेहः इति पा० ।

३ अर्चिरादयो मार्गभेदाः । न देवताविशेषाः । तत्तल्लाञ्छनसंभवात् । तथाहि लोके इति पा० ।

४—त्पुरुषस्य गमयितृत्वचेतनलिङ्गाद्विदुषामातिवाहिका इति विज्ञायते ॥ ४ ॥ इति पा० ।

५ इह "तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति" इति ह्यत्र तत्पुरुषोऽमानव उपासकान् प्रजापतिलोकान् परंपरया, साक्षाद् ब्रह्म गमयति, उतान्यदिति संशयः । तथा सति मतान्तरेण पूर्वः पक्षः प्रवर्तते । कार्यं हिरण्यगर्भमेवार्चिरादिनामानवो गमयत्युपासकान् । अस्य हि गत्युपपत्तिः । न व्यापिनि परब्रह्मणि । ततः कार्यं हिरण्यगर्भं परिच्छिन्नमिति बादरिः । हिरण्यगर्भस्य कार्यत्वं "हिरण्यगर्भं पश्यत जायमानम्" इति विश्वाधिकस्य ब्रह्मणः प्रथमकार्यत्वमस्यावगम्यते ॥ ७ ॥ इति पा० ।

१—तः परमपि इति पा० ।

२ अनावृत्तिपदं भूयः इति पा० ।

३ प्रथमम् । ततः प्रतिसंचरे ब्रह्म प्राप्यं तेन सहेति इति पा० ।

"प्रजापतेः सभां वेश्म प्रपद्ये[1]" इति युक्तम् । न[2] तत्र कार्ये हिरण्यगर्भे प्रत्यभिसंधिः । प्रजापतिशब्दस्य प्रजापालनत्वेन नारायणवाचकत्वे[3]संभवात् । यदुक्तम् ।

"ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" ।

इति । तत्रापि ब्रह्मशब्दो नारायणपरः । तस्य लोके पदे स्थित्वा योगिनः परान्तकाले पश्चिमदेहसमाप्तौ परामृत विश्वाधिकं ब्रह्म प्राप्य मुक्ता भवन्तीति न विरोधः । "एतानि ह वा अमृतस्य नामधेयानि" इत्यादौ शिवस्य परब्रह्मणोऽमृतशब्दाभिधेयत्वमनादिमुक्तत्वं चावगतम् । अतो विष्णुपदे प्रारब्धकार्यदेहावसाने प्रारब्धभोगपर्यन्तं स्थित्वा योगिनः परामृतं विश्वाधिकं ब्रह्म प्राप्य मुक्ता भवन्तीति ॥ १४ ॥

अथ सिद्धान्त[4] उच्यते ॥

॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथादोषात् तत्क्रतुश्च ॥ १५ ॥

प्रतीकालम्बना हि ते ये चेतनमचेतनं वा ब्रह्मदृष्ट्या केवलमुपासते । अप्रतीकालम्बनास्तु ते ये विश्वाधिकं ब्रह्म साक्षादुपासते । "परं[5] ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" ।

"उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्" ॥

इत्यादिषु साक्षाद् ब्रह्मप्राप्त्यवगमात् । पूर्वोक्तपक्षद्वयेऽपि दोषः श्रुतिविरोधाद्भवति । तत्क्रतुर्ब्रह्मोपासको ब्रह्मैव गच्छति । न मध्ये विलम्बते । प्रयोजनाभावात् । सकलकार्यसमष्टिरूपाद्धिरण्यगर्भात् परो नारायणस्तदुपादानत्वात् । ततोऽपि परं शिवाख्यं निमित्तं विरूपाक्षं परं ब्रह्म सर्वज्ञं सर्वशक्तिकं नित्यतृप्तं स्वतन्त्रं स्वप्रकाशमिति । तथा शिवसंकल्पोपनिषदि ।

"परात् परतरो ब्रह्मा[6] तत्परात् परतो हरिः ।
तत्परात् परतोरीशः",

इति । रेफश्छान्दसः । अन्यत्र च ।

"नारायणपरं ब्रह्म" ।

इति नारायणात् परत्वेन ब्रह्माभिधीयते । तत् कीदृशमित्याकाङ्क्षायाम् । "ऋतं सत्यम्" इति मन्त्रेण सर्वज्ञतया मनोवाग्विपर्यासरहितं स्वशक्तिमरीचिभिः सकलजगत्पूरकं[1] स्वाविभक्तया परप्रकृतिरूपया परमानन्दचिदेकरसपरमाकाशलक्षणया स्वावस्थाभेदपरमचेतननारायणाख्यहिरण्यगर्भादिसकलकार्यप्रपञ्चया पराशक्त्योमया शबलितरूपं[2] निर्विकारं[3] त्रिलोचनं[4] परं ब्रह्म सर्वोत्तरमिति निरूपितम् । "विश्वाधिको रुद्रः" इति च विश्वस्मादधिकत्वेन चावगतम् । तस्माद्ब्र[5]-दिकानामतः परं कल्पयितुमन्याय्यमेव ॥ १५ ॥

॥ विशेषं च दर्शयति ॥ १६ ॥

ब्रह्मणो विश्वाधिकस्य तदवस्थाभेदस्योपादानस्य विष्णोस्तत्कार्यभूतस्य हिरण्यगर्भस्य च विशेषं दर्शयति श्रुतिरेव ।

"परात् परतरो ब्रह्मा" "हिरण्यगर्भं
पश्यत जायमानम्", "पुरुषो वै रुद्रः"

इत्यादिका । ततश्च ब्रह्म विष्णोः पदम् । परब्रह्मणः शिवस्य पदं परमाकाशरूपं परमानन्दमयममानवः पुरुषो गमयतीत्येव युक्तम् । यच्छङ्कितम् ।

"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" ।

इति । तत्र विष्णुशब्दः परब्रह्म[6]वाचकः । षड्विधस्याध्वनः पार तदतीतं पदं विश्वाधिकस्य शिवस्यैवोपपन्नम्[7] । यद्वा, विष्णोः प्रपञ्चावस्थितस्य परमुत्कृष्टं परं स्वरूपं परमाकाशरूपं परमानन्दलक्षणं शिवस्य परब्रह्मणः पदमेव । यत्रासौ निहितात्मा प्रपञ्चाकारोऽपि न संसरति । अतो न कश्चन विरोधः[8] ।

अत्र केचित् "परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति श्रुतेः परब्रह्मणः शिवस्य परमविभूतित्वेन ये विष्णुमुपासते, ते तदवस्थत्वाद् ब्रह्मशब्दवाच्यस्य तस्य लोकं प्राप्य प्रादुर्भूततद्विभूतयः परान्तकाले चरमदेहावसाने परामृतं शिवं प्राप्य मुक्ता भवन्तीति विष्णूपासकानामर्चिरादिना विष्णुपदप्राप्तिः पूर्वं, विलम्बेन[9] शिवपदप्राप्तिरिति वचनादत्र न विरोधः ॥ १६ ॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ४ ॥ :: :: ॥

---

१ प्रपद्यत इति सर्वत्र पा० ।
२ यदुक्तं न इति पा० ।
३—कत्वेनापि इति पा० ।
४—न्तीति सिद्धान्त उच्यते ॥ १४ ॥ इति पा० ।
५—सते । साक्षाद् ब्रह्मोपासकान् साक्षात्पुरुषः साक्षाद् ब्रह्मैव गमयति । यद्विश्वाधिकं कृष्णपिङ्गलं विरूपाक्षं श्रूयते । हिरण्यगर्भं नारायणं यो गमयति । इत्युभयथादोषः साक्षाद्ब्रह्मोपासकस्य, परं इति पा० ।
६ परात् परतरं ब्रह्म इति पा० ।

---

१—त्पूरकतया पुरुषशब्दवाच्यम् । इति पा० ।
२—तरूपतया कृष्णपिङ्गलं इति पा० ।
३ निर्विकारित्वादूर्ध्वरेतसं इति पा० ।
४—चनं त्रीक्षणतया इति पा० ।
५—ति श्रुतेर्विश्वस्माऽधिकत्वेनास्य श्रुतत्वाद्ब्र— इति पा० ।
६—ब्द उपादानपरब्रह्म— इति पा० ।
७—दमीशशब्दो वक्ति । विश्वाधिकस्य शिवस्यैवोपपन्नत्वात् इति पा० ।
८—पि न सज्जति । अतश्चाविरोधः इति पा० ।
९—प्तिपूर्वकं वैष्णवेन इति पा० ।

# THE VIDVAN-MANO-RANJINI'

## OR

## REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD ÁNANDA'S VEDÁNTA SÁRA, BY RÁMA TÍRTHA

(Continued from page 236)

[*Because without abandoning*] *the subtile* [*body, it enters into all the gross bodies*] The subtile body is the causal body The body which is grosser than this, is the evidentiary body It enters into the most gross body to which these and other bodies belong Thus there are three concomitants or illusory determinants of individuated spirit In dreamless sleep &c, mere illusion tinged by the retenta of the understanding &c. is the concomitant. In ordinary sleep the evidentiary body composed of the retenta of waking experience is the concomitant In the waking state the gross body conjoined with the subtile body is the concomitant. The title, then, of pervader is given to spirit conceiting itself to be the place of the fruition of gross things because it enters into all bodies, since it enters into the last concomitants only when characterised by the first concomitant Another explanation is that the subtile body is the evidentiary body, and the reason is explained to be that the intelligence enters into the modifications of visual and other senses which have received the form of their objects, which originate in the gross body, the various ruler, and the distributive aggregate, without abandoning the evidentiary body Taking the reading of some copies Without abandoning the gross body, the reason may be explained by understanding that the intelligence, while existing in the gross body, occupies at the same time the subtile and causal bodies We mean that in any case intelligence thus conditioned is called the pervader because it resides in all bodies

[*The distributive aggregate*] *thereof also* [*is the gross body of the pervader, and since it is a modification of the food it is called the nutrimentitious sheath, and since it is the place of fruition of gross things it is called the awake*] This is to be explained as above.

*This* &c. This means the distributive aggregate As in former cases the author describes articulately the peculiar fruition of the pervader and spirit of mankind when in the waking state, together with the modes in which it takes place.

*Then* [*these two cognise sounds, touches, colours, tastes, and smells, by means respectively of the five organs of sense of which the ear is the first, which are presided over, in their order, by the Sky, the Wind, the Sun, the Regent of the waters, and the Aśvins, again they are concerned about speaking, handling, walking, evacuating, and enjoying, by means respectively of the five organs of action, of which the voice is the first, which are presided over respectively by Agni, Indra, Upendra, Yama, and Prajápati, and lastly they are conversant about judging, determining, self-conceit, and cogitation, by means respectively of the four internal organs called the common sensory, the understanding, self-conceit, and cogitation, which are presided over in their order by the Moon, Brahmá, Śiva, Vishnu Thus these two are conversant about all gross objects*] These two by means of the ear and other four organs, presided over by the Sky and four other deities, cognise according to the order of the text the gross objects, beginning with sounds and ending with smells This is the construction in each of the clauses That is to say, these two, by means of the voice and four other organs of action presided over by Agni and four other deities, are conversant about speaking and four other operations, of which enjoyment is the last In like manner they experience by means of the common sensory and three other internal organs, presided over by the Moon and three other deities, the operations of which judgment is the first and cogitation the last.

[*They two experience*] all these That is, they experience according to their respective order all these objects of gross fruition For this the author cites authority.

*According to the text, The soul, in its waking state outside, &c* The words *et cætera* indicate the remain-

एतद्व्यष्टीति । व्यष्टिस्थूलशरीरोपहितस्य विश्वशब्दवाच्यत्वे हेतुमाह ॥

सूक्ष्मेति । सूक्ष्मशरीरं कारणशरीरं तदपरित्यज्यस्थूलशरीरादौ तदपेक्षया स्थूलशरीरं लिङ्गशरीरं तदादिर्यस्य परमस्थूलशरीरस्येति तद्गुणसम्विज्ञानो-बहुब्रीहिः तस्मिन् प्रवेष्टृत्वात् । तथाहि जीवस्य त्रयउपाधयः सुषुप्त्यादौ बुद्ध्यादिसंस्कारोपरञ्जितमज्ञानमात्रमुपाधिः । स्वप्ने जाग्रद्वासनामयंलिङ्ग शरीरं उपाधिः जाग्रदवस्थायान्तु सूक्ष्मशरीरसंसृष्टस्थूलशरीरमुपाधिः । तथाच पूर्व्वोपाधिविशिष्टस्यैवोत्तरोपाधिप्रवेशात् सर्व्वशरीरप्रवेष्टृत्वेन स्थूलभोगायतनाभिमानिनो विश्वइति संज्ञेति यद्वा सूक्ष्मशरीरं लिङ्गशरीरं तदपरित्यज्य स्थूलशरीरं विराट्व्यष्टिस्तदादिर्यासांचक्षुरादिवृत्तीनां तत्तद्विषयाकाराणां तत्प्रवेष्टृत्वादिति हेतुयोजना । स्थूलशरीरमपरित्यज्येति क्वचित्पाठे स्थूलशरीरे वर्तमानस्यैव सूक्ष्मशरीरकारणशरीरयोरप्यनुगतत्वादिति हेत्वर्थोऽनुसन्धेयः । सर्व्वथा विश्वशरीरवर्त्तित्वाद्विश्वइत्युक्तं भवतीति भावः ॥

अस्यापीति । पूर्व्ववत् ॥

एषेति । व्यष्टिरुच्यते । पूर्व्ववद्विश्ववैश्वानरयोरपि जाग्रत्स्थत्यवस्थापन्नं भोगविशेषं सप्रकारं प्रपञ्चयति ॥

तदानीमित्यादिना । दिगादिपञ्चदेवतानियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन यथा पाठक्रमं शब्दादिगन्धान्तान् स्थूलविषयाननुभवतइति प्रत्येकं योजनीयं अग्न्यादिदेवतापञ्चकनियन्त्रितवागादिपञ्चकेन वचनाद्यानन्दान्तान् । तथा चन्द्रादिदेवताचतुष्टयनियन्त्रितेन मनआदि चतुष्केण संकल्पादिचित्तान्ताश्चतुरः ॥

der of the text, viz Enjoying the gross, the spirit of humanity Here we should bear in mind that in the waking state there practically exist those who know the truth, the criteria of truth, and the truths knowable. Of these one who ascertains a matter by criteria of truth is he who knows the truth, that whereby he ascertains it is a criterion. This is a position allowed in all the systems. In the next place we have to consider by what relation does the ascertainer of the truth, that is the individuated spirit, conscious soul ascertain what he does ascertain. Some one may say that it does so mediately through a conjunction successively of the soul, the internal organ, the sense-organ, and the object. This view we repudiate, for it would follow from it that all things would be simultaneously presented, mediately through a conjunction existing in the senses conjunct with the objects, the internal organ conjunct with the senses, and the soul conjunct with the internal organ [because the soul is omnipresent, and the organs in constant proximity to objects.] But if you rejoin that there is no super-extensiveness [that is, too much is not proved], because the presentation would be co-extensive with the connection between the organs and their objects; we disallow this rejoinder since the amount of connection between objects and organs cannot be precisely determined. And if you reply again, that only so much is presented as reveals itself objectively after concurrence with the sense-organs; we demur, for in this case, the object self-manifested being determined by the extent of juxta-position to the sense-organs, and the amount of juxta-position to the sense-organs being determined by that, there results a mutual dependency or logical seesaw Moreover the aforesaid juxta-position having been shown to exist only during the production of the cognition, and there being reason to suppose that it perdures after the cognition is produced, it would follow that absence of cognition would be associated with the presence of the object, and thus it would follow that there could be no representation of the relation of the cognition to self, in the form I have known this Nor can you reply that this relation may exist by virtue of its substratum the soul, for if cognition has the omnipresent soul as its substratum, there will follow a simultaneous cognition of all objects, cognition being connected with all objects at the same time. But if you say that cognition inheres only in that part of the soul which is appropriated to the body, it will follow that nothing can be presented, for the body has no connection with external percepts Some one may reply that though there be no such connection, cognition of the object preferred, whether of knowledge or the knowable, produces intensity of manifestation, and thus there is no difficulty This we disallow, since we observe that intensity of manifestation is produced by cognition of undesirable objects, such as malodours. Again, should any one argue that a determinate amount of manifestation arises by reason of the desert of the cogniser; we refuse this argument, the fact being otherwise accounted for, the efficacy of works producing only the visible causes of perception, and there being no help for the refusal This argument then is null, and we must affirm that there is a fixed order of practical apprehension of objects by individuated spirits

---

सर्व्वानेतानिति । यथायथं यथाक्रमानुरोधेन सर्व्वानेतान् स्थूलभोगान् विषयाननुभवतइत्यर्थः । अत्रापि प्रमाणमाह ॥

जागरितेति । आदिशब्दात्स्थूलभुग्वैश्वानरइति वाक्यशेषग्रहः । इदमत्र बोद्धव्यं जाग्रदवस्थायां हि प्रमातृप्रमाणप्रमेयव्यवहाराभवन्ति । तत्र प्रमाणेनयोऽर्थं प्रमिणोति स प्रमाता येन प्रमिणोति तत् प्रमाणं यत्प्रमीयते तत्प्रमेयमिति सर्व्वतन्त्रसिद्धान्तः । तत्र यः प्रमाता जीवश्चेतनः स विषयं प्रमिन्वन् कया प्रत्यासत्या प्रमिणोतीति विचारणीयं । आत्ममनइन्द्रियविषयक्रमेण संयोगपरम्परयेति चेन्न । विषययुक्ततत्संयुक्तेष्वपि संयोगपरम्परया युगपत्सर्व्वावभासप्रसङ्गात् यावदिन्द्रियसम्बन्धस्तावदेव भासेतेति नातिप्रसङ्ग इति चेन्न इन्द्रियसन्निकर्षस्य इयत्तानवधारणात् इन्द्रियसन्निकर्षानन्तरं योऽर्थः स्फुरति तावन्मात्रं सन्निकृष्यतइति चेन्न इन्द्रियसन्निकर्षस्येयत्तावधारणात् स्फुरणस्य विषयनियमः तस्मिन् सतीन्द्रियसन्निकर्षेयत्तावधारणमिति परस्पराश्रयात् । किञ्चोक्तसन्निकर्षस्य ज्ञानोत्पत्तिमात्रे क्लृप्तत्वात्तदनन्तरं तस्यावस्थाने कल्पकाभावादज्ञानस्य विषयेण सम्बन्धः स्यात्तथाच मयेदं विदितमिति आत्मनि सम्बन्धानुसन्धानाभावप्रसङ्गः । नचाश्रयद्वारा सम्बन्धइतिवाच्यं ज्ञानस्य सर्व्वगतात्माश्रयत्वे युगपत्सर्व्वविषयसम्बन्धात् सर्व्वावभासप्रसङ्गः । देहावच्छिन्नात्मप्रदेशाश्रितत्वे देहस्य बाह्यविषयासम्बन्धाच्चबाह्यं किञ्चिदपि भायात् । ननु सम्बन्धाभावेपि ज्ञानज्ञेययोरुद्दिष्टे विषये ज्ञानमतिशयं जनयतीति नाव्यवस्थेति चेन्न । अनुद्दिष्टेष्वपि दुर्गन्धादिषु ज्ञानकृतातिशयदर्शनात् अदृष्टवशात् किञ्चिदेव भासतइति चेन्न तस्य दृष्टसामग्रीसम्पादकत्वेनान्यथासिद्धत्वादगतिकत्वाच्च तस्मान्न किञ्चिदेतदतोवक्तव्या जीवस्य विषयग्रहणव्यवहारेव्यवस्थेति तदुच्यते न तावदस्मिन्मतेऽनुपपत्तिरस्ति यतो जीवस्य सर्व्वगतत्वासर्व्वगतत्वपक्षयोरप्यन्तःकरणकृता व्यवस्था सम्भवति तथाहि अपरिच्छिन्नपक्षे तावदन्तःकरणमेव मनोबुद्ध्यादिशब्दवाच्यं प्रमातृत्वादिव्यवहारापादकं यतोऽविद्यावृततया सर्व्वत्राप्रकाशमानमप्यात्मचैतन्यमन्तःकरणसंसृष्टं सदवभासते दर्पणद्रव्यसंसृष्टरविरश्मिवत् । तदान्तःकरणमदृष्टादिसहायं विषयसंवेदनवेलायां तडागकुल्याक्षेत्रगतोदकप्रवाहवत् देहतद्बाह्यदेशतद्विषयानभिव्याप्यावतिष्ठते । तत्रच तिसृष्ववस्थासु आत्मचैतन्यं तदात्मनैवाभिव्यज्यते । तत्र देहमध्यान्तःकरणभागावच्छिन्नं चैतन्यं प्रमातृसंज्ञां लभते । देहविषययोर्म्मध्ये दीर्घप्रभाकारेणेन्द्रियद्वारानिर्गतान्तःकरणभागावच्छिन्नं प्रमाणसंज्ञां विषयमभिव्याप्य विषयाकारतयावस्थितान्तःकरणभागावच्छिन्नं प्रमेयसञ्ज्ञामिति प्रमातृप्रमाणप्रमेयव्यवस्थोपपत्तिः एवमभ्युपगमे येन विषयेणसहेन्द्रियस्य सन्निकर्षो दूरेवान्तिकेवावतिष्ठमानेन तत्रैव तदाकारमेवान्तःकरणं परिणमतेनान्यत्र नान्याकारमिति चोपलभ्यते तदनुरक्तचैतन्यात्मनश्चैकत्वान्मयेदं विदितमिति सम्बन्धानुभवश्चोपपद्यते नान्यथापरिच्छिन्नात्मपक्षेऽपि जीवत्वोपाध्यन्तःकरणस्य पूर्व्वोक्तप्रकारेणावस्थाभेदसम्भवे उपाध्यनुगामित्वादुपस्थितस्य सोपाध्यन्तःकरणं यद्यदात्मनावतिष्ठते तत्तदात्मनाप्रत्यगात्मचैतन्यमप्यवभासमानं ग्राह्यग्रहणग्राहकभेदव्यवस्थामनुभवति अग्निरिवायः पिण्डादिसमारूढइत्यनवद्यं । न चेयं कल्पना तार्किककल्पनावत् पुरुषबुद्ध्युत्प्रेक्षामूला किन्तु श्रुतिमूला तथाच श्रुतयः यःसमानः सन् उभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवसुधीः स्वप्नोभूत्वेमं लोकमतिक्रामति। नवद्वारे पुरेदेही हंसोलेलायते बहिः । आसीनोदूरं व्रजति मनोमयोविज्ञानमयइत्याद्याः । उक्तञ्च भगवत्पादैः सर्व्वश्रुत्यर्थसंग्रहे दक्षिणामूर्त्तिस्तोत्रे नानाच्छिद्रघटो

पृथक् प्रमाणम् । (८७) अथ पदमन्तरेणापि योग्यताज्ञाने ऽन्वयबोधो भवति, अतः पदार्थस्मरणएव पदानामुपक्षयः । तदुक्तम् ।

पश्यतः श्वेत(८८)माढूपं हेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतो ऽश्वो धावतीति धीः ॥

इति चेत्, सत्यम् । (८९) प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यव्यापारदर्शनाद् अन्वितज्ञानोपपत्त्यर्थं पदस्यैव शक्तिः कल्प्यते । (९०) प्रथमतस्तस्यैव कारणत्वावधारणात् । पदार्थे (९१) शक्त्यन्तरकल्पने गौरवात् । तदाहुः ।

प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि ।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम् ॥

इति । श्वेतो ऽश्वो धावतीति धीश्च (९२) लिङ्गजा, पदस्य क्लृप्तकारणस्याभावादिति ॥

---

च न तथेति प्रमित्यन्तरासाधारणकारणासहकृतमनोजन्यत्वेनास्य मानसत्त्वेन तत्करणस्यातथात्वाद् । अधिकमनुमानप्रकाशे प्रपञ्चितम् । अन्वयविरोधिपदार्थोपस्थितिर्हेतुरित्याशयेन शङ्कते । (८७) अथेति । (८८) आढूपमिति । आ ईषत् श्वेतं रूपं पश्यतइत्यर्थ इत्येके । आपश्यतइति व्यवहितोपसर्ग इत्यन्ये । आढूपशब्दो ऽस्पष्टार्थक इत्यप्याहुः । तथा हेतुत्वे गौरवमित्याशयेनाह । (८९) प्रयोजकेति । (९०) प्रथमत इति । ननूपायस्यान्वयादेः साधारणतया प्रयोजकत्वमात्रमवधारयति न तु कारणत्वं, गृहीतमपि कारणद्वयकल्पनागौरवादये त्याज्यं, कार्यान्वितशक्तिवत् । न चैवं पदे शक्तिरपि न स्यात्, ततः पदार्थस्मरणं न स्यादिति वाच्यम् । प्रयोजकत्वगर्भाया एवेश्वरेच्छायाः शक्तित्वाभ्युपगमादिति चे,न्न । अनन्यथासिद्धान्वयादेस्तद्ग्राहकत्वं व्यापारेण च नान्यथासिद्धिरित्यादि प्रागुक्ते तात्पर्यात् । (९१) शक्त्यन्तरेति । ननु कारणता यदि शक्तिः स्यात्साऽस्त्येव, पदवत्, अत एव विषयाबाधादीश्वरेच्छापि । न चास्माच्छब्दादिति शब्दगर्भा सा । तर्हि तत्र वाक्ये न गौरवं पदार्थान्तररूपा पदेष्वनभ्युपगतेति चे,न्न । तद्विषयतया तदिच्छाया ज्ञानहेतुत्वे गौरवादित्यत्र तात्पर्यात् । अभिधातृत्वादिति भाट्टमते लिङादिपदाभिप्रायेणाभिधायास्तत्र वृत्तेरित्याहुः । (९२) लिङ्गजेति । अयं श्वेतो धावदश्वः, हेषाशब्दकारित्वे सति खुरविक्षेपशब्दविशेषकारित्वादिति लिङ्गमित्यर्थः ॥

## ॥ अथ वेदान्तसूत्रसंबन्धिशैवभाष्यचतुर्थाध्यायस्य ॥

॥ चतुर्थपादारम्भः ॥

### ॥ संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

पूर्वत्रार्चिरादिना मार्गेण विद्यावतां[1] हिरण्यगर्भनारायणपदातीतं परब्रह्मणः शिवस्य परमसुखरूपतया स्वर्गशब्दवाच्य[2] पदं प्राप्यमिति निरूपितम् । इहातः प्राप्तानां स्वरूपाविर्भावादिप्रकारो निरूप्यते । "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इति परं ज्योतीरूपं महाप्रकाशं परब्रह्म प्राप्तस्य स्वरूपाविर्भाव उच्यते । तत् स्वरूपं तस्य योगिनस्तात्कालिकमुतपूर्वसिद्धं वेति संशयः । न[3] पूर्वं सिद्धम् । किंत्वभिनिष्पत्तिश्रवणात् स्वर्गवदागन्तुकमेव । तस्य पूर्वसिद्धत्वे च कुतोऽस्य संसारः । अतस्तदुपासनाजन्यं मुक्तिफलं तद्रूपमागन्तुकम् । इति प्राप्तेऽभिधीयते । ब्रह्म प्राप्तस्य जीवस्य मलतिरोहितं ब्रह्मसदृशगुणं स्वरूपं पूर्वं सदेव मलावरणापगमादाविर्भवति । स्वेन रूपेणेति शब्दात् तथा[4] वगम्यते । अन्यथा ह्यागन्तुकस्यापि रूपस्य स्वासाधारणत्वात् स्वेनेति विशेषणमनर्थकं स्यात् । तत्र[5] सर्वानुग्राहकस्य शिवस्य परब्रह्मणः प्रसादेन स्वावरणे मले विगलिते तत्सदृशगुणमात्मस्वरूपं प्रादुर्भवति । न कर्मफलवदुत्पद्यते । मलस्यानादित्वात् संसारो[6]पपत्तिः । अतः स्वाभाविकमेव मुक्तस्य स्वरूपं चिदानन्दघनं सर्वज्ञत्वादिविशिष्टमाविर्भवति[7] ॥ १ ॥

### ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥

आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि मलविनिर्मुक्तस्यापरिच्छिन्नानन्दाद्याविर्भाव उच्यते । "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति मलप्रयुक्तजागरिताद्यवस्थाविनिर्मुक्तस्यैव वक्तव्यतया प्रतिज्ञानात् ॥ २ ॥

किं च ॥

### ॥ आत्मा प्रकरणात् ॥ ३ ॥

तत्र "भूयोऽनुव्याख्यास्यामि"इति प्रकृतापहतपाप्मत्वादिगुणक आत्मा वक्तव्यः । प्रकरणादवगम्यते[8] । "य आत्मा-

१ विद्यावतां योगिनां इति पा० ।
२ स्वः पद–इति पा० ।
३–यः । किं प्राप्तम् । अस्माच्छरीरात् समुत्थायेति निर्मुक्तसंसारस्वभावस्य पुरुषस्य परं ज्योतीरूपं ब्रह्म संपद्याविर्भूतरूपं तत्सदृशगुणं न इति पा० ।
४–ति स्वशब्दात् तद–इति पा० ।
५ ते । अत्र इति पा० ।
६–त्वावस्य सं–इति पा० ।
७–विर्भूतं भवति इति पा० ।
८ प्रकृतोऽपहतपाप्मत्वादिगुणक आत्मा प्रकरणादवगम्यते इति पा० ।

पहतपाप्मा" इत्यादि प्रक्रम्यैव[1] भूयोऽनुव्याख्यास्यामि" इत्युक्तत्वात्[2] । अतः प्रादुर्भूतस्वाभाविकापहतपाप्मत्वादिको मुक्त आत्मा ब्रह्मसदृशगुणस्वरूप इति सिद्धम् ॥ ३ ॥

॥ अविभागेन दृष्टत्वात् ॥ ४ ॥

पूर्वाधिकरणे ब्रह्मगुणस्वरूपसदृशं मुक्तस्य गुणस्वरूपमिति प्रतिज्ञातम् । तत् सादृश्य मुक्तस्योपपद्यते न वेति विचारः । किं प्राप्तम् ।

"एको रुद्रो न द्वितीया यतः स्युः"

इत्यादिषु ब्रह्मणः सदृशस्य द्वितीयस्य[3] निषेधात् कस्यचिदपि बद्धस्य मुक्तस्य वा तत्सादृश्यमनुपपन्नम् । इत्येवं प्राप्ते सिद्धान्त उच्यते[4] । मुक्तस्य ब्रह्मणा सादृश्यमस्ति । कुतः, "निरञ्जनः परमं साम्यमुपैति" "मुक्तः शिवसमो भवेत्" इति मुक्तस्य ब्रह्मगुणस्वरूपाविभागेन ब्रह्मसदृशतया दृष्टत्वात् । अतो "ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मसादृश्यमेवोच्यते । मुक्त आत्मा सादृश्याद् ब्रह्मस्वरूपाविभागेन स्वस्वरूपमनुभवति । यदुक्तम् । "एक एव रुद्रो न द्वितीय" इत्यादिना सादृश्यनिषेधः क्रियत इति । तज्जगदीश्वरत्वादेव । जीवस्य जगद्व्यापाराद्यभावाद्, वक्ष्यति[5] "भोगमात्रसाम्यलिङ्गाच्च" इति । अतो ब्रह्मण इव सकलकामावाप्तिरस्य तत्साम्यमुच्यते । तथा श्रूयते । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । अतो मुक्तस्य ब्रह्मसादृश्यमुपपद्यते[6] ॥ ४ ॥

॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

पूर्वत्र स्वयंप्रकाशमपहतपाप्मत्वादिगुणविशिष्टं ब्रह्मसदृशं मुक्तस्य स्वरूपमाविर्भवतीत्युक्तम् । तदुभयरूपत्व संभवति न वेति संशयः । एवं सति मतान्तरेण पूर्वपक्षः प्रवर्तते । तथा स्वेन रूपेणेति स्वरूपाविर्भावो ब्राह्मेणापहतपाप्मत्वादिकेन । ते हि ब्रह्मगुणाः प्रत्यगात्मनोऽपि स्वाभाविकाः । "य आत्मापहतपाप्मा" इत्याद्युपन्यासात् । "जक्षन् क्रीडन् रममाण" इत्यादिश्रवणाच्चावगम्यते[7] । अतो ब्रह्मणा गुणसाम्यमिति जैमिनिः ॥ ५ ॥

॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

"स यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एवं वारेऽयमात्मानन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एव विज्ञानघन एव" इत्यवधारणाद् विज्ञानस्वरूपमात्रेण साम्यमित्यौडुलोमिः । एवमुभयदर्शनात् सविशेषनिर्विशेषत्वे सिद्धे युगपदुभयासंभवात् कालभेदादिना व्यवस्थेति ॥ ६ ॥

अथ सिद्धान्त उच्यते[1] ॥

॥ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

बादरायणस्तु परस्परविरोधाभावादुभयश्रुत्यवगतोभयस्वरूपमस्य प्रतिपादयति । तथाहि, "विज्ञानघन एव" इत्यादिना स्वप्रकाश इत्यवगतेऽपि "य आत्मापहतपाप्मा" इत्युपन्यासात्[2] पूर्वेषामपहतपाप्मत्वादीनामपि सद्भावोऽवगम्यते । अत उभयप्रमाणसिद्धं रूपद्वयं परस्पराविरोधि, इत्युभयरूपसमुच्चयः समुच्चितः । विरोधे हि कालभेदाद्यपेक्षा । अतो ज्ञानरूपत्वेन स्वयंप्रकाशमपहतपाप्मत्वादियोगात् कल्याणगुणविशिष्ट च ब्रह्मसदृशं मुक्तस्वरूपमिति युक्तम् ॥ ७ ॥

॥ संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

पूर्वत्र मुक्तस्य स्वयंप्रकाशस्य सत्यसंकल्पत्वाद्युक्तम् । तदुपपन्न[3] न वेति विचिकित्सा । किं प्राप्तम् । मुक्तस्य भोग्यवस्तुविषये न संकल्पमात्र हेतुः । बाह्यहेतुनैरपेक्ष्येण तावता तदसंभवात् । इत्येवं प्राप्ते ब्रूमः । संकल्पमात्रेण सकलभोग्यवस्तुसिद्धिरस्ति, तथा हि श्रूयते । "स यदि पितृलोककामो भवति, संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादि । अतोऽस्य संकल्पमात्रमेव सकलभोग्यवस्तुसंपादने हेतुः । न बाह्यहेत्वपेक्षा ॥ ८ ॥

॥ अत एव चानन्याधिपतिः ॥ ९ ॥

यत एव ब्रह्मस्वरूपापन्नोऽयमपहतपाप्मत्वादिगुणकोऽत एवानन्याधिपतिः स्वतन्त्रः । कदाचिदपि न कर्माधीनः । कर्मणो विनष्टत्वात् । नास्य परमेश्वरो नियामकः । प्रवाहसिद्धतदाज्ञारूपविधिनिषेधशास्त्रपथातीतत्वात् । कुतः । पशुत्वव्यावृत्तेः । मलापगमेन हि शिवत्वमेवास्य सिद्धम् । शिवत्वं नाम निखिलमलसंपर्करहितनिरतिशयमङ्गलास्पदत्वरूपम् । शिव-

---

१–प्मा" इत्यारभ्य "सत्यसंकल्प" इति प्रक्रम्यैव इति पा० ।

२–मि" इति निरूपितम् इति पा० ।

३–अद्वितीयवस्तु–इति पा० ।

४–पि मुक्तस्य ब्रह्मसादृश्यं न संभवति । इति प्राप्ते ब्रूमः । इति पा० ।

५–षेध इति, तज्जगदीश्वरत्वादेव । जीवस्य जगद्व्यापारादिकं नास्तीति वक्ष्यति इति पा० ।

६–प्तिसादृश्यमवगम्यते । अतो ब्रह्मसादृश्यं युक्तमेव इति पा० ।

७ ब्रह्मणोऽ–इति पा० ।

८–प्मा" इत्यादिनावगम्यते इति पा० ।

---

१–ज्ञानघन एवेत्यवधारणाद्विज्ञानस्वरूपमात्रेण साम्यमित्यौडुलोमिः । ॥ ६ ॥ "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिषु तथा ह्युपन्यासः । एवमुभयदर्शनात् सविशेषनिर्विशेषत्वे सिद्धे युगपदुभयासंभवात् कालभेदादिना व्यवस्थितिरिति शङ्कायां सिद्धान्त उच्यते ॥ इत्येव पा० ।

२ इत्यादिना इति पा० ।

३–त्वादि यदुक्तं तदिहोपपन्नं इति पा० ।

मदृशस्वतन्त्रत्वसर्वज्ञतादिरिह शिवसदृशस्वभावः । अतोऽस्य मुक्तस्य शिवसदृशस्य सर्वज्ञत्वमनादिबोधरूपत्वं नित्यतृप्तत्वं स्वतन्त्रत्वं सर्वशक्तिमत्त्वमलुप्तशक्तिकत्वमनन्तशक्तित्वं चेति । आत्मज्ञानसंकोचरूपो हि संसारः । ततश्च कारणमलापगमेऽस्य सर्वज्ञत्वम्[1] । अत एवाज्ञानस्य संसारनिदानस्य समूलनिवृत्तिः परिच्छिन्नापरिच्छिन्नदेहाद्यभिमानरूपभ्रमनिवृत्तिः । यतो ह्यस्य जरामरणशोकराहित्यम्, अत एव कर्मवश्यत्वाभावात् स्वतन्त्रत्वं, निरतिशयस्वरूपानन्दवत्त्वं, स्वानुभवैकरससिद्धतया स्वात्मारामत्वेन नित्यतृप्तत्वम् । अत एवास्य जिघत्सापिपासादिराहित्यम् । अलुप्तसर्वशक्तिकत्वादस्य सत्यकामसत्यसंकल्पत्वादिसिद्धिः । तस्मादसौ परमेश्वरोऽपहतपाप्मत्वादिगुणाष्टकयुक्तः श्रूयते[2] । अतो मुक्तस्य शिवसदृशस्य स्वातन्त्र्यं युक्तमेव ॥ ९ ॥

॥ अभावं बादरिराह ह्येवम् ॥ १० ॥

पूर्वत्र मुक्तस्य स्वयंप्रकाशत्वं सत्यसंकल्पत्वादिवैशिष्ट्यं चोपपादितम् । इह तस्य सशरीरत्वमशरीरत्वमुभयं वेति विचारः[3] प्रवर्तते । बादरिस्तु मुक्तस्य देहेन्द्रियाद्युपकरणाभावं मेने । "निष्कलं निष्क्रियम्", इत्यादिकं ब्रह्मणस्तदभावमाह हि । तत्स्वरूपस्य मुक्तस्यापि तथात्वमिति ॥ १० ॥

॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्तु "स एकधा भवति त्रिधा भवति" इत्यादौ देहेन्द्रियादिभिर्विविधत्वश्रुतेस्तद्भावमेव मेने । तदेवं सदेहत्वश्रुतेर्विदेहत्वश्रुतेश्च किमस्य तात्त्विकमिति संशये विदेहत्वमेव तात्त्विकम् । "मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके" इति बाह्येन्द्रियाद्यभावो हि मुक्तस्य श्रूयते । ब्रह्म च बाह्येन्द्रियादिरहितं[4] श्रूयते । "सत्यात्म प्राणारामं मन आनन्दम्" इति । आत्मन्येवारामो न बाह्ये, मनस्येवानन्दो न बाह्ये करण, इति हि तत्र निरुक्तिः । अतो मुक्तस्य विदेहत्वमेव । सदेहत्वस्य तु पुरुषभेदाद्व्यवस्था ॥ ११ ॥

इत्येवं प्राप्ते सिद्धान्त उच्यते ॥

॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

उभयश्रुतेः सशरीरत्वमशरीरत्वं च स्वेच्छया मुक्तस्येति भगवान् बादरायणो मन्यते । यथा द्वादशाहस्योभयश्रुतेः सत्रत्वमहीनत्वं च । तद्वदिति । अत्र पौराणिकी भणितिः ।

"सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णाः स्वभावतः ।
शिवतुल्यबलोपेताः परमैश्वर्यसंयुताः ॥
सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः" ।

इत्यादिका शिवपदारूढविषये । अत उभयविधत्वं युज्यते ॥ १२ ॥

एकस्यैव कालभेदादुभयव्यवस्थामाह ॥

॥ तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥

मुक्तः स्वेच्छया कदाचिद् बहूनि शरीराणि सृष्ट्वा तदनुप्रवेशेन विहरति । कदाचिदुपसंहृतशरीरश्च वर्तते । स्वेच्छासंपादितशरीराद्यभावावस्थायां मुक्तः स्वप्ने परमेश्वरसृष्टं रथादिकं मनसा बद्धपुरुष इव परमेश्वरसृष्टमेव रसं भुङ्क्ते । किमुक्तं भवति । स्वप्ने पुरुषो यथा शरीरेन्द्रियादिनैरपेक्ष्येण केवलेन मनसैवेश्वरसंपादितान् विषयान् भुङ्क्ते । तथा मुक्तोऽपि स्वभूतेन मनसैव ब्रह्मस्वरूपरसमनुभुङ्क्ते इति ॥ १३ ॥

॥ भावे जाग्रद्वत् ॥ १४ ॥

स्वेच्छासृष्टशरीराद्युपकरणभावे जाग्रत् पुरुष इव सर्वकामं भुङ्क्ते[1] ।

ननु यदि मुक्तस्य प्राकृतवस्तुदर्शित्वरूपं भोक्तृत्वं, तर्ह्यपुरुषार्थप्रपञ्चदर्शिनो मुक्तस्य न संसारदुःखानुषङ्गाभावसिद्धिः । इति चेत् । न । मुक्तस्य पुरुषार्थरूपेण[2] प्रपञ्चदर्शनाभावात् । मुक्तेन ब्रह्माकारं हि दृश्यते विश्वमेतत् । तथा हि श्रूयते । "एतत् ततो भवति" "आकाशशरीरं ब्रह्म" "सत्यात्म प्राणारामं मनआनन्दं शान्तिसमृद्धममृतम्" इति । पूर्वत्र "आप्नोति स्वाराज्यम्, आप्नोति मनसस्पतिम्", इति स्वाराज्यसुखैकरसं शिवस्य परब्रह्मणः पदं मनसस्पतिं ज्ञानशक्त्यधिष्ठातृभूतमाप्नोति योगीत्युक्तम् । तदा स किंविशिष्ट इत्याकाङ्क्षायां "वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिः" इति वागादीनां स्वेच्छाधीनत्वेन तदाधिपत्यमुक्तम् । तदेवंविधस्य मुक्तस्य परमाकाशरूपशिवपदाधिरूढस्य स्वेच्छाधीनविशुद्धवागादिकरणस्य ततस्तत्पदप्राप्त्यनन्तरमेतद्विश्वजालं भवति । किं भवति । आकाशशरीरं ब्रह्मैव परमानन्दलक्षणपरमाकाशशरीरं ब्रह्मेति । परप्रकृतिरूपा परमसत्ता प्रकाशानन्दसमरसा पराशक्तिर्हि ब्रह्मणः स्वरूपतया परमाकाश उच्यते । या मुक्तानां परमेश्वरस्य च साक्षादर्थक्रियाहेतुः । परंपरयान्येषाम् । तथाहि, "को ह्येवान्यात्" "कः प्राण्यात्" "यदेष आकाश आनन्दो न स्यात्" "एष ह्येवानन्दयाति" "रसो वै सः", "रसं ह्येवायं लब्ध्वा-

1. संकोचकारणत्वं मलस्य इति पा० ।
2.-प्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः श्रूयते इति पा० ।
3. संशयः इति पा० ।
4. ते । तथा इति पा० ।

1.-ङ्क्ते । ततो न विरोधः । इति पा० ।
2. ननु प्राकृतवस्तुदर्शित्वं हि भोक्तृत्वं, न पुरुषस्य, संसारदुःखानुषङ्गाभावादिति चेन्न । मुक्तस्य पुरुषार्थरूपेण इति पा० ।

नन्दीभवति" इति सर्वानुभवविषयत्वमस्य श्रूयते । तथा च "अयं स एको मानुष आनन्द" इत्यारभ्य "स एको ब्रह्मण आनन्द" इति ब्रह्मपर्यन्तमुपाधितिरोधानाभावादानन्दाविर्भावस्तारतम्येन श्रूयते । निरुपाधिकतया ब्रह्मणि मुक्ते च परिपूर्णो वर्तते स आनन्दः "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" इति श्रवणात् । ब्रह्मार्पणबुद्ध्या निष्कामानुष्ठिताग्निहोत्रादिकर्मा परविद्वानकामहतः श्रोत्रियः । तस्य जीवत एव मुक्तस्य ब्रह्मणश्च तुल्य एवानन्दः । तस्य योगातिशयेन तद्भूमिमधिरूढस्य पूर्वत्र पूर्वत्र भूमावभ्यासः स्वल्प इति तदनुसारेण तद्भूमौ तदीयानन्दाविर्भावस्य मानुषाद्यानन्दसाम्यश्रुतिरिति न विरोधः । अतोऽयमेव परमानन्दः परप्रकृतिः परमाकाशः, पराभेदात्, "आनन्दो[1] ब्रह्मेति व्यजानात्" इति ब्रह्मत्वेन जगत्कारणत्वेन श्रूयते तस्याभिव्यक्तिः । "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इति । अतो मुक्तानां परमानन्दरूपपरमाकाशशरीरं ब्रह्म जगद्भवति, इति परमानन्दानुप्रविष्टानामेषां ब्रह्मण इव दुःखानुषङ्गाभाव एव ॥ १४ ॥

॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

सूचितं हि पूर्वत्र मुक्तात्मनोऽपि स्वेच्छयानन्तशरीरपरिग्रहणसामर्थ्येन विभुत्वम् । तदिह युज्यते न वेति विचार्यते । "सर्वेषु लोकेषु कामचारो भवति, इमाल्लोकान् कामान् नीकामरूप्यनुसंचरन्" इत्यादिषु मुक्तस्य परिच्छिन्नतया संचारावगमाच्च व्यापकत्वमुचितम् । अतो बहुशरीरपरिग्रहणं क्रमेणैव, न युगपदिति पूर्वः पक्षः । सिद्धान्तस्तु घटादिपरिच्छिन्नस्य प्रदीपस्य परिच्छेदापाये स्वप्रभया यथा गृहादिव्याप्तिः । तथा मुक्तस्य स्वशक्तितिरोधायकमलापाये स्वशक्त्या विश्वव्याप्तिरावेशः । तथा हि दर्शयति श्रुतिः । "स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा" "यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त,परिद्यावापृथिवी परियन्ति सद्यः, परि लोकान् परि दिशः परि स्वः, ऋतस्य तन्तुं विततं विवृत्य तदपश्यंस्तदभवन् प्रजासु" इति । तत्र प्रकरणं तु एष हि देव इति जगत्कर्तुर्विश्वरूपस्य महादेवस्य हि, स महादेवो नोऽस्माकं बन्धुर्जनिता सकलश्रेयसां कर्ता धामानि तेजोरूपाण्यप्राकृतानि विश्वान्यपि जानाति । अत्र बन्धुत्वादियोग्यस्य धामवेत्तृत्वस्य च प्रयोजनमुच्यते । यत्र यस्मिन् महादेवेऽमृतं कैवल्यलक्ष्मीमानशानाः प्राप्यानुभवन्तो देवास्तद्भावाद्दिवनशीलास्तृतीये द्युसंज्ञके तत्पदे मायातीते धामानि तेजःप्रधानानि[2] स्वाभिमतानि स्थानान्यभ्यैरयन्त स्वीकृतवन्तः । किमुक्तं भवति । बन्धुवज्जनकवत् सकलहितकारिणा सर्वज्ञेन परब्रह्मणा महादेवेन प्रसन्नेन प्रदलितपाशबन्धा अमृतभावं गता महाप्रकाशा मुक्तास्तृतीये परमव्योमलक्षणे स्वपदे कल्पितानि धामानि प्रकाशमयानि पदानि प्राप्य वर्तन्त इति । अतः परमेषां व्याप्तिरुच्यते । परि द्यावापृथिवी परियन्ति व्याप्नुवन्ति परि लोकान् हिरण्यगर्भादिलोकानपि व्याप्नुवन्ति,दिशश्च प्रदिशश्च स्वश्च परियन्ति व्याप्नुवन्ति, एवं सकलजगद्व्यापिनो वर्तन्ते । तथाहि, ते सर्वज्ञा ऋतस्य कर्मणो विस्तीर्णं भोगतन्तुं विवृत्य छित्त्वा पुण्यपापविनिर्मुक्ताः सन्तः सर्वप्राणिषु तदेव महादेवाख्यं वस्त्वपश्यन्, सर्वात्मतया तदभवन्, तत्स्वभावाश्चाभवन् यत्रेति सबन्धः । अतो मुक्तानां शिवैकरसानां व्यापकत्वमस्त्येव । एतेन महादेवसधर्माणो मुक्तस्वभावा जीवा देवशब्दवाच्या द्युप्रभृतिव्यापिनो देवव्रताख्ये सामनि मन्त्रे श्रूयन्ते । "ये देवा दिविषद" इत्यादिना । पुराणे च ।

ते हि सावाद्दिविषदस्त्वन्तरिक्षसदस्तथा ।
पृथिवीषद इत्येतद्देवा देवव्रते स्थिताः ॥

इति । इह पृथिवीति ब्रह्माण्डरूपमन्तरिक्षमिति द्वितीयं मायापदं द्यौरिति तृतीयं परमाकाशपर्यायं शुद्धं शक्तिरूपं शिवपदमुच्यते । अतो मुक्तानां विभुत्वमिति ॥ १५ ॥

॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

ननु ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपमाह श्रुतिः, "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति कथं तस्य शक्तिरूपज्ञानव्याप्तिरुच्यत इति नाशङ्कनीयम् । इदं जीवस्य वेदनाभाववचनं सुषुप्तिमरणयोरन्यतरापेक्षमित्युक्तम् । "न खल्वयमेवं सप्रत्यात्मानं जानातीत्ययमस्मीति नो एवेमानि भूतानि जानाति, सुषुप्तावेतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इति । मरणे च श्रुत्या तथैवाविष्कृतं हि । तद्विलक्षणतया मुक्तेस्तत्र नाज्ञत्वादि, किंतु मलतिरोधानापायात् सर्वज्ञत्वं च सर्वशक्तिकत्वं चेति न मुक्तौ ज्ञानादिनिषेधसंभवः[1] ॥ १६ ॥

॥ जगद्व्यापारवर्ज्यं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

उक्तमीश्वरेण साम्यं मुक्तानां स्वप्रकाशत्वव्यापकत्वसर्वज्ञत्वादिभिः, तथा सति जगत्सृष्ट्यादावपि दुर्वारं साम्यमुपैतीति । निर्विशेषश्रवणात् । जगत्सृष्ट्यादिसाम्याभ्युपगमे च विश्वातीतत्वादीश्वरस्याद्वितीयत्वभङ्गप्रसङ्गः । अतः कीदृशं साम्यमीश्वरेण मुक्तानां विवक्षितम् । जगत्सृष्ट्यादियुक्तं तद्वर्ज्यं वेति

१—अः परात्मेति "आनन्दो इति पा० ।
२—जःप्रकाशमयानि इति पा० ।
१-कर्त्वं विभुत्वं च संपद्यत इति न निर्विषयमुक्तिसंभवः इति पा० ।

संशयः। किं प्राप्तम्। "स यदि पितृलोककामो भवति" इत्यादिषु संकल्पमात्रात् पितृलोकादिसृष्टिसामर्थ्यश्रवणात्। "इमाँल्लोकान् कामान्नीकामरूप्यनुसञ्चरन्" इति सर्वत्र व्यापारश्रवणात्, परमेश्वरसाम्ये संकोचायोगाच्च, मुक्तस्य जगत्सृष्ट्यादिव्यापृतिरप्यस्तीति प्राप्ते ब्रूमः। मुक्तस्य परमेश्वरसाम्येऽपि जगत्सृष्ट्यादिव्यापारवर्जमेव स्वातन्त्र्यं स्वभोग्यवस्तुषु। "यतो वा इमानि भूतानि जायन्ते," "द्यावापृथिवी जनयन् देव एक" इत्यादिषु श्रुतं जगत्सृष्ट्यादिकं परमेश्वरस्य प्रकरणादवगम्यते। सृष्ट्यादिप्रकरणेष्वसंनिहित एव जीवः। अतो न मुक्तस्य जगत्सृष्ट्यादिकमस्ति ॥ १७ ॥

॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

"इमाल्लोकान् कामान्नीकामरूप्यनुसंचरन्" इत्यादिषु मुमुक्तेर्जगद्व्यापारस्य प्रत्यक्षोपदेशात् तत्संबन्धोऽस्तीति चेत्। न। कामान्नीकामेति कामभोगसंबन्धादधिकारिणां ब्रह्मादीनां सदाशिवान्तानां मण्डलेषु स्थितभोगानुषङ्ग एवोच्यते ॥ १८ ॥

अतोऽस्य न जगद्व्यापारः। तथा सति तस्य भोगानुषङ्गाद्विकारित्वमित्यत आह ॥

॥ विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

तस्यानुभाव्यं सुखं विकारभावासंस्पृष्टं विशुद्धं परिपूर्णब्रह्मस्वरूपम्। तथाहि खल्वस्य स्थितिमाह श्रुतिः। "रसो वै सः" "रसं ह्येवायं लब्ध्वानन्दीभवति" इति। ब्रह्मस्वरूपं हि "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्म[1]" इत्यादिष्वविकृतमेव श्रूयते। अतो न विकारिपशुसुखवन्मोक्षसुखं भवति[2]। सदाशिवादीनामधिकारिणां ब्रह्मान्तानां मण्डलेषु स्वेच्छया संचरमाणः कामान् नीकामरूपी विगलितमनुष्यादिदेहाभिमानोऽसंकुचितशक्तित्रयव्यापारः प्रशान्तापवादपरमानन्दप्रकाशविभूतिमयशक्तिशिवसामरस्यपरब्रह्मस्वरूपैकरसप्रपञ्चावगाहिनं परिपूर्णमहंभावं प्रकटमनुभवति।

तथाहि, "अहमन्नमहमन्नमहमन्नम्" अहमन्नादोऽहमन्नादोऽहमन्नाद" इत्यादिना भोज्यभोक्त्रादिसकलप्रपञ्चात्मभावपरिपूर्णाहंभावनास्यावगम्यते[3]। अत्राहंकारो न सांसारिकः। सकलप्रपञ्चावगाहित्वेन परिपूर्णत्वात्। किंतु मुक्तिस्वभाव एव कल्पितादृवेोऽहं मनुष्योऽहमिति देहमात्रावगाहितया परिच्छिन्नात् सांसारिकाहंकाराद्वयं विलक्षण एव। अतोऽत्र न प्राकृताहंकारसंबन्धः।

यद्वा, अहमिति शक्तिशिवाद्वयं[1] ब्रह्मोच्यते। तदेवाचादिकं प्रपञ्चजालमिति भावना। तथाप्तवचनम्।

"अनुत्तरविसर्गान्त[2]शिवशक्त्यद्वयात्मनः।
परामर्शो निर्गुणत्वादहमित्युच्यते विभोः॥
हृदयकारो द्वादशान्ते हकारस्तदिदं विदुः।
अहमात्मकमद्वैतं यत्प्रकाशात्मविग्रमः" ॥

इति। अत्रानुत्तरब्रह्मानन्दपदानुप्रविष्टस्य मुक्तस्य सकलप्रपञ्चाकारशिवाभिधायकप्रसादाक्षरानुसंधानपूर्वकं[3] गानं कर्तव्यतया न विधीयते। किंत्वानन्दास्वादपरमोल्लास[4]द्योतनाय स्तुतिः। अतो मुक्तानां ब्रह्मानन्दानुभवव्यापारमन्तरेण सृष्ट्यादिव्यापारः स्वेच्छया न सभवति ॥ १९ ॥

॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

एवमुक्तमर्थं प्रत्यक्षानुमाने श्रुतिस्मृती दर्शयतः। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्यादिका श्रुतिः। "अप एव ससर्जादौ" इत्यादिका स्मृतिश्च। अतो ब्रह्मण एव जगत्कारणत्वादिकमिति ॥ २० ॥

तथा सति

"यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति" ॥

"मुक्तः शिवसमो भवेत्", इत्यादिषु मुक्तस्य च ब्रह्मणा शिवेन परमसादृश्यप्रतिपादनात् तस्य जगत्सृष्ट्यादिकं यदस्ति तत् सर्वमसंकुचितमस्यापि[5] स्यात्। अन्यथा परमसादृश्यहानिरिति, अत आह ॥

॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

मुक्तस्य ब्रह्मणा साम्यं सकलकाम्यभोगमात्रादेव। न जगत्सृष्ट्यादिना। तथा सति बह्वीश्वरत्वप्रसङ्गादनवस्था स्यात्। तथा हि श्रूयते। "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति। विविधं पश्यन्त्या चिता ज्ञानशक्त्या युक्तं हि ब्रह्म विपश्चिदित्युच्यते। यथा स्वाभाविक्या हृदयभूतया परमसत्तास्फुरद्रूपया देशकालविशेषशून्ययास्य ब्रह्मणः शिवस्य सर्वज्ञत्व सर्वकारणत्वं सर्वात्मत्व सर्वशक्तिमत्त्वमलुप्तश-

१—न्तं ब्रह्म", "आकाशशरीरं ब्रह्म", "ऋतं सत्यं परं ब्रह्म", इति पा०।
२ अतो न विकारास्पदं मोक्षसुखमिति इति पा०।
३—ना ह्यवगम्यते इति पा०।
४—मुक्त—इति प ।

१—यमयं इति पा०।
२ अनन्तविधिसर्गात्म—इति पा०।
३—भिबोधकप्रसादाक्षराढं मनुवर्णानुपूर्वं इति पा०।
४—परमौत्सुक्य—इति पा०।
५—तं इति पा०।

क्तित्वं स्वतन्त्रत्वं नित्यतृप्तत्व निरतिशयैश्वर्यवत्त्वं[1] सर्वानुग्राहकत्वं सर्वमुक्तभोग्यरसरूपत्वं च संभवति। तादृश्या युक्तं परं[2] ब्रह्मापि विपश्चिदिति तेन समरसात्मा मुक्तोऽपि सर्वान् कामानन्तःकरणेन स्वाभाविकेन मनसा ज्ञानविशेषेण समश्नुते। तथाहि, "मनसैतान् कामान् पश्यन् रमते" "मनोऽस्य दैवं चक्षुः",इति श्रूयते। "सत्यात्म प्राणारामं मनआनन्दम्" इति ब्रह्मणोऽपि मनस्यानन्दभोगः। न बाह्यकरणापेक्षा। ब्रह्मणो मुक्तस्य च शरीरेन्द्रियादिग्रहणमैच्छिकं विहारार्थमित्यदोषः। अतो यथा ब्रह्म सकलान् कामान् भुङ्क्ते तथा मुक्तोऽपीति भोगमात्रसाम्यं मुक्तस्य ब्रह्मणेति समीचीनम्। लोके कतिपयधर्मसंबन्धादपि सिंहो देवदत्त इत्यादिषु सादृश्यव्यवहारदर्शनाचतत्सादृश्यवचनहानिः[3] ॥ २१ ॥

॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

उक्तं ब्रह्मणा सादृश्य सायुज्यं मुक्तानाम्। भोगादिसाधर्म्यात्। इह तेषां पुनरपि कदाचित् संसारापत्तिरस्ति न वेति संशयः[4]। कर्मविशेषेणेन्द्रादिपदारूढानामावृत्तिदर्शनं संशयकारणम्। किं तावत् प्राप्तम्। कामान् नीकामरूप्यनुसंचरन्नित्यादिषु बहुशरीरसंबन्धोऽवगम्यते। मुक्तानां तत्संबन्धे सति पुनरपि पुण्यपापकर्तृत्वं संभाव्यते। पूर्वकृतस्योपासनातिशयस्य बहुधा भोगेन क्षये तात्कालिककर्मवशात् पुनरपि हीनसुखसंसारप्राप्तिः। तथाहि, इन्द्रपदारूढानां पुण्यातिशयक्षये पुनरावृत्तिर्ब्राह्मणादिशरीरप्राप्तिश्च। अतश्च ब्रह्मपदं प्राप्तानां भोग्यद्रष्टृत्वादिसंबन्धेन भोगस्य पुण्यातिशयक्षयहेतुत्वेन च पुनरावृत्तिः संसार इति प्राप्ते ब्रूमः। साक्षात्कृतब्रह्मज्योतिषां तत्पदानुप्रविष्टानां मुक्तानां न पुनरावृत्तिः संसारे। कुतः। "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते, नच पुनरावर्तते नच पुनरावर्तते" इत्यादिशब्दाद् ब्रह्मविष्ण्वादिपदं मुक्त्वा तद्विलक्षणत्वेन[6] शिवस्य परब्रह्मणः पदविशेषं पुराणं चाभिव्यनक्ति।

"दिनकृत्कोटिसंकाशं स्थानमाद्यमुमापतेः।
सर्वकामसमायुक्तं विशुद्धं नित्यमक्षयम्॥
संप्राप्य तत् पदं दिव्यं समस्तक्लेशवर्जिताः[7]।
सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णा भवन्ति च॥
विशुद्धकार्यकरणाः परमैश्वर्यसंयुताः।
सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः॥
ये संप्राप्ताः परं स्थानं ज्ञानयोगरता नराः।
न तेषां पुनरावृत्तिर्घोरे संसारमण्डले" ॥

इत्यादिभिः। अस्य तात्पर्यमुच्यते। "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति परं ज्योतिःस्वरूपं हि मुक्तप्राप्यमुमासहितं परं ब्रह्म श्रूयते। अभिभूतसूर्यतेजोवृन्दस्य यस्य महाप्रकाशस्य भासा सर्वमेतद्विभाति। तथा च श्रुतिः।

"न तत्र सूर्यो भाति न चन्द्रतारके
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेवभान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति" ॥

इति। तथा निरूपितमथर्वशिरसि, "परमेश्वरोऽहं पुष्करमहं पवित्रमहमग्रं च मध्यं च बहिश्च पुरस्तात्, ज्योतिरित्यहमेकः, सर्वं च मामेव च, मां यो वेद स सर्वान् देवान् वेद"इति। तथा स्मरन्ति च।

"सर्वतः पाणिपादाङ्गं सर्वतोऽक्षिशिरोमुखम्।
सर्वमावृत्य तिष्ठन्तं तेजोराशिं शिवं स्मरेत्" ॥

इति। ततः परं ज्योतीरूपमुमासहितं शिवाख्यं परं ब्रह्म, तदधिष्ठितं पदं दिनकृत्कोटिसंकाशमिति किमु वक्तव्यम्[1]। निरतिशयतेजोमात्रस्फुरत्तामयं, तदेव निरतिशयसुखास्पदतया स्वर्गाभिधम्[2]। "स्वर्गो लोको ज्योतिषा वृतः, देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन्" इत्यादिश्रुतिष्ववगम्यते स्थानं यत् तुरीयातीतम्। तथोत्तरगीता, "तुरीयं च तुरीयातीतं च शिवस्थानमनामयम्"इति। आद्यं, सर्वलोकातीतत्वात्, कारणत्वाच्च।

"शिवलोकाद्बहिर्ज्ञेयान्यण्डस्यावरणानि च", इत्यादिषु यस्य बहिरधस्ताद् ब्रह्माण्डस्य सप्तावरणानि।

"परात् परतरो ब्रह्मा तत्परात् परतो हरिः।
तत्परात् परतोरीशः,

इति ब्रह्मादिविश्वाधिकस्य ब्रह्मणः पदं विश्वोत्तीर्णमिति। आद्यमुमापतेः परब्रह्मणः शिवस्य "उमासहायं परमेश्वरं प्रभुम्" इत्यादौ तस्य क्षमासहितस्य नीलकण्ठस्य त्रिलोचनस्य शिवस्य ध्येयत्वमुपासकस्य, तमसः प्रकृतेः[3] प-

१–र्यवैराग्यवत्त्वं इति पा०।
२–तं स्वाच्छिकतया परं इति पा०।
३ अतो भोगमात्रसाम्यं मुक्तस्य ब्रह्मणेति इत्येव पा०।
४–इति–इति पा०।
५–ति विचार्यते। इति पा०।
६ तदतीतत्वेन इति पा०।
७–समन्तः क्लेशविवर्जिताः इति पा०।

१–ति। तत् किमुच्यते। इति पा०।
२–गास्पदं प्रकाशरूपतया परमाकाशमुच्यते इति पा०।
३ प्रकृतिपदात् इति पा०।

रत्वेन प्राप्यत्वं चावगम्यते । किं[1]च "सर्वो वै रुद्र" इत्यारभ्य सर्वात्मत्व शिवस्याभिधाय तत्तत्स्वरूपोपसंहारे हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतय इति स्थितम् । प्रणवपर्यायेणोमाशब्देन वा परप्रकृतिरूपा परा शक्तिरुच्यते । कृष्णपिङ्गलं ब्रह्मेति च तत्सामरस्य ब्रह्मणः समाम्नातम् । तस्मादुमापतेः परब्रह्मणः पदम् । तत् पुनः कीदृशम् । सर्वकामसमायुक्तम् । सदा सकलकामसमन्वितम् । अतः खलु "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" "इति मुक्तस्य सकलकामावाप्तिर्ब्रह्मणा सह निरूपिता । विशुद्धं विकारासंस्पृष्टं, "समस्तसाक्षि तमसः परस्तात्" "आदित्यवर्णं तमसः परस्तात्," इत्यादिषु प्रकृतिविकारातीतत्वावगमात् । प्रकृतिविकारवद्रागद्वेषलोभादीनामनुत्पादकत्वाद् विशुद्धं हि तत् यद्यं शिवमयमिति । अनेनास्य परतत्त्वप्रकाशमयमहानन्दमेदुरपरमाकाशरूपत्वमुक्तं भवति । प्राकृतानामेव विकाराणां सृष्ट्यादिश्रवणात् । तदतीतत्वादस्य नित्यत्वम् । भूताकाशादिदेहप्रपञ्चस्यैव सृष्ट्यादिकं, परमाकाशरूपस्यास्य न तदस्ति ।

"यदा तमस्तन्न दिवा न रात्रि-
र्न सन्न चासंश्छिव एव केवलः" ।

इति श्रवणाच्छिवव्यतिरिक्तस्य सर्वस्य प्रलयो गम्यते । कथमस्य नित्यत्वं मुक्तानामपीति चेत् । न । मुक्तानामस्य पदस्य च शिवत्वेऽन्तर्भावात् । विशुद्धिभाजनतया शिवत्वमेषां[2] समानमेव । सृष्ट्यादिचक्रपतितपशुपाशविलक्षणत्व हि शिवत्वम् । अतः पशुपाशविलक्षणस्य शिवपदस्य नानित्यत्वप्रसङ्गः । अक्षयं क्षयवृद्धिरहितं, क्षयातिशययुक्तकर्मफलस्वर्गादिविलक्षणं तादृशं हि ।

"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" ।

इति श्रूयते । विष्णोः परमं स्वरूपं हि परमाकाशाख्यं शिवस्थानं षड्विधस्याध्वनः पारं तदतीतमुच्यते । ब्रह्मलोकमभिसंपद्यते । "न स पुनरावर्तते न स पुनरावर्तते" इत्यत्रानावृत्तिलक्षणं ब्रह्मलोकशब्दवाच्यमिदमेव स्थानम् ।

"संप्राप्य तत् पदं दिव्यं समस्तक्लेशवर्जिताः" ।

इत्यादिना तदारूढानां मुक्तानां ब्रह्मसदृशानां लक्षणमुच्यते । महतो देवस्य स्वभूतं दिव्यमवाङ्मनसगोचरं स्वभावं पदं संप्राप्य तत्संबन्धिना ज्ञानयोगेनाधिगम्य मुक्तात्मान एव भवन्ति समस्तक्लेशवर्जिताः । अस्तं विनाशः, क्लेशा अविद्यादयः, सम्यक् तद्वर्जिता भवन्ति । अनेन मुक्तात्मनां हेयगुणराहित्यमुक्तम् । अतः कल्याणगुणसाहित्यमुच्यते । शिवत्वं हि ते संपन्नाः सर्वज्ञा, ज्ञानावरणस्य मलस्य विनाशात् सर्वगतज्ञानशक्तयश्च ते सर्वज्ञा भवन्ति, सर्वगाश्च ते, अनन्तशक्तियोगात् । उक्तं हि "प्रदीपवदावेश"इति । शुद्धाश्च ते मलापायेन प्रादुर्भूतशिवभावाः शुद्धाः, प्रक शरूपाः प्रज्ञानघना इति । उक्त हि, "पूर्वभावादविरोधं बादरायण"इति । स्वयंप्रकाशत्वं सत्यसंकल्पत्वादिवैशिष्ट्यं च । परिपूर्णा भवन्ति, नित्यतृप्ताश्च ते भवन्ति । निरतिशयानन्दस्वरूपत्वात्, अवाप्तसकलकामत्वाच्च । निर्विकारनिरतिशयानन्दानुभवितृत्वं हि तेषां स्वभावः । उक्तं हि, "विकारावर्ति" इति । अतस्ते परिपूर्णा विशुद्धकार्यकरणा विकारास्पृष्टशरीरेन्द्रियाः । "एकधा भवति त्रिधा[1]भवति" इति मुक्तस्य स्वेच्छया बहुशरीरग्रहणमुक्तम् । अतो मुक्तानामैच्छिकं शरीरादिकं विशुद्धमेव । महामायानिष्पन्नत्वात् । विशुद्धत्वं नामाश्रयविकाराहेतुत्वम् । "इन्द्रो मायाभिः पुरुरूप ईयत" इतीश्वरस्यापि महामायाशक्तिभिर्नीलकण्ठत्वादिलक्षणबहुशरीरपरिग्रहणं श्रूयते ।

"स्थिरेभिरङ्गैः पुरुरूप उग्र"

इति । परमेश्वरपरिगृहीतानां शरीराणामप्राकृतानां विशुद्धविद्यामयानां स्थिरत्वमाह मन्त्रभागः । यथा परमेश्वरो विशुद्धबहुशरीरपरिग्रहस्तथा मुक्तोऽपीति न विरोधः । परमैश्वर्यसंयुक्ताः परमविभूतिसंयुक्ताः स्वाधीनप्रवृत्तयः परप्रेष्यताकार्पण्यरहिताः । उक्तं हि । "अत एवानन्याधिपतिः", इति । मुक्तस्य कर्माद्यवश्यतया परमस्वातन्त्र्यम् । अतः स्वतन्त्राः परमैश्वर्यसंयुक्ता इति । "सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः" । ते हि शिवपदाधिरूढा ईश्वरसंकल्पं विना कदाचित् परिगृहीतविशुद्धशरीरेन्द्रियोपभोगा भवन्ति, कदाचिद्विगतदेहेन्द्रियादयः केवलेन स्वाभाविकेन विभुना मनसानुभूयमानसकलकामा भवन्ति । तथा हि निरूपितम् । "स एकधा भवति त्रिधा भवति मनसैतान् कामान् पश्यन् रमत" इत्यादिश्रुत्यनुसारेण द्वादशाहवदुभयविधमिति । अतस्ते सदेहा विदेहाश्च भवन्ति । श्रूयते च । "विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नम" इति । ईश्वरसाधर्म्यभाजां नित्यसिद्धानां विरूपत्वं बहुरूपत्वं च । तद्बहुरूपत्वाद्विश्वरूपशरीरपरिग्रहेण यादृशानीश्वरस्य शरीराणि नीलकण्ठत्वादिलक्षणानि तादृशानि तत्सादृश्यभाजामिति । केचिन्नीलग्रीवाः शितिकण्ठा" इत्यादिश्रवणादिति । एवं ज्ञाने वेदान्तजन्ये योगे यमादिरूपे परमेश्वरविषये ये निरता निष्णातास्तादृशं पदं परमं शिवस्य प्राप्तास्तेषां पूर्वोक्तगुणानां शिवसदृशानां घोरे निरतिशयतापरूपत्वाद्दुःसहे संसारमण्डले न पुनरावृत्तिः, न पुनः संसारध-

१ अतश्च इति पा० ।

२—तथा तदवशेषत्वमेषां इति पा० ।

१ द्विधा इति सर्वत्र पा० ।

र्मान्वय इति। तस्माद् "ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते" इति श्रुतेः सर्वज्ञस्य सर्वशक्तेः सर्वैश्वर्यसंपन्नस्य सर्वानुग्राहकस्य सर्वकर्मसमाराध्यस्य निरस्तसमस्तदोषकलङ्कस्य निरतिशयमङ्गलगुणरत्नाकरस्य विरूपाक्षस्य परब्रह्मण उमापतेर्लोकं पदं निरवधिकानन्दप्रकाशं नित्यमक्षयमभिसंपन्नाः सर्वज्ञत्वादियोगिनोऽनावृत्तितया वर्तन्ते तत्रेति। एतदुक्तं भवति। "यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त" इत्यादिषु श्रुतानि निरतिशयानन्दप्रकाशघने ब्रह्मणि शिवे सामरस्यमुपगता मुक्ताः प्रकाशवपुषः सर्वज्ञाः सर्वगताः शान्ता नित्यपरमैश्वर्याधारा निःशेषविगलितमलावरणाः सर्वत्र तद्दर्शिनस्तदात्मानस्तदीये परमाकाशलक्षणे धामानि स्वाभिमतानि प्राप्य स्वेच्छोपगतसकलकामास्तेन सह सदा विद्योतन्ते सर्वत्रेति सर्वं समञ्जसमेव ॥ २२ ॥

श्वेताचार्यपदद्वन्द्वशुश्रूषाद्योतिताध्वना।
कृतमेतन्मया भाष्यं केवलं भक्तिमाचतः॥

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्म[1]मीमांसाभाष्ये चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्चतुर्थोऽध्यायः ॥ समाप्तं चेदं ब्रह्मनीमांसाशास्त्रम् ॥ शिवार्पणमस्तु ॥::::॥

१ श्रीमद्ब्रह्म—इति सर्वत्र पा०।

## ॥ अथ शैवभाष्यस्योपसंहारवर्णनम् ॥

यन्नामस्मरणान्नरस्य निखिलं कृत्यं क्रियातश्च्युतं
पूर्णं याति स एव देवनिवहैराराध्यमानः प्रभुः।
लीलाकल्पितकायकोऽतिकरुणोऽस्माकं शरण्योऽस्तु यं
कर्तारं जगतामुशन्ति विपदां हर्तारमीशं हरिम् ॥ १ ॥

तदेवमेतत् परमेश्वरस्य
कृपावशादद्य समाप्तिमाप्तम्।
वेदान्तसूत्रोपरि शैवभाष्यं
श्रीकण्ठशैवोदितमङ्गनेन ॥ २ ॥

द्वौ पुस्तकावहमवापममुष्य जीर्णौ
यौ दक्षिणोत्तरगतौ सकले स्थलेऽपि।
वैमत्यमित्थमवलोक्य मयावशेन
पाठान्तराणि सुबहूनि समर्पितानि ॥ ३ ॥

द्वासप्ततितमपण्डित-
पत्रादारभ्य चतुरशीतितमम्।
पण्डितपत्रं यावद्
भाष्यस्यास्य स्थितिर्ज्ञेया ॥ ४ ॥

निम्बार्करामानुजवल्लभेन्द्रा
मध्वाह्वयो वैष्णवसंप्रदायाः।
तथेतरे शंकरभास्करौ च
श्रीकण्ठविज्ञानपदादिभिक्षू ॥ ५ ॥

वेदान्तसूत्रोपरि भाष्यकारा
अष्टावमी सन्ति महानुभावाः।
श्रीकण्ठशैवस्य तदेतदासीद्
भाष्यं दुरापं यदमुद्रि यत्नात् ॥ ६ ॥

विज्ञानभिक्षोरपि भास्करस्य
निम्बार्कनाम्नश्च दुरापमस्ति।
भाष्यं तदाप्स्यामि यदा तदैव
विमुद्रयिष्यामि विदन्तु विज्ञाः ॥ ७ ॥

बुधा विगतमत्सराः शृणुत मत्कृतं प्रार्थनं
कृपां कुरुत पश्यतातिविरलप्रचारं मुदा।
जहीत यदि दूषणं गुणगणं च गृह्णीत भोः
प्रचारयत भाष्यमित्यतिशयेन सज्जोऽञ्जलिः ॥ ८ ॥

यायादिदं प्रतिदिशं प्रथितिं जगत्यां
भायान्मनःसु विदुषां, सफलोऽस्तु यत्नः।
इत्थं पुनः पुनरहं प्रणिपत्य मूर्ध्ना
याचे परेश्वरमलं बहुलेखनेन ॥ ९ ॥

॥ सांख्यशास्त्रप्रधानाध्यापकः
पं· वेचनरामशर्मा ॥

## THE VIDVAN-MANO-RANJINI OR REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA-SÁRA, BY RÁMA-TÍRTHA

(Continued from page 252.)

*But another* [*teaches that the principal vital air is the soul.*] Other than the nutrimentitious soul,—such is the construction; and this other soul is within the other, the nutrimentitious. In the absence of the vital air, when the vital air is attenuated by lack of food &c. the conditions of its own conservation, the sense organs,

अपर इति। अन्योऽन्नमयादात्मन इति योजना सचान्नमयादन्तरादभ्यन्तर इत्यर्थः। प्राणाभावे प्राणस्य स्वस्थितिनिबन्धनान्नाद्यलाभेन कृशीभावे सतीन्द्रियाणां विद्यमानानामपि स्वविषये प्रवृत्त्यदर्शनात् सच तस्मिन् पुष्टे तद्दर्शनात् प्राण एवात्मा न प्राणाधीनस्थितिकानीन्द्रियाणीति। इन्द्रियाणां चैतन्यान्वयव्यतिरेकः करणत्वेनाप्युपपद्यत एव तेषामेव कर्तृत्वे करणाभावप्रसङ्गः किञ्चैकस्मिञ्छरीरे इन्द्रियाणां सम्भूयभोक्तृत्वं प्रत्येकं वा द्वितीयेऽपि युगपत्क्रमेण वा नाद्यः रूपादौ चक्षुरादिभो-

though they exist, are not observed to energise upon their objects; but the sense organs are observed to energise when the vital air is nourished. The vital air is therefore the soul, and the sense organs dependent for their conservation upon the vital air, are not the soul. Besides, it is proved that the sense organs, as being instruments, are accompanied or not accompanied by pure intelligence; for were these organs themselves the agents in perception, they could not be instruments. Again, in any single body the sense organs must have either a conjoint or an individual fruition, and in the second case, that is if they have an individual fruition, they have it either in simultaneity or in succession. The first alternative, that of their conjoint fruition, must be disallowed, for we observe in the tongue no fruition of colour and the like the object of sight The sense organs do not discharge one function in mutual subservience, for it is proved by concomitance and non-concomitance that they have a diversity of objects peculiar and allotted to each. The second alterna tive that of separate fruition, is denied, for their simultaneity is impossible as has been stated above. But on the third hypothesis, that the sense organs enjoy a several and successive fruition, it would follow that the organism would be distracted, as being presided over by them, and as they being severally independent would sometimes want unanimity, and energise in contrary directions. Were they not independent, it would follow that that on which they depended was the soul, for the body being one admits not of the relation of lord and servant. It is therefore an incontrovertible position that it is the vital air that is the dominant repository of all the sense organs. It is, then, this kind of soul, *viz.* the vital air, that is determined as to its nature by the sleeping and waking states.

Were the several sense organs the soul, it would be impossible for one of them to remember what was experienced by another. There is, however, observed the recognition that I who formerly saw colour with the eye now smell odour; and it follows that the sense organs are not souls.

Again it is notorious that hunger and thirst are conditions of the vital air, the suspension of vital air or life being observed to ensue upon the want of solid and liquid nourishment. Vital air thus conditioned is the object of self-consciousness, and thus there is the sense that the vital air is the self or soul.

The author proceeds to set up the doctrine of those who hold that the internal organ or common sensory is the soul.

*But another [Chârvâka says that the internal organ is the soul, according to such texts as, The other, the inner soul, consists of the internal organ; also, because when the internal organ is asleep, the vital airs &c. are absent; also, because we have the consciousness that it is I who am assured, I that am in doubt.]* The inner soul is other, that is to say, than that which consists of vital air, because when the internal organ is asleep or absorbed, there is no vital air &c., for the inhalation and exhalation are in such a case erroneously surmised by the sight of the spectator, as if surmised in a pair of bellows. Since, also, dreams and reminiscence are possible i n the internal organ in sence of the sense organs, it is the internal organ that is the soul.

Or the words *The vital airs are absent* may be explained as employed by a metaphorical use of the word absent, used of the state of dreamless slumber and the like, where the operation of the vital air is suspended. The meaning will then be that when the sense organs have suspended their activities and the vital air has suspended its functions, the consciousness present in dreaming and similar states, is by means of the internal organ alone; and that consequently the internal organ is the soul.

Every one knows that assurance and doubt are conditions of the internal organ, and the citation of the consciousness is therefore clearly intelligible.

The author next sets up the doctrine of the Yogâchâras *But the Bauddha [says that the understanding is the soul, because of the texts: The other, the internal soul, consists of knowledge; also, because without an agent there is no power in an instrument; also, because there are such deliverances of consciousness as I am an agent, I am an experiencer.]* The inner or internal soul is other than that which consists of the internal organ, and consists of ideas or phantasmata.

[illegible] भोक्तृत्वादर्शनात्। नहि संभूयेन्द्रियाण्येकं कार्यं निर्व्वर्त्तयन्ति [illegible] प्रत्येकमसाधारणविषयभेदस्यान्वयव्यतिरेकसिद्धत्वात्। न द्वितीयः उक्तेन प्रकारेण यौगपद्यासम्भवात्। प्रत्येकं क्रमेण भोक्तॄणीन्द्रियाणीति [illegible] पक्षे तेषां प्रत्येकं स्वातन्त्र्ये कदाचिदनैकमत्ये सति विरुद्धदिक् [illegible] शरीरं विदीर्य्येत। अस्वातन्त्र्ये यदधीनत्वं तेषां तस्यैवात्मत्वं युक्तं स्वामिभृत्यन्यायस्य शरीरैक्येऽनुपपत्तेः प्राण एव तु मुख्यः सर्व्वेषामिन्द्रियाणां आश्रय इति युक्तं अतः स एवात्मा स्वापप्रबोधयोरविच्छिन्नस्वभावः प्रत्येकमिन्द्रियाणामात्मत्वेऽन्यदृष्टेऽन्यस्य स्मरणानुपपत्तेः। य एवाहं चक्षुषा रूपमद्राक्षं स इदानीं गन्धं जिघ्रामीति प्रत्यभिज्ञा दृश्यते तस्मादिन्द्रियाण्यनात्मान इति भावः। अशनायापिपासयोः प्राणधर्म्मत्वप्रसिद्धमन्नपानयोरलाभे प्राणविच्छेददर्शनात्। तादृग्धर्मकश्च प्राणोऽहंप्रत्ययविषय इति प्राण आत्मेत्यनुभव इत्यर्थः। मन आत्मेत्यादिमतमुत्थापयति॥

अन्यस्त्विति। प्राणमयादन्योऽन्तरात्मेति यावत् मनसि सुप्ते विलीने प्राणादेरभावाद् भस्त्रावच्छ्वासोच्छ्वासदर्शनस्य द्रष्टृदृष्ट्यध्यारोपितत्वादिन्द्रियाभावेऽपि स्वप्नस्मृत्योर्म्मनसि संप्रतिपत्तेर्म्मन एवात्मेत्यर्थः। यद्वा प्राणादेरभावादिति तद्व्यापारो परमे सुषुप्त्यादौ तस्याभावमुपचर्य्येदमुच्यते तथा चेन्द्रियेषूपसंहृतव्यापारेषु प्राणे चोपसंहृतप्राणापानेतरवृत्तौ मनसैव केवलेन स्वप्नादेरुपलम्भान्मन एव आत्मेत्यर्थः। मनसश्च सङ्कल्पादिधर्म्मवत्त्वं प्रसिद्धमित्यनुभवोक्तिः स्पष्टार्था। योगाचारमतमुत्थापयति॥

The view of the Buddhists is that the soul consists of momentary ideas The understanding, the momentarily fleeting idea, is the soul The author cites the testimony of consciousness to this effect, *I am an agent &c* He anticipates the objection · Let the internal organ be the agent, what need of ideation? and preferring to regard the internal organ as an instrument, adduces the following argument to prove that it cannot be implicated in the consciousness of agency

*Absence of an agent &c* Were the internal organ an active principle, there would follow, since all the organs are simultaneously related to their respective objects, a simultaneous plurality of cognitions, and the internal organ as agent, being presided over by all the sense organs, would be simultaneously juxta-posed to a plurality of percepts, for there is no other prerequisite to such juxta-position This is contradicted by experience The agent is therefore other than the internal organ, and the internal organ is a common instrument, the cause of the succession of ideas Thus by citation of doctrines exterior to the Veda it has been evinced that the self-conscious principle of the soul is limited to the sensational or ideational sheath

Now we reply that the nature of soul cannot be attributed to momentarily fleeting ideation, inasmuch as cognition, desire, volition, retention, and reminiscence, must be assigned to one substratum or repository; and inasmuch as these states being successive, they cannot have a fluxional ideation for their substratum. But had not cognition and the rest a single substratum, it would follow that in regard to an object experienced there could be no activity, such activity being determined by an inference as to its utility as a means to a desired end, and this inference again being based on the homogeneity of the present to past objects as its middle term For what one being experiences, another cannot remember It has, therefore, been said in the Nyáya-kusumánjali That which has been experienced by one, and is isolated by his departure, is not remembered by another, for mental retenta do not travel from mind to mind, nor is there any other mode in which this could take place

On the hypothesis of fluxional ideation bondage and emancipation would reside in different substrata For this and many other reasons the view that the soul is a momentarily fleeting ideation cannot be accepted. Our author, therefore, adopting the side of the Vedântins and desirous of proving that the soul is other than ideation, first under this head states a doctrine of certain speculators of gross views

*The Prâbhâkaras &c* The construction is. The Prâbhâkaras and the dialecticians maintain that ignorance is the soul Ignorance is other than momentary ideation, and the spiritual principle, they hold, is a substance and the repository of this ignorance The author cites a text which declares that the soul is other than that which consists of ideation [*The inner soul consists of bliss*] The internal soul is other, the soul composed of bliss is other, that is to say, than that which is composed of ideation Nor is it to be maintained that the soul composed of bliss is the supreme spirit, and that it is therefore improper to cite in explanation of the term Thou, inasmuch as this view contravenes the text in which the affix *mayat* (or *composed of*) is usually read in construction with modifications consisting of food and so forth

This is settled by the author of the Bhâshya in the text Made of food through exercise It is therefore to be considered that the counter explanation, viz that the words *composed of bliss* apply to the word Thou, is legitimate The author next cites the argument by which it is attempted to prove that the soul is not cognition, because cognition, pleasure, pain, desire and the like are observed to be retracted or re-absorbed into unconsciousness, that is into the soul which is other than knowledge, and because they are observed to remain therein non-existent

*Because the understanding and the rest [resolve into unconsciousness]* The meaning of this argument is that since in dreamless slumber there ensues an absence of all cognition, and the soul is recognised to be identical in the dreaming and in the waking state, the soul is not knowledge but other than consciousness

The author cites an appeal to consciousness

---

बौद्धस्त्विति । मनोमयादन्योऽन्तरोऽभ्यन्तरआत्माविज्ञानमयः । क्षणिकविज्ञानमयइति बौद्धाभिप्रायः । बुद्धिः क्षणिक विज्ञानमात्मेत्यत्रानुभवमाह ॥

अहङ्कर्त्तेति । मनसएव कर्तृत्वं स्यात् किं विज्ञानेनेत्याशङ्क्य मनसः करणपक्षपातित्वाच्च कर्त्रनुभवगोचरत्वमित्यभिप्रेत्य युक्तिमाह ॥

कर्त्रभावइति । मनसः कर्तृत्वे सर्वेन्द्रियाणां स्वस्वविषयैर्युगपत्सम्बन्धे युगपत् ज्ञानोदयप्रसङ्गः । कर्तुर्मनसः सर्वेन्द्रियैरधिष्ठितत्वेन युगपत्सन्निहितत्वादपेक्षणीयान्तरानभ्युपगमाच्च नचैवं दृश्यते तस्मात् मनसोऽन्यः कर्ता मनस्तुविज्ञानक्रमहेतुः साधारणं करणमेवेत्यर्थः । एवं वेदवाह्यवादानुपन्यस्य विज्ञानमयकोशपर्य्यन्तमात्मनः प्रत्यक्त्वमवगमितं । नच क्षणिकविज्ञानस्यैवात्मत्वमध्यवसितुं शक्यं ज्ञानेच्छाप्रयत्नसंस्कारस्मृतीनामेकाश्रयत्वनियमात्तेषाञ्च क्रमिकत्वात् क्षणिकविज्ञानाश्रयत्वानुपपत्तेः । ज्ञानादीनामेकाश्रयत्वाभावे तु वस्तुनि दृष्टे पूर्व्वदृष्टसजातीयत्वादिलिङ्गकइष्टसाधनताद्यनुमानपूर्व्वकप्रवृत्त्याद्यभावः प्रसज्येत । अन्यदृष्टे अन्यस्मरणानुपपत्तेः उक्तञ्च न्यायकुसुमाञ्जलौ । अन्यदृष्टंस्मरत्यन्योनैकभूतमपक्रमात् । वासनासंक्रमोनास्ति न च गत्यन्तरं स्थिरइति । क्षणिकपक्षे बन्धमोक्षयोरपि वैयधिकरण्यमित्यादिबहुदुष्टत्वादनादरणीयः क्षणिकविज्ञानात्मपक्षइत्यभिप्रेत्य वेदवादिपक्षमाश्रित्य विज्ञानादप्यन्तरमात्मानं निर्दिधारयिषुस्तावत्तत्रापि स्थूलदर्शिमतमेवमाह ॥

[*Also because of such deliverances of consciousness as*] *I am ignorant*, [*I am cognisant*] The sense of this appeal is that the deliverances of consciousness I am ignorant, that is, void of cognition, and I am cognisant, that is, possessed of cognition, confirm the distinction between cognition and soul to be the distinction of attribute and subject.

The author cites another doctrine

*But the Bhâṭṭa* [*maintains that intelligence associated with unconsciousness is the soul*] Association with unconsciousness means implication with ignorance, the being composed of consciousness and unconsciousness, and this is equivalent to consisting of the apprehension of bases of qualities and actions. To this effect is adduced a text of the Máṇḍavya.

[*The soul*] *consists of knowledge alone,* [*with much happiness*] Consists of knowledge alone, has the one simple nature of knowledge The word *alone* excludes connection with other natures With much happiness, abounding in bliss By the affix *mayat*, signifying abundance, there to be understood in relation to soul, as part of its substance, that which has bliss for its essence

*Because in profound sleep* [*both light and want of light are present.*] Dreamless slumber has no power of contemplating dreamless slumber, the want of light; consequently there can be no reflection on the part of one arisen from such sleep that he reposed easily. During that state there is no operation of the senses and the internal organ, that any reflection should take place by means of the cognition produced by such operation. Nor is illusion luminant, for illusion is unsentient; and it is only as a residue that the soul is a principle of knowledge. The word illuminant establishes the presence of light. In consequence of the reflection I knew not anything, it is assumed that in dreamless sleep there is a total absence of consciousness in the soul, and therefore a want of light is therein a part of its substance. It might be objected that it is in dreamless sleep alone, and not in any other state, that the soul consists of consciousness and unconsciousness. This objection is repudiated by means of an appeal to consciousness.

[*Because every one has the consciousness*] *Myself I do not know* It is intended that though the notion I appears to relate to the soul as an agent, in the deliverance of consciousness Myself I do not know, the undifferenced I is the object of the action, and thus appears in this positive cognition, and that accordingly in this other state of waking conciousness the soul has the two natures of consciousness and unconsciousness. Though consciousness is a condition of the soul, it is not absolutely distinct from the soul, being allowed to be identical with it, and the relation of the soul to its conditions as of a substance to its accidents is unproven, as admitting of an uncertainty as to its connection or non-connection therewith

The author next sets up the doctrine of the Mádhyandinas. *Another Bauddha* [*teaches that the void is the soul, because the Veda declares This universe previously was simply non-existent*] The meaning of this text according to the Bauddha's view is. This universe consisting of names and forms was previously, in time before the creation, simply non-existent, merely a void. An argument to the same effect follows.

[*Because*] *in dreamless sleep* [*everything ceases to exist*] This argumentation is enforced by an appeal to individual consciousness.

[*Because every one, on arising from a dreamless slumber, has a conviction which has for its object a recollection of his own non-existence—*] *During that deep sleep* [*I was not*] Hence soul, the void, identical with the non-existence of all things, is not identical with the apprehension of substance

The author now proceeds to refute the doctrines thus adduced, by means of a particular dogma, viz. that there is a substratum which possesses the nature of self-conscious being

[*It is now declared that*] *these* [*beginning with the son and ending with the void, are not the soul*] Of these opinions each antecedent opinion is vitiated by its respective successor. Thus these controversialists

प्राभाकरेत्यादिना । प्राभाकरतार्किकाविज्ञानमात्मेतिवदतइत्यन्वयः । अज्ञानं क्षणिकविज्ञानादन्यत्तदधिकरणं द्रव्यरूपमात्मतत्त्वमिति वदतइत्यर्थः । विज्ञानमयादप्यन्तरे आत्मनि श्रुतिं प्रमाणयति अन्योऽन्तरआत्मेति विज्ञानमयादानन्दमयोऽन्यइतियावत् । नचानन्दमयः परमात्मेति त्वंपदार्थमध्ये न तस्योदाहरणं युक्तमिति वाच्यं अन्नमयादिविकारप्रायपठितमन्नमयादि श्रुतिविरोधात् । प्रियशिरस्त्वादिवचनविरोधाच्च । एतच्च भाष्यकारैः आनन्दमयोऽभ्यासादित्यस्मिन्नधिकरणे निर्णीतं । तस्मादुक्तमेव त्वंपदार्थमध्ये आनन्दमयप्रत्युदाहरणमिति द्रष्टव्यं । सुषुप्तौ बुद्ध्यादीनां ज्ञानसुखदुःखेच्छादीनामज्ञाने ज्ञानभिन्ने आत्मनि लयदर्शनादभावदर्शनाच्च ज्ञानमात्मेति युक्तिमाह ॥

बुद्ध्यादीनामिति । सर्व्वज्ञानाभावस्य सुषुप्तौ संप्रतिपन्नत्वात् सुषुप्तिजागरितयोरप्यात्मैक्यप्रत्यभिज्ञानाच्चाज्ञानमात्मा किन्तु तदन्य एवेति भावः । अनुभवमाह ॥

अहमज्ञइति । अहमज्ञो ज्ञानहीनोऽहं ज्ञानी ज्ञानवानित्यनुभवोऽपि ज्ञानात्मनोर्धर्मधर्मिभावेन भेदं द्रढयतीत्यर्थः । मतान्तरमाह ॥

भाट्टइति । भाट्टस्त्वज्ञानोपहितचैतन्यमात्मेति वदतीत्यन्वयः । अज्ञानोपहितत्वमज्ञानसम्वलितत्वं ज्ञानाज्ञानरूपत्वं तदपि द्रव्यबोधरूपमिति यावत् तत्र माण्डव्यश्रुतिं प्रमाणयति ॥

प्रज्ञानघनइति । प्रज्ञानघनः प्रज्ञानैकरसः एवकारेण रसान्तरसम्बन्धं वारयति आनन्दमयइत्यानन्दप्रचुरोनआनन्दविकारः प्राचुर्य्यार्थमयडन्तनिर्देशाददोषः सदानन्दस्वभावतापि द्रव्यांशकतात्मनि गम्यते इतिभावः । युक्तिमाह ॥

